देवस्य[1] त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इदमहं रक्षसो ग्रीवा अपिकृन्तामीदमहं यो नस्समानो यो ऽसमानो ऽरातीयति तस्य ग्रीवा अपिकृन्तामि दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा[2] शुन्धन्तां लोकाः पितृषदना यवो ऽसि यावयास्मद्द्वेषो[3] यावयारातिं पितृषदनं त्वा लोकमास्तृणाम्युद् द्यां स्तभानान्तरिक्षं पृण दृंहस्व पृथिव्यां[4] नितानस्त्वा मारुतो निहन्तु मित्रावरुणयोर्ध्रुवेण[5] धर्मणा ॥ ॥ ब्रह्मवनिं त्वा क्षत्रवनिं देववनिं सजातवनिं रायस्पोषवनिं पर्यूहामि ब्रह्म दृंह क्षत्रं दृंह प्रजां दृंह रायस्पोषं दृंह घृतेन द्यावापृथिवी आपृणेथां विश्वजनस्य[6] छायासीन्द्रस्य स्यूरसीन्द्रस्य ध्रुवो ऽस्यैन्द्रमसीन्द्राय त्वा ॥

परि त्वा गिर्वणो[7] गिर इमा भवन्तु विश्वतः ।
वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ॥ ॥ १२ ॥

cf. Mâitr. S. 1, 2, 11; Kap. S. 2, 6.

विभूरसि प्रवाहणो वह्निरसि हव्यवाहनश्श्वात्रो ऽसि प्रचेतास्तुथो ऽसि विश्ववेदा उशिगसि[8] कविरङ्घारिरसि बम्भारिरवस्युरसि[9] दुवस्वाञ्छुन्ध्युरसि[10] मार्जालीयस्सम्राडसि कृशानुः[11] परिषद्यो ऽस्यास्तव्यो नभो ऽसि प्रतक्वासंमृष्टो ऽसि हव्यसूदन ऋतधामासि स्वर्ज्योतिस्समुद्रो ऽसि विश्वव्यचा अजो ऽस्येकपादहिरसि बुध्न्यः काव्यो ऽसि कव्यवाहनो रौद्रेणानीकेन पाहि माग्ने पिपृहि[12] माग्ने नमस्ते अस्तु मा मा हिंसीः ॥ १३ ॥ cf. Mâitr. S. 1. 2, 12; Kap. S. 2. 7.

---

वल्गहा प्रोक्षामि वैष्णवि रक्षोहा त्वा वल्गहा स्तृणामि वैष्णवि रक्षोघ्ना वल्गघ्नस्संसादयामि वैष्णवान् also starke Confusion; W 1 रक्षोह त्वा वल्गहा प्रोक्ष्यामि वैष्णवां रक्षोह त्वा वल्गहावस्तृणामि वैष्णवां रक्षोघ्नो वल्गघ्नस्संपादयामि वैष्णवान्

[1] Dies Kap. accentuirt nach T 6, T 3, T 1, Brl. [2] In Brl fehlt das त्वा [3] So T 3, T 1, Brl; T 6 द्वेषां; W 1 यावयास्माद्वेषां; Ch द्वेषो [4] Brl पृथिव्यां; Ch पृथिव्याचेतान॰ W 1 व्या नि॰ [5] Ch ध्रुवेन [6] W 1 विश्वस्य जनस्य [7] T 6 गीर्वणो; Ch गिर्वाणो [8] T 6 उषिगसि; desgl. W 1, ohne Accent; Ch उशगसि; [9] W 1 बम्बारिर॰ [10] T 1 स्वाच्छुन्ध्युं; T 6 vielleicht स्वाङ्कुन्ध्युं; in Ch undeutlich. [11] Ch कशाणुः [12] T 6 पिपृहि; desgl. W 1, ohne Accent; T 1, T 3 und Brl पिप्रीहि; cf. aber auch Mâitr. S. 1, 2, 12 a. E.

अग्निर्वृत्राणि[1] जङ्घनद्द्रविणस्युर्विपन्यया ।
समिद्धः शुक्र आहुतः ॥
त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा ।
त्वं भद्रो असि क्रतुः ॥
अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि ।
स इद्देवेषु गच्छति ॥
त्वं नस्सोम विश्वतो रक्षा राजन्नघायतः ।
न रिष्येत्त्वावतस्सखा ॥
स त्वं विप्राय दाशुषे रयिं देहि[2] सहस्रिणम् ।
अग्ने वीरवतीमिषम् ॥
वृषा[3] सोम द्युमाँ असि वृषा देव वृषव्रतः ।
वृषा धर्माणि दधिषे ॥
आ नो अग्ने सुचेतुना[4] रयिं विश्वायुपोषसम् ।
मार्डीकं धेहि जीवसे ॥
गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनः ।
सुमित्रस्सोम नो भव ॥
त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः ।
त्वया यज्ञं वितन्वते ॥
त्वं सोम महे भगं त्वं यून ऋतायते ।
दक्षं ददासि[5] जीवसे ॥
अग्ने रक्षा णो अंहसः प्रति ष्म देव रीषतः[6] ।
तपिष्ठैरजरो दह ॥

---

[1] Dies Kap. accentuirt nach T 1, coll. mit T 3, L und Brl. [2] Brl धेहि; T 3 रयिन्धे (हि) [3] Brl वृष; desgl. Ch, ohne Accent. [4] Ch सचेतुना [5] L und T 3 दधासि [6] W 1 रीरिषतः

अग्ने नक्षत्रमजरमा सूर्यं[1] रोहयो दिवि ।
दधज्ज्योतिर्जनेभ्यः ॥
आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् ।
परो यदिध्यते[2] दिवा ॥
अग्निः प्रत्नेन मन्मना शुम्भानस्तन्वं स्वाम् ।
कविर्विप्रेण वावृधे ॥
सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे ।
ताभिर्नोऽविता भव ॥

अप्स्वग्ने[3] ॥ ॥

अप्सु मे सोमो[4] अब्रवीदन्तर्विश्वानि भेषजा । 10
अग्निं[5] च विश्वशम्भुवम् ॥
अग्नी[6] रक्षांसि सेधति[7] शुक्रशोचिरमर्त्यः ।
शुचिष्पावक ईड्यः ॥
एह्यू षु ब्रवाणि[8] तेऽग्न इत्थेतरा गिरः[9] ।
एभिर्वर्धास इन्दुभिः ॥ 15
इमं यज्ञमिदं वचो जुजुषाण उपागहि ।
सोम त्वं नो वृधे[10] भव ॥

उदग्ने शुचयस्तव ॥

न्यग्निं जातवेदसं होत्रवाहं यविष्ठ्यम्[11] ।
दधाता देवमृत्विजम् ॥ 20
अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥

---

1 T3, Brl und L सूर्यं; Ch सूर्य  2 Ch यदिध्यति  3 So L; Brl अप्स्वग्नें; T3 und T1 अप्स्वग्ने  4 Ch सोम  5 W1 अग्निश्च  6 Brl अग्नें; desgl. Ch, ohne Acc.  7 Brl und T1 सेधते; Ch सीदति; L und W1 सेधति  7 Ch ब्रवाणि  9 Brl गिरः  10 Ch वृधो  11 W1 यविष्ठम

सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः
सुमृडीको न आविश ॥ ॥ १४ ॥

जुष्टो[1] दमूना अतिथिर्दुरोण इमं नो यज्ञमुपयाहि विद्वान् ।
विश्वा अग्ने[2] अभियुजो विहत्या शत्रूयतामाभरा भोजनानि ॥
5 अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।
सं जास्पत्यं सुयममाकृणुष्व शत्रूयतामभितिष्ठा महांसि ॥
संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ ।
इडस्पदे समिध्यसे स नो वसून्याभर ॥
सखायस्सं वस्सम्यंचमिषं स्तोमं चाग्नये ।
वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥
अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् ।
अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥
अग्निर्ददाति सत्पतिं सासाह[3] यो युधा नृभिः ।
अग्निरत्यं[4] रघुष्यदं जेतारमपराजितम् ॥
15 प्रेद्धो अग्न इमो अग्ने[5] ॥
उत नो ब्रह्मन्नविष उक्थेषु[6] देवहूतमः ।
शं नः शोचा मरुद्वृधो[7] ऽग्ने सहस्रसातमः ॥
नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु[8] ।
द्युमदग्ने[9] सुवीर्यं वर्षिष्ठमनुपक्षितम् ॥
20 त्वां चित्रश्रवस्तम[10] त्वामग्ने[11] हविष्मन्तो वि पाजसा ॥
भवा नो अग्ने ऽवितोत गोपा भवा वयस्कृदुत नो वयोधाः ।
रास्वा च नस्सुमहो हव्यदातिं त्रास्वोत[12] नस्तन्वो अप्रयुच्छन् ॥

---

[1] Dies Kap. accent. nach T 1 und Brl. [2] Brl विश्वाग्ने; desgl. Ch, ohne Accent; W 1 hat das Richtige. [3] So W 1, ohne Accent; Brl und T 1 सासह; Ch सासहा [4] W 1 अग्निरत्ये [5] Brl अग्ने ॥ इमो अग्ने ॥ [6] Ch उक्थेषु [7] Ch मरुद्वृधा [8] So T 1 und Brl; Ch und W 1 तोकावत [9] Brl द्युमंदिग्ने [10] Brl und W 1 °श्रवस्तमं [11] Ch त्वमग्ने [12] Ch दातिन्त्रासोत

हव्यवाहमभिमातिषाहं[1] रक्षोहणं पृतनासु जिष्णुम् ।
ज्योतिष्मन्तं दीद्यतं[2] पुरंधिमग्निं स्विष्टकृतमाहुवेम ॥
स्विष्टमग्ने अभि तत्पृणीहि विश्वाश्च देव पृतना अभिष्याः ।
सुगं नु पन्थां[3] प्रदिशन्विभाहि ज्योतिष्मद्धेह्यजरं न आयुः ॥
सोमस्य मा तवसं वक्ष्यग्ने वह्निं चकर्थ विदथे यजध्यै ।
देवाँ अच्छा दीद्यद्युञ्जे अद्रिं शमाये अग्ने तन्वं जुषस्व ॥
श्रीणामुदारः[4] ॥
यच्चिद्धि[5] ते पुरुषत्रा यविष्ठाचित्तिभिश्चकृमा कच्चिदागः[6] ।
कृधी ष्वस्माँ अदितेरनागान्व्येनांसि[7] शिश्रथो विष्वगग्ने ॥
महश्चिदग्न एनसो अभीक ऊर्वाद्देवानामुत मर्त्यानाम् ।
मा ते सखायस्सदमिद्रिषाम यच्छा तोकाय तनयाय शं योः ॥
यं त्वा देवापिः शुशुचानो अग्न आर्ष्टिषेणो[8] मनुष्यस्समीधे ।
विश्वेभिर्देवैरनुमद्यमानः प्र पर्जन्यमीरया[9] वृष्टिमन्तम् ॥
अग्ने बाधस्व वि मृधो वि दुर्गहापामीवामप रक्षांसि सेध ।
अस्मात्समुद्राद्बृहतो[10] दिवो[11] नोऽपां भूमानमुप नस्सृजेह[12] ॥
यथा ह त्यद्वसवो गौर्यं चित्पदि षिताममुञ्चता यजत्राः ।
एवो ष्वस्मन्मुञ्चता[13] व्यंहः प्र तार्यग्ने प्रतरं न आयुः ॥
त्रीण्यायूंषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने ।
ताभिर्देवानामवो[14] यक्षि विद्वानथा भव[15] यजमानाय शं योः ॥
पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँनृतुपते[16] यजेह ।
ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठः ॥

---

[1] Brl हव्यवाहंम॰ [2] Ch दीद्युतं [3] Brl सुगन्नु पन्थां; Ch सुयन्नु पंथ्यां; W 1 सुयन्नु पन्था [4] T 1 und Brl ॰दाराः [5] Ch यच्चि॰ Brl vielleicht यच्चिद्धि [6] Ch कच्चि॰ Brl wohl कच्चिदागाः [7] Brl व्येनांसि [8] Ch आर्ष्टिश्येनो [9] So T 1, Brl; Ch मेरया [10] W 1 अस्मान्स [11] Ch देवो [12] Ch सृजेहि [13] Ch मुञ्चन्तं॰ [14] Brl नामव [15] So T 1, Brl, W 1; Ch भवो [16] Ch ऋतू ऋतपते

आ देवानामपि पन्थामगन्म यच्छक्नवाम[1] तदनु प्रवोढुम् ।
अग्निर्विद्वान्स यजात्सेदु होता सो अध्वरान्स ऋतून्कल्पयाति ॥
वि ज्योतिषा बृहता[2] भात्यग्निराविर्विश्वानि कृणुते महित्वा ।
प्रादेवीर्मायास्सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनक्षे[3] ॥
5 साध्वीमकर्देवहूतिं नो अद्य यज्ञस्य जिह्वामविदाम गुह्याम् ।
स आयुरागात्सुरभिर्वसानो महीमकर्द्युम्नहूतिं नो अद्य ॥
अग्निर्होता न्यसीदद्यजीयानुपस्थे मातुस्सुरभा उ लोके ।
युवा कविः पुरुनिष्ठा[4] ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः ॥
अग्निं दूतं पुरोदधे हव्यवाहमुपब्रुवे ।
10 देवाँ[5] आसादयादिह ॥
अग्निर्होता पुरोहितो[6] ऽध्वरस्य विचर्षणिः ।
स वेद यज्ञमानुषक् ॥ ॥ १५ ॥

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायामध्वरं नाम द्वितीयं स्थानकं संपूर्णम् ॥

---

15 ज्योतिरसि[7] विश्वरूपं मरुतां पृषती[8] देवेभ्यस्त्वा यज्ञियेभ्यो गृह्णामि ॥
त्वं सोम तनूकृद्भ्यो द्वेषेभ्यो[9] ऽन्यकृतेभ्यः ।
उरु यन्तासि वरूथम् ॥
स्वाहा जुषाणो अप्तुराज्यस्य वेतु स्वाहा ॥

---

[1] So Brl, T1, W1; Ch यच्छक्नुवाम [2] Ch वृहता [3] Brl. विनक्षि [4] Ch पुरोनिष्ठा [5] So T1 und Brl, desgl. Ch, ohne Acc.; W1 देवां [6] W1 पुरुहितो
[7] Dies Kap. nur nach Ch. [8] So corr. Ch पृशती [9] So Ch.

अग्ने नय सुपथा[1] राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो[2] भूयिष्ठां ते नमउक्तिं विधेम ॥
उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।
घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर ॥
स्वाहोर्वन्तरिक्षं वीह्यदित्यास्त्वगस्यदित्यास्सदने सीद ॥ ॥ देव 5
सवितरेष ते सोमस्तं रक्षस्व मा त्वा दभन्नेतत्त्वं देव सोम देवानुपागा
इदमहं मनुष्यान्सह प्रजया सह रायस्पोषेण नमो देवेभ्यस्स्वधा पि-
तृभ्यो निर्द्रुहो निर्वरुणस्य पाशान्मुक्षीय स्वरभिव्यख्यं ज्योतिर्वैश्वान-
रमग्ने व्रतपा अस्मे व्रतपास्त्वे[3] व्रतपा व्रतिनां व्रतानि याग्ने मम तनू-
स्त्वय्यभूदियँ सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नो 10
व्रतपा व्रतिनां व्रतानि स्वाहा यज्ञं मनसि[4] स्वाहा दिवि स्वाहा पृ-
थिव्याँ स्वाहोरा अन्तरिक्षे[5] स्वाहा वाते वाचि विसृजे[6] ॥ १ ॥
cf. Mâitr. S. 1, 2, 13; Kap. S. 2, 8.

उरु[7] विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।
घृतँ घृतयोने पिब प्र प्र यज्ञपतिं तिर[8] ॥
स्वाहात्यन्यानगां नान्यानुपागां यान्वाजुजोषं परि तानवृजमर्वा- 15
क्त्वा परेभ्यो ऽविदं परो ऽवरेभ्यस्तँ त्वा[9] जुषामहे वनस्पते देवयज्यायै
जुष्टं विष्णवे विष्णवे त्वा देवस्त्वा सविता मध्वानक्त्वोषधे त्रायस्वैनँ
स्वधिते मैनँ हिँसीर्द्याँ मा लेखीरन्तरिक्षं मा हिँसीः पृथिव्या संभव ॥
वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयँ रुहेम ॥
यँ त्वायँ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय । 20
अच्छिन्नरायँ सुवीरः ॥ ॥ २ ॥
cf. Mâitr. S. 1, 2, 14; Kap. S. 2, 9.

---

[1] So corr. Ch स्वपथा [2] So corr. Ch स्माज्जु° [3] So corr. Ch व्रतपास्मे व्रतपास्ये; aber cf. oben 2, 8. [4] So corr. Ch यज्ञस्समनसि; aber cf. Kap. S. 2, 8 यज्ञं मनसि [5] So corr. Ch °रिक्षं [6] Kap. S. 2, 8 विसृजेत् [7] Dies Kap. nach Ch, coll. mit W 1, G, L; die Accentuation nach L. Ch उरो [8] Ch तिरा [9] Ch °भ्यस्त्वं तं त्वा

देवस्य[1] त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इदमहं रक्षसो ग्रीवा अपिकृन्तामीदमहं यो नस्समानो यो ऽसमानो ऽरातीयति तस्य ग्रीवा अपिकृन्तामि पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा शुन्धन्तां लोकाः पितृषदना यवो ऽसि यावयास्मद्द्वेषं यावयाराति पितृषदनं त्वा लोकमास्तृणामि स्वावेशो ऽस्यग्रेगा नेतॄणां[2] वनस्पतिस्त्वाधिष्ठास्यति तस्य वित्ताद्वृतेन द्यावापृथिवी आपृणेथां देवस्त्वा सविता मध्वानक्तु सुपिप्पला ओषधीस्कृधि द्यामग्रेणास्पृक्ष आन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृंहीः[3] ॥

ता वां वास्तून्युश्मसि[4] गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरि ॥
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ॥

ब्रह्मवनिं त्वा क्षत्रवनिं देववनिं सजातवनिं[5] रायस्पोषवनिं पर्यूहामि ब्रह्म दृंह क्षत्रं दृंह प्रजां दृंह रायस्पोषं दृंह ॥

तद्विष्णोः परमं पदं सदा[6] पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥

परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमं[7] रायो मनुष्यमन्तरिक्षस्य सानूपेष द्यां ते धूमो गच्छत्वन्तरिक्षमर्चिः पृथिवीं भस्म स्वाहा ॥ ३ ॥ cf. Mâitr. S. 1, 2, 14; Kap. S. 2, 10.

इषे[8] त्वोपावीरस्युप देवान्दैवीर्विशः प्रागुर्वह्नय उशिजो[9] बृहस्पते धारया वसूनि हव्या ते अस्वदन्देव त्वष्टर्वसु[10] रण्व रेवती रमध्वमग्नेर्ज-

---

[1] Dies Kap. nach Ch, W 1 ζ, L und G; die Accente nach L. [2] So L, G, desgl. W 1 ζ, ohne Acc.; Ch स्वावेशो स्याग्रेगा नेभृणा [3] Ch °मुपरिणा° [4] Ch वास्युन्युस्मसि [5] L वनिं [6] L wohl सद्या [7] L und G परीमं; W 1 ζ परीमं; Ch परीमो [8] Dies Kap. nur nach Ch. [9] So corr. Ch वह्ने नशिजो [10] So corr. Ch त्वष्टु°

निचमसि वृषणौ स्थ उर्वश्यस्यायुरसि पुरूरवा असि गायत्रं छन्दो ऽनुप्रजायस्व त्रैष्टुभं छन्दो ऽनुप्रजायस्व जागतं छन्दो ऽनुप्रजायस्व ॥

भवतं नस्समनसौ समोकसा अरेपसौ ।

मा हिंसिष्टं यज्ञपतिं मा यज्ञं जातवेदसौ शिवौ भवतमद्य नः ॥

अप्सा अग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः । 5

स गायत्र्या त्रिष्टुभा जगत्यानुष्टुभा देवेभ्यो हव्यं वहतु प्रजानन् ॥ ॥४॥

cf. Mâitr. S. 1, 2, 15; Kap. S. 2, 11.

देवस्य[1] त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चाम्यमुष्मै जुष्टं धर्षा[2] मानुषी अद्भ्यस्त्वौषधीभ्यो ऽनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्यो ऽनु सखा सयूथ्य आवह देवान्देवयते[3] यजमानायापां पेरुरसि स्वात्तं[4] 10 हव्यं देवेभ्यो घृतवत्सं ते वायुः प्राणेन गच्छतां सं यजत्रैरङ्गानि सं यज्ञपतिराशिषा ॥ ५ ॥ cf. Mâitr. S. 1, 2, 15; Kap. S. 2, 12.

घृतेनाक्तौ[5] पशुं त्रायेथां[6] रेवति प्रेधा यज्ञपतिमाविशोरो अन्तरिक्ष सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तन्वा[7] भव वर्षीयो वर्षीयसो यज्ञं यज्ञपतौ धा नमस्त आतानानर्वा[8] प्रेहि घृतस्य[9] 15 कुल्यामनु सह प्रजया सह रायस्पोषेण देवीरापश्शुद्धा यूयं देवान्यूढ्वं शुद्धा वयं परिविष्टाः परिवेष्टारो वो[10] भूयास्म प्राणं ते मा हिंसिषं चक्षुस्ते मा हिंसिषं श्रोत्रं ते मा हिंसिषं वाचं ते मा हिंसिषं यत्ते क्रूरतरं यदास्थितं तत्त[11] एतेन कल्पतां तत्ते मा हिंसिषं चरित्रांस्ते[12] मा हिंसिषं नाभिं ते मा हिंसिषं मेढ्रं ते मा हिंसिषं पायुं ते मा 20

---

[1] Dies Kap. nur nach Ch. [2] So corr. Ch वर्षा [3] So Ch, hier leider die einzige Handschrift. Wohl in देवायते zu corr. nach Anleitung von 2, 9. Vielleicht lasen andre Mss. auch hier so. Vgl. unten 18, 4, wo die Lesart schwankt; aber auch 18, 20 mit देवयन्तो ohne Variante, desgl. ईमहे देवयन्तः ॥ [4] So corr. Ch यापास्मेरुरसि स्वातुं [5] Dies Kap. nur nach Ch. [6] So corr. Ch त्रायथां [7] So corr. Ch तन्वो [8] So corr. Ch आतना॰ [9] So corr. Ch घृतस्या [10] So corr. Ch परिवेस्यारो भूरो भूयास्म [11] So corr. Ch ततु (Missverständniss der Çâradâ-Schrift). [12] So corr. Ch चरित्रास्ते

हिँसिषं देवेभ्यश्शुन्धस्व समङ्ग्ध ओषधे त्रायस्वैनँ स्वधिते मैनँ हिँसी
रक्षसां भागो ऽसीदमहं रक्षो ऽवबाध इदमहं रक्षो ऽधमं तमो नया-
मीषे त्वोर्जे घृतेन द्यावापृथिवी प्रोर्णुवाथां[1] देवेभ्यश्शुन्धस्व देवेभ्य-
श्शुम्भस्वामुष्मै त्वा जुष्टामुर्वन्तरिक्षं वीहि वायो वेष्टोकानां[2] प्रत्युष्टं रक्षः
5 प्रत्युष्टारातिर्देवेभ्यस्स्वाहा स्वाहा देवेभ्यः प्रयुता[3] द्वेषाँसि स्वाहोर्ध्वन-
भसं मारुतं गच्छतम ॥ ६ ॥ cf. Mâitr. S. 1, 2, 15. 16; Kap. S. 2, 13.

ऐडस्यग्निस्त्वा[4] श्रीणात्वापस्समरिणन्वातस्य त्वा ध्राज्यै[5] पूष्णो
रँह्या ऊष्मणो ऽव्यथिषा[6] अपामोषधीनां रोहिष्या ऐन्द्रः[7] प्राणो
अङ्गे अङ्गे निदीध्यदैन्द्रो[8] व्यानो अङ्गे अङ्गे निदीध्यदैन्द्रो[9] ऽपानो
10 अङ्गे अङ्गे निदीध्यत्[10] ॥

देव त्वष्टर्भूरि ते सँ समेतु सलक्ष्म यद्विषुरूपं बभूव ।
देवत्रा यन्तमवसे सखायमनु त्वा माता पितरो मदन्तु ॥

घृतं घृतपावानः पिबत वसां वसापावानः[11] पिबतान्तरिक्षस्य
हविरसि स्वाहा त्वा वाताय दिशः प्रदिश आदिशो विदिश उद्दिशो
15 दिशस्स्वाहा दिग्भ्यो नमो दिग्भ्यः ॥ ७ ॥
cf. Mâitr. S. 1, 2, 17; Kap. S. 2, 14.

समुद्रँ[12] गच्छ स्वाहान्तरिक्षं गच्छ स्वाहा देवँ सवितारं गच्छ स्वा-
हाहोरात्रे गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहा द्यावापृथिवी
गच्छ स्वाहा छन्दो गच्छ स्वाहा सोमं गच्छ स्वाहा यज्ञँ गच्छ स्वाहा
नभो गच्छ स्वाहाग्निँ वैश्वानरँ गच्छ स्वाहा मनो मे हार्दि यच्छ पुत्रँ

---

[1] Mâitr. S. 1, 2, 16 प्रोर्णुधातां; darnach wohl zu corrigiren. [2] So Ch! [3] So corr. Ch प्रयता [4] So corr. Ch ईडस्य॰; cf. MS 1, 2, 17; dies Kap. nur nach Ch. [5] So corr. Ch द्राज्यै [6] So corr. Ch ऊष्माणो व्यथिस्या; cf. MS 1, 2, 17; Pâ. 3, 4, 10; m. Abhdlg. „Das Kâthakam und die Mâitr. Samhitâ", Sitz.-Ber. der Berliner Ak. d. Wiss. 1879, 24. Juli, p. 685. [7] So corr. Ch रोहिष्यानैन्द्राः; cf. aber m. Abhdlg. „Das Kâthakam und die Mâitr. S.", Sitz.-Ber. d. Berliner Ak. d. Wiss. 1879, p. 685; TS 1, 3, 10, 2; Pâ. 3, 4, 10. [8] So corr. Ch निदीधदै॰; [9] So corr. Ch दीधद्दै [10] So corr. Ch निदीधत [11] So corr. Ch वसाँ वसपा॰ [12] Dies Kap. nach Ch und Brl; die Accente nach Brl fol. 162. 163.

नग्नारमशीयौषधीभ्यस्वाहा ॥ धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च
यदापो अघ्न्या वरुणेति शपामहे ततो वरुण नो मुञ्च ॥

उदुत्तमं[1] वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥

सुमित्रा ण आप ओषधयो भवन्तु दुर्मित्रास्तस्मै सन्तु यो ऽस्मा- 5
न्द्वेष्टि यं च वयं द्विष्मः ॥

द्रीपे राज्ञो वरुणस्य गृहो हिरण्ययो मितः ।
ततो धृतव्रतो राजा धाम्नो धाम्न इह मुञ्चतु ॥ ॥ ८ ॥

cf. Mâitr. S. 1, 2, 18; Kap. S. 2, 18.

हविष्मतीरिमा[2] आपो हविष्मान्देवो अध्वरः ।
हविष्मां[3] आविवासति हविष्मानस्तु सूर्यः ॥ 10

अग्नेर्वो ऽपन्नगृहस्य सदसि सादयामि सुम्नायवस्सुम्न्याय सुम्न्यं
धत्तेन्द्राग्न्योर्भागधेयीस्स्थ मित्रावरुणयोर्भागधेयीस्स्थ विश्वेषां देवानां
भागधेयीस्स्थ सोमस्य वसतीवरीर्हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय
त्वोर्ध्वमिममध्वरं[4] दिवि देवेषु होत्रा यच्छ सोम राजन्विश्वाः प्रजा
उपावरोह विश्वास्त्वा प्रजा उपावरोहन्तु ॥ 15

शृणोत्वग्निस्समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः ।
शृणोत ग्रावाणो विदुषो नु यज्ञं शृणोतु देवस्सविता हवं मे ॥

देवीरापो अपां नपाद्य ऊर्मिर्हविष्य[5] इन्द्रियावान्मदिन्तमस्तं दे-
वेभ्यो देवत्रा दात शुक्रपेभ्यो येषां भागस्थ स्वाहा कार्षसि समु-
द्रस्य वो ऽक्षित्या उन्नये[6] ॥ 20

सं वो दधातु वरुणो मित्रो अग्निस्समिन्द्रस्सं बृहस्पतिः ।
त्वष्टा विष्णुः प्रजया संरराणा यजमानाय द्रविणं दधातु ॥

---

[1] Brl ॰त्तमं [2] Dies Kap. nur nach Ch. [3] So Ch; Kap. S. 2, 16 beide Mal in diesem Avasâna हविष्मं; desgl. MS 1, 3, 1. [4] So corr. Ch त्वो-धमिममध्वर [5] So corr. Ch ॰विष्ये [6] So corr. Ch क्षित्योत्तये

यथाधूरन्धूरो[1] धूर्भिः कल्पन्ताम् ॥

यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः[2] ।
स यन्ता शश्वतीरिषः ॥

स्वाहा वसूनां रुद्राणामादित्यानां पन्नेजनीस्स्थ ॥ वसवो रुद्रा
आदित्या एता वः पन्नेजनीस्समुद्रं गन्धर्वेष्ठामन्वातिष्ठथ[3] वातस्य प-
त्मन्नीडिता वामी ते संदृशि विश्वं रेतो धिषीय तव वाम्यनु संदृ-
शि ॥ ९ ॥ cf. Mâitr. S. 1, 3, 1; Kap. S. 2, 16.

निग्राभ्यास्स्थ देवश्रुतश्शुक्राश्शुक्रभृत आयुर्मे तर्पयत प्राणं मे
तर्पयत व्यानं मे तर्पयतापानं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे त-
र्पयत वाचं मे तर्पयतात्मानं मे तर्पयत प्रजां मे तर्पयत गृहान्मे तर्प-
यत पशून्मे तर्पयत गणान्मे तर्पयत तृप्ता मा तर्पयत प्रीता मा प्री-
णीत ते मे मा[4] वितृषन्देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पू-
ष्णो हस्ताभ्यामाददे यावाध्वरकृद्देवेभ्य ऊर्ध्वमिममध्वरं कृध्युत्तमेन प-
विनेन्द्राय सुषुत्तमं मधुमन्तं पयस्वन्तमिन्द्राय त्वाभिमातिघ्न इन्द्राय
त्वा सहोद इन्द्राय त्वा वसुमत इन्द्राय त्वा रुद्रवत इन्द्राय त्वादित्य-
वतेऽग्नये त्वा रायस्पोषदे विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे
त्वा यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरा अन्तरिक्षे तेनास्मै यज्ञ-
पतय उरु राये[5] कृध्यधि धात्रे वोचश्श्वात्रास्स्थ[6] वृत्रतुरो राधोगूर्ता
अमृतस्य पत्नीस्ता देवीर्देवत्रेमं[7] यज्ञं कृत्वोपहूतास्सोमस्य[8] पिबत
मा भैर्मा संवित्था धिषणे वीते वीडयेथामूर्जं दधाथामूर्जमस्मासु

---

[1] So Ch! Ich habe die offenbar corrupte Stelle nicht zu corrigiren vermocht. [2] So corr. Ch जराः (Missverständniss der Çâradâ-Schrift). [3] So Ch; MS 1, 3, 1 तिष्ठत, was vorzuziehen sein dürfte. [4] Ch ते मे म [5] So corr. Ch रायो [6] So corr. Ch श्वतास्स्थ [7] So corr. Ch देवीन्देव° (Missverständniss der Çâradâ-Schrift). [8] So corr. Ch कृत्वाप°

धत्तं मा वां हिंसिषं मा युवमस्मान्हिंसिष्टं प्रागपागुदगधराक्तास्त्वा दिश आधावन्त्वम्ब निस्वर समरिर्विदः ॥ १० ॥
cf. Mâitr. S. 1, 3, 2. 3; Kap. S. 2, 17.

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां ज्योतिरिकं नाम तृतीयं स्थानकं संपूर्णम् ॥

वाचस्पतये[1] पवस्व ॥ वाजिन्वृष्णो अंशुभ्यां गभस्तिपूतो देवो देवानां पवित्रमसि येषां भागो ऽसि मधुमतीर्न इषस्कृधि स्वंकृतो[2] ऽस्युर्वन्तरिक्षं वीहि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु[3] स्वाहा त्वा सुभो सूर्याय देवेभ्यस्त्वा[4] मरीचिपेभ्यः प्राणाय त्वा व्यानाय त्वोपयामगृहीतो ऽसि ॥

अन्तर्यच्छ मघवन्पाहि सोममुरुष्य रायस्समिषो यजस्व ।
अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षम् ।
सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन्मादयस्व ॥

मधुमतीर्न इषस्कृधि स्वंकृतो[2] ऽस्युर्वन्तरिक्षं वीहि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः[4] पार्थिवेभ्यो मनस्त्वाष्टु[5] स्वाहा त्वा सुभो सूर्याय देवेभ्यस्त्वा[4] मरीचिपेभ्यो ऽपानाय त्वा ॥ १ ॥
cf. Mâitr. S. 1, 3, 4. 5; Kap. S. 3, 1.

आ वायो भूष शुचिपा उप[6] नस्सहस्रं[7] ते नियुतो विश्ववार ।
उपो ते अन्धो मद्यमयामि[8] यतो देव[9] दधिषे पूर्वपेयम् ॥

[1] Dieser ganze Abschnitt (4, 1—16) ist nach T4 accentuirt; es liegen dem Text Ch und T4 zu Grunde. [2] T4 स्वङ्कृतो [3] Ch त्वाष्टः; T4 = Corr. [4] So T4; Ch दिवेभ्य° [5] So T4; Ch त्वाष्ट [6] T4 उपा; Ch उप [7] Ch नास्स° [8] So T4; Ch मध्यम° [9] So T4; Ch दिवो

उपयामगृहीतो ऽसि वायवे त्वा ॥

इन्द्रवायू[1] इमे सुता उप प्रयोभिरागतम् ॥

इन्दवो वामुशन्ति हि ॥

उपयामगृहीतो ऽसि वायव इन्द्रवायुभ्यां त्वैष ते योनिस्सजोषो-
5 भ्यां त्वा ॥

अयं वां मित्रावरुणा सुतस्सोम ऋतावृधा ।

ममेदिह[2] श्रुतं हवम् ॥

उपयामगृहीतो ऽसि मित्रावरुणाभ्यां त्वैष ते योनिर्ऋतायु-
भ्यां त्वा ॥

10 या वां कशा मधुमत्यश्विना सूनृतावती[3] ।

तया यज्ञं मिमिक्षतम् ॥

उपयामगृहीतो ऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वोपयामगृ-
हीतो ऽसि वायव इन्द्रवायुभ्यां त्वैष ते योनिर्विष्णोरुरुक्रम उपया-
मगृहीतो ऽसि मित्रावरुणाभ्यां त्वैष ते योनिर्विष्णोरुरुक्रम उपया-
15 मगृहीतो ऽस्यश्विभ्यां त्वैष ते योनिर्विष्णोरुरुक्रमैतं रक्षस्व मा त्वा
दभन्दुश्चक्षास्ते[4] मावक्षत्[5] ॥ २ ॥ cf. Mâitr. S. 1, 3, 6—9; Kap. S. 3, 2.

अयं वेनश्चोदयत्पृश्निगर्भा[6] ज्योतिर्जरायू[7] रजसो विमानः ।

इममपां[8] संगमे सूर्यस्य शिशुं[9] न विप्रा मतिभी[10] रिहन्ति ॥

उपयामगृहीतो ऽसि शण्डायेन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनि-
20 र्वीरतायै त्वा ॥

तं प्रत्नथा पूर्वथा विश्वथेमथा[11] ज्येष्ठतातिं बर्हिषदं स्वर्विदम् ।

प्रतीचीनं वृजनं दोहसे[12] गिरा यां संजयन्तमधि[13] यासु[14] वर्धसे[15] ॥

---

[1] T4 इन्द्रावायू [2] So T4; Ch समिदिह [3] So T4; Ch सोनृतावती [4] So T4; Ch दबं धश्चा° [5] So T4; Ch मावक्ष्यत् [6] Ch वेद° [7] Ch °जरायु [8] Ch मापी [9] Ch शिशुनं [10] Ch मतिभि [11] Ch विश्वथोमथा [12] So corr. Ch वेहसे; T4 दुहसे [13] So T4; Ch गिरा य सं°; Kap. S. 3, 3 गिरार्या; cf. RV 5, 44, 1. [14] So T4; Ch यस्व [15] So Ch, ohne Acc; T4 वंचसे

उपयामगृहीतो ऽसि मर्काय सूर्याय त्वा जुष्टं गृह्णाम्येष ते योनिः प्रजाभ्यस्त्वा ॥ ३ ॥ cf. Mâitr. S. 1, 3, 10. 11; Kap. S. 3, 3.

अपनुत्तौ[1] शण्डामर्कौ सह तेन यं द्विष्मस्तुथो ऽसि जनधाया देवास्त्वा शुक्रपाः प्रणयन्तु तुथो ऽसि जनधाया देवास्त्वा मन्थिपाः प्रणयन्त्वायुस्संधत्तं प्राणं संधत्तं चक्षुस्संधत्तं श्रोत्रं संधत्तं वाचं संधत्तं मनाधृष्टासि जिन्वेष्यां स्वपत्यां मध्वा वीतं[2] सुवीराः प्रजाः प्रजनयन्परीहि सुप्रजाः[3] प्रजाः प्रजनयन्परीहि ॥

इन्द्रेण मन्युना युजा सासह्याम पृतन्यतः ।
घ्नन्तो वृत्राण्यप्रति ॥

संजग्माना दिवा पृथिव्या शुक्रश्शुक्रशोचिषा मन्थी मन्थिशोचिषा शुक्रो ऽसि शुक्रशोचिर्मन्थ्यसि[4] मन्थिशोचिरच्छिन्नस्य ते देव सोम सुवीर्यस्य[5] रायस्पोषस्य ददितारस्स्याम निरस्तौ शण्डामर्कौ[6] सह तेन यं द्विष्मश्शुक्रस्याधिष्ठानमसि मन्थिनो ऽधिष्ठानमसि ॥

या संस्कृतिः प्रथमा विश्वकर्मा यो मध्यमो बृहस्पतिश्चिकित्वान् ।
यः परमो वरुणो मित्रो अग्निस्तस्मा इन्द्राय सुतमाजुहोत तस्मै सूर्याय सुतमाजुहोत ॥

स्वाहा त्वा सुभो सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यः ॥ ४ ॥
cf. Mâitr. S. 1, 3, 12; Kap. S. 3, 3.

ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ।
अप्सुषदो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥

उपयामगृहीतो ऽस्याग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवनानि पाहि विष्णुस्त्वां[7] पातु विशं[8] त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ उपयामगृहीतो ऽसीन्द्राय त्वा बृहद्वते वय-

---

[1] So die Mss.; cf. unten 4, 4 निरस्ता शण्डामर्का [2] So T4; Ch मध्वा व्रीतं [3] So T4; Ch स्वप्रजाः [4] So corr. Ch शोचिमन्थ्योसि; T4 शोचिमन्थ्यसि [5] So T4; Ch सुवीरस्य [6] So T4 निरस्ता शण्डामर्का; Ch निरस्ता दण्डा [7] T4 स्वां; Ch स्वा [8] So Accent corr. T4 विशन्त्वं

स्वत उक्थाव्यं[1] यत्र इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरि-
न्द्राय त्वा ॥

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥

5 उपयामगृहीतो ऽसि वैश्वानरो ध्रुवो ऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रु-
वतमो ऽच्युतानामच्युतक्षित्तम एष ते योनिर्वैश्वानराय त्वा ॥ ५ ॥
cf. Mâitr. S. 1, 3, 13—15; Kap. S. 3, 4. 5.

उपयामगृहीतो ऽसि मित्रावरुणाभ्यां त्वोक्थेभ्यस्त्वोक्थाव्यं[2] गृ-
ह्णाम्येष ते योनिर्मित्रावरुणाभ्यां त्वा पुनर्हविरसि देवेभ्यस्त्वा देवा-
व्यं पृणच्मि यज्ञस्यायुष उपयामगृहीतो ऽसीन्द्राय त्वोक्थेभ्यस्त्वो-
10 क्थाव्यं[3] गृह्णाम्येष ते योनिरिन्द्राय त्वा पुनर्हविरसि देवेभ्यस्त्वा दे-
वाव्यं पृणच्मि यज्ञस्यायुष उपयामगृहीतो ऽसीन्द्राग्निभ्यां त्वोक्थेभ्य-
स्त्वोक्थाव्यं[4] गृह्णाम्येष ते योनिरिन्द्राग्निभ्यां त्वा देवेभ्यस्त्वा देवाव्यं
पृणच्मि यज्ञस्यायुष उपयामगृहीतो ऽसीन्द्राय त्वेन्द्राय त्वोक्थेभ्य-
स्त्वोक्थाव्यं[5] गृह्णाम्येष ते योनिरिन्द्राय त्वा देवेभ्यस्त्वा देवाव्यं पृ-
15 णच्मि यज्ञस्यायुष उपयामगृहीतो ऽसीन्द्रावरुणाभ्यां त्वोक्थेभ्यस्त्वो-
क्थाव्यं गृह्णाम्येष ते योनिरिन्द्रावरुणाभ्यां त्वा पुनर्हविरसि देवेभ्य-
स्त्वा देवाव्यं पृणच्मि यज्ञस्यायुष उपयामगृहीतो ऽसीन्द्राबृहस्पति-
भ्यां त्वोक्थेभ्यस्त्वोक्थाव्यं गृह्णाम्येष ते योनिरिन्द्राबृहस्पतिभ्यां त्वा
पुनर्हविरसि देवेभ्यस्त्वा देवाव्यं पृणच्मि यज्ञस्यायुष उपयामगृहीतो
20 ऽसीन्द्राविष्णुभ्यां त्वोक्थेभ्यस्त्वोक्थाव्यं गृह्णाम्येष ते योनिरिन्द्रा-
विष्णुभ्यां त्वा पुनर्हविरसि[6] देवेभ्यस्त्वा देवाव्यं पृणच्मि यज्ञस्या-
युषे ॥ ६ ॥ cf. Mâitr. S. 1, 3, 14; Kap. S. 3, 4.

---

[1] So T4; Ch उक्थव्यं [2] So T4; Ch क्थव्यं [3] So T4; Ch त्वोर्थेभ्यस्त्वोर्थाव्यं [4] So T4; Ch त्वोर्थेभ्यस्त्वोर्था° [5] So T4; Ch त्वोर्थेभ्यस्त्वोर्थाव्यां: [6] Das पुनर्हविरसि fehlt hier in T4.

उपयामगृहीतो ऽसि मधवे त्वोपयामगृहीतो ऽसि माधवाय त्वो-
पयामगृहीतो ऽसि शुक्राय त्वोपयामगृहीतो ऽसि शुचये त्वोपयाम-
गृहीतो ऽसि नभसे त्वोपयामगृहीतो ऽसि नभस्याय त्वोपयामगृहीतो
ऽसीषाय त्वोपयामगृहीतो ऽस्यूर्जाय त्वोपयामगृहीतो ऽसि[1] सहसे[2]
त्वोपयामगृहीतो ऽसि सहस्याय त्वोपयामगृहीतो ऽसि तपसे त्वोप- 5
यामगृहीतो ऽसि तपस्याय त्वा ॥

इन्द्राग्नी आगतं सुतं गीर्भिर्नभो वरेण्यम् ।
अस्य पातं धियेषिता[3] ॥

उपयामगृहीतो ऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां[4] त्वा ॥

ओमासश्चर्षणीधृतो विश्वे देवास आगत । 10
दाश्वांसो दाशुषस्सुतम् ॥

उपयामगृहीतो ऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्य-
स्त्वा देवेभ्यः ॥ ७ ॥ cf. Mâitr. S. 1, 3, 16—18; Kap. S. 3, 5.

जनिष्ठा उग्रस्सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः ।
अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा[5] ॥ 15

उपयामगृहीतो ऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा
मरुत्वते ॥

इन्द्र मरुत्व इह पाहि सोमं[6] यथा शार्याते अपिबस्सुतस्य ।
तव प्रणीती[7] तव शूर शर्मन्नाविवासन्ति कवयस्सुयज्ञाः ॥

उपयामगृहीतो ऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा 20
मरुत्वते ॥

मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।
आसिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि[8] प्रदिवस्सुतानाम् ॥

[1] In Ch findet sich hier noch महसे त्वोपयामगृहीतो सि (Dittographie!)
[2] Ch सहसोव [3] So T4; Ch धियोषिता [4] Ch hat 2 Mal त्वेष ते योनिरिन्द्राग्निभ्यां, eine offenbare Dittographie; in T4 richtig. [5] T4 धनंनद्धं [6] So T4; Ch सोमे [7] Ch प्रणीति [8] T4 राजास्य oder राजस्य

उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यं शासमिन्द्रम् ।
विश्वासाहमवसे[1] नूतनायोग्रं सहोदामिह तं हुवेम ॥

5 उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥

महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ[2] इव ।
स्तोमैर्वत्सस्य वावृधे ॥

उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय[3] त्वा ॥

10 महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनस्सहोभिः[4] ।
अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुस्सुकृतः कर्तृभिर्भूत् ॥

उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय[5] त्वा ॥ ८ ॥

cfr. Mâitr. S. 1, 3, 20—25; Kap. S. 3, 6.

उदु[6] त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ॥

15 चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥

द्यां गच्छ स्वर्गच्छ रूपं वो रूपेणाभ्यागां[7] वयसा वयस्तुथो वो विश्ववेदा विभजतु वर्षिष्ठे ऽधि नाक एतत्ते अग्ने राध एति सोमच्युतं तन्मित्रस्य पथा नयतस्य[8] पथा प्रेत[9] चन्द्रदक्षिणा ब्राह्मणमद्यध्यासं
20 पितृमन्तं पैतृमत्यमृषिमार्षेयं[10] सुधातुदक्षिणम् ॥

---

[1] So T4; Ch विश्वासहम° [2] Ch पर्जन्ये वृष्टिस [3] Ch माहेन्द्राय [4] So T4; Ch नृवदा चर्षणिप्रा तत द्विवार्हा अमिनस्स° [5] Ch °द्रेहेन्द्राय [6] Für dies, sowie das folgende Kap. collationirt auch T1 (sub No. 11, sehr defekt) und Brl fol. 32. 33. [7] T1 रूपेणाभ्यागां; Brl रूपेणाभ्यागां; T4 °भ्यागा; Ch °भ्यागाँ, dann ँ wegcorrigirt. [8] So T1, Brl; T4 नायतस्य; Ch नयंतस्य [9] Brl एत [10] Ch पैत्र्यमन्तम°

अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुरएतु प्रभिन्दन् ।
अयं शत्रूञ्जयतु जर्हृषाणो ऽयं वाजं जयतु वाजसातौ ॥
वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्न्यासु ।
हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्रौ ॥
वि स्वः पश्य व्यन्तरिक्षं यतस्व सदस्यैरसंद्राता मधुमती देवत्रा 5
गच्छ प्रदातारमाविशानवहायास्मान्देवि दक्षिणे देवयानेन पथा यती सुकृतां लोके सीद तन्नो संस्कृतम् ॥ ९ ॥[1]
cf. Māitr. S. 1, 3, 37; Kap. S. 3, 7.

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ॥
उपयामगृहीतो ऽस्यादित्येभ्यस्त्वा ॥ 10
कदा चन प्रयुच्छस्युभे निपासि जन्मनी ।
तुरीयादित्य सवनं त इन्द्रियमातस्था अमृतं दिवि ॥
उपयामगृहीतो ऽस्यादित्येभ्यस्त्वा ॥
यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः ।
आ वो ऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवोवित्तरासत् ॥ 15
उपयामगृहीतो ऽस्यादित्येभ्यस्त्वा ॥ विवस्व आदित्यैष ते सोमपीथस्तस्मिन्मन्दस्व ॥ या दिव्या वृष्टिस्तया त्वा श्रीणामि ॥
अदब्धेभिस्सवितः पायुभिष्ट्वं शिवेभिरद्य परिपाहि नो गयम् ।
हिरण्यजिह्वस्सुविताय नव्यसे रक्षा माकिर्नो अघशंस ईशत ॥
उपयामगृहीतो ऽसि देवाय त्वा सवित्र[7] उपयामगृहीतो ऽसि सु- 20
शर्मासि सुप्रतिष्ठानो बृहदुक्षे नम एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ १० ॥ cf. Māitr. S. 1, 3, 26—28; Kap. S. 3, 8.

---

[1] Ch ग्निर्दिवि [2] T4 मविशानम°, Ch विशनव° [3] Ch सुकृतं [4] Die ९ fehlt in Ch, findet sich aber in T4. [5] So Brl u. T1; T4 इन्द्रियमा°, Ch इन्द्रियाम° [6] T1 माकिर्णा [7] T4 सवित्रे

उपयामगृहीतो ऽसि बृहस्पतिसुतस्य इन्द इन्द्रियावतः पत्नीवतो ग्रहमृध्यासमग्ना ३ इ पत्नीवा ३ न्त्सजूस्त्वष्ट्रा[1] सोमं पिबोपयामगृहीतो ऽसि हरिरसि हारियोजनो हर्योस्स्थाता हरिभ्यां त्वा स्तुतस्तोमस्य ते देव सोम शस्तोक्थस्येष्टयजुषो हरिवतो ग्रहमृध्यासं हर्योस्स्थ हरिवतो धानास्सहसोमा इन्द्रस्य ॥

अग्न आयूंषि पवस आसुवोर्जमिषं च नः ।
आरे बाधस्व दुच्छुनाम् ॥

उपयामगृहीतो ऽस्यग्नये त्वा तेजस्वत एष ते योनिरग्नये त्वा तेजस्वते ॥

ओजस्तदस्य तित्विष उभे यत्समवर्तयत् ।
इन्द्रश्चर्मेव रोदसी ॥

उपयामगृहीतो ऽसीन्द्राय त्वौजस्वत एष ते योनिरिन्द्राय त्वौजस्वते ॥

अदृश्रन्नस्य केतवो वि रश्मयो जनाँ अनु ।
भ्राजन्तो अग्नयो यथा ॥

उपयामगृहीतो ऽसि सूर्याय त्वा भ्राजस्वत एष ते योनिस्सूर्याय त्वा भ्राजस्वते ॥

इन्द्रमिद्धरी वहतो ऽप्रतिधृष्टशवसम्[2] ।
ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणाम्[3] ॥

उपयामगृहीतो ऽसीन्द्राय त्वा हरिवत एष ते योनिरिन्द्राय त्वा हरिवते ॥ ११ ॥ cf. Mâitr. S. 1, 3, 29—34; Kap. S. 3, 9.

धाता रातिस्सवितेदं जुषन्तां प्रजापतिर्वरुणो मित्रो अग्निः ।
त्वष्टा विष्णुः प्रजया संरराणा यजमानाय द्रविणं दधातु[4] ॥

---

[1] T4 सजो° [2] T4 श्रवसम [3] So T4; Ch °ष्याणाम [4] So T4; Ch दधात

समिन्द्र नो मनसा नेषि[1] गोभिस्सं सूरिभिर्हरिवस्सं स्वस्त्या ।
सं ब्रह्मणा देवकृतं यदस्ति सं देवानां सुमत्या यज्ञियानाम् ॥
सं वर्चसा पयसा सं तनूभिरगन्महि[2] मनसा सं शिवेन ।
त्वष्टा सुदत्रो विदधातु[3] रायो[4] ऽनु नो मार्ष्टु तन्वो यद्विलिष्टम् ॥
सुगा वो देवास्सदनेदमस्तु[5] य आजग्म सवनेदं जुषाणाः । 5
जक्षिवांसः पपिवांसश्च विश्वे ऽस्मे धत्त वसवो वसूनि ॥
यानावह उशतो देव देवांस्तान्प्रेरय[6] स्वे अग्ने सधस्थे ।
वहमाना भरमाणा हवींष्यसुं घर्मं दिवमातिष्ठतानु ॥
यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ।
ऋधगयाडृधगुताशमिष्ट[7] विद्वान्प्रजानन्नुपयाहि यज्ञम् ॥ 10
यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहैष ते यज्ञो[8]
यज्ञपते सहसूक्तवाकस्सुवीरस्स्वाहा देवा गातुविदो गातुं वित्वा गा-
तुमित मनसस्पत इमं देवयज्ञं स्वाहा वाचि स्वाहा वाते धाः ॥ १२ ॥
cf. Mâitr. S. 1, 3, 38; Kap. S. 3, 10.
उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।
अपदे पादा प्रतिधातवे ऽकरुतापवक्ता हृदयाविधश्चित् ॥ 15
शतं ते राजन्भिषजस्सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु ।
आरे बाधस्व निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मात् ॥
अग्नेरनीकमप आविवेशापां नपात्प्रतिरक्षन्नसुर्यम् ।
दमे दमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत् ॥
समुद्रे ते हृदयमप्स्वन्तस्सं त्वा विशन्त्वोषधीरुतापः । 20
यज्ञस्य त्वा यज्ञपते सह[9] सूक्तवाके नमोवाके विधेम ॥
स्वाहावभृथ[10] निचुङ्कुण निचेरुरसि[11] निचुङ्कुणो ऽव नो देवैर्देव-

[1] So corr. T 4 नेषि; Ch निषि [2] So T 4; Ch °रागन्महि [3] T 4 विदधातु
[4] So corr. T 4 रायें; desgl. Ch, ohne Accent. [5] T 4 सदनेदमस्तु [6] So T 4;
Ch यशतो देव देवास्ता° [7] T 4 गायाडृधगु°; Ch गयाद्धृधगु° [8] So T 4; Ch यज्ञा
[9] sic! [10] So T 4; Ch °भृथो [11] So T 4; Ch निचुंकुणा निचेसरसि

कृतमेनो यच्चेव मर्त्यैर्मर्त्यकृतमुरोरा नो देव[1] रिषस्पाहि[2] देवीराप एष वो गर्भस्तं वस्सुप्रीतं[3] सुभृतमभार्ष देवेषु नस्सुकृतो ब्रूताभिष्ठितो वरुणस्य पाशो ऽवहतो वरुणस्य पाशो ऽप्सु धौतस्य ते देव सोम नृभिस्स्तुतस्य यो भक्षो गोसनिर्यो[4] ऽश्वसनिस्तस्य त उपहूत उपहूतस्य भक्षं[5] कृणोमि प्रत्यस्तो वरुणस्य पाशो[6] नमो वरुणस्य पाशाय ॥

उदेत प्रजामायुर्वर्चो दधाना अध स्याम[7] सुरभयो गृहेषु ।
गायत्रं[8] छन्दांस्यनु संरभन्तामस्मान्राय उत यज्ञास्सचन्ताम् ॥

सुप्रीतश्शिशुरप[9] आविवेश ॥ उन्नेतर्वस्यो ऽभ्युन्नया नः[10] ॥ एधो ऽस्येधिषीमहि[11] समिदसि समेधिषीमहि[12] तेजो ऽसि तेजो मयि[13] धेहि ॥

अपो अद्यान्वचारिषं रसेन समगन्महि ।
पयस्वानग्न आगमं तं मा संसृज वर्चसा ॥
सं माग्ने वर्चसा सृज प्रजया च धनेन च ।
विद्युर्मे अस्य देवा इन्द्रो विद्यात्सहर्षिभिः[14] ॥ ॥ १३ ॥

cf. Mâitr. S. 1, 3, 39; Kap. S. 3, 11.

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम[15] ।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम ॥
अग्ने व्रतपते[16] व्रतमालभे तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासम् ॥
अग्निर्होतोप[17] तं हुवे देवान्यज्ञियानिह[18] यान्यजामहे ।
आ देवा यन्तु सुमनस्यमाना वियन्तु देवा हविषो[19] मे अस्य ॥

---

[1] So T4; Ch णो देवो [2] Ch रेष° [3] So T4; Ch सुप्रोतो [4] So T4; Ch गांसनि [5] Ch भक्षे [6] So T4; Ch प्रत्यस्तो वरुणास्य पाशो .[7] So T4; Ch अधस्स्याम [8] So T4; Ch गायत्रो [9] So T4; Ch °राप [10] So T4; Ch तन्नोवस्यभ्युन्नया नः ॥ cf. die Formel Mâitr. S. 1, 3, 39. [11] So T4; Ch स्येधेमहि; [12] So corr. T4 समेधिषेमहि; Ch समिधेषोमहि [13] So T4; Ch महि [14] T4 सहर्षभिः [15] T4 पुष्येम [16] So T4; Ch व्रतपति [17] So corr. Ch अग्निर्होताप; T4 अग्नेर्होतोप [18] So T4; Ch यागिह [19] So T4; Ch हविषा

युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवै[1] जातवेदः ।
इन्धानास्त्वा सुप्रजसस्सुवीरा ज्योग्जीवेम बलिहृतो वयं ते ॥
अङ्गिरसो मास्य यज्ञस्य प्रथमानुवाकैरवन्तु ॥ समिद्धो अग्निराहु-
तस्स्वाहाकृतः पिपर्तु नः ॥ मनो ऽसि प्राजापत्यं मनसा मा भूतेना-
विश वागस्यैन्द्री सपत्नक्षयणी वाचामिन्द्रियेणाविश देवाः पितरः 5
पितरो देवा यो ऽस्मि स सन्यजे[2] तद्वः प्रब्रवीमि तस्य मे वित्त स्वं
म[3] इष्टमस्तु शुनं शान्तं[4] स्वं कृतं[5] वसन्तमृतूनां[6] प्रीणामि स मा
प्रीतः प्रीणातु वसन्तस्याहं देवयज्ययौजस्वान्पयस्वान्भूयासं ग्रीष्ममृ-
तूनां[6] प्रीणामि स मा प्रीतः प्रीणातु ग्रीष्मस्याहं देवयज्ययौजस्वां-
स्तेजस्वान्भूयासं वर्षा ऋतूनां[7] प्रीणामि ता मा प्रीताः प्रीणन्तु व- 10
र्षाणामहं देवयज्यया पुष्टिमान्पशुमान्भूयासं शरदमृतूनां[8] प्रीणामि
सा मा प्रीता प्रीणातु शरदो ऽहं देवयज्ययान्नवान्वर्चस्वान्भूयासं हे-
मन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु हेमन्तस्याहं देवयज्यया
सहस्वान्वीर्यावान्भूयासम् ॥ १४ ॥ cf. Mâitr. S. 1, 4, 1.

इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । 15
तद्वां चेति प्र वीर्यम् ॥
श्नथद्वृत्रमुत सनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात् ।
इरज्यन्ता वसव्यस्य भूरेस्सहस्तमा सहसा वाजयन्ता ॥
या वां सन्ति पुरुस्पृहो नियुतो दाशुषे नरा ।
इन्द्राग्नी ताभिरागतम्[9] ॥ 20
तां योधिष्टमभि गा इन्द्र नूनमपस्स्वरुषसो[10] अग्न ऊढाः[11] ।
दिशस्स्वरुषस[12] इन्द्र चित्रा अपो गा अग्ने युवसे नियुत्वान् ॥

---

[1] So T4; desgl. Ch, ohne Accent; cf. Mâitr. S. 1, 4, 1. [2] T4 या स्मि स संन्यज; Ch यो स्मिन्स सन्यजे [3] So T4; Ch वितु स्वस्म [4] So corr. T4 शातं; Ch शान्ते [5] T4 स्वङ्कृतं [6] T4 तूणां [7] T4 ऋतूं [8] T4 तूनां ohne Accent. [9] So T4; Ch तेभिर॰ [10] T4 स्वरुषांसां [11] So T4; Ch रूढाः [12] So T4; Ch दिशस्स्तरुषस

ता वामेषे रथानामिन्द्राग्नी हवामहे ।
पती तुरस्य[1] राधसो विद्वांसा गिर्वणस्तमा[2] ।
अश्रवं हि भूरिदावत्तरा[3] वां विजामातुरुत वा घा स्यालात् ।
अथा सोमस्य प्रयती[4] युवाभ्यामिन्द्राग्नी[5] स्तोमं जनयामि नव्यम् ॥
इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् ।
साकमेकेन कर्मणा ॥
आ वृत्रहणा वृत्रहभिः शुष्मैरिन्द्र[6] यातं नमोभिरग्ने अर्वाक् ।
युवं राधोभिरकवेभिरिन्द्राग्ने[7] अस्मे भवतमुत्तमेभिः ॥
उग्रा विघनिना मृध इन्द्राग्नी हवामहे ।
ता नो मृडात ईदृशे ॥
प्र चर्षणिभ्यः पृतनाहवेषु प्र पृथिव्या रिरिचाथे[8] दिवश्च ।
प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा[9] प्रेन्द्राग्नी विश्वा भुवनात्यन्या ॥
गोमद्धिरण्यवद्वसु यद्वामश्वावदीमहे ।
इन्द्राग्नी तद्वनेमहि[10] ॥
गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे[11] रयिं यशसं पूर्वभाजम् ।
इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो[12] नव्येभिस्तिरतं देष्णैः[13] ॥
पूषा गा अन्वेतु नः पूषा[14] रक्षत्वर्वतः ।
पूषा वाजं सनोतु नः ॥
शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे[15] अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥
क्षेत्रस्य पतिना वयं हितेनेव जयामसि ।
गामश्वं पोषयित्न्वा[16] स नो मृडातीदृशे ॥

---

[1] So T4; Ch पतोत्तरस्य  [2] So T4; Ch धिर्वण॰  [3] So T4; Ch भूरिद्मावत्तग  [4] T4 प्रयति; Ch प्रयतो  [5] So T4; Ch युवभ्या॰  [6] So corr. T4 वृत्रहाभिश्शुष्मैरिन्द्रा; Ch वृत्रधाभिशुष्कैरिन्द्र  [7] T4 कवेभिः ॥ इन्द्राग्नो  [8] So T4; Ch रिरिच्चाथे  [9] Ch रःहित्वा  [10] T4 तद्वनोमहि  [11] So T4; Ch ईंधे  [12] T4 प्र नू  [13] So T4; Ch नव्येभिन्दिरतदेष्णोः  [14] Dies Wort fehlt in Ch.  [15] T4 विश्वरूपे  [16] So corr. T4 पूषयित्वा; desgl. Ch, ohne Accent.

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव[1] पयो अस्मासु धुक्ष्व ।
मधुश्च्युतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु ॥ ॥ १५ ॥
अग्नाविष्णू[2] महि तद्वां महित्वं पाथो[3] घृतस्य गुह्यानि नाम ।
दमे दमे सप्त रत्ना दधाना प्रति वां[4] जिह्वा घृतमुच्चरण्यत् ॥
अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा । 5
दमे दमे सुष्टुत्या वावृधानानु वां जिह्वा घृतमाचरण्यत् ॥
अग्निर्मुखं प्रथमो देवतानां संगतानामुत्तमो विष्णुरासीत् ।
यजमानाय परिगृह्य देवान्दीक्षयेदं[5] हविरागच्छतं नः ॥
इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे ।
या शश्वन्तमाचखादावसं पणिं ता ते दात्राणि तविषा सरस्वति ॥ 10
इयं शुष्मेभिर्बिसखा[6] इवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः ।
पारावतघ्नीमवसे[7] सुवृक्तिभिस्सरस्वतीमाविवासेम धीतिभिः ॥
जनाय चिद्य ईवत[8] उ लोकं बृहस्पतिर्देवहूतौ[9] चकार ।
घ्नन्वृत्राणि वि पुरो[10] दर्दरीति[11] जयञ्छत्रूंरमित्रान्पृत्सु साहन्[12] ॥
बृहस्पतिस्समजयद्वसूनि महो व्रजान्गोमतो देव एषः । 15
अपः सिषासन्स्वरप्रतीतो[13] बृहस्पतिर्हन्त्यमित्रमर्कैः ॥
पावका नस्सरस्वती वाजेभिर्वाजिनीवती[14] ।
यज्ञं वष्टु धियावसुः ॥
इमा जुह्वाना युष्मदा नमोभिः प्रति स्तोमं सरस्वति जुषस्व ।
तव शर्मन्प्रियतमे दधाना उप स्थेयाम शरणं न वृक्षम्[15] ॥ 20

---

[1] Ch धेनुरेव [2] Der Anfang dieses Kap. auch mit Brl fol. 172. 173 collationirt. [3] T 4 महित्वांम्याथां [4] T 4 प्रति ते [5] So T 4 und Brl 172! Ch दीक्षायदं [6] Ch °भिंसखा [7] Ch परावत° [8] So T 4; Ch ईवते [9] T 4 बृहस्पतेर्दे° [10] So T 4; Ch पुरौ [11] Ch दन्दरीति [12] So Ch, ohne Accent; T 4 साहान् Brl fol. 173 पांहन [13] Brl fol. 173 रप्रचेतो [14] Brl fol. 173 वाजिभि° [15] Hier bricht Brl ab.

आ नो दिवो बृहतः पर्वतादा सरस्वती यजता[1] गन्तु यज्ञम् ।
हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ॥
वृषभं चर्षणीनां विश्वरूपमदाभ्यम् ।
बृहस्पतिं वरेण्यम् ॥
अदेवेन मनसा यो रिषण्यति शासामुग्रो[2] मन्यमानो जिघांसति ।
बृहस्पते मा प्रणक्तस्य[3] नो वधो निकर्म मन्युं दुरेवस्य शर्धतः ॥
बृहस्पते जुषस्व नो हव्यानि विश्वदेव्य ।
रास्व रत्नानि दाशुषे ॥
बृहस्पते अति यदर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि[4] चित्रम् ॥
आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ।
मध्वा रजांसि सुक्रतू[5] ॥
प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन ।
आ नो जने श्रवयतं[6] युवाना श्रुतं मे मित्रावरुणा हवेमा ॥
हिरण्यगर्भः ॥
यः प्राणतो निमिषतश्च राजा पतिर्विश्वस्य जगतो बभूव ।
यं[7] ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥
अग्नीषोमा इमं सु मे शृणुतं वृषणा हवम् ।
प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ॥
अग्नीषोमा सवेदसा[8] सहूती वनतं गिरः ।
सं देवत्रा बभूवथुः ॥

---

[1] T4 जगता [2] So Ch, ohne Accent; T4 शासमुग्रो cf. RV 2, 23, 12. [3] So corr. T4 प्रणत्तस्य; desgl. Ch, ohne Accent. [4] So T4; Ch देहि; cf. RV 2, 23, 15. [5] Ch सुक्रतु [6] So Ch, ohne Accent; T4 जनं श्रवतं; cf. RV 7, 62, 5. [7] Das यं in T4 vorhanden, fehlt in Ch. [8] So corr. T4 सवेदसो; Ch सवेधसा

युवमेतानि दिवि[1] रोचनान्यग्निश्च सोम सक्रतू अधत्तम् ।
युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमा अमुञ्चतं गृभीतान् ॥
आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः ।
अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम् ॥
वैश्वानरो न ऊतय आ प्रयातु परावतः ।
अग्निरुक्थेन[2] वाहसा[3] ॥
त्वद्विप्रो जायते वाज्यग्ने त्वद्वीरासो अभिमातिषाहः ।
वैश्वानर त्वमस्मासु धेहि वसूनि राजन्स्पृहयाय्याणि ॥
ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् ।
अजस्रं घर्ममीमहे ॥
वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण ॥
पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ।
वैश्वानरस्सहसा[4] पृष्टो अग्निस्स नो दिवा[5] स रिषः पातु नक्तम् ॥
अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरं सुवीरम् ॥
वयं जयेम शतिनं सहस्रिणं वैश्वानर वाजमग्ने तवोतिभिः ॥
इमं मे वरुण श्रुधी हवमद्या च मृडय ।
त्वामवस्युराचके ॥
तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः ॥
शतेन पाशैर्वरुणाभिधेहि[6] मा ते मोच्यनृतवाङ्[7] नृचक्षः ।
आस्तां जल्म[8] उदरं स्रंसयित्वा कोश इवाबन्धः[9] परिकृत्यमानः ॥

---

[1] Ch द्विवे [2] So T4; Ch °रुक्तेन [3] In T4 ohne Accent. [4] T4 सह-सहसा [5] T4 दिवस्स [6] So T4; Ch शतेन पाशो व° [7] So T4; Ch नृतवा [8] So T4; desgl. Ch, ohne Accent; cf. जाल्म AV 4, 16, 7. [9] T4 vielleicht इव बन्धः; Ch इवाबन्धुः

धीरा त्वस्य महिना जनूंषि वि यस्तस्तम्भ रोदसी चिदुर्वी ।
प्र नाकमृष्वं नुनुदे बृहन्तं द्विता नक्षत्रं पप्रथच्च भूम ॥ ॥ १६ ॥

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां ग्रहस्थानकं नाम चतुर्थं स्थानकं संपूर्णम् ।[1]

---

5 अग्नीषोमाभ्यां[2] यज्ञश्चक्षुष्मांस्तयोरहं देवयज्यया चक्षुषा चक्षुष्मान्भूयासमग्निरन्नस्यान्नपतिस्तस्याहं देवयज्ययान्नस्यान्नपतिर्भूयासं दब्धिरस्यदब्धो[3] भूयासममुं दभेयमग्नीषोमौ[4] वृत्रहणौ[5] तयोरहं देवयज्यया वृत्रहा भूयासमिन्द्राग्न्योरहं देवयज्ययौजस्वान्वीर्यावान्भूयासमिन्द्रस्याहं देवयज्ययेन्द्रियावान्भूयासं महेन्द्रस्याहं देवयज्यया जेह-
10 मानं[6] भूमानं गमेयमिन्द्रस्याहं विमृधस्य देवयज्ययासपत्नो भूयासमिन्द्रस्याहमिन्द्रियावतो देवयज्यया पशुमान्भूयासम् ॥ सरस्वत्या अहं देवयज्यया[7] वाचमन्नाद्यं पुषेयं पूष्णो ऽहं देवयज्यया पुष्टिमान्पशुमान्भूयासमदित्या अहं देवयज्यया[7] प्रतिष्ठां गमेयं विश्वेषामहं देवानां[8] देवयज्यया प्राणानां सायुज्यं गमेयं द्यावापृथिव्योरहं देवय-
15 ज्यया[8] प्रजनिषेयं प्रजया पशुभिरग्नेरहं[9] स्विष्टकृतो देवयज्ययायुः प्रतिष्ठां गमेयम् ॥

---

[1] Dies die Unterschrift des Kapitels in Ch; in T4 lesen wir nur इति ग्रहस्थानकं समाप्तम् ॥ [2] Von hier an der Text wieder nur nach Ch. [3] So corr. Ch °दब्धे [4] So corr. Ch धुभेयम°; cf. TS 1, 6, 2, 4. [5] So corr. Ch वृत्रहाणौ [6] So corr. जेहामानं [7] So corr. Ch अहंदेव° (Missverständniss der Çâradâ-Schrift). [8] So corr. Ch °हर्दे° [9] So corr. Ch रहों

अतीतपद्यद्रे[1] यद्ममयाड् देवाँ अरंकृतः ।
सोमस्ते[2] मित्रो अर्यमा रायस्पोषं दधातन ॥ ॥ १ ॥

बृहतो[3] मा वाजेन वाजय वामदेवस्य मा वाजेन वाजय रथन्त-रस्य[4] मा वाजेन वाजय जुष्टे जुष्टिं ते गमेयमुपहूत उपहवं ते ऽशीय सुहवामेहि सह प्रजया सह रायस्पोषेण ॥ 5

अस्मास्विन्द्र इन्द्रियं दधात्वस्मान्रायो मघवानस्सचन्ताम् ।
अस्माकं सन्त्वाशिषः ॥
आशीर्म ऊर्जमुत[5] सुप्रजास्त्वमिषं दधातु द्रविणं सवर्चसम्[6] ।
संजयन्क्षेत्राणि सहसाहमिन्द्र कुर्वाणो अन्याँ[7] अधरान्सपत्नान् ॥

ब्रह्म तेजो मे पिन्वस्व क्षत्रमोजो मे पिन्वस्व प्रजां वृष्टिं मे पि- 10
न्वस्व पशून्विशं मे पिन्वस्वेषमूर्जं मे पिन्वस्व ॥

मयि त्यदिन्द्रियं[8] महन्मयि द्युम्न उत क्रतुः ।
त्रिशुग्घर्मस्सदमिन्मे[9] विभाति विराड् ज्योतिषा सह ॥

तस्य दोहमशीय[10] ब्रह्म पिन्वस्व कल्पन्तां दिशो यजमानस्यायुषे ददतो मे मा क्षायि कुर्वतो मे मोपदसद्भजतां भागी माभागो भक्त ये 15
ब्राह्मणास्सोम्यास्तेषामिदं हविर्नासोम्यस्यास्त्यस्ति[11] निर्भक्तो यं द्वि-ष्मः ॥ २ ॥ cf. Mâitr. S. 1, 4, 1.

देवस्याहं बर्हिषो देवयज्यया प्रजावान्भूयासं देवस्याहं नराशंसस्य देवयज्यया पशुमान्भूयासं देवस्याहमग्नेस्स्विष्टकृतो[12] देवयज्ययायुः प्रतिष्ठां गमेयम् ॥ 20

---

[1] So corr. Ch अतीत्वप° [2] So corr. Ch सोमस्त [3] Ch वृहतो [4] So corr. Ch रथन्तरमस्य [5] So corr. Ch ऊर्जसुत [6] cf. TS 3, 2, 8, 5. [7] Ch अन्यां [8] So corr. Ch त्यन्द्रियं [9] So corr. Ch सदमिन्दे (wohl Missverständniss der Çâradâ-Schrift). TBr 3, 7, 9, 4 u. TÂr 4, 21, 1 lesen मयि धायि सुवीर्यं त्रिशुग्घर्मो विभातु मे । [10] So corr. Ch liest तस्यादिह नशीय; aber cf. तस्य दोहमशीमहि in TBr. 3, 7, 9, 4; TÂr. 4, 21, 1; VS 38, 28. [11] So meine Correctur. Ch हविर्नामोस्यस्या° [12] So corr. Ch °मग्निः

आ माशिषो दोहकामा इन्द्रवन्तो[1] हवामहे ।
धुक्षीमहि प्रजामिषम् ॥

सा मे सत्याशीर्देवान्गम्याज्जुष्टाज्जुष्टतरा[2] पन्यात्पन्यतराहेडता[3] मनसा देवान्गच्छ यो देवयानः पन्थास्तेन देवान्गच्छ यज्ञो देवान्गच्छतु
5 यज्ञो देवान्गम्याददो[4] मा गच्छतु ॥ रोहितेन त्वाग्निर्देवतां गमयतु हरिभ्यां त्वेन्द्रो देवतां गमयत्वेतशेन त्वा सूर्यो देवतां गमयतु यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ यज्ञस्यायुरसि यज्ञो म आयुर्दधातु ॥

वि ते मुञ्चामि रशनां वि रश्मीन्वि योक्त्राणि परिचर्तनानि[5] ।
दत्त्वायास्मभ्यं द्रविणेह भद्रं प्र मा ब्रूताद्भविदां[6] देवताभ्यः ॥

10 विष्णोश्च यज्ञस्यान्तस्तयोरहं देवयज्ययायुः[7] प्रतिष्ठां गमेयम् ॥ ३ ॥
cf. Mâitr. S. 1, 4, 1.

इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्वां अथर्वभिः ॥ तस्य यज्ञस्येष्टस्य स्विष्टस्य द्रविणमागच्छत्वङ्गिरसो[8] मे ऽस्य यज्ञस्य प्रातरनुवाकैरहौषुर्वसुर्यज्ञो[9] वसुमान्यज्ञो[10] वसु वसीय[11] वसुमन्तो भूयास्म तस्य यज्ञस्य वसोर्वसुमतो वसु मागच्छतु सोमो रेतोधास्तस्याहं देव-
15 यज्यया सुरेतोधा रेतो धिषीय[12] त्वष्टा रूपाणां विकर्ता तस्याहं देवयज्यया विश्वरूपं प्रियं पुषेयं देवानां पत्नीरग्निर्गृहपतिर्मिथुनं यजमानस्य तयोरहं देवयज्यया[13] मिथुनेन प्रजनिषीयायुषे[14] वर्चसे रायस्पोषाय सुप्रजस्त्वाय ॥

सं पत्नी पत्या सुकृतेषु गच्छतां यज्ञस्य युक्तौ[15] धुर्या अभूताम् ।
20 आप्रीणानौ विजहता अरातिं दिवे ज्योतिरुत्तममारभेथाम् ॥

---

[1] So corr. इंद्रो वर्तो [2] So corr. Ch °ग्रोन्देवा° [3] So corr. Ch तरा इंडता; cf. aber Mâitr. S. 1, 4, 1. [4] So corr. Ch °ददौ [5] So corr. Ch °चत्तनानि [6] So corr. Ch प्र मा ष्ट्रेता°; cf. Mâitr. 1, 4, 1. [7] So corr. Ch °ह्रदेव° [8] So corr. Ch स्विष्टो स्य द्रविणस्मागच्छ° [9] So corr. Ch वेसु यज्ञो [10] So corr. Ch वसुस्मा° [11] So Ch! [12] So corr. Ch धिशोय [13] So corr. Ch तयारहदे° [14] Ch °षेया° [15] So corr. Ch युक्तो

स्वाहा स्वाहेष्टिभ्यो वषडनिष्टेभ्यो भिषजौ[1] स्विष्ट्यै स्वाहा नि-
ष्कृतिर्दुरिष्ट्यै स्वाहा ॥ देवेभ्यस्तनूभ्यस्स्वाहा ॥

अयाश्चाग्ने[2] ऽस्यनभिशस्तिश्च सत्यमित्त्वमया असि ।
अयास्सन्मनसा[3] कृतो ऽयास्सन्हव्यमूहिषे ऽया नो धेहि भेषजम् ॥

स्वाहा सरस्वत्यै वेशभगिन्यै स्वाहा ॥ या सरस्वती वेशभगिनी
तस्या नो रास्व तस्यास्ते भक्तिवानो भूयास्म यज्ञस्य त्वा प्रमयाभिम-
योन्मया[4] प्रतिमया परिगृह्णामि वेदो ऽसि वित्तिरसि वेदसे त्वा वेदो
मे विन्द विदेय ॥

घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणम् ।
वेदो[5] वाजं ददातु मे वेदो वीरं ददातु मे ॥

वृषा वृषण्वतीभ्यो वेदपत्नीभ्यो भव ॥ ४ ॥ cf. Mâitr. S. 1, 4, 1. 3.

प्रजापतेर्भागो[6] ऽस्यूर्जस्वान्पयस्वानक्षितो ऽस्यक्षित्यै त्वाक्षितो ना-
मासि मा मे क्षेष्ठाः[7] प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदान-
रूपे मे पाह्यूर्गस्यूर्जं[8] मयि धेह्या मा गम्याः पूर्णमसि पूर्णं मे[9] भूयास्सदसि
सन्मे भूयास्सर्वमसि सर्वं मे भूया अक्षितिरसि मा मे क्षेष्ठाः प्राच्या दिशा
देवा ऋत्विजो मार्जयन्तां दक्षिणया दिशा मासाः पितरो मार्जयन्तां
प्रतीच्या दिशा गृहाः पशवो मार्जयन्तामुदीच्या दिशाप ओषधयो
वनस्पतयो मार्जयन्तामूर्ध्वया दिशा यज्ञस्संवत्सरो मार्जयन्ताम् ॥
पृथिवीं विष्णुर्व्यक्रंस्त गायत्रेण छन्दसा निर्भक्तो यं द्विष्मो ऽन्तरिक्षं
विष्णुर्व्यक्रंस्त त्रैष्टुभेन छन्दसा निर्भक्तो यं द्विष्मो दिवं विष्णुर्व्यक्रंस्त
जागतेन छन्दसा निर्भक्तो यं द्विष्मो दिशो विष्णुर्व्यक्रंस्तानुष्टुभेन छ-
न्दसा निर्भक्तो यं द्विष्मो ऽगन्म स्वस्सं[10] ज्योतिषाभूम सूर्यस्यावृतम-
न्वावर्त इदमहं यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तस्य प्राणं निवेष्टया-

---

[1] So corr. Ch भिषजो [2] So corr. Ch अयश्चा° [3] Ch अया सा° [4] So corr. Ch °योर्मया [5] So corr. Ch वेद [6] Dies Kap. auch mit W 1 β collationirt. [7] W 1 β क्षिष्ठाः; ebenso weiter unten. [8] Ch पाह्यूर्जस्यू° [9] So W 1 β; Ch पूर्णास्मै [10] Ch स्वस्मिं

मि तेजो ऽसि तेजो मयि धेहि[1] समहं प्रजया सं मया प्रजा समहं रायस्पोषेण सं मया रायस्पोषो ऽग्नेस्तेजसा तेजस्वी भूयासं वायोरायुषायुष्मान्भूयासं[2] सूर्यस्य वर्चसा वर्चस्वी भूयासमिन्द्रस्येन्द्रियेणेन्द्रियावान्भूयासं धाता मे धाम्ना सुधां दधातु[3] प्रजापतेः प्रजया प्रजावा-
5 न्भूयासमग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासं सुगृहपतिर्मया त्वं गृहपतिना भूया अस्थूरि णौ गार्हपत्यं दीदायच्छतं[4] हिमा द्वायू ॥ ५ ॥ cf. Mâitr. S. 1, 4, 2.

देवाञ्जनमगन्यज्ञस्ततो[5] मा यज्ञस्याशीरागच्छतु पितॄन्त्सर्पान्गन्धर्वानप ओषधीः पञ्च जनाञ्जनमगन्यज्ञस्ततो[6] मा यज्ञस्याशीरागच्छतु
10 पञ्चानां त्वा वातानां धर्त्रायागृह्णामि पञ्चानां त्वा सलिलानां धर्त्रायागृह्णामि पञ्चानां त्वा पृष्ठानां धर्त्रायागृह्णामि पञ्चानां त्वा दिशां धर्त्रायागृह्णामि पञ्चानां त्वा पञ्चजनानां धर्त्रायागृह्णामि भूरस्माकं हव्यं देवानामाशिषो यजमानस्य चरोस्त्वा पञ्चबिलस्य धर्त्रायागृह्णामि धामासि प्रियं देवानामनाधृष्टं देवयजनं देवताभिस्त्वा देव-
15 ताभ्यो गृह्णामि ॥

ये देवा यज्ञहनो यज्ञमुषः पृथिव्यामध्यासते ।
अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥
यास्ते रात्रयस्सवितर्देवयानीस्सहस्रयज्ञमभिसंबभूवुः ।
गृहैश्च सर्वैः प्रजया न्वग्रे स्वो रुहाणास्तरता रजांसि ॥
20 ये देवा यज्ञहनो यज्ञमुषो ऽन्तरिक्षे ऽध्यासते ।
वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥
आगन्म मित्रावरुणा वरेण्यं रात्रीणां भागो युवयोर्यो[7] अस्ति ।
नाकं गृह्णानास्सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥

---

[1] Ch देहि [2] W 1 β वायोरायुष्मान्भूयास [3] W 1 β स्वधान्दधातु [4] So W 1 β; Ch दीदायकत; cf. übrigens Mâitr. S. 1, 4, 2 a. E. [5] Dies Kap. wieder nur nach Ch. [6] So corr. Ch जनमधान्य° [7] So corr. Ch ययर्योर्या

ये देवा यज्ञहनो यज्ञमुषो दिव्यध्यासते ।
सूर्यो मा तेभ्यो रक्षतु[1] गच्छेम सुकृतो वयम् ॥
येनेन्द्राय समभरन्पयांस्युत्तमेन हविषा जातवेदः ।
तेनाग्ने त्वमुत वर्धयेमं सुजातानां श्रैष्ठ्य आधेह्येनम् ॥
गोमां अग्ने ऽविमां अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः[2] । 5
इडावां एषो असुर प्रजावान्दीर्घो रयिः पृथुबुध्नस्सभावान् ॥
अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मे प्रब्रूमस्तन्नो गोपाय ॥ ६ ॥
cf. Mâitr. S. 1, 4, 3. 4.

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां यजमानं नाम पञ्चमं स्थानकं संपूर्णम् ॥

---

प्रजापतिर्वा[3] इदमासीत्तस्मादग्निरध्यसृज्यत सो ऽस्य मूर्ध्न[4] ऊर्ध्व 10
उदद्रवत्तस्य यल्लोहितमासीत्तदपामृष्ट तद्भूम्यां[5] न्यमार्ट् तत उदुम्बरो[6]
ऽजायत तस्मात्स लोहितं पच्यते[7] स प्राङ् प्राद्रवत्तं स्वा वागैट् जुहु-
धीति स इतः पर्यमृष्ट तत्स्वाहेत्यजुहोत्तस्मादेवैवमाहुतिस्स्वा ह्येनं[8]
वागैट् तस्मान्न ललाटे लोमास्ति न पाण्योस्तस्मादरत्निमात्री सु-
ग्भवति चक्षुर्वाव स तत्स्वमजुहोदमुमेवादित्यमग्नौ[9] [10] ज्योतिर्ज्योति- 15
रग्ना इति ज्योतिरेव[11] ज्योतिष्यजुहोद्ब्रह्माजुहोत्सत्यमजुहोदमुमेव तदा-

---

[1] So corr. Ch रक्षत [2] So corr. Ch °मृष्याः [3] Dies Kap. nach Ch, collat. mit W 1, W 1 β, T 1, T 3, L und Brl fol. 60; accentuirt nach T 1, coll. mit T 3, L und Brl [4] Ch सो स्य मद्र [5] Brl u. L भूम्या; desgl. W 1, ohne Acc. [6] Ch न्यामार्टु तदुदुम्बरो [7] Ch लोहितमश्यते [8] Der Accent ergänzt; ह्येनं in T 1, T 3, L und Brl ohne Accent. [9] W 1 स्वाम° [10] So T 1, T 3, L und Brl; desgl. W 1 und W 1 β, ohne Accent; Ch °मुमेवातदादित्यदग्नौ [11] Ch ज्योतिरिव

दित्यमजुहोदेष ह्येवाग्निहोत्रं[1] श्वंश्वो वसीयान्भवति यस्यैवमग्निहोत्रं
हूयते ॥ न वै पुराहोरात्रे आस्तां ते[2] एतयाहुत्योभे सहासृज्येतां[3] य-
त्सायं जुहोति तेन भ्रातृव्याय पराचीं विवासयति यत्प्रातस्तेनात्मने
प्रतीचीमग्नेवं गुप्त्या अग्निहोत्रं हूयते यत्सायं जुहोति तेनैनं[4] रात्र्यै
रमयति यत्प्रातस्तेनाह्न एषा वा अग्ना[5] आहुतिः प्रथमा हुता यदग्नि-
होत्रं[6] तस्मादग्नौ सर्वा आहुतयो हूयन्ते ऽथैषैवाग्निहोत्रमुच्यते ऽग्नि-
होत्रं[7] ह वै नाम नास्मादन्यस्समानेषु वसीयान्भवति यस्यैवमग्निहोत्रं
हूयते ॥ १ ॥ cf. Mâitr. S. 1, 8, 1; Kap. S. 3, 12.

स नारमत[8] स प्राद्रवत्तस्मिन्नजुहोत्तस्या[9] आहुत्याः पुरुषो ऽजायत
स नारमत स प्राद्रवत्तस्मिन्नजुहोत्तस्या[10] आहुत्या अश्वो ऽजायत त-
स्मात्पुरुषश्चाश्वश्च नक्तं प्रत्यञ्चौ न सु विज्ञायेते[11] इव स नारमत
स प्राद्रवत्तस्मिन्नजुहोत्तस्या आहुत्या गौरजायताविरजायताजाजायत
यवो ऽजायत व्रीहिरजायतैताभ्यो[12] वै सप्तभ्य आहुतिभ्यस्सप्तेमे ग्रा-
म्याः पशवो ऽसृज्यन्त[13] स नारमत स प्राद्रवत्तस्मिन्नजुहोत्तस्या आहु-
त्या वसन्तो ऽजायत ग्रीष्मो ऽजायत वर्षा अजायन्त शरदजायत हे-
मन्तो[14] ऽजायत स त्रयोदश्यामाहुत्यामुद्यतायामबिभेत्[15] प्रत्यङ्ङपा-
पद्यत तं पाणितः प्राविशत्तस्मात्पाण्योर्लोम नास्त्यग्निधानी ह्येते त-
स्माद्धस्ताभ्यामग्निर्मथ्यमानो जायते[16] ॥ तस्माज्जन्यमानौ हस्तौ प्रति-
गृह्णात्यग्ना[17] एवं तन्त्राणमिच्छते ऽग्निं वै पशवो ऽनूपतिष्ठन्ते[18] पश्नू-

---

[1] So L, Brl, T 1; in T 1 abgebrochen; Ch देष स्वाग्निहोत्रे; W 1 देष्य ह्येवाग्ने-होत्रं [2] So L und W 1 β; T 1, T 3, Brl तं; desgl. Ch, ohne Accent. [3] Ch सहासृजेतां [4] Brl, Ch °नै; W 1 β तेनं [5] W 1 अग्ने [6] W 1 schiebt hier तस्मादग्निहोत्रं ein. In Ch fehlt das Folgende bis ह वै नाम (excl.). [7] So T 1; Brl ग्निहोत्रं; L ग्नेहोत्रे; W 1 ग्नेहोत्र [8] Dies Kap. nach Ch, W 1, T 1 und Brl; die Accente nach W 1 fol. 129. 130, collat. mit T 1 und Brl. [9] Ch und W 1 चाजुहो° [10] Ch चाजुहो° [11] Brl विज्ञायते [12] Ch व्रीहि° [13] So T 1; Brl सृज्यत; Ch und W 1 सृजन्त [14] So T 1; Brl und W 1 हेमन्तो [15] Ch °भि-भेतुम्प्र° [16] So T 1; W 1 जायत; Ch जायेते [17] T 1, Brl, W 1 प्रतिगृह्णात्य; Ch प्रगृह्णात्य° [18] So T 1 und Brl; desgl. Ch, ohne Acc.; W 1 पशवो नूपतिष्ठन्तं

नग्निः प्रैनं पशवो विशन्ति प्र पशून्विशति य एवं वेद तामाहुति-
मप्सु प्रासिञ्चंस्ततश्शिशिरमजायत तस्मात्तत्क्रूरतमं नहि तद्धुतान्नाहु-
तादजायत साहुतिरपो[1] दग्धुमुपाक्रामत[2] तत आपो ऽग्नये वज्रो
ऽभवंस्तस्मात्प्रोक्षन्नग्निं न[3] प्रापयेद्यत्प्रापयेद्धतेन यजेत तामाहुतिमो-
षधीषु न्यदधात्तस्मादोषधयो ऽनभ्यक्ता रेभन्त[4] ओषधिभ्यो ऽधि पशवः 5
पशुभ्यो ऽधि प्रजास्तदेतच्छिशिर आज्यं श्यायत्यग्नये तस्माच्छिशिरे
कक्ष उपादुत्यः[5] प्रियमेव धामाग्नये[6] प्रादात्सो ऽस्मा अन्नाद्यं प्रयच्छ-
त्यन्नादो भवति य एवं वेद[7] ॥ २ ॥ cf. Mâitr. S. 1, 8, 1. 2; Kap. S. 4, 1.

समाने[8] वै योना आस्तां सूर्यश्चाग्निश्च ततस्सूर्य ऊर्ध्व उदद्रवत्तस्य
रेतः परापतत्तदग्निर्योनिनोपागृह्णादयसा तदक्रूडयत्तत्क्रूड्यमानं गवि 10
न्यदधात्तदिदं पयस्तस्मादत्रप्पयः[9] पात्रं प्रतिधुक्क्रूडयति[10] तत्पयसा-
ग्निहोत्रं जुहोत्यमुमेव तदादित्यं जुहोत्येष ह्येवाग्निहोत्रमनडुहो वै पय-
स्तण्डुला असा आदित्यो ऽनड्वान्यद्यवाग्वाग्निहोत्रं जुहोत्यमुमेव तदा-
दित्यं जुहोत्येष ह्येवाग्निहोत्रं चक्रवृत्तमन्यदचक्रवृत्तमन्यद्यच्चक्रवृत्तं[11] त-
दसुयं यदचक्रवृत्तं तद्देवमात्रं तस्मादचक्रवृत्तामग्निहोत्रतपनीं[12] कुर्वीत॥ 15
न क्षीरेण प्रतिषिञ्चेन्नोदकेन यत्क्षीरेण प्रतिषिञ्चेदप्रतिषिक्तं स्याद्य-
दुदकेन शमयेद्दोहने संस्रावमुच्छिष्येत[13] नोदकमिश्रेण[14] प्रतिषिञ्चेत्तन्न
क्षीरेण प्रतिषिक्तं भवति नोदकेन स्कन्नं वाव तत्परि चेदाकरोति या
स्याल्यग्निहोत्रतपनी तया दुह्यादियं वै मानवा इमामिह नेहातिस्क-

---

[1] Ch माहुतिरापो [2] So T 1; Brl दग्धंमुपाक्रमंत; W 1 दग्धंमुपाक्रामत; Ch दग्धुम-पक्रायत [3] Ch म्निनं (wohl Missverständniss der Çâradâ-Schrift); cf. Mâitr. S. 1, 8, 2. [4] Ch रेभ्यत [5] So T 1 und Brl; W 1 कक्षा उपादुंत्याः; in Ch Lücke; cf. Mâitr. S. 1, 8, 2 कंक्षः सं उपाधेयः [6] So T 1 u. Brl; W 1 प्रियमेवां-धांमग्नये; in Ch Lücke. [7] Ch mit Lücke श्यायत्यग्नचाद्यमप्रयच्छत्यचादा भवति य एवं वेद [8] Dies Kap. sowie die folgenden wieder nur nach Ch. [9] Kap. S. 4, 2 तस्मादत्रपयमस्पात्रं प्रतिधुक्कूंडयति; etwas anders Webers Ms., cf. Anm. zu Mâitr. S. 1, 8, 2. [10] So corr. Ch पात्रः प्रतिचुकूडायति; cf. die vorige Anm. [11] So corr. Ch °द्यग्चक्रवृत्तं (Missverständniss der Çâradâ-Schrift). [12] So corr. Ch °त्रा-उपनंनी [13] So corr. Ch °क्रिष्यत [14] So corr. Ch नोदवमि°

न्दत्यनयैवोपसीदति तदस्यास्कन्नं भवत्यद्भिः प्रतिषिञ्चत्यापो हि प्रति-
षेचनाय तस्थिरे तच्छान्तं[1] मिथुनमापश्च पयश्च यदि दुह्यमानावभि-
द्यादन्यया स्थाल्या दुह्यात्सैव तत्र प्रायश्चित्तिर्यद्यधिश्रीयमाणं यद्य-
धिश्रितं स्कन्देदन्यामभिदुह्याधिश्रित्योन्नीय जुहुयात्सैव तत्र प्रायश्चि-
5 त्तिर्यद्युन्नीयमानं यद्युन्नीतं यदि पुर उपसन्नमहुते स्कन्देत्पुनरवनीया-
न्यामभिदुह्याधिश्रित्योन्नीय जुहुयात्सैव तत्र प्रायश्चित्तिर्यच्च स्कन्देत्त-
दपो निनयेदापो वै यज्ञस्य निष्कृतिरद्भिरेवैनं निष्करोति प्रतिषिक्तम-
न्यदप्रतिषिक्तमन्यत्प्रतिषिक्तं पशुकामस्याप्रतिषिक्तं ब्रह्मवर्चसकामस्य
घर्मो वा एष प्रवृज्यते यदग्निहोत्रं यदप्रतिषिक्तं न जुहोति ब्रह्मवर्चसी
10 भवति यदि पयो न विन्देदाज्येन जुहुयात्तद्ध्यप्रतिषेक्यमपशव्यमीश्व-
रमस्याशान्तिं[2] शुचा पशून्निर्दहः प्रतिषिक्तं पशुकामस्य[3] तच्छान्तं[4]
मिथुनमापश्च मयश्च यदि पयो न विन्देद्यवाग्वा जुहुयात्तद्धि प्रति-
षेक्यं शान्तं मिथुनं पशव्यमापश्च तण्डुलाश्च ॥ ३ ॥

cf. Mâitr. S. 1, 8, 2. 3; Kap. S. 4, 2.

अग्निहोत्रे वै जायम्पती व्यभिचरेते यत्प्राचीनमुद्वासयेत्पतिः पूर्वः
15 प्रमीयेत यत्प्रतीचीनमुद्वासयेज्जाया[5] पूर्वा प्रमीयेत संप्रत्युदीचीनमु-
द्वासयेत्समेवं जीर्यतः पूर्णमग्र उन्नयेदथ[6] संमितमथ संमितमथ[7] सं-
मिततममुत्तममनुज्येष्ठमेवास्य[8] पुत्रा ऋध्नुवन्ति संमितमग्र उन्नयेदथ[9]
भूयो ऽथ भूयो ऽथ पूर्णमुत्तमं भूयो भूय एवान्नाद्यमभ्युत्क्रामति कनि-
ष्ठस्त्वस्य पुत्राणामर्धुको[10] भवति सर्वान्समावदुन्नयेद्यः कामयेत सर्वे
20 मे पुत्रास्समावदृध्नुयुरिति[11] सर्वेषां वै पिता पुत्राणामृद्धिं कामयते
सर्वे एव समावदृध्नुवन्ति ॥ नान्यो ऽन्यमतिक्रामति चतुरुन्नयति च-

---

[1] So corr. Ch तच्क्रांत° [2] So corr. Ch °पशव्यव्यस्त्वोश्वर° [3] So corr. Ch पशू° [4] So corr. Ch तक्कांत [5] So corr. Ch प्रतीचेन° [6] So corr. Ch °मग्य-तन्नयेदथ; cf. Mâitr. S. 1, 8, 4. [7] So corr. Ch सस्मितमथ सस्मि° [8] So corr. Ch सुमुत्तम° [9] So corr. Ch °ग्न तथ° [10] So corr. Ch °मवुको [11] So corr. Ch समाव ऋधु°

तुष्पद एवास्मै पशून .................... द्विपद[1] एवास्मै पशून्यच्छति पशून्मे यच्छेति पश्चादुपसादयेत्पशवो वै गार्हपत्यः पशवः पयः पशूनामेवैषा यतिर्न पश्चादुपसादयेद्धविर्वा एतद्यदग्निहोत्रं यजमानो हविर्हविर्भूतमेव यजमानमपनुदत उत्तरादुपसादयेदपूतं वा एतद्यदग्निहोत्रमग्निः पवित्रं यत्समयाग्निं हरति तेनैवैनत्पुनात्यनु वा एष एतद्ध्यायति यत्पश्चाधिश्रित्य पुरो जुहोति यत्समयाग्निं हरति तेनैवैनं प्रीणात्यनुध्यायिनं करोत्यस्माद्वै गार्हपत्यादसौ पूर्वो ऽग्निरसृज्यतायं वाव प्रजापतिरसौ पूर्वो ऽग्निस्तदयमित आदाय प्राङ्न्नूह्त्याजुहोत्तस्मादग्निहोत्रं पश्चाधिश्रित्य पुरो जुह्वति पुर एवान्यानि हवींषि शृतानि कुर्वन्ति पुरो जुह्वति ॥ ४ ॥

cf. Mâitr. S. 1, 8, 4; Kap. S. 4, 3.

इध्मो[2] वा एषो ऽग्निहोत्रस्य यत्समिद्यत्समिधमादधातीध्ममेवैतमग्निहोत्रस्य करोति रुद्र ओषधीर्विषेणालिम्पत्ताः पशवो नालिशन्त ताभ्यो देवाः प्रायश्चित्तिमैच्छन्स[3] प्रजापतिरब्रवीद्वार्यं वृणा अहं व एतास्स्वदयिष्यामीति स एतां समिधमवृणीत तस्मादेकैको हि प्रजापतिस्ता अग्निनोपासृजत्ता अग्निरस्वदयदेतस्यां[4] वा आहितायामग्निहोत्रिण वीरुधस्स्वदन्ति स्वदितमस्यान्नं भवति य एवं वेद बहुद्वीकरोत्युभे[5] आहुती समिद्धे जुहवानीत्येकैव कार्या सकृद्ध्येव सर्वस्मै यज्ञाय समिध्यत[6] आयुर्मे यच्छ वर्चो मे यच्छ प्रजां मे यच्छेति पुर उपसादयेत्सृष्टिर्वा एतद्यदग्निहोत्रं यन्नोपसादयेत्पराचीः प्रजा इयुर्यदुपसादयति[7] तस्मादिदं प्रजा यतास्तस्मादुपतिष्ठन्ते ऽग्नौ ज्योतिर्ज्योतिरग्ना इति सायमग्निहोत्रं जुहुयाद्गर्भिण्या वाचा गर्भं दधाति मिथु-

[1] Für die Lücke cf. Kap. S. 4, 3 चतुरुन्नयति चतुःपद एवास्मै पशून्स्पृणाति द्विः पुरो जुहोति द्विपद एवास्मै पशून्स्पृणाति [2] So corr. Ch इध्मा; Kap. S. 4, 4 = Corr. [3] So corr. Ch मैच्छत्स [4] So corr. Ch °स्वदयमे° [5] So Ch; Kap. S. 4, 4 बहुद्वं करोत्युभे आहुतौ समिधे [6] Kap. S. 4, 4 समन्ध एव सर्वस्मै यज्ञाय समन्ध्यत [7] Kap. S. 4, 4 प्रजायुर्यदु°

नया वाचा गर्भं दधाति सूर्यो ज्योतिर्ज्योतिस्सूर्य इति प्रातस्तं गर्भि-
ण्या वाचा मिथुनया प्रजनयति यन्निरुक्तं चानिरुक्तं च तन्मिथुनं
यद्यजुषा च मनसा च तन्मिथुनं तदजाम्याहुत्योराग्नेयी[1] सायमाहुति-
स्सौरी प्रातरग्निः प्रवापयिता सूर्यः प्रजनयिताग्निस्सूर्ये निम्रुक्ते साय-
5 मग्निहोत्रं जुहुयादुपोदयँ[2] सूर्यस्य प्रातरग्निरेव प्रवापयित्वा सूर्यं रात्र्यै
गर्भं दधाति[3] तं गर्भिण्या वाचा मिथुनया प्रातः प्रजनयत्येतं वै प्र-
जायमानं[4] प्रजा अनुप्रजायन्ते प्र प्रजया प्र पशुभिर्जायते यस्यैवम-
ग्निहोत्रं हूयत एषा वा अग्निहोत्रस्य स्थाणुर्या पूर्वाहुतिस्तामतिहाय
जुहुयात्तमेव परिवृणक्त्यभिक्रामँ सायँ होतव्यं[5] गर्भमेव दधाति प्रति-
10 क्रामं प्रातः[6] प्रैव जनयति[7] तदाहुरभिक्राममेव[8] होतव्यमभिक्रान्तेन[9]
हि यज्ञस्यर्ध्नोति यज्जुहोति तद्देवानां यदुद्दिशति तेन रुद्रं[10] शमयति
यन्निमार्ष्टि तत्पितॄणां यत्प्राश्नाति तन्मनुष्याणां तस्मादग्निहोत्रं वैश्व-
देवमुच्यते ॥ ५ ॥ cf. Mâitr. S. 1, 8, 4. 5; Kap. S. 4, 4.

प्रैयमेधा वै नाम ब्राह्मणा आसँस्ते[11] सर्वमविदुस्तत्सहैवाविदुस्ते[12]
15 ऽग्निहोत्र एव न समराधयँस्तेषाँ सकृदेको ऽग्निहोत्रमजुहोद्द्विरेकस्त्रिरे-
कस्तेषां[13] यस्सकृदजुहोत्तमितरा अपृच्छतां कस्मै त्वं जुहोषीत्येकधैवेद-
मित्यब्रवीत्प्रजापतिः[14] प्रजापतय एवाहं जुहोमीति तेषां यो द्विरजु-
होत्तमितरा अपृच्छतां कस्मै त्वं जुहोषीत्यग्नये चैव सायं प्रजापतये
चेत्यब्रवीत्सूर्याय च प्रातः प्रजापतये चेति तेषां यस्त्रिरजुहोत्तमितरा
20 अपृच्छतां कस्मै त्वं जुहोषीत्यग्नये सूर्याय पजापतय इत्यब्रवीत्तेभ्य एव
सायं जुहोमि तेभ्यः प्रातरिति तेषां यो द्विरजुहोत्स आर्ध्नोत्स भूयिष्ठो

---

[1] So corr. Ch जदजास्या°; Kap. S. 4, 4 = Corr. [2] So corr. Ch दुपोदयाः Kap. S. 4, 4 दुपोदय [3] Kap. S. 4, 4 सूर्यं गायत्र्यो गर्भं दधाति [4] So corr. Ch प्रजायमानः; Kap. S. = Corr. [5] So corr. Ch जुह्वोतव्यं; Kap. S. 4, 4 सायं होतव्यं [6] So corr. Ch प्राताः [7] So corr. Ch प्रव जरयति [8] So corr. Ch °क्रम° [9] So corr. Ch °क्रंतेन [10] So corr. Ch रुद्रां [11] So corr. Ch आसांस्ते [12] So corr. Ch सहैव विदुस्ते; Kap. S. 4, 5 सहाविदुस्ते [13] So corr. Ch देकाग्नि° [14] So corr. Ch वेदमत्य°

ऽभवत्प्रजयातीतरौ श्रियाक्रामत्तस्य प्रजाश्रितरयोः प्रजे सजातत्वमुपै-
तां तस्माद्द्वे[1] होतव्ये यजुषा च मनसा च यामेव स ऋद्धिमार्ध्नोत्तामृ-
ध्नोति यदि सायमहुते ऽग्निहोत्रे[2] पूर्वो ऽग्निरनुगच्छेदग्निहोत्रमधिश्रि-
त्योन्नीयाग्निना पूर्वेणोद्धृत्याग्निहोत्रेणानूद्द्रवेदाहुत्यैवैनं[3] च्यावयति यो
ब्राह्मणो बहुवित्स्यात्स उद्धरेत्सर्वेणैवैनं[4] ब्रह्मणोद्धरति यत्पुरा धनमदा- 5
यी स्यात्तद्द्यादच्युतेनैवैनं च्यावयति यदि प्रातरहुते[5] ऽग्निहोत्रे ऽपरो
ऽग्निरनुगच्छेदनुगमयित्वा पूर्वं मथित्वापरमुद्धृत्य जुहुयात्सैव तत्र प्राय-
श्चित्तिर्यदि त्वरेत[6] ॥ पूर्वमग्निमन्ववसाय ततः प्राञ्चमुद्धृत्य जुहुयात्सैव
तत्र प्रायश्चित्तिर्जामि नु तद्यो[7] ऽस्य पूर्वो ऽग्निस्तमपरं करोत्यन्यत्रैवा-
वसायाग्निं मथित्वोद्धृत्य जुहुयात्सैव तत्र प्रायश्चित्तिस्ततश्श्वो ऽग्नये त- 10
पस्वते जनद्वते पावकवत[8] इष्टिं निर्वपेद्यदा वा अग्निस्संतप्यते ऽथ
जायत ओषधयः पावका ओषधीरेवास्मै पावका भागधेयमपिदधा-
ति[9] न गार्हमनुबुध्यते यदा ह्येवास्मै[10] नापिदधत्यथैषो[11] ऽनुगच्छति
यौ पन्थाना अभितस्थौ दर्शपूर्णमासौ या मध्ये सृतिस्तदग्निहोत्रमेवं[12]
वा अग्निहोत्रिणे दर्शपूर्णमासिने स्वर्गो लोको ऽनुभाति ॥ मनसा 15
वा इमां प्रजापतिर्वेदिं पर्यगृह्णादग्निहोत्रिणे तत्र[13] यत्किंच ददाति
तद्बर्हिष्यं यथासन्नेषु नाराशंसेषु[14] ददात्येवमेष ददाति यत्किंच ददाति
मध्य एव यज्ञस्य द्यावापृथिवी एतस्य सदोहविर्धाने[15] अहोरात्राणी-
ध्मो दिशः परिधयः स्रुष्वाः[16] प्रोक्षणीरोषधयो न हि[17] यजमानो यूपो
न संभवन्वदेत्पशुरेव भूत्वा संभवत्यहरहर्वै पशवस्संभवन्तो ऽथ मेध्या 20

---

[1] So corr. Ch तस्माद्धि [2] So corr. Ch होत्र [3] So corr. Ch णानूद्रवे°
[4] So corr. Ch नैवनं [5] So corr. Ch प्रातराहुते; Kap. S. 4, 5 प्रातरहुते wie oben
सायमहुते [6] So corr. Ch न्वरेत; Kap. S. 4, 5 त्वरेत [7] So corr. Ch जामित्ततद्यो
(त्त und नु in Çâradâ leicht zu verwechseln); Kap. S. 4, 5 त्तिर्यामि नु तस्य पूर्वो
[8] So corr. Ch कवता [9] So corr. Ch ददाति [10] So corr. Ch ह्येतास्मै [11] So
corr. Ch त्येथैषो [12] So corr. Ch दग्नेहोत्र° [13] So corr. Ch तित्र [14] So
corr. Ch नानाशंसेषु [15] So corr. Ch स्वदोह° [16] So corr. Ch प्रेष्वाः oder प्रोष्वाः
[17] ? Ch वहि oder बहि

न राजन्यस्याग्निहोत्रमस्त्यव्रत्यो हि स हन्ति व्रतं न विच्छिन्द्यात्पौर्ण-
मासीं च रात्रीममावस्यां[1] च जुहुयात्ते हि व्रतं गोपायति यान्यहा-
नि न जुहुयात्तान्यस्य ब्राह्मणायाग्ने गृह उपहरेयुरग्निर्वै ब्राह्मणो ऽग्ना
एव तज्जुहोति तदस्य स्वदितमेष्टं भवति ॥ ६ ॥
cf. Mâitr. S. 1, 8, 7; Kap. S. 4, 5.

5 वाचा वै सह मनुष्या[2] अजायन्त ते वाचो[3] देवाश्चासुराश्च ते य-
न्मनुष्या अवदंस्तदेवाभवन्ते[4] देवाश्चासुराश्च प्रजापतिमब्रुवन्निमे वा-
वेदमभूवन्निति स वाचस्सत्यं निरमिमीत भूर्भुवस्स्वरिति यत्तुरीयम-
नृतं तन्मनुष्येषु न्यदधादेतद्वै वाचो ऽनृतं यन्मनुष्या वदन्ति भूरितीमा-
मसृजताग्निं[5] रथंतरं त्रिवृतं गायत्रीं भुवरित्यन्तरिक्षं वातं वामदेव्यं
10 त्रिष्टुभं पञ्चदश स्वरिति दिवं सूर्यं बृहदेकविंशं जगतीं भूर्भुवस्स्वर-
ग्नौ ज्योतिर्ज्योतिरग्ना इत्यग्निहोत्रं जुहुयादेतद्वै वाचस्सत्यमेतन्मिथुनमे-
तद्ब्रह्म तेनैव जुहोतीमा एवैतदिष्टका उपधत्त इमा एवैतदिष्टका उ-
पधायोत्तमं नाकं रोहत्युत्तमस्समानानां[6] भवति यस्यैवमग्निहोत्रं हू-
यते ॥ वाचं यच्छेदग्निहोत्र उन्नीयमाने तपसा वै प्रजापतिः प्रजा
15 असृजत यन्न व्याहरत्तदेवातप्यत सृष्टिर्वा एतद्यदग्निहोत्रं सृष्टिरेतद्व्रतं
ता उद्भवस्स्थेत्युदभावयद्यर्हि बिन्दव इव स्युस्तर्ह्यवेक्षेतोद्भवस्स्थोदहं[7]
प्रजया प्र पशुभिर्भूयासमित्युद्भूतिर्वा एतत्प्रभूतिर्यदग्निहोत्रमुत्प्रजया
प्र पशुभिर्भवति यस्यैवमग्निहोत्रं हूयते ऽग्निनावेक्षते प्रजननं वा ए-
तद्यदग्निहोत्रमग्निः प्रजनयिता प्रैव जनयति ॥ रेतो वा एतद्यदग्नि-
20 होत्रं न सुशृतं कुर्याद्रेतः क्रूडयेन्नो अशृतमन्तरेणैव[8] स्याद्रुद्र मृडाना-
र्भव[9] मृड धूर्त[10] नमस्ते ऽस्त्विति हुत्वोदङ्ङुद्दिशेदेतानि वै रुद्रस्य क्रूरा-

---

[1] So corr. Ch वस्यां [2] So corr. Ch मनुष्यो [3] Kap. S. अजायंत तत्ते वाचो [4] So corr. Ch अवदंस्तेदेवाभवतु; Kap. S. 4, 6 आवदंस्त्वदेवाभवन्ते [5] So corr. Ch जताग्निं [6] So corr. Ch रोहत्यतुम°; Kap. S. 4, 6 रोहत्युत्तमः [7] So corr. Ch वेक्षतो°; Kap. S. 4, 6 ह्यवेक्षेतो° [8] So corr. Ch क्रूडयचो अमृतमन्तरेणेवा: Kap. S. 4, 6 त्रूडयेचो शृतम° [9] So corr. Ch मडानान्भव; Kap. S. 4, 6 = Correctur; cf. अनार्भव BW Nachtr. 5. s. v. [10] cf. Mâitr. S. 1, 8, 5.

णि नामानि तैरेष प्रजा हिनस्त्यग्निहोत्रे भागधेयमिच्छमानस्तान्ये-
वास्य प्रतिनुदति तानि शमयति यर्ह्ययं देवाः प्रजा अभिमन्येत सजू-
र्जातवेदो दिवा पृथिव्या हविषो वीहि स्वाहेति[1] द्वादश रात्रीरग्निहोत्रं
जुहुयाद्वा वा अग्नेर्जातवेदास्तनूस्तयैष[2] प्रजा हिनस्त्यग्निहोत्रे भागधे-
यमिच्छमानस्तामेवास्य प्रीणाति तस्यैतज्जुहोति ॥ तदजाम्याहुत्योरा- 5
ग्नेय्येषाग्नेयीतरा[3][4] संवत्सरं वा एतमिन्धते ऽग्निं वैश्वानरं न वा एतस्य
संवत्सरे ऽप्यस्ति न वैश्वानरे यो ऽनाहिताग्निर्यानि दारूणि ते मासा
ये स्थूला अङ्गारास्त ऋतवो ये ऽणीयांसस्ते ऽर्धमासा मुर्मुरा अहोरा-
त्राणि यत्सुवर्णं ज्योतिस्तद्बार्हस्पत्यं यन्न सुवर्णं न लोहितं तन्मैत्रं य-
ल्लोहितं तद्वारुणं यत्सधूमं तद्वैश्वदेवं यत्राङ्गारेष्वग्निर्लेलायेव[5] तदस्या- 10
स्यमाविर्नाम तद्ब्रह्म तस्मिन्होतव्यं मुखेन वा अश्नात्यङ्गान्यवत्याविः
प्रजासु भवति श्वश्श्वो वसीयान्भवति यस्यैवमग्निहोत्रं हूयते ॥ ७ ॥
cf. Mâitr. S. 1, 8, 6; Kap. S. 4, 6.

ओदनपचनो गार्हपत्य आहवनीयो मध्याधिदेवनमामन्त्रणमेषा[6]
वै विराट् पञ्चपदा तामेवाप्नोति तामवरुन्द्धे यस्य ह्येषावरुद्धा स म-
नुष्याणां श्रेष्ठो भवति यदि सायमग्निहोत्रस्य कालो[7] ऽतिपद्येत दोषा 15
वस्तोस्स्वाहेति[8] जुहुयात्सैव[9] तत्राहुतिस्तेनास्य तदनतिपन्नं भवति
यदि प्रातरग्निहोत्रस्य कालो ऽतिपद्येत दिवा वस्तोस्स्वाहेति[10] जुहु-
यात्सैव तत्राहुतिस्तेनास्य तदनतिपन्नं भवति न स्वाहाकारो वा अग्नि-
होत्रस्याहुतिं युवते[11] यर्हि वाव[12] प्रवदेत्तर्हि जुहुयात्स ह्यग्निहोत्रस्य
वषट्कारस्सजूरग्निर्दिवा पृथिव्येति द्यावापृथिवी अग्निं तानेव प्रीणाति 20

---

[1] So corr. Ch स्वाहैति [2] So corr. Ch अग्निर्जा° [3] So corr. Ch तदजास्याहु°; Kap. S. 4, 6 = Corr. [4] So corr. Ch राग्नेय्येषा° [5] Kap. S. 4, 6 लेला एव [6] So corr. Ch मध्याधिदेवन°; Kap. S. 4, 7 मध्यादिदेव°; cf. Mâitr. S. 1, 6, 11. [7] Ch erste Hand कालो; Kap. S. 4, 7 कालो [8] Kap. S. 4, 7 दिवावस्यः [9] So corr. Ch यात्मैव [10] So corr. Ch दिवावाप्तो; Kap. S. 4, 7 दिवा वस्यः [11] So corr. Ch यवते; Kap. S. 4, 7 युवते [12] So corr. Ch यर्हि वाः प्र° Kap. S. 4, 7 यर्हि वाव प्रवदेत्तर्हि

तानवरुन्द्धे सजूर्देवेन सवित्रेति न हि सवितुर्ऋत आहुतिरस्ति सजूः
पूष्णान्तरिक्षेणेति पशवो वै पूषा पशवो ऽन्तरिक्षं पशूनेवावरुन्द्धे
सजू रात्र्येन्द्रवत्या[1] स्वाहेति रात्रीमेवैतदभिजुहोति न हीन्द्रादृत आहु-
तिरस्ति देवा वै पुराग्निहोत्रमहौषुस्तस्मात्पुरा[2] बृहन्महानजनि सजूर-
5 ह्नेन्द्रवता[3] स्वाहेति बार्हतं वा अहर्बार्हतस्सूर्यो ऽहश्चैवास्यैतत्सूर्यश्चा-
भिजिता अभिहुतौ[4] भवत आनुष्टुभी[5] वै रात्री त्रैष्टुभमहो रात्रीं चैवै-
तदहश्चाभिजुहोत्यग्ने ऽदाभ्य जुषस्व स्वाहेत्युत्तरामाहुतिं जुहोति यथा-
ग्नये समवद्यत्येवमेव[6] तदपिप्रेरग्ने स्वां तन्वमयान्द्यावापृथिवी ऊर्ज-
मस्मासु धेहीति तृणमक्त्वानुप्रहरति संस्थितिरेवैषा स्वगाकृतिरग्निहो-
10 त्रस्य वा एषो ऽशान्तमनु प्रजा हिनस्ति यत्तृणमक्त्वानु प्रहरति तेनैवै-
नच्छमयत्यग्ने[7] गृहपते जुषस्व स्वाहेति स्रुवेण गार्हपत्ये जुहोति यथा
पत्नीस्संयाजयत्येवमेव तदनु वा एष एतद्ध्यायति यत्पश्चाधिश्रित्य
पुरा[8] जुहोति यत्स्रुवेण गार्हपत्ये जुहोति तेनैवैनं प्रीणात्यननुध्यायिनं
करोत्यस्याग्निहोत्री प्रजायां जायते श्वश्श्वो वसीयान्भवति यस्यैवम-
15 ग्निहोत्रं हूयते ॥ ८ ॥ cf. Mâitr. S. 1, 8, 7; Kap. S. 4, 7.

उपप्रयन्तो[9] अध्वरं मन्त्रं वोचेमाग्नये ।
आरे अस्मे च शृण्वते ॥
अस्य प्रत्नामनु द्युतिं शुक्रं दुदुह्रे अह्रयः ।
पयस्सहस्रसामृषिम् ॥
20 अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ।
अपां रेतांसि जिन्वति ॥

---

[1] So corr. Ch रात्र्यैन्द्र° Kap. S. = Corr. [2] So corr. Ch महोष्वस्त°; Kap. S. 4, 7 हुषु° [3] So corr. Ch °वतो; Kap. S. 4, 7 बृहन्महामजनिः सजूर्हृद्रवता [4] Kap. S. 4, 7 भिजितावभिजितो भवत [5] So corr. Ch आनुष्टुभे [6] So corr. Ch संमव°; Kap. S. 4, 7 = Corr. [7] Kap. S. 4, 7 तेनैवैनं शमय°; Ch नश्कम° = नच्छम [8] Kap. S. 4, 7 पुरो [9] Zum ersten Theil dieses Kapitels konnten auch Brl fol. 178 und W 1 verglichen werden. Die Accente nach Brl.

च वयं द्विष्मो ऽग्ने रुचां पते नमस्ते रुचे मयि रुचं धेहि चित्रावसो स्वस्ति ते पारमशीयावाग्वसो स्वस्ति ते पारमशीय ॥ ९ ॥
cf. Mâitr. S. 1, 5, 1. 2; Kap. S. 4, 8.

वेत्था[1] हि वेधो अध्वनः[2] पथश्च देवाञ्जसा ।
अग्ने यज्ञेषु सुक्रतो[3] ॥
5 अग्ने नय[4] सुपथा राये अस्मान्विश्वानि[5] देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥
आ तू न इन्द्र वृत्रहन्नस्माकमर्धमागहि[6] ।
महान्महीभिरूतिभिः ॥
त्वं मही[7] इन्द्र तुभ्यं ह क्षा अनु क्षत्रं मंहना[8] मन्यत द्यौः ।
10 त्वं वृत्रं शवसा जघन्वान्सृजस्सिन्धूंरहिना जयसानान्[9] ॥
ऋतावानं वैश्वानरम् ॥ वैश्वानरस्य सुमतौ स्याम ॥
अग्ने दा दाशुषे[10] रयिं वीरवन्तं परीणसम् ।
शिशीहि नस्सूनुमतः ॥
त्वद्धि पुत्र सहसो वि पूर्वीर्देवस्य यन्त्यूतयो वि वाजाः ।
15 त्वं देहि सहस्रिणं[11] रयिं नो ऽद्रोघेन वचसा सत्यमग्ने ॥
दीर्घस्ते अस्त्वङ्कुशो येना वसु[12] प्रयच्छसि ।
यजमानाय सुन्वते ॥[13]
आ तू भर माकिरेतत्परिष्ठाद्विद्मा हि त्वा वसुपतिं वसूनाम् ।
इन्द्र यत्ते माहिनं दत्रमस्त्यस्मभ्यं[14] तद्धर्यश्व प्रयन्धि ॥

---

[1] Dies Kap. collat. mit T 6 fol. 49 und darnach accentuirt. Die ersten vier Worte fehlen dort und sind nach RV 6, 16, 3 accentuirt. [2] Ch अध्वरः (Missverständniss der Çâradâ-Schrift). [3] Ch सुक्रतो [4] So T 6; Ch अग्ने तनय [5] T 6 राये अस्मान्विं° Ch नाये अस्मानि वि° [6] So T 6; Ch मवमागहि [7] So T 6; Ch महो [8] So T 6; Ch मंहिना [9] So corr. T 6 वान्सृजस्सिन्धूंरहिना जयसानाम्; Ch वान्दृजस्सिंधुोरहिना जगुमानान् [10] So corr. Ch अग्ने दाशुषे; T 6 अग्ने द दाशुषे [11] Von hier in diesen Pâda in T 6 kein Accent mehr: ergänzt nach RV 3, 14, 6. [12] So T 6; Ch वसो [13] T 6 giebt diesen Vers 2 Mal. [14] So corr. Ch माहिनन्दत्रमस्त्य°; T 6 माहि तद्धर्यश्व; die fehlenden Accente ergänzt nach RV 3, 36, 9.

प्र तत्ते अद्य शिपिविष्ट नामार्यश्शंसामि वयुनानि विद्वान्।
तं त्वा गृणामि[1] तवसमतव्यान्क्षयन्तमस्य रजसः पराके॥
वषट् ते विष्णु आस आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिस्सदा नः॥
त्वामग्ने वाजसातमं विप्रा वर्धन्ति सुष्टुतम्। 5
स नो रास्व सुवीर्यम्॥
अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन्।
अयं वाजं जयतु वाजसाता अयं शत्रूञ्जयतु जर्हृषाणः॥
त्वमग्ने व्रतपा असि॥ यद्वो वयम्॥ १०॥
कृणुष्व पाजः॥[2] 10
स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत्।
विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभिद्यौत्॥
सेदग्ने अस्तु सुभगस्सुदानुर्यस्त्वा[3] नित्येन[4] हविषा य उक्थैः[5]।
पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः॥
अर्चामि ते सुमतिं घोष्यर्वाक् सं ते वावाता जरतामियं गीः। 15
स्वश्वास्त्वा सुरथा मार्जयेमास्मे क्षत्राणि धारयेरनु द्यून्॥
इह त्वा भूर्याचरेदुप त्मन्दोषावस्तर्दीदिवांसमनु द्यून्।
क्रीडन्तस्त्वा सुमनसस्सपेमाभि द्युम्ना तस्थिवांसो जनानाम्॥
यस्त्वा स्वश्वस्सुहिरण्यो अग्न उपयाति वसुमता रथेन।
तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग् जुजोषत्॥ 20
महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय।
त्वं नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः॥
अस्वप्नजस्तरणयस्सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः।
ते पायवस्सध्र्यञ्चो निषद्याग्ने तव नः पान्त्वमूर॥

[1] So T 6, cf. RV 7, 100, 5; Ch गृह्णामि [2] Dies Kap. collat. mit Brl fol. 117. 118 und W 2; die Accente sind nach Brl gesetzt. [3] Ch सुभगास्सुदानु° [4] Dies Wort ohne Accent in Brl [5] Ch उक्तैः

ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ।
रक्ष तान्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः ॥
त्वया वयं सधन्यस्त्वोतास्तव[1] प्रणीत्यश्याम वाजान् ।
उभा शंसा सूदय[2] सत्यताते ऽनुष्ठुया कृणुह्यह्रयाण[3] ॥
5 अया ते अग्ने समिधा विधेम प्रति स्तोमं शस्यमानं गृभाय ।
दहाशसो[4] रक्षसः पाह्यस्मान्द्रुहो निदो मित्रमहो अवद्यात् ॥ ॥११॥

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायामग्निहोत्रब्राह्मणं नाम षष्ठं स्थानकं संपूर्णम् ॥

---

अम्भस्स्थाम्भो[5] वो भक्षीय महस्स्थ महो वो भक्षीयोर्जस्स्थोर्जं[6] वो
10 भक्षीय रायस्पोषस्स्थ रायस्पोषं[7] वो भक्षीय रेवती रमध्वमस्मिन्योना[8]
अस्मिन्गोष्ठे ऽयं वो बन्धुरितो[9] मापगात मा मा हासिष्ट बह्वीर्मे भवत[10] संहितासि विश्वरूपा मोर्जा[11] विशा गौपत्येना प्रजया रायस्पोषेण मयि वो रायश्श्रयन्तां सहस्रपोषं वः पुषेयम् ॥
संपश्यामि प्रजा अहमिडाप्रजसो मानवीः ।
15 बह्वीर्भवन्तु नो गृहे ॥
उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम् ।
नमो भरन्त एमसि ॥

---

[1] Die २ in Brl fol. 118 bezeichnet hier den Svarita; in Ch findet sie sich nicht; Brl liest सधन्यस्त्वोता तव [2] So Brl; Ch सूदया [3] So Brl; Ch ष्याणा [4] Brl दहाशसो [5] Der Anfang dieses Kapitels collat. mit W 2 und darnach accentuirt. [6] Dies in W 2 ohne Accent. [7] Ch पोषा [8] W 2 योनामस्मिं [9] W 2 रेतो [10] W 2 भवन्तु oder भवन्त [11] Ch मोर्जा

राजन्तमध्वराणां गोपामृतस्य दीदिविम् ।
वर्धमानं स्वे दमे ॥
स नः पितेव सूनवे ऽग्ने सूपायनो भव ।
सचस्वा नस्स्वस्तये ॥
अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ।
तं त्वा शोचिष्ठ दीदिवस्सुम्नाय नूनमीमहे सखिभ्यः ॥
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमं[1] रयिं दाः ।
स नो बोधि श्रुधी हवमुरुष्या णो अघायतस्समस्मात् ॥
ऊर्जा[2] वः पश्याम्यूर्जा मा पश्यत रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यतेडास्स्थ मधुकृतस्स्योना माविशतेरंमदो मयि वो रायश्श्रयन्तां सहस्रपोषं वः पुषेयम् ॥ १ ॥
cf. Mâitr. S. 1, 5, 2. 3; Kap. S. 5, 1.

महि[3] त्रीणामवो ऽस्तु द्युक्षं मित्रस्यार्यम्णः ।
दुराधर्षं[4] वरुणस्य ॥
नहि तेषाममा चन नाध्वसु वारणेषु[5] ।
ईशे[6] रिपुरघशंसः[7] ॥
यस्मै पुत्रासो अदितेः प्र जीवसे मर्त्याय ।
ज्योतिर्यच्छन्त्यजस्रम् ॥
सोमानं स्वरणं कृणुहि ब्रह्मणस्पते ।
कक्षीवन्तं य औशिजः ॥
यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः ।
स नस्सिषक्तु यस्तुरः ॥

---

[1] Ch °मं [2] Ch ऊर्जं (beide Mal). [3] Die erste Hälfte dieses Kapitels collat. mit T 6 fol. 9, Brl fol. 8, W 1; accentuirt nach T 6 und Brl. [4] So corr. T 6 und Brl accentuiren दुराधर्षं [5] Brl वरणे - - [6] So T 6; Brl ईशे; cf. RV 10, 185, 2. [7] So Brl; T 6 रघशंसः

मा नश्शंसो अररुषो धूर्तिः प्रणङ्[1] मर्त्यस्य ।
रक्षा णो ब्रह्मणस्पते ॥[2]
कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ॥
परि ते दूडभो[3] रथो ऽस्माँ अश्नोतु विश्वतः ।
येन रक्षसि दाशुषः ॥

अच्छिन्नो दैव्यस्तन्तुर्मा मनुष्यश्छेदि निम्रदो ऽसीदमहं तं निमृणामि यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो विभूरस्यभ्यहं तं भूयासं यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः प्रभूरसि प्राहं तमतिभूयासं यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मः पूषा मा प्रपथे पातु पूषा मा पशुपाः पातु पूषा माधिपतिः पातु प्राची दिगग्निर्देवताग्निं स ऋच्छतु यो मैतस्या दिशो ऽभिदासति दक्षिणा दिगिन्द्रो देवतेन्द्रं स ऋच्छतु यो मैतस्या दिशो ऽभिदासति[4] प्रतीची दिक्सोमो देवता सोमं स ऋच्छतु यो मैतस्या दिशो ऽभिदासत्युदीची[5] दिङ् मित्रावरुणौ देवता मित्रावरुणौ स ऋच्छतु यो मैतस्या दिशो ऽभिदासत्यूर्ध्वा दिग्बृहस्पतिर्देवता बृहस्पतिं स ऋच्छतु यो मैतस्या दिशो ऽभिदासतीयं दिगदितिर्देवतादितिं स ऋच्छतु यो मैतस्या दिशो ऽभिदासति ज्योतिषे तन्तव आशिषमाशास्ते ऽसा अनु मा तनु[6] ॥ २ ॥ cf. Mâitr. S. 1, 5, 4; Kap. S. 5, 2.

धनं मे शंस्य पाहि तन्मे गोपाय ॥

मम नाम प्रथमं जातवेदो माता पिता च दधतुर्न्वग्रे[7] ।
तत्त्वं गोपाया पुनर्ददे ते[8] वयं बिभराम तव नाम[9] ॥

प्रजां मे नर्य पाहि तां मे गोपाय ॥

---

[1] Brl प्रांणङ्; Ch प्राणम्; W 1 प्राणङ्, aber fol. 124 प्रणं [2] So weit geht T 6 und Brl fol. 8. [3] Ch दूरभो [4] So corr. Ch भिदास्यति [5] So corr. Ch भिदास्यति उदोचो [6] So corr. Ch तनू [7] So corr. Ch दधतन्चग्रे; Kap. S. 5, 2 दधतु न्वग्रे [8] So corr. Ch तो [9] Kap. S. 5, 2 तत्त्वं गोपाया पुनर्मः देवतोऽस्तवाहमग्रे बिभराणि नामः ॥

इमान्मे मित्रावरुणौ गृहान्गोपायतं[1] युवम् ।
अविनष्टानविहृतान्पूषैनानभिरक्षत्वास्माकं पुनरागमात् ॥
अन्नं मे पुरीष्य पाहि तन्मे गोपाय धनं मे शंस्याजुगुपस्तन्मे[2] पुनर्देहि ॥ अग्ने महस्राक्ष शतमूर्धञ्छततेजश्शतं[3] ते प्राणास्सहस्रं व्यानाः ॥ त्वं साहस्रस्य राय ईशिषे तस्य नो रास्व तस्य ते भक्तिवानो भूयास्म ॥

मम च नाम तव जातवेदो वाससी इव[4] विवसानौ चरावः[5] ।
ते विभृवो दक्षसे जीवसे च यथायथं नौ[6] तन्वौ[7] जातवेदः ॥
प्रजां मे नर्याजुगुपस्तां मे पुनर्देह्यग्ने गृहपते सुगृहपतिरहं[8] त्वया गृहपतिना भूयासं सुगृहपतिर्मया[8] त्वं गृहपतिना भूया अस्थूरि णौ गार्हपत्यं दीदायञ्छतं हिमा द्वायू अन्नं मे पुरीष्याजुगुपस्तन्मे[9] पुनर्देहि ॥ ३ ॥ cf. Maitr. S. 1, 5, 14, Kap. S. 5, 2.

अग्निहोत्रे स्तोमो[10] योक्तव्यो यस्य वा अग्निहोत्रे स्तोमो युज्यते वंसीयान्भवत्युपप्रयन्तो अध्वरमिति प्रजा वा इमा उप[11] तास्सत्स्तोमस्ता[12] एवोपयुनक्त्यस्य[13] प्रत्नामनु द्युतमिति देवा वै प्रत्नं ते सत्सत्स्तोमस्तानेव[12] प्रायुङ्क्त स्वर्गायोपोपेन्नु मघवन्भूय इन्नु त इतीयं वा उप[14] स्वर्गमेवेत्वास्यां[15] प्रतितिष्ठति या वै प्रजा आभविष्यन्तीस्ता[16] उप ता एवोपयुनक्ति परि ते दूडभो[17] रथ इति स्तोममेवैतया युक्तं परिगृह्णात्यग्निर्मूर्धा दिवः ककुदित्येषा मिथुना रेतस्वती पशव्या यासौ धुरां गायत्री प्रथमा सैषा गायत्र्योपास्थितोभा वामिन्द्राग्नी

---

[1] Von hier an beruht der Text bis zum Schluss des ganzen ersten Buches (also Kap. 7—18) auf Ch und D; an dieser Stelle setzt D ein, m. d. W. नोपायत; Ch गोपायतां [2] So Ch; D शस्याजुगूप° [3] D मूर्धञ्छततेजः; Ch मूर्धञ्शत° [4] So Ch und Kap. S. 5, 2 इव; D इवौ [5] So D und Kap. S. 5, 2; Ch चराव [6] So Ch und Kap. S. 5, 2; D यथायथन्नौ [7] So D und Kap. S. 5, 2; Ch तन्वां [8] D स्वगृहपति° [9] So Ch; D जूगुप° [10] So D und Kap. S. 5, 3; Ch स्तोमे [11] Ch इमा तप [12] Kap. S. 5, 3 सत्सस्तोमस्ता [13] Ch एवोपायु° [14] Ch तप [15] Ch und D वेत्वा°; Kap. S. 5, 3 मेवत्यास्यां [16] Kap. S. 5, 3 आभवि° [17] Ch दूरभो

आह्नुवध्या इति सूर्यो वा इन्द्रस्सो ऽग्निं नक्तं[1] प्राविशत्युभा एवैनौ
सहेट्टे यासौ धुरां त्रिष्टुप्प्रथमा सैषा त्रिष्टुभोपास्थितायमिह प्रथमो
धायि धातृभिरित्यग्निर्ह्येवास्मिंल्लोक[2] इह प्रथमो ऽधीयत यासौ धुरां
जगती प्रथमा सैषा जगत्योपास्थितायं ते योनिर्ऋत्विय इतीयं ह्यग्ने-
5 र्योनिरग्निस्सूर्यस्य यासौ धुरामनुष्टुप्प्रथमा सैषानुष्टुभोपास्थित ॥ दधि-
क्राव्णो[3] अकारिषमित्येषा वा अग्नेः पशव्या तनूर्या दधिक्रावती[4] ता-
मेवास्य गृह्णात्युपस्थायुका एनं[5] पशवो भवन्ति पशुर्वा अग्निर्यथा
वै गौर्जीर्यति यथाश्वो यथा पुरुष एवमेष आहितो जीर्यत्यग्न्याधे-
यस्याग्निरुपस्थेयस्तन्वो वा अस्यैतास्ताभिरेवैनं पुनर्णवं करोति[6] य-
10 च्छन्दोभिरुपतिष्ठते तैरेवैनं पुनर्णवं[7] करोति यथाय आहित एवं-
मस्य भवत्युपतिष्ठते योग एवास्यैष दम एवास्यैष याञ्च[8] एवास्यैष[9]
यथा श्रेयस आहृत्य नमस्यत्येवमेव तत् ॥ ४ ॥

cf. Mâitr. S. 1, 5, 5. 6; Kap. 5, 3.

अग्नीषोमीयया पूर्वपक्ष उपतिष्ठेताग्नीषोमयोर्वा एतद्भागधेयं य-
त्पौर्णमासं ताभ्यामेवैनं परिददाति ता एनमनपक्रामन्तौ[10] गोपायत
15 ऐन्द्राग्न्यापरपक्ष इन्द्राग्न्योर्वा एतद्भागधेयं यदमावास्या ताभ्यामेवैनं
परिददाति ता एनमनपक्रामन्तौ[11] गोपायतो ऽग्नीषोमा एवैनं पूर्व-
पक्षाय परिदत्त इन्द्राग्नी अपरपक्षाय संप्रदायं ह वा एनं देवा अन-
पक्रामन्तो[12] गोपायन्ति य एवं विद्वानग्निमुपतिष्ठते कस्मै कमग्निरु-
पस्थीयत इत्याहुरशिवं[13] वा एतदग्नेर्यदग्निमुपतिष्ठते[14] ऽग्नय एवैतद-
20 शिवं क्रियते सायमुपतिष्ठते न प्रातस्तस्मात्सायमतिथये प्रत्येनसो

---

[1] So corr. Ch u. D ग्निर्नक्तं; Kap. S. 5, 3 ग्निं नक्तं [2] Ch und D ल्लोके
[3] Von hier bis zum Ende des Kapitels collat. mit T 1 und darnach accentuirt: collat. mit St fol. 90. 91. [4] St दधिक्राव्याते [5] St एकमप॰ [6] Von hier bis करोति in St fehlend. [7] Ch पुनर्नवं [8] Kap. S. 5, 3 यज्ञ [9] D एवास्योष
[10] So D; Ch मनुपक्रामंतौ; Kap. S. 5, 4 मनुपक्रामतौ [11] So D; Ch und Kap. S. 5, 4 मनुपक्रामंतौ [12] Kap. S. 5, 4 एतं देवा अनुपक्रामंतो [13] D शिवं
[14] Ch ग्नियद॰

नोत तथा प्रातर्यज्ञस्य यज्ञस्य वा आशीरस्ति यदग्निमुपतिष्ठते ऽग्निहो-
त्रस्यैवैतामाशिषमाशास्ते[1] प्रजापतिः प्रजा असृजत सो ऽग्निमेवाग्रे
ऽसृजत तस्मा एतद्भागधेयमकल्पयद्यदग्न्युपस्थानं यदग्निमुपतिष्ठते
स्वेनैवैनं भागधेयेन समर्धयत्यग्निर्वै[2] प्रयुक्तिमभ्यकामयत यथाश्वो रथ-
काम्यति[3] यदग्निमुपतिष्ठते प्रैवैनं[4] युङ्क्ते काममस्यर्ध्नोति[5] मनुष्यस्येव[6] 5
यः काममृध्नोति स वसीयान्भवत्यृध्नोति[7] वसीयान्भवति य एवं वि-
द्वानग्निमुपतिष्ठत उपेति संभवत्येवैतयाग्निर्मूर्धेति रेत एवैतया प्रसि-
ञ्चत्युभा वामिन्द्राग्नी इति प्राणापानौ वा इन्द्राग्नी प्राणापाना एवै-
तया दधात्ययमिह प्रथमो धायीति गर्भमेवैतया दधात्यस्य प्रत्नामनु
द्युतमित्यूध एवैतया करोत्ययं ते योनिरृत्विय इति जनयति चैवैत- 10
या वर्धयति च कॢप्ता ह वा अस्य प्रजा जायते य एवं विद्वानग्निमु-
पतिष्ठते ॥ ५ ॥ cf. Mâitr. S. 1, 5, 7; Kap. S. 5, 4.

अहर्वै देवानामासीद्रात्र्यसुराणां ते देवास्तमसो ऽन्धसो मृत्यो रा-
त्र्या अभ्याप्लवमानादबिभयुस्ते[8] छन्दोभिरग्निमन्वारभन्त गायत्र्या वस-
वस्त्रिष्टुभा रुद्रा जगत्यादित्या अम्भस्स्थेति पशव इन्धाना इति मनु- 15
ष्यास्ते देवास्तमसो ऽन्धसो मृत्यो रात्र्याः पारमतरन्यच्छन्दोभिरग्निमुप-
तिष्ठते तमस एवैषान्धसो मृत्यो रात्र्याः पारतीर्तिस्त्वमग्ने[9] सूर्यवर्चा
इत्यग्नय एवैतामाशिषमाशास्ते सं मामायुषा वर्चसा सृजेत्यात्मन
एवैतामाशिषमाशास्ते सं त्वमग्ने सूर्यस्य ज्योतिषागथा इत्यग्नय एवै-
तामाशिषमाशास्ते ॥ समृषीणां स्तुतेनेति छन्दांसि वा ऋषीणां 20
स्तुतं छन्दोभिरेवैनं समर्धयति सं प्रियेण धाम्नेति पशवो वा अग्नेः
प्रियं धाम पशुभिरेवैनं समर्धयति समहमायुषा सं वर्चसा सं प्रजया
सं रायस्पोषेण ग्मीयेत्यात्मन एवैतामाशिषमाशास्त[10] इन्धानास्त्वा

[1] D ग्निहातस्योवेतामाशिष° [2] D ग्निर्वा [3] Dasselbe Kap. S. 5, 4.
[4] D प्रेवेनां [5] Ch स्याद्योति [6] Kap. S. 5, 4 स्येद य काम° [7] Diese 3 Worte
fehlen in Ch. [8] So Ch: vielleicht auch Kap. S. 5, 5 so; D अत्याप्लवमानाद
[9] So D und Kap. S. 5, 5: Ch पारंतीर्ति° [10] Ch शास्ते

शतं हिमा इत्येतद्ध वै दाशर्म[1] आरुणिमुवाचाग्निमादधिवांसमुज्ञातः
केनाग्निरुपस्थेय इति तस्मै हैतदग्न्युपस्थानमुवाच स होवाचानयोप-
स्थेय इन्धानास्त्वा शतं हिमा इति यो वा एतयोपतिष्ठते पापीयान-
स्माद्भ्रातृव्यो भवति पापीयान्सपत्नस्सर्वमायुरत्या जीवितोरन्नमत्त्यां-
युर्धा अग्ने ऽस्यायुर्मे धेहीत्यात्मन एवैतामाशिषमाशास्ते वयोधा अग्ने
ऽसि वयो मे धेहीत्यात्मन एवैतामाशिषमाशास्ते तनूपा अग्ने ऽसि
तन्वं मे पाहीत्यात्मन एवैतामाशिषमाशास्ते यन्मे अग्न ऊनं तन्व-
स्तन्म आपृणेति यदेवास्योनमात्मनस्तदापूरयते ऽग्नेस्समिदस्यभिश-
स्त्या मा पाहि सोमस्य[3] यमस्येति सर्वस्मादेवैनमेताः पान्त्यग्ने यत्ते
तपस्तेन तं प्रतितप[4] यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इति तेनैवैनं
प्रतितपति प्रतिशोचति[5] प्रतितित्यक्ति[6] प्रत्यर्चति प्रतिहरत्येतद्ध[7] वा
आरुणिरुवाचैतेनाहं सर्वान्सपत्नान्सर्वान्भ्रातृव्यानभ्यभवमिति[8] श्रेया-
ञ्छ्रेयानात्मना[9] भवति पापीयान्पापीयान्य एनं द्वेष्टि यो ऽस्मा अरा-
तीयति य एवं विद्वानग्निमुपतिष्ठते ऽग्ने रुचां पते नमस्ते रुचे मयि
रुचं धेहीति सर्वा एव शुचश्शमयित्वा रुचमात्मन्धत्ते चित्रावसो
स्वस्ति ते पारमशीयावाग्वसो स्वस्ति ते पारमशीयेति रात्री वै चि-
त्रावसुरहरवाग्वसुरहोरात्रयोरेवैषा परीत्तिर्न[10] नक्तं न दिवार्तिमार्छति
य एवं वेद भङ्क्ते वा एते यज्ञस्याग्नी रात्र्यसा आदित्यो ऽहरेते एवं
भङ्क्ते ईट्टे ईश्वरो भूतं च भविष्यच्चाज्ञातोर्य[11] एवं वेद ॥ ६ ॥

cf. Mâitr. S. 1. 5. 8. 9; Kap. S. 5. 5.

अम्भस्स्थेत्यम्भो ह्येता महस्स्थेति महो ह्येता ऊर्जस्स्थेत्यूर्जो ह्येता
रायस्पोषस्स्थेति रायस्पोषो ह्येता रेवती रमध्वमिति पशवो वै[12] रेव-

---

[1] So Ch: D वो दाव्यार्मं [2] So Ch; D तनूपा असि [3] D सामस्य [4] So D; Ch तपति [5] Dies Wort fehlt in Ch. [6] So D; Ch प्रतितित्यग्नि: cf. oben p. 59, Z. 20. [7] So Ch: D त्येतं ह [8] So Ch; D नत्यभवमिति [9] So D: Ch श्रेयाऽश्रेया° [10] So Ch; D परोर्तिर्न [11] So corr. Ch und D विष्यम्चा (Missverständniss der Çâradâ-Schrift). [12] D वो

तीः पशव एतद्यदन्तराग्नी स्व एवैना गोष्ठे रमयामकरस्मिन्योना इ-
त्येष ह्यासां योनिरस्मिन्गोष्ठ इत्येष ह्यासां गोष्ठो ऽयं वो बन्धुरितो
मापगातेत्युपोपैवैनं पशवो यन्ति नापक्रामन्ति य एवं विद्वानग्निमु-
पतिष्ठत एति[1] वा एषो ऽस्माल्लोकाद्यो ऽग्निमुपतिष्ठते ऽम्भस्स्थेति
पशवो वा अम्भः पशवो ऽन्तरिक्षं पशुष्वेव प्रतितिष्ठति बिभ्यति[2] 5
वै[3] देवेभ्यः पशवो देवानामेष एको यो ऽग्निमुपतिष्ठते ॥ ते ऽस्मादी-
श्वराः प्रत्नसस्संहितासि[4] विश्वरूपेत्येतानि वै[5] गोर्नामानि संहिता
विश्वरूपा गौस्तान्येवास्य[6] गृह्णात्यप्रत्नासाय[7] संहितासि विश्वरूपेति
रूपेण रूपेण ह्येषा संहिता मोर्जा विशा गौपत्येना प्रजया रायस्पो-
षेणेत्येतैर्ह्येषा विशन्त्याविशति[8] मयि वो रायश्श्रयन्तां सहस्रपोषं वः 10
पुषेयमिति साहस्रीमेव पुष्टिं न्यङ्क्ते[9] वत्सं पराहन्ति वत्सनिकान्ताः
पशवः पशूनामनुकशात्या अभिका एनं पशवो भवन्ति सप्त वै ब-
न्धुमतीरिष्टका अग्नौ चित्य उपधीयन्ते तास्ता अमुष्मै लोकाय सप्त
ग्राम्यास्ता अत्रोपधेया[10] गौश्चाश्वश्चाविश्चाजा चाश्वतरश्च गर्दभश्च पु-
रुषो यत्तां पराहन्ति ता एवैतदुपधत्ते ऽथो गवैवैनं चिनुते ॥ ७ ॥ 15

cf. Mâitr. S. 1, 5, 9. 10; Kap. S. 5, 5.

सं पश्यामि प्रजा अहमिति सर्वा एव प्रजा अवरुन्द्ध इडप्रजसो
मानवीरित्यैडीर्हि प्रजा मानवीर्यं च वै ग्राम्याः पशवो ये चारण्यास्त
उभये नक्तं संसृज्यन्ते तस्मादपि ये ऽल्पाः पशवस्ते नक्तं बहव इव
दृश्यन्ते त ईश्वरा अमुं लोकमनुपदो यदेतद्यजुर्वदत्यस्मिन्नेवैनांल्लोके[11]
यच्छत्यग्निर्वा एतस्यास्मिंल्लोके ऽग्ने जायते य आहिताग्निस्सो ऽस्य प- 20
शूनुपजायमानान्हिनस्त्युप त्वाग्ने दिवे दिव इत्युपैवैनं जायमानेभ्य-
श्शमयति दोषावस्तर्धिया वयं नमो भरन्त एमसीति नमस्कृत्योपा-

---

[1] D इति [2] So corr., resp. combinirt. D रिद्यति; Ch बिभति [3] D वो [4] Ch प्रत्नसस्स° oder पुत्रसस्स° D पुत्रासस्सं° [5] D वो [6] So Ch; D गोस्ता° [7] So Ch; D त्यपुत्रासाय [8] So D; Ch विशेति [9] So corr. Ch पुष्टि व्यङ्क्ते; D पुष्टि न्यङ्क्ते [10] Ch चेया [11] So D; Ch वैनल्लोके

स्थित राजन्तमध्वराणां गोपामृतस्य दीदिविम्। वर्धमानं स्वे दम
इति वृधन्वत्या स नः पितेव सूनवे ऽग्ने सूपायनो भव सचस्वा नस्स्व-
स्तय इति स्वस्तिमत्याग्ने त्वं नो अन्तम इत्येतद्ध वै दिवोदासो भैम-
सेनिरारुणिमुवाचाग्निमादधिवांसमुद्गातः[1] केन गार्हपत्य उपस्थेय इ-
5 ति तस्मै हैता[2] उवाच स होवाचाभिरूपस्थेयो ऽग्ने त्वं नो अन्तम
उत त्राता शिवो भवा वरूथ्य इत्येषा वा अग्नेः प्रिया तनूर्या वरूथ्या
प्रिययैवैनं तन्वोपास्थित द्विपदाभिर्द्विपात्पुरुषो गृहा गार्हपत्यो गृहे-
ष्वेव प्रतितिष्ठति तिस्रः पूर्वाश्चतस्र एतास्तास्सप्त सप्त ग्राम्याः पश-
वस्तानेवावरुन्द्ध ऊर्जा वः पश्याम्यूर्जा मा पश्यतेत्यूर्जमेव गृहेषु प-
10 शुष्वात्मन्धत्ते ऽथो या अमूरिष्टका उपधत्ते ता एवैतत्कल्पयतीडास्स्थ
मधुकृत इतीडा ह्येता मधुकृतस्स्योना माविशतेरंमद इति स्योना
ह्येता[3] इरया सहाविशन्ति मयि वो रायश्श्रयन्तां सहस्रपोषं वः पुष-
यमिति साहस्रीमेव पुष्टिं न्यङ्क्ते वत्सं पराहन्ति वत्सनिकान्ताः पशवः
पशूनामनुकशात्या अभिका एनं पशवो भवन्त्यथो इष्टकामेवैतां गा-
15 र्हपत्य उपाधत्ते[4] ॥ ८ ॥ cf. Maitr. S. 1, 5. 10; Kap. S. 5. 5.

मंहि त्रीणामवो ऽस्त्वित्येषा प्राजापत्यस्त्रिचः[5] प्राजापत्या इमाः
प्रजास्सर्वा एव प्रजा अवरुन्द्धे प्रजापतिर्वा एताः[6] प्रजापतिमेवैतदु-
पेत्य सर्वमाप्त्वा सर्वमवरुध्य सोमानं स्वरणं कृणुहि ब्रह्मणस्पत इति
ब्राह्मणस्पत्या ब्रह्मवर्चसमेवैतयात्मन्धत्ते वैश्वदेवीर्वा एता वैश्वदेवी-
20 रिमाः प्रजा ब्रह्मणो योनेः[7] प्रजाः प्रजायन्ते यदेषा ब्राह्मणस्पत्या ब्र-
ह्मण एवैना योनेः प्रजनयत्येताभिर्वा अदितिः पुत्रानन्वैक्षत[8] यत्सो-
ममाहरन्नमुष्माल्लोकात्स्वस्ति[9] पुनरागच्छन्सह[10] सोमेन यमेव कामं
कामयते तं स्पृणोति यं कामयेत स्वस्ति पुनरागच्छेदिति तमेताभि-

---

[1] D निराशासु° [2] D होता [3] Ch स्योना एत [4] So D; Ch उपधत्ते
[5] So D; Ch त्यस्त्रिय्यचः [6] So Ch; D एतेर्वारिताः [7] So Ch; D यो नः [8] So
D; Ch °क्षत [9] So Ch; D कात्ते स्वस्ति [10] So Ch; D गच्छन्त्सह

न्वीक्षेत स्वस्त्येव पुनरागच्छति ॥ कदा चन स्तरीरसि परि ते दूडभो[1]
रथ इति स्तोमस्यैवैतद्योगः[2] कदा चन स्तरीरसीत्येतद्ध वा आरुणिरु-
वाच न तावद्रात्रीं स्तर्यमुवस यावदेतामृचमशृणवमिति न रात्रीं
स्तर्यं वसति य एवं वेद गायत्रो वा अग्निर्गायत्रच्छन्दास्तं छन्दसा
व्यर्धयति यद्विच्छन्दोभिरुपतिष्ठते यदेषा गायत्र्युत्तमा स्वेनैवैनं छन्द- 5
सा समर्धयति सर्वं वा एष आप्त्वा सर्वमवरुध्य स्वर्गं लोकमेति
यो ऽग्निमुपतिष्ठते व्यस्य प्रजा छिद्यते यत्पुत्रं ह्वयति प्रजामेवानुसं-
तनोति मानुषमिव वा एतदुपावर्तते[3] यत्पुत्रं ह्वयत्यच्छिन्नो दैव्यस्त-
न्तुर्मा[4] मनुष्यश्छेदीति देवलोकं चैव मनुष्यलोकं च संतनोत्युभौ लो-
का[5] आजयति[6] ॥ निम्रदो ऽसीत्यव तं गृह्णाति[7] यो ऽस्य पश्चाद्भ्रातृ- 10
व्यो ऽभिभूरसीत्यभि तं भवति य एनेन सदृङ् प्रभूरसि प्राहं तमतिभू-
यासमित्यति तं क्रामति य एवैनं[8] पूर्वो ऽतिक्रान्तो[9] भ्रातृव्यः पूषा
मा प्रपथे पातु पूषा मा पशुपाः पातु पूषा माधिपतिः पात्वितीयं
वै पूषा प्रपथे ऽन्तरिक्षं पशुपा द्यौरधिपतिरिम एवैनं लोकाः पान्त्य-
ग्निं समिन्धे ऽनुसंतत्यै प्राची दिगग्निर्देवतेत्येता एव स देवता ऋत्वा[10] 15
पराभवति य एनमेताभ्यो[11] दिग्भ्यो ऽभिदासति ज्योतिषे तन्तव आ-
शिषमाशास[12] इत्याशिषमेवाशास्ते यो ऽस्य प्रियः पुत्रस्स्यात्तस्य नाम
गृह्णीयात्तस्मिन्नेव ता आशिषो दधाति ॥ ९ ॥

cf. Māitr. S. 1, 5. 11; Kap. S. 5, 5.

अहर्वावासीन्न रात्री सा यमी भ्रातरं मृतं नामृष्यत तां यदपृच्छ-
न्यमि कर्हि ते भ्रातामृतेत्यद्येत्येवाब्रवीत्ते देवा अब्रुवन्नन्तर्दधामेदं[13] 20
रात्रीं करवामेति ते रात्रीमकुर्वंस्ते रात्र्यां भूतायां पशून्नापश्यन्सावेन्न
वै पश्यन्तीति सा न व्यौच्छदरेक्णस्यत्पशुषु[14] तान्देवा इच्छन्तः पत्या-

---

[1] Ch दूरभो [2] So corr. Ch वैतयोगः; D वैतेयागः [3] D पार्धतंत [4] D देव्य° [5] Kap. S. 5, 5 लोकावाजयति [6] Ch जनयति [7] So corr. Ch सौत्यवेतं गृ°; D सौत्यवभङ्गृ° [8] So D; Ch य एनं [9] D क्रांतां [10] Kap. S. 5, 5 स देवता आरिक्ति य एनमेताभ्यो [11] D एवमे° [12] So D und Kap. S. 5, 5; Ch आस्त [13] So D; Ch मोदं [14] sic! Kap. S. 5, 6 सा म व्यौत्सदरेस्तस्य पशुषु

यन्त[1] ताँश्छन्दोभिरन्वपश्यँस्तस्माच्छन्दोभिर्नक्तमग्निरुपस्थेयः पशूना-
मनुकशात्यै नास्मात्पशवस्तिरोभवन्ति य एवं वेद सावेदनु वा अख्य-
न्निति[2] सा व्यौच्छत्ते देवा अब्रुवन्नमा वै नो वस्वभूदिति सामाव-
स्यामा ह वा अस्य[3] वसु भवति विन्दते ऽन्यस्य[4] वसु नास्यान्यो वसु
5 विन्दते य एवं विद्वानग्निमुपतिष्ठते ॥ देवा वा अह्नो रक्षांसि निरघ्नं-
स्तानि रात्रीं प्राविशंस्तां देवा न व्येतुमधृष्णुवंस्त इन्द्रमब्रुवंस्त्वं वै
न[5] ओजिष्ठो ऽसि त्वमिमां वीहीति स्तुत मेत्यब्रवीन्नास्तुतो[6] वीर्यं
कर्तुमर्हामीति ते ऽब्रुवन्नेष ते ऽग्निर्नेदिष्ठं स त्वा स्तौत्विति तमग्निर-
स्तौत्स स्तुतस्सर्वा मृधस्सर्वा नाष्ट्रास्सर्वाणि रक्षांस्यतरदिन्द्रो यजमा-
10 नो यदग्निमुपतिष्ठते सर्वा एव मृधस्सर्वा नाष्ट्रास्सर्वाणि[7] रक्षांसि
तरति नास्य नक्तं रक्षांसीशते य एवं वेद त्वष्टा वै भूत्वा प्रजापतिः
प्रजा असृजत त्वष्टा यजमानस्स यद्वाचावदत्तदभवद्यद्वै वाचा वदति
तद्भवति यद्यदेव वाचा वदति तत्तद्भवति तत्तत्सृजते ॥ १० ॥

cf. Mâitr. S. 1, 5, 12; Kap. S. 5, 6.

धनं मे शंस्य पाहि तन्मे गोपायेति प्रवत्स्यन्नाहवनीयमुपतिष्ठेत[8]
15 धनस्य वा एष गोप्ता तदेवास्मै परिददाति मम नाम प्रथमं जातवेद
इत्यग्निर्नैवैतत्तन्वं विपरिधत्ते यथान्तो सतो ऽग्निहोत्रं[9] हुतं यथेष्टमेव-
मस्यापि[10] प्रवसतो भवति प्रजां मे नर्य पाहि तां मे गोपायेति प्र-
जाया वा एष गोप्ता तामेवास्मै परिददातीमान्मे मित्रावरुणौ गृहा-
न्गोपायतं[11] युवमिति मित्रेण च वा इमाः प्रजा गुप्ताः क्रूरेण च
20 मित्रं मित्रः क्रूरं वरुण इयं पूषैताभ्य एव देवताभ्यो[12] गृहान्परिददा-
त्यन्नं मे पुरीष्य पाहि तन्मे गोपायेत्यन्नस्य वा एष गोप्ता[13] तदेवास्मै
परिददाति धनं मे शंस्याजुगुपस्तन्मे पुनर्देहीति धनमेव गुप्तं पुनरा-

---

[1] So Ch; D पच्चायंत; Kap. S. 5, 6 छकंता पल्यायंतस्तां [2] D अध्येचिति [3] So Ch; D अस्यै [4] So D; Ch ते अस्यन्यस्य [5] So Ch; D स्त्वो न [6] Ch मेत्या [7] So corr. Ch राष्ट्रास्स; D नाष्टा स [8] Ch पातिष्ठेत [9] So Ch; D सभो ग्निहोते [10] Ch यथेष्टाममावमस्या [11] So corr. Mss. पायतां [12] So Ch; D देवतात्यै [13] Ch गुप्ता

त्मन्धत्ते ऽग्ने सहस्राक्ष शतमूर्धञ्छततेज[1] इत्येतैर्वा एतौ व्यृध्येते वि-
प्रवसन्तौ प्राणैरपानैस्तेजोभिर्वीर्यैर्यदेतैरुपतिष्ठते तैरेव समृध्येते[2]
मम च नाम तव च जातवेद इत्यग्निर्नैवैतत्तन्वं यथायथं कुरुते प्रजां
मे नर्याजुगुपस्तां मे पुनर्देहीति प्रजामेव गुप्तां पुनरात्मन्धत्ते ऽग्ने गृह-
पत इति नातिमार्छतो ऽग्निश्च यजमानश्च न भ्रेषं नीतो[3] ऽन्नं मे पु-
रीष्याजुगुपस्तन्मे[4] पुनर्देहीत्यन्नमेव गुप्तं पुनरात्मन्धत्ते ॥ ११ ॥

cf. Mâitr. S. 1, 5, 14; Kap. S. 6, 1.

प्र[5] वेधसे कवये वेद्याय वचो वन्दारु वृषभाय वृष्णे ।
यतो भयमभयं तन्नो अस्त्वव देवानां यजेहीड्यानि[6] ॥
समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् ।
आस्मिन्हव्या जुहोतन ॥
उदग्ने तव तद्घृतादर्ची रोचत आहुतम् ।
निंसानं जुह्वो मुखे ॥
उप त्वा जुह्वो मम घृताचीर्यन्तु हर्यत ।
अग्ने हव्या जुषस्व नः ॥
प्रजा अग्ने संवासयाशाश्च पशुभिस्सह ।
राष्ट्राण्यस्मा आधेहि यान्यासन्सवितुस्सवे ॥
सं वस्सृजामि हृदयं संसृष्टं मनो अस्तु वः ।
संसृष्टास्तन्वस्सन्तु वस्संसृष्टः प्राणो अस्तु वः ॥
सं या वः प्रियास्तन्वस्संप्रिया[7] हृदयानि वः ।
आत्मा वो अस्तु संप्रियस्संप्रियास्तन्वो[8] मम ॥
यो अश्वत्थश्शमीगर्भ आरुरोह त्वय्यपि ।
तं ते गृह्णामि यज्ञियैः केतुभिस्सह ॥

---

[1] Ch ञ्शततेजा; D ञ्छततेज [2] Ch समृद्ध्यते [3] D द्रेषन्नीतो [4] Ch जूगुप; D जगुप [5] Zu diesem Kap. auch T 1, Brl fol. 36. 37, W 1 u. W 2 collationirt; accentuirt nach T 1 und W 2, coll. mit Brl. [6] D होड्यानि [7] Brl सं प्रिया [8] Brl संप्रियः

मयि गृह्णाम्यहमग्रे अग्निं रायस्पोषेण सह वर्चसेह देवाः[1] ।
मयि प्रजां मयि पुष्टिं दधामि मदेम शतहिमास्सुवीराः ॥
यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्यां आविवेश ।
तमात्मनि परिगृह्णीमहे वयं मैषो अस्मानवहाय परागान्मा व-
5 यमेतमवहाय परागाम ॥
मही विश्पत्नी सदनी ऋतस्यार्वाची एतं[2] धरुणे रयीणाम् ।
अन्तर्वती जन्यं जातवेदसमध्वराणां जनयतं पुरोगाम्[3] ॥
उत्समुद्रान्मधुमाँ ऊर्मिरागात्साम्राज्याय प्रतरं दधानः[4] ।
अमी च ये मघवानो वयं चेषमूर्जं मधुमत्संभरेम ॥
10 इयत्यग्र आसीरदो देवि प्रथमाना पृथग्यत् ।
देवैर्नुन्ना व्यसर्पो[5] महित्वा अदृंहथाश्शर्कराभिस्त्रिविष्टपि ।[6]
अजयो लोकान्प्रदिशश्चतस्रः ॥
उदेह्यग्ने अधि मातुः पृथिव्या विश आविश महतस्सधस्थात् ।
आशुं त्वाजौ[7] दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपाम् ॥
15 यदीदं दिवो यदि वा पृथिव्यास्संबभूव सुकृतो ररायोः[8] ।
तयोः पृष्ठे सीदतु जातवेदाः प्रजामस्मभ्यं जनयन्नयिं च ॥
चन्द्रमग्निं चन्द्ररथं हरिव्रतं[9] वैश्वानरमप्सुषदं स्वर्विदम् ।
विगाहं तूर्णिं तविषीभिरावृतं[10] भूर्णिं देवास इह सुश्रियं दधुः ॥
यत्पृथिव्या अनामृतं संबभूव त्वे सचा ।
20 तदग्निरग्नये ददत्तस्मिन्नाधीयतामयम्[11] ॥
यदन्तरिक्षस्य यद्दिवो अनामृतं संबभूव त्वे सचा ।
तदग्निरग्नये ददत्तस्मिन्नाधीयतामयम् ॥ ॥ १२ ॥

cf. Mâitr. S. 1, 6, 1; Kap. S. 6, 2.

---

[1] So acc. T 1; Brl देवाः [2] W 2 तंतन्धरुणे [3] Brl पुरोगात् [4] Brl दधानाः
[5] Dies Wort in den Mss. ohne Accent; Ch व्यचर्पा [6] Hier bricht W 2 ab.
[7] So corr. Die Mss. त्वाजा, resp. त्वाजो [8] So Ch und W 1, ohne Acc.; Brl रारायोः; T 1 ररणयोः; desgl. D, ohne Acc. [9] T 1 हरीव्रतं; Brl हरीवृतं [10] Ch तविषेभि° [11] Ch दधत्त°

इत[1] एव प्रथमं जज्ञे अग्निरेभ्यो योनिभ्यो अधि जातवेदाः ।
स गायत्र्या त्रिष्टुभा जगत्यानुष्टुभा देवेभ्यो हव्यं वहतु प्रजानन् ॥
सहाग्ने अग्निना जायस्व सह रय्या सह पुष्ट्या[2] सह प्रजया सह
ब्रह्मवर्चसेनाजन्यग्निर्होता पूर्वः[3] पूर्वेभ्यः पवमानः पावकश्शुचिरीड्यो
ऽसुरसि प्रथमजा असुनामासुरुच्यसे[4] ऽसुरहमसुस्त्वं किमद्यासुरसुं कर- 5
दसोरसुं प्रतीतन संजानीध्वं भूर्भुवरङ्गिरसां त्वा देवानां व्रतेनादध
आदित्यानां त्वा देवानां व्रतेनादधे द्यौर्महासि भूमिर्भूम्ना तस्यास्ते
देव्यदित उपस्थे ऽन्नादमन्नाद्यायान्नपत्यायादधे[5] ॥

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः ।
पितरं च प्रयन्त्स्वः ॥ 10

अग्ने गृहपते ऽहे बुध्न्य परिषद्य दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं[6]
विन्द यजमानाय पृथिव्या मूर्धन्सीद यज्ञिये लोके यो नो अग्ने नि-
ष्ट्यो यो ऽनिष्ट्यो ऽभिदासतीदमहं तं त्वयाभिनिदधामि ॥
यास्ते शिवास्तन्वो जातवेदो या अन्तरिक्षे दिवि याः पृथिव्याम् ।
ताभिस्संभूय सगणस्सजोषा हिरण्ययोनिर्वह हव्यमग्ने ॥ 15
सं[7] त्वमग्ने दिव्येन ज्योतिषा भाहि समन्तरिक्ष्येण[8] सं पार्थिवेन
वैश्वानर्या समिधा दीदिही[9] न ऊर्जस्वत्या वर्चस्वत्या भास्वत्या रश्मि-
वत्या ज्योतिष्मत्या ॥ या वाजिन्नग्नेः प्रिया तनूः पशुषु पवमाना ता-
मावह तया मा जिन्व या वाजिन्नग्नेः प्रिया तनूरप्सु पावका[10] ता-
मावह तया मा जिन्व या वाजिन्नग्नेः प्रिया तनूस्सूर्ये शुक्रा शुचिमती 20
तामावह तया मा जिन्वौजसे बलाय त्वोद्यच्छे[11] वृष्णे शुष्मायाश-
स्तितूरसि वृत्रतूरस्मान्पथो[12] ज्यैष्ठ्यान्मा[13] योषम् ॥

---

[1] Dies Kap. coll. mit Brl fol. 178—180; darnach auch accentuirt. [2] Brl सह सेह पंष्ट्याः [3] Brl पूर्वाः [4] D द्वष्यसे [5] Brl यांचपत्या cf. aber unten. [6] Brl पर्यन्तं [7] Brl सं; desgl. Ch, ohne Acc. [8] So corr. Brl accentuirt hier क्ष्येण; aber cf. weiter unten, sowie Kâṭh. 35, 7; 37, 9. [9] Auch Kap. S. 6, 3 दीदिहो [10] Brl पावकांस्तां [11] Ch द्यश्छे [12] Ch und D शस्तिभूरसि वृत्रभूर° [13] So corr. In Brl ज्यैष्ठ्या° ohne Accent.

प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने[1] पुरो अग्ने भवेह ।
विश्वा आशा दीद्यद्विभाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ॥
भुवरङ्गिरसां त्वा देवानां व्रतेनादध आदित्यानां त्वा देवानां व्रते-
नादधे द्यौर्महासि भूमिर्भूम्ना तस्यास्ते देव्यदित उपस्थे ऽन्नादमन्ना-
5 द्यायान्नपत्यायादधे[2] ॥
आयं प्राणादपानत्यन्तश्चरति रोचना ।
व्यख्यन्महिषो दिवम्[3] ॥
अग्ने नय मयोभो[4] सुशेव[5] दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द
यजमानाय पृथिव्या मूर्धन्सीद यज्ञिये लोके यो नो अग्ने निष्ट्यो यो
10 ऽनिष्ट्यो ऽभिदासतीदमहं तं त्वयाभिनिदधामि ॥
यास्ते शिवास्तन्वो जातवेदो या अन्तरिक्षे दिवि याः पृथिव्याम् ।
ताभिस्संभूय संगणस्सजोषा हिरण्ययोनिर्वह हव्यमग्ने ॥
सं त्वमग्ने दिव्येन ज्योतिषा भाहि समन्तरिक्ष्येण[6] सं पार्थिवेन वै-
श्वानर्या समिधा दीदिही न ऊर्जस्वत्या वर्चस्वत्या भास्वत्या रश्मि-
15 वत्या ज्योतिष्मत्या नाको ऽसि[7] ब्रध्नः[8] प्रतिष्ठा संक्रमणं[9] भूर्भुवस्स्वर-
ङ्गिरसां त्वा देवानां व्रतेनादध आदित्यानां त्वा देवानां व्रतेनादधे
द्यौर्महासि भूमिर्भूम्ना तस्यास्ते देव्यदित उपस्थे ऽन्नादमन्नाद्यायान्नप-
त्यायादधे ॥
त्रिंशद्धाम विराजति वाक्पतङ्गा अशिश्रयुः ।
20 प्रति वस्तोरह द्युभिः[10] ॥
अग्ने संराडजैकपादाहवनीय[11] दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं

---

[1] Ch ग्निरग्ने [2] Brl न्नादमन्नाद्या॰ ohne Accent. [3] व्यख्य॰ ohne Accent in Brl; ergänzt. [4] So Brl; Ch मयोभो: D मयोभु [5] So Brl; Ch वसुशेव; D सुषेव [6] Brl hier न्तरिक्ष्येण, während oben न्तरिक्ष्येण: cf. 35, 7; 37, 9. [7] So Brl, desgl. Ch, ohne Acc.; D ज्योतिष्मत्या रायो रिष्ट्यो को सि [8] So Brl; Ch ब्रघ्नः; D ब्रघ्नः [9] D संगमणं [10] रह द्युभिः ohne Accent in Brl. [11] Brl संरा-डवैकपा॰; Ch सम्राजैकप॰; D संनाडजैकपा॰

विन्द यजमानाय पृथिव्या मूर्धन्सीद यज्ञिये लोके यो नो अग्ने नि-
ष्ट्यो यो ऽनिष्ट्यो ऽभिदासतीदमहं तं त्वयाभिनिदधामि ॥

यास्ते शिवास्तन्वो जातवेदो या अन्तरिक्षे दिवि या पृथिव्याम् ।
ताभिस्संभूय सगणस्सजोषा हिरण्ययोनिर्वह हव्यमग्ने ॥

सं त्वमग्ने दिव्येन ज्योतिषा भाहि समन्तरिक्ष्येण[1] सं पार्थिवेन
वैश्वानर्या समिधा दीदिही न ऊर्जस्वत्या वर्चस्वत्या भास्वत्या रश्मि-
वत्या ज्योतिष्मत्या ॥

यस्ते अप्सु महिमा यो[2] वनेषु य ओषधीषु पशुष्वाविवेश ।
यत्र यत्र बिभ्रतो[3] जातवेदा अग्ने ततो द्रविणोदा न एहि ॥

मनुष्वत्त्वा निधीमहि मनुष्वत्समिधीमहि ।
अग्ने मनुष्वदङ्गिरो देवान्देवयते यज ॥ ॥ १३ ॥

cf. Mâitr. S. 1. 6. 1. 2; Kap. S. 6, 2. 3.

सप्त[4] ते अग्ने समिधस्सप्त जिह्वास्सप्तर्षयस्सप्त धाम प्रियाणि सप्त होत्रा अनुविद्वान्सप्त योनीरापृणस्वा घृतेन या ते अग्ने पवमाना तनूः पृथिवीमन्वाविवेश याग्नौ या रथन्तरे या गायत्रे छन्दसि या त्रिवृति[5] स्तोमे यान्ने[6] तां त एतदवरुन्धे तस्यै स्वाहा या ते अग्ने पावका तनूरन्तरिक्षमन्वाविवेश या वाते या वामदेव्ये या त्रैष्टुभे छ-न्दसि या पञ्चदशे स्तोमे या पशुषु तां त एतदवरुन्धे तस्यै स्वाहा या ते अग्ने शुचिस्तनूर्दिवमन्वाविवेश या सूर्ये या बृहति या जागते छन्दसि या सप्तदशे स्तोमे याप्सु तां त एतदवरुन्धे तस्यै स्वाहा ॥ वातः प्राणस्तदयमात्मा पुरीषमसि संप्रियः पशुभिर्यच्छा तोकाय त-नयाय शं योः प्रजां मे यच्छ घर्मश्शिरस्तदयमग्निः पुरीषमसि संप्रियः पशुभिस्स्वदितं नः पितुं पच पशून्मे यच्छार्कश्चक्षुस्तदसौ सूर्यः पुरी-

---

[1] Brl तरिक्ष्येण hier ohne Accent: ergänzt. [2] Ch यो [3] So Ch, ohne Accent; D बिभ्रतो; Brl बिभ्यतो [4] Dies Kap. collat. mit Brl fol. 182. 183 und darnach accentuirt. [5] So D. ohne Acc.: Brl त्रिवृते; desgl. Ch, ohne Accent. [6] So Brl: Ch याने; D याग्ने

षमसि संप्रियः पशुभिर्यत्ते शुक्र शुक्रं धाम शुक्रा तनूश्शुक्रं ज्योतिर-
जस्रं यत्ते ऽनाधृष्टं नामानाधृष्यं तेन त्वादधे वर्चो मे यच्छ ये ऽग्नयो
दिवो ये ऽन्तरिक्षाद्ये पृथिव्यास्समाजग्मुरिषमूर्जं वसानास्ते ऽस्मा
अग्नये द्रविणानि दत्त्वा तृप्ताः प्रीताः पुनरस्तं परेत ॥

5 कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः ।
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः ॥
ये ऽग्नयस्समनसस्सचेतस ओषधीष्वप्सु प्रविष्टाः ।
ते सम्राजमभिसंयन्तु सर्व ऊर्जं नो धत्त द्विपदे चतुष्पदे ॥
अयमग्निश्श्रेष्ठतमो ऽयमस्तु यशस्तमः ।
10 अयं सहस्रसातमस्सुकृतं[1] योनिमासदत्ततो वरान्वृणीमहे ॥
निषसाद धृतव्रतो वरुणः पस्त्यास्वा ।
साम्राज्याय सुक्रतुः ॥
प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम्[2] ।
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ ॥ १४ ॥

cf. Mâitr. S. 1, 6, 2; Kap. S. 6, 3. 4.

15 अदितिर्वै प्रजाकामौदनमपचत्तस्योच्छिष्टमाश्नात्सा गर्भमधत्त तत
आदित्या अजायन्त य एष ओदनः पच्यत[3] आरम्भणमेवैतत्क्रियत
आक्रमणमेव[4] प्रादेशमात्रीस्समिधो भवन्त्येतावान्ह्यात्मा प्रजापतिना
संमितो ऽग्नेर्वै या यज्ञिया तनूरश्वत्थे तया समगच्छतैषास्य घृत्या
तनूर्यद्घृतं[5] यद्घृतेन समिधो ऽनक्ति ताभ्यामेवैनं तनूभ्यां संगमयति
20 निर्मार्गस्यादधात्यपगूर्त्यै[6] वै वीर्यं क्रियते यन्निर्मार्गस्यादधात्यपगू-
र्त्यै[7] एव संवत्सरो वै प्रजननमग्निः प्रजनयिता तत्प्रजननं[8] यत्पुरा

---

[1] So corr.; Brl संकृतं; desgl. Ch und D, ohne Acc. [2] D und Ch न्त्यम [3] Ch पच्यते [4] D णमिव [5] So Ch; D घृत्या तनूतद्घृतं [6] So corr.; D त्यपगूंत्या; Ch त्युपगूत्या; Kap. S. 6, 5; त्यपिगूर्त्यै; cf. Mâitr. S. 4, 6. 8 अपगूर्ति [7] So corr.; D त्यपगूंत्या; Ch त्यपगूत्या; Kap. S. त्यपिगूर्त्यै [8] So corr. D प्रजनयितत्प्रजननं; Ch प्रजनयितावप्रजननं; Kap. S. 6, 5 प्रजनयति प्रजननं

संवत्सरादग्नौ[1] समिध आदधाति प्रजननादेवैनं प्रजनयिता प्रजनयत्यभक्तुर्वै पुरुषो न हि तद्वेद यमृतुमभिजायते यन्नक्षत्रं यत्समिध आदधाति य एवास्यर्तुर्यन्नक्षत्रं तदाप्नोति य एष ओदनः पच्यते योनिरेवैष क्रियते यत्समिध आधीयन्ते रेतस्तद्धीयते संवत्सरे वै रेतो हितं प्रजायते यत्संवत्सरे पर्येते ऽग्निमाधत्ते प्रजातमेवैनमाधत्ते[2] द्वादशसु रात्रीषु पुराधेयास्ता[3] हि संवत्सरस्य प्रतिमाथो तिसृष्वथो द्वयोरथो पूर्वेद्युराधेयास्त एवाग्निमादधानेनादित्या[4] वा इत उत्तमा अमुं लोकमायँस्ते पथिरक्षयस्त इयक्षमाणं[5] प्रतिनुदन्त उच्छेषणभागा[6] वा आदित्या यदुच्छिष्टेन समिधो ऽनक्ति तेभ्य एव प्रावोचत तेभ्य एव प्रोच्य स्वर्गं लोकमारोहति ॥ १५ ॥ cf. Kap. S. 6, 5.

आ[7] वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः ।
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे[8] कृणुध्वम् ॥
कद्धिष्ण्यासु वृधसानो[9] अग्ने कद्वाताय प्रतवसे[10] शुभंये ।
परिज्मने नासत्याय क्षे ब्रवः[11] कदग्ने रुद्राय नृघ्ने ॥
अग्निर्होता साध्वीमकरग्न आयूंषि पवसे ॥
अग्ने पवस्व स्वपा अस्मे वर्चस्सुवीर्यम् ।
दधद्रयिं मयि पोषम् ॥
यो अश्वस्य दधिक्राव्णो अकारीत्समिद्धे अग्ना उषसो व्युष्टौ ।
अनागसं तमदितिः कृणोतु स मित्रेण वरुणेना[12] सजोषाः ॥

---

[1] Ch संवत्सर ऋचाग्नौ [2] So corr. die Mss. प्रजात मवैनमा°; aber cf. unten 8, 1 a. E. u. Kap. S. 6, 5 प्रजातमेवैनमाधत्ते [3] So D; Ch पुरोधेया°; Kap. S. वुराधेया [4] So corr. Ch u. D स्त्वेवाग्निमा: aber Kap. S. 6, 5 स्त मवाग्निमा° [5] Ch माणाः [6] Ch प्रतिनुदन्त तछेषेणभागा; D प्रतिनुदन्व उछेषणभान [7] Dies Kap. collat. mit St fol. 84, T 1 und T 3, Brl fol. 66, W 1 ζ; nach diesen Mss. accentuirt. [8] Brl मंवस्य [9] So Brl und T 3; W 1 ζ und Ch वृधमानो: D वृधमानो; T 1 u. St abgebrochen. [10] Brl प्रतवस्य [11] So T 1 und W 1 ζ: T 3 und Brl ब्रवत; Ch व्रवः; D ब्रुवः [12] T 1, T 3, St und Brl वरुणेन; W 1 ζ वरुणेन

महश्चक्रम्यर्वतः क्रतुप्रा दधिक्राव्णः पुरुवारस्य वृष्णः ।
यं पूरुभ्यो[1] दीदिवांसं नाग्निं दद्युर्मित्रावरुणा[2] ततुरिम्[3] ॥
ऋतावानं वैश्वानरं वैश्वानरस्य सुमतौ स्याम ॥
उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे ।
स्तोमैर्विधेमाग्नये ॥
तृषु यदन्ना तृषुणा ववक्ष तृषुं दूतं कृणुते यह्वो अग्निः ।
वातस्य मेळिं सचते निजूर्वन्नाशुं न वाजयते हिन्वे अर्वा ॥
अग्निरीशे वसव्यस्याग्निर्महः[4] सौभगस्य ।
तान्यस्मभ्यं रासते ॥
त्वामग्ने[5] वसुपतिं[6] वसूनामभि प्रमन्दे अध्वरेषु[7] राजन् ।
त्वया वाजं वाजयन्तो जयेमाभि ष्याम पृत्सुतीर्मर्त्यानाम् ॥
त्वं[8] यविष्ठ दाशुषो नॄः[9] पाहि शृणुधी गिरः ।
रक्षा तोकमुत त्मना ॥
तुभ्यं भरन्ति क्षितयो यविष्ठ बलिमग्ने अन्तित ओत[10] दूरात् ।
आ भन्दिष्ठस्य[11] सुमतिं चिकिद्धि बृहत्ते अग्ने महि शर्म भद्रम् ॥
कृष्णा रजांसि पत्सुतः प्रयाणे जातवेदसः ।
अग्निर्यद्रोधति[12] क्षमि ॥
त्वं वसूनि पूर्वणीक[13] होतर्दोषा वस्तोरेरिरे यज्ञियासः ।
क्षामेव विश्वा भुवनानि यस्मिन्त्सं सौभगानि दधिरे पावके ॥
प्र वस्सखायो अग्नये स्तोमं यज्ञं च धृष्णुया ।
अर्च गाय च वेधसे[14] ॥

---

[1] So St, desgl. Ch und W1ζ, ohne Acc.; T1, T3 und Brl पुरुभ्यो; desgl. D, ohne Accent. [2] Brl दधयु°; desgl. W1ζ, ohne Acc. [3] Ch und D उत्तरिम (Missverständniss der Çâradâ). [4] Ch मेहा [5] T3 त्वामग्ने [6] St वसुपतिर्वसू° [7] T1 माध्वरेषु; desgl. Brl, ohne Acc. [8] Brl und T3 त्वें [9] So T3; St नृः; Brl नृः; desgl. Ch, ohne Acc.; W1 नॄ; D न्वाः; in T1 abgebrochen. [10] D उत; T3 und Brl उत [11] Ch भन्धि° [12] Brl आग्नेर्य° [13] Ch पूर्वणीक [14] W1ζ वेदसे

प्र वश्शुक्राय भानवे भरध्वं हव्यं मतिं चाग्नये सुपूतम्[1] ।
यो दैव्यानि मानुषा[2] जनूंष्यन्तर्विश्वानि विद्मना जिगाति ॥
वि ज्योतिषा वि पाजसा ॥
स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः ।
उरुक्षयेषु दीद्यत् ॥
तं सुप्रतीकं सुदृशं स्वञ्चमविद्वांसो विदुष्टरं सपेम ।
स यक्षद्विश्वा[3] वयुनानि विद्वान्प्र हव्यमग्निरमृतेषु वोचत्[4] ॥ ॥१६॥
युक्ष्वा[5] हि देवहूतमाँ[6] अश्वाँ अग्ने रथीरिव ।
नि होता पूर्व्यः सदः ॥
उत नो देव[7] देवाँ अच्छा वोचो विदुष्टरः ।
श्रद्विश्वा[8] वार्या कृधि ॥
त्वं ह यद्यविष्ठ्य सहसः सूनवाहुत ।
ऋतावा यज्ञियो भुवः ॥
अयमग्निस्सहस्रिणः ॥
तं नेमिमृभवो यथा नमस्व सहूतिभिः ।
नेदीयो यज्ञमङ्गिरः ॥
कस्मै नूनमभिद्यवे वाचा विरूप नित्यया ।
वृष्णे चोदस्व सुष्टुतिम् ॥
कमु ष्विदस्य सेनयाग्नेरपाकचक्षसः ।
पणिं[9] गोषु स्तरामहे ॥
मा नो देवानां विशः प्रस्नातीरिवोस्राः ।
कृशं न हासुरघ्न्याः[10] ॥

---

[1] Brl सु पूतम् [2] Brl मानुष्या [3] W1ζ यक्षविद्विश्वा [4] D, St, T3, Brl वोचः [5] Collat. auch mit W1ζ, St, T1, T3, Brl fol. 66; accent. nach St, collat. mit Brl, T1 und T3. [6] St हूतमां [7] D देवो [8] D स विश्वा [9] Brl und T3 पार्णिं: W1ζ पाणि [10] Ch घ्याम

मा नस्समस्य दूढ्यः परिद्वेषसो अंहतिः ।
ऊर्मिर्न नावमा वधीत्[1] ॥
नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः ।
अमैरमित्रमर्दय ॥
5 कुवित्सु नो गविष्टये[2] ऽग्ने संवेषिषो[3] रयिम् ।
उरुकृदुरु णस्कृधि ॥
मा नो अस्मिन्महाधने परावग्भारभृद्यथा ।
संवर्गं सं रयिं जय ॥
परस्या अधि संवत एह्यू[4] षु ब्रवाणि[5] ते ॥ १७ ॥

10 इति श्रीयजुषि काठके चरकशाखायामिठिमिकायामालोभी नाम सप्तमं स्थानकं संपूर्णम्[6] ॥

---

दिशो वै नाकल्पन्त न प्राजायन्त तत एतामग्नये प्राचीं दिशम-रोचयन्यत्कृत्तिका यत्कृत्तिकास्वग्निमाधत्ते प्राच्यामेवैनं दिश्याधत्त[7] एष वावैकः प्राङवस्यति[8] य आहिताग्निः प्रत्यञ्चो[9] ऽन्य आग्नेयमेतन्नक्षत्रं 15 यत्कृत्तिका यत्कृत्तिकास्वग्निमाधत्ते स्व एवैनं नक्षत्र[10] आधत्ते प्रजापतेर्वा एतच्छिरो यत्कृत्तिका यत्कृत्तिकास्वग्निमाधत्ते शीर्षण्यो मुख्यो भवति सप्त वै कृत्तिकास्सप्त शीर्षण्याः प्राणाः प्राणा इन्द्रियाणि प्रा-

---

[1] Ch ऊर्मिच्च नाममा°; D ऊर्मिं न  [2] So die Mss.  [3] So St, T 3, Brl; in D, Ch, W 1८ शिषो  [4] St एह्यु  [5] D ब्रुवाणि  [6] So die Unterschrift in Ch; in D steht इत्यालुयजुका नाम सप्तमं स्थानकं समाप्तम ॥  [7] Ch मेवैनिर्दिश्या°  [8] Ch पूङ्वस्यति; D प्राङ्व ति; Kap. S. 6, 6 प्राङ्चस्यति  [9] So Ch; D प्रत्यंचौ  [10] So Ch; in D eine kleine Lücke यत्क---------एवेनचत्र

णानेवेन्द्रियाण्याप्नोति पुष्टिमावद्भूयिष्ठमेकं[1] नक्षत्रं पुष्टिमेव प्रजायाः
पशूनां गच्छति ॥ रोहिण्यामाधेयो रोहिण्यां वा एतं देवा आदधत[2]
तया रोहमरोहँस्तद्रोहिण्या[3] रोहिणीत्वं रोहिण्यां वा एतं प्रजापति-
राधत्त तया रोहमरोहत्तद्रोहिण्या रोहिणीत्वमेष वै मनुष्यस्य स्वर्गो
लोको यदस्मिंल्लोके वसीयान्भवत्यृद्ध्या एव रोहिण्यामाधेयः काल- 5
काञ्जा वै नामासुरा आसँस्त इष्टका अचिन्वत तदिन्द्र इष्टकामप्युपा-
धत्त तेषां मिथुनौ दिवमाक्रमेतां ततस्तामावृहत्ते ऽवाकीर्यन्त ता
एतौ दिव्यौ श्वानौ यो व्यवृह्यत[4] सो ऽयमूर्णवाभिस्स्वैरान्त्रैस्संततिँस-
त्योजो[5][6] वावैषां तद्वीर्यमाधत्तौजो वीर्यं भ्रातृव्यस्याधत्ते यच्चित्राया-
मग्निमाधत्ते[7] तदेतदैन्द्रं नक्षत्रमभिभूतिमत्पूर्वासु फल्गुनीष्वादधीत यः 10
कामयेत भगी स्यामिति भगस्य वा एतन्नक्षत्रं भगी भवत्युत्तरास्वा-
दधीत यः कामयेत दानकामा मे प्रजास्स्युरित्यर्यम्णो वा एतन्नक्षत्र-
मेषो ऽर्यमा यो ददाति दानमिमाः प्रजा उपजीवन्ति दानकामा
अस्मै भवन्ति राजन्यस्यादध्यात्स हि दानमुपजीवति वसन्ता[8] ब्राह्म-
णेनाधेयो वसन्तो वै ब्राह्मणस्यर्तुस्स्व एवैनमृता आधत्ते तेजो ब्रह्म- 15
वर्चसमुपाधत्ते ग्रीष्मे[9] राजन्येनाधेयो ग्रीष्मो वै राजन्यस्यर्तुस्स्व एवै-
नमृता आधत्त ओजो[10] वीर्यमुपाधत्ते शरदि वैश्येनाधेयश्शरद्वै वैश्य-
स्यर्तुस्स्व एवैनमृता आधत्त ऊर्जं पशूनुपाधत्ते ॥ सोमेन यजा इति वा
अग्निमाधत्ते यस्मिन्नेव कस्मिंश्चर्ता आदधीत सोमेन यक्ष्यमाण एत-
द्ध्यवर्धयत्सोमेन यजते फल्गुनीपूर्णमास आधेय एतद्वा ऋतूनां मुख- 20
मृतुमुख[11] एवैनमाधत्ते शिशिर आधेयश्शिशिरं वा अग्नेर्जन्म प्रजात-

---

[1] So die Mss. Böhthlingk vermuthet पुष्टिमद्वै भू° (brieflich). [2] So Ch; D आदत [3] So D; Ch मरुहाँस्त°; Kap. S. रोहमरोहयंस्त° [4] Kap. S. 6, 6 व्यवृह्यत [5] So corr. Ch स्वैरांते; D स्वेनात्रैः; Kap. S. 6, 6 सयिरात्रंनै [6] So corr. Ch संततिसत्येजो; D संततिंसतेजो; Kap. S. 6, 6 संचितांसत्योजो [7] So D; Ch und Kap. S. यच्चि° [8] Mss. वसंतां; Kap. S. वसते [9] Ch ग्रीष्मो [10] Ch schiebt hier ein वै ein, welches in D und Kap. S. fehlt, cf. das Vorausgehende. [11] So corr. Ch und D मृतमुख

मेवैनमाधत्ते सर्वासु दिक्ष्वृध्नवानीति वा अग्निमाधत्ते सर्वासु दिक्ष्व-
ग्निश्शिशिरे सर्वास्वेव दिक्ष्वृध्नोति यश्शिशिरे ऽग्निमाधत्ते पूर्णमासे
वामावस्यायां वादधीतैतद्वै पुण्याहं पुण्याह एवैनमाधत्ते तस्मादि-
ष्ट्या वाग्रायणेन वा पशुना वा सोमेन वा पूर्णमासे वामावस्यायां
5 वा यजेतैष वै यज्ञो यज्ञमेवैतत्प्रति यज्ञमालभते ॥ १ ॥
cf. Mâitr. S. 1, 6, 9; Kap. S. 6, 6.

यद्वा इमे व्यैतां यदमुष्या यज्ञियमासीत्तदिमामभ्यसृज्यतोषा[1] यदूषा
भवन्त्यनयोरेवैनं यज्ञिय आधत्ते प्राजापत्या वा ऊषाश्श्वश्श्वो भूयांसो
भवन्ति प्रजननायैवैते पशूनां वा एतत्प्रियं धाम यदूषा यदूषा भव-
न्ति पशूनामेव प्रियं धामोपाप्नोत्यलेलेड्वा[2] इयं पृथिवी साबिभेद-
10 ग्निर्मातिधक्ष्यतीत्यबिभेदग्निर्हरो[3] मे विनेष्यतीत्यार्द्रेव[4] हीयमासीत्तां
देवाश्शर्कराभिरदृंहंस्तेजो ऽस्मा अदधुर्यच्छर्करा भवन्तीमामेव दृंहति
तेजो ऽस्मै दधात्यभिमृता वा इयं वृत्रेण वम्रियस्त्वै[5] तद्विदुर्यच्चास्या
जीवं यज्ञियं यद्वल्मीकवपा भवन्त्यस्या एवैनं जीवे यज्ञिय आधत्त
आपो[6] वा इदमासन्सलिलमेव स प्रजापतिर्वराहो भूत्वोपन्यमज्ज-
15 त्तस्य यावन्मुखमासीत्तावतीं मृदमुदहरत्सेयमभवद्यद्वराहविहतं[7] भव-
त्यस्यामेवैनं प्रत्यक्षमाधत्ते वराहो वा अस्यामन्नं पश्यति तस्मा इयं
विजिहीते[8] यद्वराहविहतं भवति तदेवान्नमवरुन्द्धे[9] यत्तदादत्त तददि-
तिर्यदप्रथत[10] तत्पृथिवी यदभवत्तद्भूमिर्यद्वराहविहतं भवति प्रथत
एवं प्रजया पशुभिर्नाना वै पशूनामन्नान्यन्यद्गोरन्नमन्यदश्वस्यान्यदव्या
20 अन्यदजाया अन्यत्पुरुषस्यापो ऽन्नं यदप उपसृजति यावदेवान्नं तद-
वरुन्द्धे पञ्चैते संभाराः पञ्च वै पुरुषे वीर्याणि करोत्यनया वीर्यं करो-

---

[1] So Ch; D त्यसृज्यतोषा; Kap. S. 6, 7 भ्यसृजत्तोषा [2] So Ch; D धामोमाप्नोत्यलोलड्वा [3] So Ch; D सारितेद° धक्ष्तो° [4] So Ch; D त्यांद्रे [5] Ch वम्रिय° [6] Von hier an collationirt und accentuirt nach T1 und T3, bis zum Ende des Kapitels. [7] Ch विहितम [8] Ch विजहीते [9] D रुंधा [10] Ch schaltet hier ein die Worte एवं प्रजया पशुभिर्नाना वै

त्यनया करोत्यनेन यावदेव वीर्यं तदाप्नोति तत्स्पृणोति पञ्चैते संभाराः
पाङ्क्तो यज्ञो यज्ञमेवावरुन्द्धे ॥ न वा ऋत ऊर्जो ऽन्नं धिनोत्यूर्गुदुम्बरो
यदौदुम्बराणि भवन्त्यन्न एवोर्जं दधाति शमीमयानि भवन्ति मिथुन-
त्वायाग्निं वै सृष्टं प्रजापतिस्तं शम्यायं[1] समैन्द्ध यच्छमीमयानि भव-
न्ति स्वयैवैनं समिधा समिन्द्धे ऽश्वो वै भूत्वाग्निर्देवेभ्यो[2] ऽपाक्रामत्स
यत्रातिष्ठत्तदश्वत्थस्समभवत्तदश्वत्थस्याश्वत्थत्वं यदाश्वत्थानि भवन्ति
यदेवास्य तत्र न्यक्तं तत्तैस्संभरत्यग्निर्वै[3] मनुष्यैर्देवेभ्यो ऽपाक्रामत्तं दे-
वा[4] अमन्यन्तायं वावेदं भविष्यतीति तस्य मरुतस्स्तनयित्नुना हृद-
यमाच्छिन्दन्सा[5] दिव्याशनिरभवद्यद्वृक्षस्याशनिहतस्य भवति यदेवास्य
तत्र न्यक्तं तत्तैस्संभरति[6] पर्णमयानि[7] पञ्चथानि भवन्ति[8] पाङ्क्त-
त्वाय ॥ २ ॥ cf. Mâitr. S. 1, 6, 3; Kap. S. 6, 7.

अष्टासु प्रक्रमेषु ब्राह्मणेनाधेयो ऽष्टाक्षरा गायत्री गायत्रच्छन्दा
ब्राह्मणस्स्वस्यैवैनं छन्दसः प्रात्येनस्य[9] आधत्ते यथा पिता पुत्रं जिन्व-
त्येवमेवैनं स्वं छन्दो[10] जिन्वत्येकादशसु प्रक्रमेषु राजन्येनाधेय एकाद-
शाक्षरा त्रिष्टुप् त्रिष्टुप्छन्दा राजन्यस्स्वस्यैवैनं छन्दसः प्रात्येनस्य[11] आ-
धत्ते यथा पिता पुत्रं जिन्वत्येवमेनं स्वं छन्दो[12] जिन्वति द्वादशसु
प्रक्रमेषु वैश्येनाधेयो द्वादशाक्षरा जगती जगच्छन्दा[13] वैश्यस्स्वस्यै-
वैनं छन्दसः प्रात्येनस्य[14] आधत्ते यथा पिता पुत्रं जिन्वत्येवमेनं स्वं
छन्दो[15] जिन्वत्यपरिमितमवरुणधा इति वा अग्निमाधत्ते ऽपरिमित
आधेयो ऽपरिमितस्यावरुद्ध्यै यावति चक्षुषा मन्येत तावत्यादधीत

---

[1] Ch पतिस्तमस्याग्रे [2] D ग्निं देवे°; Ch ग्नि देवे° [3] Ch तदेतैस्सम्भ° [4] So T1, T3; desgl. D, ohne Acc.; Ch तद्द्देवा [5] So T1 und T3; desgl. D, ohne Acc.; Ch हृदयमाऽछन्दत्सा; Kap. S. 6, 7 हृदयमाकृंदंस्या [6] So T1 und T3; Ch ततैस्स°; D nur तैः [7] Ch पर्णमयाणि [8] cf. Schol. zu Pâ. 5, 2, 50; Mahâbhâshya zu Pâ. 5, 2, 51 Vârtt. 2; m. Abhandlung Ztschr. d. D. M. Ges. Bd. 49, p. 165. [9] So D; Ch प्रत्यूनस्य; Kap. S. 6, 8 स्वोदैदं छंदसः पांक्तेनप्याधत्ते [10] Ch मेनं स्वश्छन्दो; Kap. S. स्वछंदो [11] Ch प्रत्येनस्य; Kap. S. 6, 8 प्राङ्क्तेनस्याधत्ते [12] Kap. S. स्वछंदो [13] Ch जगश्छंदो [14] Ch प्रत्येनस्य [15] Ch स्वश्छंदो

सत्यं वै चक्षुस्सत्य एवैनमाधत्ते पूर्वाह्ण आधेय एतद्वै पुण्याहं पुण्याह
एवैनमाधत्ते व्युष्टायां पुरा सूर्यस्योदेतोराधेय एतस्मिन्वै लोके प्रजाप-
तिः प्रजा असृजत ताः प्राजायन्त[1] प्रजननायैवमाधेय आग्नेयी वै रात्रै-
न्द्रमहर्यदुदिते सूर्य आदधीताग्नेयाद्वर्णादियाद्यदनुदित[2] ऐन्द्रादनुदिते
5 ऽपर आधेय उदिते पूर्व उभा एवेन्द्राग्न्योर्वर्णा आप्नोत्यसुर्या वै रात्री
वर्णेन शुक्रियमहश्शुक्रिय आधत्ते य उदिते सूर्य आधत्ते नक्तं वा
अनुदितेन दिवोदितेन दिवाधत्ते य उदिते सूर्य आधत्ते ॥ न वै सु
विदुरिव मनुष्या नक्षत्रं मीमांसन्त इव ह्युदितेन वाव पुण्याहं पु-
ण्याह[3] आधत्ते य उदिते सूर्य आधत्ते सप्त ते अग्ने समिधस्सप्त[4] जि-
10 ह्वास्सप्तर्षयस्सप्त[5] धाम प्रियाणि सप्त होत्रा अनु विद्वान्सप्त योनीरा-
पृणस्वा घृतेनेति यावतीर्वा अग्नेस्तन्वो यो वा अस्य ता आदधानो
वितर्षयति[6] वि ह तृष्यत्येतावतीर्वा अग्नेस्तन्वः षोढा सप्त सप्त ता
एवास्य प्रीणाति न वितृष्यति पूर्णया स्रुचा मनसा प्रजापतये जुहो-
ति पूर्णः प्रजापतिः प्रजापतिमेवाप्नोति ॥ ३ ॥

cf. Mâitr. S. 1, 6, 10; Kap. S. 6, 8.

15 अङ्गिरसां त्वा देवानां व्रतेनादध इति ब्राह्मणेनाधेयो ये वै[7] देवा-
नामङ्गिरसस्ते ब्राह्मणस्य प्रत्येनसो ऽग्निर्वायुर्वाग्बृहस्पतिस्ततो बन्धु-
रस्य यज्ञस्तत आयनो यतो बन्धुरेवास्य[8] यज्ञो यत आयनस्तत एनं
प्रतीच्छतीन्द्रस्य त्वा मरुत्वतो व्रतेनादध इति राजन्येनाधेयो ये वै दे-
वानां राजानस्ते राजन्यस्य प्रत्येनस इन्द्रो वरुणो धाता त्वष्टा ततो
20 बन्धुरस्य यज्ञस्तत आयनो यतो बन्धुरेवास्य यज्ञो यत आयनस्तत एनं
प्रतीच्छति मनोस्त्वा ग्रामण्यो[9] व्रतेनादध इति वैश्येनाधेयो मरुतो वै
देवानां विशस्ते वैश्यस्य प्रत्येनसस्ततो[10] बन्धुरस्य यज्ञस्तत आयनो

---

[1] Ch प्राजायंत [2] Ch यद्यदर्धदित [3] Ch पुण्याहम्पुण्याहम्पुण्याह [4] Ch समि-
धस्समिधस्सप्त [5] सप्तर्षयः fehlt in Ch. [6] So Ch; D वितद्रयति; Kap. S. 6, 8
वित्रुषति [7] Ch und Kap. S. 6, 9 यो वै [8] D बंधु एवास्य [9] D ग्नमणों
[19] Ch तुतो

यतो बन्धुरेवास्य यज्ञो यत आयनस्तत एनं प्रतीच्छतीडा वै मना
आसीत्सासुरानग्निमादधानानगच्छत्त[1] आहवनीयमग्र आदधताथ गा-
र्हपत्यमथौदनपचनं तानब्रवीदाप्त्वा श्रियं प्रत्यवारुक्षन्पुण्या भविष्य-
न्ति परा तु भविष्यन्तीति सा[2] देवानग्निमादधानानगच्छत्त[3] ओदन-
पचनमग्र आदधताथ गार्हपत्यमथाहवनीयं तानब्रवीदापञ्छ्रियं[4] वी- 5
मं[5] लोकमच्छिन्दन्पुण्या भविष्यन्ति प्रजा त्वेषां न भविष्यतीति सेडै-
व[6] मनोरादधात्साब्रवीत्तथा ते ऽग्निमाधास्यामि यथा मनुष्या देवा-
नुप प्रजनिष्यन्त इति सा गार्हपत्यमग्र आदधादथौदनपचनमथाहव-
नीयमनयोर्लोकयोर्व्यवगृहीत्यै[7] ॥ ततो मनुष्या देवानुप प्राजायन्त
प्रजननायैवमाधेयो ऽथो अनयोरेव लोकयोर्व्यवगृहीत्यै प्रजापतिर्वै 10
यदग्रे व्याहरत्स सत्यमेव[8] व्याहरदेतद्वाव स निर्व्याहरद्भूर्भुवस्स्वरित्येतद्वै
वाचस्सत्यं यदेव वाचस्सत्यं तेनाधत्ते भूष्णु[9] वै सत्यं य एवं विद्वानेते-
नाधत्ते भवत्येवायं वा अपरो भूरसौ पूर्वो भुवो भूर्भुवरित्यपर आधे-
यस्सत्यस्याननुगत्यै भूर्भुवस्स्वरिति पूर्वस्तत्पुरस्सर्वमाप्यते वाग्वै देव-
तां निरवदत निरुदितदेवता[10] हि वै वागथ तत्सर्वं न सत्यं[11] यद्वाचा 15
शपते यत्माप्भूर्भवति यां वै तां वाग्देवतां निरवदतैषा वाव सा यदेता
व्याहृतय एतद्वै वाचस्सदेवं यदेव वाचस्सदेवं तेनाधत्ते ऽयं वा अपरो
भूरसौ पूर्वो भुवो भूर्भुवरित्यपर आधेय उभा एवैनौ सहाधत्त एष ह्ये-
तस्य योनिरेतस्माद्ध्येषो ऽधिसृज्यते ऽयं वावाग्निर्यो ऽयमन्तरग्नि यो
ऽसौ[12] पूर्वो ऽसा[13] आदित्य एष यो ऽसा अमुष्मादधिसृज्यते यद्द्वितीयं 20
ज्योतिस्तदेव[14] तद्भूर्भुवस्स्वरिति पूर्व आधेय उभा एवैनौ सहाधत्त
एष ह्येतस्य योनिरेतस्माद्ध्येषो ऽधि प्रह्रियते यो ऽसा अमुष्मादधि प्र-

---

[1] Ch गच्छतु [2] So Ch; D स [3] Ch गच्छतु [4] Ch und Kap. S. 6, 9 दा ˙ श्रियं; D दपञ्छ्रियं [5] So Ch; D वोमो; Kap. S. 6, 9 भौमलोकमुच्छिदं [6] So Ch; D संडैव [7] In Ch fehlt हवनीयम° (Lücke); Ch न्न्यव° [8] Ch व्याहरञ्यतमेव [9] Kap. S. 6, 9 पूष्णो [10] Kap. S. 6, 9 निर्ऋतिदेवता [11] Ch सत्यै [12] So Kap. S. 6, 9; Mss. ग्नेर्योसौ [13] So Ch; D पूर्वसा [14] D तिस्वदेवा

ह्रियते यत्तृतीयं ज्योतिस्तदेव तेनाप्यते ऽसौ वावैष आदित्यः प्रत्यङ्ङा-
धीयते तस्मादेष सर्वाः प्रजाः प्रत्यङ्ङग्निना वै देवा अन्नमदन्ति प्रत्य-
ग्वा अन्नमद्यते[1] यत्प्रत्यङ्ङाधीयते ऽन्नाद्याय प्राचो वै देवान्प्रजापतिर-
सृजतापाचो ऽसुरान्सो ऽसुरान्ब्रह्मणापानुदताग्निर्ब्रह्म यत्प्रत्यङ्ङाधीयते
5 भ्रातृव्यस्यापनुत्त्या इममर्धमग्निना परियन्तीममर्धमुपचरन्ति[2] देवा-
नामेवार्धं परियन्ति देवानामर्धमुपचरन्तीमां दिशमभ्यावृत्य[3] जुहो-
त्येतस्यां वै देवा दिशि यस्यामेव देवा दिशि तां दिशमभ्यावृत्य[4] जु-
होति ॥ ४ ॥ cf. Māitr. S. 1, 6. 13; Kap. S. 6. 9.

अग्निर्वै प्राङुदेतुं[5] नाकामयत तमश्वेनोदवहन्यत्पूर्वमुदवहँस्तत्पूर्व-
10 वाहः पूर्ववाट्त्वमग्निर्वै[6] प्रजापतिस्तस्याश्वश्चक्षुर्यदश्वं पुरो[7] नयन्ति
स्वमेव तच्चक्षुः पश्यन्ननूदेति स्तोमपुरोगा[8] वै देवा एभ्यो लोकेभ्यो
ऽसुरान्प्राणुदन्त स्तोमादश्वस्संभूतो यदश्वं पुरो नयन्ति स्तोमपुरोगा
एवैभ्यो लोकेभ्यो भ्रातृव्यं प्रणुदते ऽग्निं वै जातं रक्षांस्यधूर्वँस्तान्येन-
मभिसमलभन्त[9] तान्यश्वेनापाहत यदश्वं पुरो नयन्ति रक्षसामपहत्या
15 अश्वो वै भूत्वा यज्ञो मनुष्यानत्यक्रामत्तमेतदतिक्रामन्तं मन्यन्ते यदश्व-
मभ्यावर्तयन्ति यज्ञमेवैतद्यजमानमभ्यावर्तयन्त्यग्निर्वा अश्वं प्राविश-
त्कृष्णो भूत्वा सोऽत्रागच्छद्यत्रैष[10] मृगशफ[11] इव तस्मादाक्रम्यो[12] यद-
श्वमाक्रमयति तमेवावरुन्द्धे वास्तु वा एतदथो अन्तर्हितमिव त-
स्मान्नाक्रम्य[13] इन्द्रो वै यतीन्सालावृकेयेभ्यः प्रायच्छत्तेषामद्यमानानां
20 स्यूमरश्मिर्ऋषिरश्वं प्राविशत्तस्मादश्वस्स्वँ शकृदुपजिघ्रति कश्चिदृषिं
चाग्निं च न निरास्या ३ मित्यग्निं वै विभाजं नाशक्नुवँस्तमश्वेन व्यभ-

---

[1] Ch अन्नमन्नमद्यते [2] Ch पारयंतोममर्ध° D परियंतोसमर्ध° [3] Ch मभ्यावृत्त्या; D मद्यावृत्य; Kap. S. 6, 9 = Corr. [4] Ch मभ्यावृत्य; D मद्यावृत्य; Kap. S. 6, 9 = Corr. [5] Ch प्राङुदेत्तचा° [6] Ch पूर्ववाङ्ग्वम° [7] D पुरा; Kap. S. 7, 1 पुरो [8] So Ch; D स्तोमेपुरोगा [9] So m. Corr. D स्यपूर्वंस्त° Ch पूर्वंस्त; Kap. S. 7, 1 रक्षांसि धूर्वंस्ता° [10] So corr. Ch सौत्रागश्कद्यत्रैष D सादागकद्य श्रोष; Kap. S. = Corr. [11] Ch मगशफा [12] So Ch; desgl. Kap. S.; D क्राम्यो [13] So Ch; D क्राम्य; Kap. S. क्राम्यमिन्द्रो

जन्यदश्वं[1] पुरो नयन्त्यग्नेरेव विभक्त्यै ॥ यौ वाव ता ऋषिश्चाग्निश्च ते एवैनं तद्देवते विभजतो ऽश्वो देयः प्राजापत्यो वा अश्वो यदश्वं ददाति सर्वा एवास्य तेन देवता अभीष्टाः प्रीता भवन्ति परमा वा एषा दक्षिणा यदश्वो यदश्वं ददाति पर्याप्त्यै वही देयो वहिनो वै पशवो भुञ्जन्ति यज्ञो ऽग्नेर्वही[2] भुनक्त्येनमग्निराहितो हिरण्यं देयं सतेजस्त्वाय शतमानं वीरं वा एष जनयति यो ऽग्निमाधत्ते शतदायो[3] वीरस्त्रिंश-न्माने पूर्वयोर्हविषोर्देये चत्वारिंशन्मानमुत्तमे ऽभिक्रान्त्या अभिक्रान्तेन हि यज्ञस्यर्ध्नोत्यात्मा[4] वै हविः पवित्रं हिरण्यं सर्वेष्वेवैनं हविष्षु पु-नात्यग्निर्वै वरुणानीरभ्यकामयत[5] तस्य तेजः परापतत्तद्धिरण्यमभव-द्यद्धिरण्यमुपास्यति स्वेनैवैनं तेजसा समर्धयति नोपास्य पुनरादधीत[6] प्रसितमस्य निष्खिदति[7] क्षोधुको भवत्यग्निं वै वरुणानीरभ्यकामयन्त तास्समभवदापो वरुणानीर्यदग्ने रेतो ऽसिच्यत तद्धरितमभवद्यदपां तद्रजतं तस्माद्धरितरजताभ्यामुभयाहिरण्यो यज्ञर्भस्य शमलं तद्दुर्वर्णं तस्माद्ब्राह्मणेन दुर्वर्णं न भर्तव्यं[8] शमलं हि तद्धिरण्यमुपास्यति स्वेनै-वैनं रेतसा समर्धयति ॥ ५ ॥ cf. Mâitr. S. 1, 6, 4; Kap. S. 7, 1.

सह वा इमा अग्नेस्तन्व इयमोदनपचनो ऽन्तरिक्षं गार्हपत्यो द्यौ-राहवनीयो यो वा अस्यैता[9] अव्याकृत्याधत्ते[10] न पाप्मना व्यावर्तते घातको[11] ऽस्य रुद्रः पशून्भवति यदेतैरुपतिष्ठते ता एवास्यैतद्व्याकृत्य यथायोनि[12] प्रतिष्ठाप्याधत्ते वि पाप्मना वर्तते ऽघातको[11] ऽस्य रुद्रः पशून्भवति[13] द्यौर्महासीति महानग्निमाधाय भवति भूमिर्भूम्नेति भू-म्ना भूयान्भवति[14] तस्यास्ते देव्यदित उपस्थे ऽन्नादमन्नाद्यायान्नपत्या-याद्ध इत्यन्नादमेवैनमन्नाद्यायान्नपत्यायाधत्ते ऽन्नाद्यायाग्निमाधत्ते

---

[1] So Ch; D भाजन; Kap. S. 7, 1 ग्निर्वै विराजं नाशक्नुवंस्तमश्वेन व्यभजं [2] D र्वेह्नो; desgl. Kap. S. [3] Ch शतधायो [4] So corr. D यज्ञस्यब्रोत्या ॥ सा; Ch ब्रोत्यात्मा; Kap. S. 7, 1 = Corr. [5] So corr. Ch रेभ्यका° D रब्यका° [6] D ददीत [7] D निषिवदति; Kap. S. निखिदति [8] So D; Ch भंतव्यं; Kap. S. भवत्तव्यं [9] Ch अस्येता [10] Kap. S. 7, 2 ता व्याकृप्या [11] Kap. S. 7, 2 घातुको [12] D योनिं [13] Ch पशूभवति [14] So Ch; D तुयान्भ°

ऽस्यन्नं[1] य एवं विद्वानग्निमाधत्ते ॥ अथैतास्सर्पराज्ञ्या[2 3] ऋच इयं वै
सर्पराज्ञ्यन्नं[4] सार्पराज्ञमन्नाद्यायाग्निमाधत्ते[5] ऽस्यन्नं[6] य एवं विद्वान-
ग्निमाधत्ते वसन्तो वा इमाः प्रजा ग्रीष्मायोपरुणद्धि ग्रीष्मो वर्षा-
भ्यो वर्षाश्शरदे शरद्धेमन्ताय हेमन्तश्शिशिराय शिशिरमग्नये[7] ऽग्निर्य-
5 जमानायान्नाद्यायाग्निमाधत्ते ऽस्यन्नं[8] य एवं विद्वानग्निमाधत्ते ॥ ६ ॥
cf. Kap. S. 7, 2.

निरुप्तं हविरुपसन्नमप्रोक्षितं भवत्यथ मध्याधिदेवनमवोक्ष्याक्षा-
न्न्युप्य[9] जुहोति निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्र-
तुरिति त्रिर्वै विराड् व्यक्रमत[10] गार्हपत्यमाहवनीयं मध्याधिदेवनं
विराज एवैनं विक्रान्तमनुविक्रमयति प्रत्येव तिष्ठति गच्छति प्रतिष्ठां
10 धर्मधृत्या जुहोति धर्मधृतमेवैनं करोति सवितारं धारयितारं[11] गां
घ्नन्ति तां विदीव्यन्ते[12] तां सभासद्भ्य[13] उपहरन्ति तेनास्य सो ऽभीष्टः
प्रीतो भवति प्र नूनं ब्रह्मणस्पतिरित्यामन्त्रणे जुहोति मन्त्रवत्या वैश्व-
देव्या मन्त्रमेवास्मै गृह्णाति तमभिसमेत्य मन्त्रयन्ते ॥ सह वै देवाश्च
मनुष्याश्चौदनपचन आसंस्ते मनुष्या देवानत्यचरंस्तेभ्यो देवा अन्नं
15 प्रत्युह्य गार्हपत्यमभ्युदक्रामंस्तांस्तस्मिन्नन्वागच्छंस्ते मनुष्या एव देवा-
नत्यचरंस्तेभ्यो[14] देवाः पशून्प्रत्युह्याहवनीयमभ्युदक्रामंस्तांस्तस्मिन्नन्वा-
गच्छंस्ते मनुष्या एव देवानत्यचरंस्तेभ्यो देवा यज्ञं प्रत्युह्य सभामभ्युदक्रा-
मंस्तांस्तस्यामन्वागच्छंस्ते मनुष्या एव देवानत्यचरंस्तेभ्यो देवा विराजं
प्रत्युह्यामन्त्रणमभ्युदक्रामंस्तांस्ततो नानुप्राप्नुवन्नेते वै देवानां संक्रमा-
20 श्श्रेयांसिं श्रेयांसं लोकमभ्युत्क्रामति य एवं वेदैतद्वै[15] देवानां सत्यमन-
भिजितं यदामन्त्रणं तस्मादामन्त्रणं सु प्रातर्गच्छेत्सत्यमेव गच्छति

[1] Die Mss. त्यन्नं; desgl. Kap. S. [2] D ॥ थैडाः [3] Ch सन्पराज्ञ्यां; D सर्प-राज्ञा [4] So Ch; D राज्ञन्नं [5] So D; Ch सर्पराज्ञ्यन्नमनाद्या° [6] Die Mss. त्यन्नं; desgl. Kap. S. [7] So Ch; D शिशिरसर्पये [8] Mss., auch Kap. S. त्यन्नं [9] Mss. चान्युप्य; Kap. S. 7, 4 चां नुप्य [10] D व्यक्रमत [11] Ch धत्त्वत्या; Kap. S. 7, 4 धर्मधत्यत्व [12] Kap. S. 7, 4 विदीव्यंति cf. Patañjali Mahâbh. zu Pâ. 2, 3, 60; meine Einleitung zur Mâitr. S. p. XVII. [13] Ch सभ्रा [14] Ch नभ्यचरं [15] So Ch; D वेद ॥ तद्वै

तस्मादामन्त्रणं नाहुत[1] एयात्तस्मादामन्त्रणे नानृतं[2] वदेद्वह्निर्वै नामौ-
दनपचन आस्य वह्निर्जायते[3] य एवं वेद गृहा गार्हपत्यो गृहवान्भवति
य एवं वेद धिष्ण्या[4] आहवनीय उपैनं यज्ञो नमति य एवं वेद
सप्रथा मध्याधिदेवनं प्रथते प्रजया पशुभिर्य एवं वेदानाप्त आमन्त्रणं
नैनमाप्नोति य ईप्सति य एवं वेद ॥ ७ ॥

cf. Mâitr. S. 1, 6, 11 a. E.; Kap. S. 7, 4.

अजो देयस्सयोनित्वाय[5] वासो देयं[6] सर्वदेवत्यं वासो देवतानाम-
भीष्ट्यै वर्धमाना दक्षिणा देया दक्षिणाया[7] वै वृद्धिं यजमानो ऽनुव-
र्धत उपाहरन्ती दक्षिणा देया धेनुर्वा उपाहरन्त्युप[8] ह्येषा पय आहरति
नास्याग्निमादधानस्य कनीयो भवति धेनुर्होत्रे देयाशिषामवरुद्ध्या
अनड्वानध्वर्यवे वहत्येव यज्ञस्यावरुन्द्धे रथो देयो देवरथो वा एष प्रयु-
ज्यते यद्यज्ञो मनुष्यरथेनैव देवरथमभ्यातिष्ठति[9] मिथुनौ गावौ देयौ
मिथुनस्यावरुद्ध्यै षड् देयाः षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति द्वा-
दश देया द्वादश मासास्संवत्सरस्संवत्सरस्याप्त्यै यदि द्वादशातिप्रच्य-
वेत[10] चतुर्विंशतिं[11] दद्याच्चतुर्विंशत्यक्षरा गायत्री गायत्री यज्ञमुखं
गायत्रीमेव यज्ञमुखं नातिक्रामति त्रीणि हवींषि भवन्ति त्रय इमे
लोका इमानेव लोकानाप्नोति त्रिर्विराड् व्यक्रमत विराज एवैनं वि-
क्रान्तमनु विक्रमयति यत्पवमानं[12] पुनात्येवैनं तेन यत्पावकमन्नं वै
पावकमन्नमेवास्मै तेन प्रयच्छति यच्छुचये शुचिमेवैनं मेध्यं यज्ञियं
तेन करोति पशुमानसानि प्रजावानसानि तेजस्व्यसानीति वा अग्नि-
माधत्ते प्राणो वै पवमानः[13] प्राणादधि पशवः प्रजायन्ते यदग्नये प-
वमानाय[14] पशूनेवास्मै तेन प्रजनयत्यापो वै पावका अद्भ्यः प्रजाः

---

[1] Mss. याचाहुत; Kap. S. 7, 4 णं नाहूताययात्त°
[2] So Ch; D नतं; Kap. S. 7, 4 दामंत्रिणे नानृतं
[3] So Ch und Kap. S.; D जांते
[4] D धिष्ण्य ।
[5] D निद्वाय
[6] D वानाम देयं
[7] D णाया
[8] Ch उपहरंत्युप; desgl. Kap. S. 7, 2; D उपाहर उप
[9] D ष्ठाति°
[10] So Ch u. Kap. S. 7, 2 a. E.; D प्रत्यवेत
[11] Mss. शतिर्दद्या°
[12] D पावमानं; desgl. Kap. S. 7, 3.
[13] So D; Ch पावमानः
[14] So D; Ch पावमा°; desgl. Kap. S. 7, 3.

प्रजायन्ते यदग्नये पावकाय प्रजामेवास्मै तेन प्रजनयत्यसौ वा आदि-
त्यश्शुचिरेष तेजसः प्रदाता यदग्नये शुचये ऽसा एवास्मा आदित्यस्तेजः
प्रयच्छति देवाश्च वा असुराश्च संयत्ता आसन्सो ऽग्निर्विजयमुपयत्सु[1]
त्रेधा तन्वो विन्यधत्त पशुषु तृतीयमप्सु तृतीयममुष्मिन्नादित्ये तृतीयं
5 यदेतानि हवींषि निरुप्यन्ते ता एवास्यैतत्तन्वस्संभरति सतनूरेवैत-
त्सतेजा आधीयत इमे वै लोका एतानि हवींषि नानाबर्हींषि[2] भ-
वन्तीमानेव लोकानापृणाति यन्नानाबर्हींषि[3] स्युर्लोकं प्रजननाय
नोच्छिंषेदूनं वै प्रजा उपप्रजायन्ते समानबर्हिषी उत्तरे कार्ये लोक-
मेव प्रजननायाकस्तमुपप्रजायते विद्म वा इमं लोकं विद्मेमं नामुं[4]
10 पश्यामो वा नु न वा[5] तस्मात्समानबर्हिषी उत्तरे कार्ये पशवो वा
एतानि हवींषि घृतं पुरोडाशा[6] रुद्रो ऽग्निर्यदग्नौ[7] ऽनुनिर्वपेद्रुद्राय
पशूनपिदध्यादपशुस्स्यात्संवत्सरे[8] ऽनुनिरुप्यं[9] संवत्सरेणैवैनं शमयति
शिथिलं वा एतद्यज्ञस्य क्रियते ऽसयोनि यत्संवत्सरे[10] ऽनुनिर्वपत्यग्न[11]
एवानुनिरुप्यमशिथिलत्वाय[12] सयोनित्वाय ॥ ८ ॥ cf. Kap. S. 7. 2. 3.

15 अग्निर्वा इमं लोकं नोपाकामयत यदस्मिन्नामं मांसं[13] पचन्ति
यत्पुरुषं दहन्ति यत्स्तेयं पचन्ति तदभीमं लोकं नोपाकामयत स य-
दिमं लोकमुपावर्तत या अस्य यज्ञियास्तन्व आसंस्ताभिरुदक्रामत्ता
एताः पवमाना पावका शुचिस्तस्य या पवमाना तनूरासीत्पशूंस्तया
प्राविशद्या पावकापस्तया या शुचिरमुमादित्यं तया प्राणो वै पव-
20 मानः प्राणेन पशवो यता यदग्नये पवमानाय पशूनेवास्मै तेन यच्छ-
त्येषा वा अस्य सा तनूर्यया पशून्प्राविशद्यदिदं घृते हुते प्रतीवार्चिरु-

---

[1] Kap. S. 7, 3 विजयत्सु [2] Ch बर्हींषि; Kap. S. 7, 3 नाबर्हींषि [3] Ch बर्हींषि; D बर्हींषि; Kap. S. 7, 3 नानाबर्हींरषि [4] Ch चासम्य° [5] So Ch; D वा भुवना; Kap. S. 7, 3 पश्यामो व न वा [6] Ch डाश्च [7] Ch र्यदग्मौ; D र्यदग्नौ [8] Ch दद्याद° [9] Kap. S. 7, 3 ननुरुप्याणि [10] So Ch; D सयोनिर्यत्संवत्सरो [11] So Ch; D त्यग्न [12] Kap. S. 7, 3 एवाननुरूप्यायथि [13] Ch मासम्य; Kap. S. स्मिन्नामु मांसं

ज्ज्वलत्येषा वा अस्य सा तनूर्ययापः प्राविशद्यदिदमप्सु परीव ददृशे
यद्धस्ता अवनिज्य स्नात्वा अदिव[1] धत्ते य एवाप्स्वग्निस्स एवैनं तत्पा-
वयति स स्वदयति यदग्नये पावकाय सपशुमेवैनं पावयत्येषा[2] वा
अस्य सा तनूर्ययापः प्राविशद्यदिदं घृते हुते शोणमिवार्चिरुज्ज्वल-
त्येषा[3] वा अस्य सा तनूर्ययामुमादित्यं प्राविशद्यदिदमुपरिष्टाद्वीव[4] 5
भाति यज्ज्योतिरिव[5] यदग्नये शुचय आविर्भूत्या एव घोषायैव श्लो-
कायैव रुच एवैषा वा अस्य सा तनूर्ययामुमादित्यं प्राविशद्यदिदं
घृते हुते सुवर्णमिवार्चिरुज्ज्वलति यदेतानि हवींषि निरुप्यन्ते ता
एवास्यैतत्तन्वस्संभरति सतनूरेवैतत्सतेजा आधीयत इमे वै लोका
एतानि हवींषि नानाबर्हींषि[6] भवन्ति नाना हीमे लोकाः प्रतिष्ठि- 10
ताः[7] ॥ ९ ॥ cf. Kap. S. 7, 5.

गायत्रीस्संयाज्या[8] भवन्ति गायत्रो वा अग्निर्गायत्रच्छन्दा आग्ने-
यमेतत्क्रियते यदग्न्याधेयमग्ना[9] एवैतदग्निः प्रतितिष्ठन्नेति यदाग्नेयानि
हवींष्यग्निनाग्निस्समिध्यत इत्युत्तरयोर्हविषोरनुवाक्यां[10] कुर्यात्तेजस
आयतनायोर्वशी वै पुरूरवस्यासीत्सान्तर्वती देवान्पुनः परेत्सो ऽदो[11] 15
देवेष्वायुरजायत तामन्वागच्छत्तां पुनरयाचत तामस्मै[12] न पुनरददु-
स्तस्मा[13] आयुं प्रायच्छन्नेष आयुरित्यग्निं चोख्यमुखायां[14] समुप्यैतमा-
धत्स्व तेन प्रजनिष्यस इति स वृक्षस्य शाखायामग्निमासज्यायुना
ग्राममभ्यवैत्स[15] पुनरैमीत्यैद्वृक्षस्याग्रे[16] ऽग्निं ज्वलन्तं[17] सो ऽचिकेदयं[18]
वाव[19] सो ऽग्निरिति[20] तस्यारणी आदायाग्निं मथित्वाधत्त तेन प्राजा- 20

---

[1] So Ch: D म्नात्वा मदिव; Kap. S. 7, 5 स्तात्वा स्यदिव [2] So Ch; D पाव इत्येषा [3] So Ch; D शोण इवा° [4] So Ch; D ष्टात्थीव [5] So D; Ch तिरेव [6] Ch बर्हंनीषि; D बर्हीनीषि; Kap. S. 7, 3 नानाबर्हिंषि [7] So corr. Mss. प्रतिष्ठितः [8] Die Mss. गायत्रौ संयाज्या भवन्ति; Kap. S. 7, 6 गायत्रीः संयाज्या भवंति [9] So Ch; D यदमग्न्या° [10] D वाक्यं [11] So Ch (1. Hand परोत्सो दो; D परोत्सादो [12] So Ch; D ता अस्मै [13] So Ch; D पुनरदुस्त [14] So Ch; D चोध्यमु° [15] So Ch; D ग्नाममद्यावेत्स [16] So corr. Ch पुनरैसौत्येद्वृच° D पुनरैमोत्येद्वृच° [17] So D; Ch स्याग्रयिं व्रलंते [18] Ch मो चिके° D साचिके° [19] D वावा [20] So Ch; D साग्नि°

यत यदारोहस्यारणी भवतः प्रजननायादित्यै घृते चरुममावस्यायां
पशुकामो ऽनुनिर्वपेदियमदितिरस्यामधि पशवः प्रजायन्ते यज्ञमुख-
मग्न्याधेयं यज्ञमुखमेवालभ्य पशूनवरुन्द्धे चातुष्प्राश्यो[1] भवत्याचतुरं
हीमे पशवो द्वन्द्वं मिथुनास्ते वीर्यकृतो ऽग्नीषोमीयमेकादशकपालं
5 पूर्णमासे ऽनुनिर्वपेदाग्नेयो वै ब्राह्मणो देवतया सोमराजा यज्ञमुखम-
ग्न्याधेयं यज्ञमुखमेवाक्रम्य स्वाराज्यमुपैति ॥ देवान्वै यज्ञो नाभ्यन-
मत्ते ऽश्राम्यन्यज्ञो नो नाभिनमतीति तेषामग्नीषोमा एवाग्रे यज्ञो
ऽभ्यनमत्ते ऽविदुरग्नीषोमौ वै नो ऽग्रे यज्ञो ऽभ्यनंस्तयोर्यज्ञस्याभिन-
तिमिच्छामहा[2] इति ते ऽब्रुवन्युवां वै नो ऽग्रे यज्ञो ऽभ्यनान्युवयोर्नो[3]
10 ऽधि यज्ञो ऽभिनमत्विति ता[4] अब्रुवतां[5] वार्यं वृणावहा[6] आवामेवाग्र
आज्यभागौ यजानिति तस्मादग्नीषोमा एवाग्र आज्यभागौ यजन्ति
वार्यवृतं ह्येनयोर्यदग्नीषोमीयमनुनिर्वपति यज्ञस्याभिनत्या[7] अतो हि
देवानग्रे यज्ञो ऽभ्यनमद्यदन्यदनुनिर्वपेद्देवतया यज्ञमन्तर्दध्यान्मिथुनं
वा अग्निश्च सोमश्च सोमो रेतोधा अग्निः प्रजनयिताग्निर्वावेदं सर्व-
15 माप ओषधयो वनस्पतयस्तदेव सोम[8] एतौ वै नो देवानां नेदिष्ठ-
मेतौ[9] हि पश्यामो यथा वा इदं मनुष्या उपासत एवमेतं देवा[10]
उपासत ते ऽचिकयुरुद्धृतेन त्वा अनेनाभिजयेमेति तमुदहरन्त तेना-
भ्यजयन्नभिजित्या एवैष उद्ध्रियते ऽग्निर्वै निराधानादविभेन्नातिदूर
आधेयो निराधानाय ॥ १० ॥ cf. Kap. S. 7, 6.

20 अग्निं वै सृष्टमग्निहोत्रमन्वसृज्यत तस्मादग्निमाहितमग्निहोत्रेणा-
नूद्द्रवन्त्याग्नेयी[11] सायमाहुतिस्सौरी प्रातर्यदाग्नेय्या प्रातर्जुहुयात्प्रजननं
पुरस्तात्परिहरेदयथापूर्वं कुर्यात्पूर्णया स्रुचा मनसा प्रजापतये जुहो-

---

[1] Ch प्राच्यो [2] So Ch; D भ्यनंस्त॰ च्छामह [3] So corr.; Ch भ्यनान्युत्रयो॰; D भ्यनान्युत्रायो॰ [4] So Ch; D मत्विति भा [5] So Ch; D अब्रुतां; Kap. S. 7, 6 तावब्रूतां [6] So D; Ch वृणामहा [7] So D; Ch आज्यस्याभिनत्त्या [8] So corr. Ch देव सोम; D देवा साम [9] Ch मेता [10] So D und Kap. S. 7, 6 a. E.; Ch एवमेव तन्देवा [11] So D; Ch द्रवत्योग्नेयी; Kap. S. 7, 8 नूद्रवंत्या॰

ति पूर्णः प्रजापतिः[1] प्रजापतिमेवाप्नोति पूर्णो वै प्रजापतिस्समृद्धि-
भिरूनो व्यृद्धिभिः[2] पूर्णः पुरुषः कामैरूनस्समृद्धिभिः[3] पूर्णयैव पूर्णा-
स्समृद्धीरवरुन्द्ध[4] आनीता वा अन्येषां देवानां स्मो ऽनानीता अन्येषां
संस्पर्शेनान्येषां जीवामस्सकाशेनान्येषां पृथिव्या वातस्यापां तेषामा-
नीतास्स्मस्तेषां[5] संस्पर्शेन जीवामो ऽग्नेस्सूर्यस्य दिवस्तेषामनानीता-
स्स्मस्तेषां सकाशेन जीवामस्तानेवालब्ध त एनमानेषत श्रेयसो भ्रा-
तस्य[6] भवति नास्य मनुष्याः पापवसीयसस्येशते य एवं वेद ॥ यदा-
त्मनालभेत प्रमायुकस्स्यादाज्येन चौषधीभिश्चालभते[7] ऽप्रमायुको भ-
वत्यानीतो वा एष देवानां य आहिताग्निरदन्न्यस्यान्नं पूर्णया स्रुचा
जुहोति पूर्णयाग्नये ऽलमकरलमस्मै भवत्योषधयश्च वै वनस्पतयश्च
दिवा समदधुस्त इतो ऽन्यत्सर्वमबाधन्त स[8] प्रजापतिरमन्यतेमे वा-
वेदमभूवन्निति[9] सो ऽग्निं सृष्ट्वा तमाधत्त तेनैनान्न्यभावयद्भ्रातृव्यस-
हनो[10] वावैष आधीयते हुताद्यायैष वा अहुताद्यो[11] ऽलमग्न्याधेयाय
सन्ननाहिताग्निर्हुतमेवैतेन[12] स्वदितमत्ति ॥ ११ ॥[13] cf. Kap. S. 7, 8.

आधेयो[14] ऽग्नी ३ नाधेया[15] ३ इति मीमांसन्ते श्वो ऽग्निमाधास्य-
मानेना[16] ३ इत्याधेय एवायज्ञो ह्येष यो ऽनग्निरजो[17] बह्वस्तां रात्री
वसेदग्नितेजसं[18] वा अजस्त्वंदेव[19] तमग्निमाधत्ते कल्माषस्स्यात्सं हि स-
र्वदेवत्यो[20] यस्तु श्वो ऽग्निमाधास्यन्स्यात्सं तां रात्रीं व्रतं चरेन्न मांसम-

---

[1] Dies Wort fehlt in Ch. [2] So corr. Ch ाभ ऊनो व्यृद्धिभिः; D भिः ऊनो वृद्धिभिः; Kap. S. 7, 8 भिरूनो [3] So corr. Ch कामै ऊनः; D कामे ऊनः; Kap. S. 7, 8 कामैनरूनः [4] Ch पूर्णः [5] So Ch; D मनानीता [6] So Ch und Kap. S. 7, 8; D द्रेयसो भ्रातस्य [7] So D; Ch श्चिभि॰ [8] Ch सा [9] So D; Ch भुव॰ [10] Ch तेनैनां न्यभा॰; D तेनानान्यभा॰ [11] D अंहु॰; Ch आहु॰; desgl. Kap. S. [12] So Ch; D ताग्नेर्हुतमोवैतेन [13] Die ११ fehlt in Ch. [14] Dies Kap. accent. nach T 1, coll. mit St. und Brl. fol. 142. [15] So T 1 und Brl; St नाधेया ३ [16] So St; T 1 धास्यमानेना ३; Brl धास्यमानेवा ३; Kap. S. 7, 7 मानेनेत्याधेय [17] So T 1 und Brl; St यो अग्निरजो; Kap. S. 7, 7 यो अनग्निरजो [18] So T 1 und Brl; St दग्नितेजसं [19] St अजस्त्वंदेवं [20] T 1 und Brl सर्वदेवत्यो; St सर्वदेवभ्यो; D सर्वदेवेभ्यो; Ch und Kap. S. सर्वदेवत्यो

श्नीयान्न स्त्रियमुपेयात्सर्वो[1] वै पुरुषो ऽग्निमानग्निरस्मादपक्रामेदेष ह्य-
तस्य योनिरेतस्माद्ध्येषो ऽधि सृज्यते[2] यस्तमुद्धरति यो दक्षिणो ब्रह्म-
वर्चसायैवैष मथ्यते[3] ऽथो अग्निभ्यामेवैनं सयोनिं[4] करोति दुर्गोपस्त्व-
हरहरस्य मन्थेयुर्यत[5] एवं कुतश्चाहरेदेषा[6] वा अस्यानवरुद्धा तनूस्तामे-
वावरुन्द्धे यत्र दीप्यमानं परापश्येत्तत[7] आहरेद्देवता वा एता आवि-
र्भवन्ति ता एवावरुन्द्धे भृज्जनादाहरेदन्नकामस्यैषा[8] वा अस्यान्नादी
तनूस्तामेवावरुन्द्धे ॥ यो ब्राह्मणो वा वैश्यो वा पुष्टो ऽसुर इव[9]
स्यात्तस्य[10] गृहादाहरेद्यैव सा पुष्टिर्यदन्नं तदवरुन्द्धे[11] गृहे त्वस्य[12] ततो
नाश्नीयाच्चिरुद्यच्छते[13] त्रय इमे लोका इमानेव लोकानाप्नोति यदुद्य-
च्छत इमं तेन लोकमाप्नोति यत्प्राङुद्द्रवत्यन्तरिक्षं तेन यदादधात्यमुं
तेन नाधाय पुनरुज्जृह्णीयादपक्रमस्य[14] पापीयान्भवति प्राणेभ्यो वै
प्रजापतिः प्रजा असृजत ताः प्राजायन्त तया मात्रयोज्जृह्णीयात्प्रजन-
नाय नात्युज्जृह्णीयादग्निरस्य[15] प्राणानुद्दहेत्प्रमीयेत[16] नाधो दध्यादपक्र-
मस्य पापीयान्भवति ॥ १२ ॥ cf. Māitr. S. 1, 6, 11; Kap. S. 7, 7.

अहुतादो[17] वा एतस्य पुरा देवा अथैतद्धुताद उपावर्तन्ते[18] ते
ऽस्योर्जापक्रामन्यूर्जमेवावरुन्द्धे[19] तानेव भागिनः करोति यजन्त्यमु-
ष्मिञ्जुह्वत्यस्मिन्पचन्त्यमुष्मिन्ननन्तरयायैतस्याथो[20] वैश्वानरतायामेवै-
नमुपातिष्ठिपद्ये[21] वै यज्ञेनायजन्ताध्रुवैस्ते[22] न वै सु विदुरिव[23] मनु-

---

[1] St स्त्रियमु° [2] So betonen die Mss., T 1, Brl und St; Ch ज्यत [3] St मन्थते [4] Ch सायोनिं [5] D मंथयुर्यत [6] So T 1 und Brl; St कुतश्चा° [7] Ch नम्परापश्येतुत; D नमरापश्येत्तत; St नं परामंश्येत्तत [8] Kap. S. 7, 7 भज्यमानादाहरेद° [9] So Ch, D, St; T 1 und Brl एव; desgl. Kap. S. 7, 7. [10] D तस्या [11] St पुष्टितादंचन्तदेवंवरुन्धे [12] So T 1 und Brl; desgl. D, ohne Acc.; Ch गहो त्वस्य; St गहां त्वस्यं; Kap. S. 7, 7 गहे न्वस्य [13] St चिरंद्यच्छतो [14] Ch पक्रामस्य [15] So Brl, St नात्युं°; Ch नत्यु°; D नाभ्यु; Kap. S. 7, 7 प्रजननायुनास्तद्दह्णीया° [16] Ch प्रमीयते [17] So corr. Ch अहुतादेः D अहुतादे; Kap. S. 8, 1 आहुतादी; dies Kap. wieder nur nach Ch und D. [18] Ch तपा° [19] Ch ते स्यूर्जाप° [20] Kap. S. 8, 1 ननंतरतायैतस्यासो [21] Ch तिष्टपद्ये [22] So corr. Mss. यजन्ताध्रुवैस्ते; Kap. S. 8, 1 यजंत्याध्रुवंस्ते [23] So Ch; D सु विद्व; Kap. S. सु विद्र

यत्ते क्रुद्धः परोवप[1] मन्युना यदवर्त्या[2] ।
सुकल्पमग्ने तत्तव[3] पुनस्त्वोद्दीपयामसि ॥
पुनस्त्वादित्या रुद्रा वसवस्समिन्धतां पुनर्ब्रह्माणो वसुधीतमग्ने[4] ।
इहैव धेह्यधि दक्षमुग्यमश्वावद्गोमद्यवमत्सुवीर्यम्[5] ॥
5 पुनस्त्वा मित्रावरुणौ पुनरिन्द्रः पुनर्भगः ।
पुनस्त्वा विश्वे देवा ब्राह्मणा उददीदिपन्[6] ॥
पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा ।
पुनर्नः पाह्यंहसः ॥
सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया ।
10 विश्वप्स्न्या विश्वतस्परि ॥

केतस्सुकेतस्सकेतस्ते न आदित्या जुषाणा अस्य हविषो व्यन्तु स्वाहा सलिलस्सलिगस्सगरस्ते न आदित्या जुषाणा अस्य हविषो व्यन्तु स्वाहा दिवो ज्योते विवस्व[7] आदित्य ते नो देवा देवेषु सत्यां देवहूतिमासुवध्वमादित्येभ्यस्स्वाहा ॥ १४ ॥
cf. Mâitr. S. 1, 7, 1; Kap. S. 8, 2.

15 अग्नेर्वै[8] भागः पुनराधेयं तं भागं प्रेप्सन्व्यर्धयति यद्याधाय मन्येत व्यृध्यते ऽस्या[9] इति पुनरादधीत यं भागं प्रेप्सन्व्यर्धयति तं प्राप्यार्धयत्येव सर्वमाग्नेयं क्रियते यत्किंच सर्वमग्नये भागं प्रादात्सर्वामृद्धिमृध्नोति न संभृत्यास्संभारा इत्याहुर्न यजुष्कार्यमिति संभृतसंभारो[10] ह्येष कृतयजुस्तत्तन्न सूर्क्ष्यं[11] संभृत्या एव संभाराः[12] कार्यं यजुः पुनरुत्स्यूतं

---

[1] Ch वाप [2] So corr. Mss. यदवन्त्या (Missverständniss der Çâradâ-Schrift); Kap. S. 8, 2 यदवर्त्या; cf. auch TS 1, 5, 3, 1. [3] So Ch; D ततुवा [4] So D; desgl. Kap. S. 8, 2 in der Hdschr. von Prof. Weber (s. Anm. zu Mâitr. S. 1, 7, 1); Ch वसुधौतिमग्ने; so auch Kap. S. 8, 2 in der Hdschr. von Bradke (cf. Wiener Ztschr. f. d. K. d. M. XI, p. 120). [5] Ch दक्षमश्वाव°; D दक्षमुग्यमश्वव° [6] So D und Kap. S.; Ch तददी° [7] Kap. S. 8, 2 दिवज्योतिर्विवस्व [8] So corr. Mss. अग्निर्वै [9] So Ch; D स्य; Kap. S. 8, 2 आस्येति [10] So Ch; D संवृत° [11] So Ch सूर्क्ष्यं; D सूर्चं [12] Ch संभारः

वासो देयं पुनरुत्सृष्टो ऽनड्वान्पुनर्निष्कृतो रथ एतानि[1] वै पुनराधे-
यस्य रूपाणि रूपैरेवैनत्समर्धयत्यग्निर्वा उत्सीदन्नप ओषधीरनूत्सीद-
त्याप एता ओषधयो यद्दर्भा यद्दर्भा उपोलपा भवन्त्यद्भ्य एवैनमोष-
धीभ्यो[2] ऽध्यवरुन्द्धे ॥ देवाश्च वा असुराश्च संयत्ता आसंस्ते देवा विज-
यमुपयन्तो ऽग्नौ प्रियास्तन्वस्संन्यदधत[3] यदि जयेमेमा उपावर्तेमहि[4] 5
यदि नो जयेयुरिमा अभ्युपधावेमेति[5] ते ऽभिजित्यान्वैच्छन्सर्वेषां न-
स्सहेति सो ऽग्निरब्रवीद्यो मा मद्देवत्यमादधातै[6] स एताभिस्तनूभिस्सं-
भवादिति तं देवा[7] आदधत त एताभिस्तनूभिस्समभवन्नेताभिरेव त-
नूभिस्संभवति य एवं विद्वानेतमाधत्ते त्वष्टा पशुकाम आधत्त त इमे
त्वाष्ट्राः[8] पशवस्तेनर्द्धा[9] मनुः पुष्टिकाम आधत्त स इमान्पोषानपुष्य- 10
त्तेनर्द्धाः[10] प्रजापतिः प्रजाकाम आधत्त ता इमाः प्राजापत्याः प्रजाः
प्राजायन्त तेनर्द्धा[11] यो वै[12] तमाधत्त स तेन वसुना समभवत्तस्मात्पु-
नर्वसुस्तस्मात्पुनर्वसा आधेय आर्ध्नोद्वै[13] स यस्तमाधत्त तस्मादनूराधा-
स्तस्मादनूराधेष्वाधेयः ॥ १५ ॥ cf. Mâitr. S. 1, 7, 2; Kap. S. 8, 3.

घर्मं[14] न सामन्तपता[15] सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् । 15
आमासु पक्वमैरय आ सूर्यं रोहयो दिवि ॥
आ यस्मिन्सप्त वासवा रोहन्ति पूर्व्यारुहः[16] ।
ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः ॥

[1] Ch निंष्टतो रथ एतानि; D निंष्कृतो य एतानि [2] So D; Ch धिभ्यो [3] So corr. D तन्वः स व्यदधत; Ch तन्वम्मन्येदधत; Kap. S. 8, 3 स न्यदधत [4] Ch अपावंर्तेमह्हि . [5] So corr. Ch अभ्यपधावेमेति; D अद्यपधावेमेति; Kap. S. 8, 3 जयेयुरिमाभ्युपधावेमेति [6] Ch मा मद्देवतमादधतै; D मा मद्देवभ्यमादधातै; Kap. S. 8, 3 मां वत्ये-वत्यमादधाति [7] Ch तान्देवा [8] So Ch; D त्वष्टाः [9] So corr. D तेनर्धां; Ch तेनवा; Kap. S. 8, 3 तेनर्द्धा [10] Ch पोषानपुष्यत्तेनर्धाः; D पोषां अपुष्यत्तेनर्धाः [11] So corr. Mss. तेनवा; Kap. S. 8, 3 तेनर्द्धा [12] Ch वायवे [13] So corr. Ch आब्रोद्वै; D आर्चोद्वै [14] Dies Kap. collat. auch mit T 1, L und Brl fol. 51—53; nach diesen Mss. accentuirt. [15] So T 1, L und Brl; D सामन्त एता; Ch मासं स एता; cf. RV 8, 78, 7. [16] So die Betonung in allen Mss.

इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु ।
इन्द्र तानि त आ वृणे ॥
अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये ।
अनु क्षत्रमनु सहो यजतेन्द्र[1] देवेभिरनु ते नृषह्ये ॥
5 इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः ।
इन्द्रं वाणीरनूषत ॥
एवेदिन्द्रं वृषणं वज्रबाहुं वसिष्ठासो अभ्यर्चन्त्यर्कैः ।
स नस्स्तुतो वीरवद्धातु गोमद्यूयं पात स्वस्तिभिस्सदा नः ॥
सं यत्र इन्द्र मन्यवस्सं चक्राणि दधन्विरे ।
10 अध त्वे अध सूर्ये ॥
आ ते मह इन्द्रोत्युग्र[2] समन्यवो सत्समरन्त सेनाः ।
पताति दिद्युन्नर्यस्य बाह्वोर्मा ते मनो[3] विष्वद्र्यग्विचारीत्[4] ॥
स्थिरं मनश्चकृषे जात इन्द्र वेषीदेको युधये भूयसश्चित् ।
अश्मानं चिच्छवसा दिद्युतो वि विदो[5] गवामूर्वमुस्रियाणाम् ॥
15 यो जात एव प्रथमो मनस्वान्देवो देवान्क्रतुना पर्यभूषत् ।
यस्य शुष्माद्रोदसी अभ्यसेतां[6] नृम्णस्य मह्ना स जनास इन्द्रः ॥
इन्द्रस्सुत्रामा स्ववाँ[7] अवोभिस्सुमृडीको भवतु विश्ववेदाः ।
बाधतां द्वेषो[8] अभयं कृणोतु सुवीर्यस्य पतयस्स्याम ॥
तस्य[9] वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ।
20 स सुत्रामा स्ववाँ इन्द्रो अस्मे आराच्चिद्द्वेषस्सनुतर्युयोतु[10] ॥
अंहोमुचे प्रभरेमा मनीषां भूयिष्ठदाऽने[11] सुमतिमावृणानाः ।
इदमिन्द्र प्रति हव्यं जुषस्व सत्यास्सन्तु यजमानस्य कामाः ॥

---

[1] Brl यजन्त्रेन्द्रे; RV 6, 25, 8 यजत्रेन्द्र [2] Brl इन्द्रोत्युग्र [3] Ch ते च नु [4] Brl विष्वद्र्यग्वि° [5] So L; Brl विविदो [6] Ch रोदसेदभ्यसेतां; D रोदसी अभ्युसोचृ° [7] Ch स्ववी [8] Ch द्विषो [9] Von hier ab bis zum Schluss accentuirt nach T6 fol. 60; collat. mit T1, L und Brl. [10] Brl युयोत; T6 यायूत [11] T6 भूयिष्ठदाम्ने

विवेष[1] यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः ।
अंहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये[2] हवन्ते ॥
अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ।
ब्रह्माण[3] इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥
वृष्णे यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिस्सजोषाः । 5
अनश्वासो ये पवयो ऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून् ॥
अनु त्वाहिघ्ने अध[4] देव देवा मदन्विश्वे कवितमं कवीनाम् ।
करो यत्र वरिवो बाधिताय दिवे जनाय तन्वे गृणानः[5] ॥
अनु द्यावापृथिवी तत्त ओजो ऽमर्त्या जिहत इन्द्र[6] देवाः ।
कृष्वा कृत्नो अकृतं यत्ते अस्त्युक्थं[7] नवीयो जनयस्व यज्ञैः ॥ 10
अभि प्रभर धृषता धृषन्मनः श्रवश्चित्ते असद्बृहत् ।
अर्षन्त्वापो जवसा वि मातरो हनो वृत्रं जया स्वः ॥
अस्मा इदु प्रभरा तूतुजानो[8] वृत्राय वज्रमीशानः कियेधाः ।
गोर्न पर्व विरदा[9] तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥
उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि[10] । 15
धनंजयो रणे रणे ॥

ममाग्ने वर्चः ॥

इन्द्र क्षत्रमभि वाममोजो ऽजायथा वृषभ चर्षणीनाम्[11] ।
अपानुदो जनममित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकम् ॥
मृगो न भीमः कुचरो गिरिष्ठाः[12] परावत आजगन्था[13] परस्याः । 20
सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून्ताढि वि मृधो नुदस्व ॥ ॥१६॥

---

[1] Brl विवेश [2] Brl und T6 यन्तमु°; vielleicht auch T1 so, doch nicht ganz deutlich. [3] So T1, T6, L und Brl; D ब्रह्मणा; Ch ब्राह्मणा; [4] L अथ; desgl. D, ohne Acc. [5] Brl und L गणानाः; desgl. D, ohne Acc. [6] D इंद्रो [7] D अस्त्युक्तं; Ch अस्त्युक्तच° [8] D भूजजानो [9] Brl गोनः पर्व विरदा [10] T6 उदग्नेर्वृ° [11] So Brl u. L, desgl. D, ohne Acc.; T6 वृषभचर्षणीनाम्; desgl. Ch, ohne Acc. [12] T6 गिरिष्ठः [13] T6 आजगन्थः; Ch गत्वा

रेवतीर्नस्सधमाद[1,2] इन्द्रे सन्तु तुविवाजाः ।
क्षुमन्तो याभिर्मदेम ॥
ता अस्य नमसा सहस्सपर्यन्ति प्रचेतसः ।
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥
5 इन्द्राणी पत्या सुजितं जिगायोदंशेन[3] पतिविद्ये[4] बिभेद ।
त्रिंशद्यस्या जघनं[5] योजनान्युपस्थ इन्द्रं स्थविरं बिभर्ति ॥
सेना ह नाम पृथिवी धनंजया विश्वव्यचा अदितिस्सूर्यत्वक् ।
इन्द्राणी प्रासहा संजयन्ती मयि पुष्टिं पुष्टिपत्नी[6] दधातु[7] ॥
इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् ।
10 नह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥
नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।
यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ॥
प्राच्यां दिशि त्वमिन्द्रासि राजोतोदीच्यां[8] वृत्रहन्वृत्रहासि ।
यत्र यन्ति स्रवत्यस्तज्जितं[9] ते दक्षिणतो वृषभो हव्य एधि ॥
15 अस्येदेव प्ररिरिचे महित्वं दिवः पृथिव्याः पर्यन्तरिक्षात् ।
स्वराडिन्द्रो दम आ विश्वगूर्तस्स्वरिरमत्रो[10] ववक्षे रणाय ॥
त्वमिन्द्रास्यधिराजस्त्वं भवाधिपतिर्जनानाम् ।
दैवीर्विशस्त्वमुता[11] विराजौजस्वत्क्षत्रमजरं ते अस्तु ॥
हिरण्यगर्भो यः प्राणतः ॥
20 सोमापूषणा[12] जनना रयीणां जनना दिवो जनना पृथिव्याः ।
जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् ॥

---

[1] Dies Kap. auch collat. mit T1, L und Brl; darnach auch accentuirt.
[2] Ch रेवतीत्रस्सदमाद [3] Ch जिघायो° [4] So acc. L; T1 und Brl पतिविद्ये
[5] So corr. Ch जघन; D जघान; T1, L, Brl जघंना [6] Brl पुष्टिपत्नी; desgl. D, ohne Acc. [7] So Brl, L, D; in T1 und Ch ददातु [8] Ch राजोतोदी°: Brl राजोतंदी° [9] So T1 und Brl; L स्रवत्यास्तं°; desgl. Ch und D, ohne Acc.
[10] Ch स्वररिमत्रो [11] Ch देवोर्विश्वस्त्व° [12] D पूषाणा

इमौ देवौ जायमानौ जुषन्तेमौ तमांसि गूहतामजुष्टा ।
आभ्यामिन्द्रः पक्वमामास्वन्तस्सोमापूषभ्यां जनदुस्रियासु ॥
प्रिया[1] वो नाम हुवे तुराणाम् ।
आ यत्तृपन्मरुतो वावशानाः ॥
श्रियसे[2] कं भानुभिस्सम्मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिस्सुखादयः । 5
ते वाशीमन्त इष्मिणो अभीरवो विद्रे[3] प्रियस्य मारुतस्य धाम्नः ॥
इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः ।
अस्माकमस्तु केवलः ॥
आ नो विश्वाभिरूतिभिस्सजोषा ब्रह्म जुषाणो हर्यश्व याहि ।
वरीवृजत्स्थविरेभिस्सुशिप्रास्मे दधद्वृषणं शुष्ममिन्द्र ॥ 10
मरुतो यद्ध वो दिवस्सुम्नायन्तो हवामहे ।
आ तू न उपगन्तन ॥
यूयमस्मान्नयत वस्यो अच्छा निरंहतिभ्यो मरुतो गृणानाः ।
जुषध्वं नो हव्यदातिं यजत्रा वयं स्याम पतयो रयीणाम् ॥
स युध्मस्सत्वा खजकृत्समद्वा[4] तुविम्रक्षो नदनुमाँ ऋजीषी । 15
बृहद्रेणुश्च्यवनो[5] मानुषीणामेकः कृष्टीनामभवत्सहावा[6] ॥
सं यद्धनन्त[7] मन्युभिर्जनासश्शूरा यह्वीष्वोषधीषु विक्षु ।
अध स्मा नो मरुतो रुद्रियासस्त्रातारो भूत पृतनास्वर्यः ॥
एन्द्र सानसिं[8] रयिं सजित्वानं सदासहम् ।
वर्षिष्ठमूतये भर ॥ 20
स्वस्तये वाजिभिश्च[9] प्रणेतस्सं यन्महीरिष[10] आसत्सि पूर्वीः ।
रायो वन्तारो[11] बृहतस्स्यामास्मे अस्तु भग इन्द्र[12] प्रजावान् ॥

---

[1] So T6 und Brl; desgl. Ch, ohne Acc.; L प्रियं; desgl. D, ohne Accent. [2] Brl श्रेयसे [3] So T1, Brl, L; desgl. Ch, ohne Acc.; D वेद्र [4] Brl wohl समध्वा [5] D बृहद्रोराश्च्य° [6] Brl सहाया [7] Hier bricht T1 ab; das folgende Blatt fehlt; das Weitere nach L accentuirt, collat. mit Brl. [8] Ch und D सनसिं [9] Brl वाजेभि [10] Brl रिष [11] Ch वंतारे [12] Brl इन्द्रः

या॑ वश्शर्म शशमाना॑य स॑न्ति त्रिधा॑तूनि दाशु॑षे यच्छता॑धि ।
अस्म॑भ्यं ता॑नि मरुतो वि॑यन्त[1] रयिं॑ नो धत्त वृषणस्सुवी॑रम् ॥ ॥१७॥

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां दिशस्थानकं नामाष्टमं स्थानकं संपूर्णम्[2] ॥ ॥

---

5 अग्निर्वा उत्सीदन्संवत्सरमनूत्सीददिति सप्तदश सामिधेनीः कार्या-
स्सप्तदशो वै संवत्सरः पञ्चर्तवो द्वादश मासा[3] एष वाव स संवत्सर-
स्संवत्सरादेवैनमध्यवरुन्द्धे[4] तदाहुः पञ्चदशैव कार्या न सप्तदशेत्येतद्धि
संवत्सरस्य संक्रमणतरं यत्पञ्चदश पञ्चदश सामिधेनीरनूच्यन्ते[5] पञ्चद-
शार्धमासस्य रात्रयस्ताभिरेव ता आप्यन्ते यावन्ति वै सामिधेनीना-
10 मक्षराणि तावन्ति[6] संवत्सरस्याहानि तैरेव तान्याप्यन्ते ऽग्निर्वा उत्सी-
दन्संवत्सरमनूत्सीददिति षड्वा ऋतवस्संवत्सरो यत्षड्विभक्तयस्संवत्सरा-
देवैनमध्यवरुन्द्धे ॥ संवत्सरो वा अग्निर्वैश्वानरष्षडृतवस्तस्मात्षड्विभ-
क्तयो यद् द्व्यक्षरास्सतीश्चतुरक्षराः क्रियन्त आचतुरं हीमे पशवो द्वन्द्वं
मिथुनास्ते वीर्यकृतो यद्वा इदमग्निं बहुधा विहरन्ति यदिमान्पो-
15 षान्पुपोष[7] तस्मादग्निरेवैतावतीर्विभक्तीरश्नुते नान्या देवता यज्ञमुखं
वै प्रयाजा यत्प्रयाजानन्तरियाद्यज्ञमुखमन्तरियादन्नं[8] वै प्रयाजा यत्प्र-
याजानन्तरियादन्नमन्तरियाद्यं[8] कामयेतर्ध्नुयादिति[9] तस्योपरिष्टात्प्र-

---

[1] So Brl = RV 1, 85, 12; in L eine Lücke; D und Ch वियन्ता [2] So die Unterschrift des Kapitels in Ch; in D lautet dieselbe इति दिशस्थानकं नाम अष्टमं समाप्तम ८ ॥ ॥ [3] Ch मास [4] So corr. Ch मध्यवरुंधे; D मध्यवारुंधे; Kap. S. 8, 4 संवत्सरादेवाधि यज्ञमुखं प्रतनुते [5] So Ch; desgl. Kap. S. 8, 4; D नूच्यंते [6] So Ch und Kap. S. 8, 4; D भवंति [7] D प्रपोष [8] So Ch; D प्रयाजानान्तरिया° [9] So corr. Ch ध्नुया° D धया°

जानां विभक्तीः कुर्याद्वीर्यं वै प्रयाजा वीर्यं विभक्तयो वीर्याद्देवाधि
वषट्करोत्यजिरमृद्विमभिक्रामति[1] ॥ नानाग्नेयं क्रियत इत्याहुः कस्मात्स-
विभक्तयः प्रयाजा भवन्तीति संवत्सरं वा एते परीज्यन्ते[2] यत्प्रयाजा-
स्तेनाग्नेयं तेन नानाग्नेयं क्रियते ॥ पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा
पुनर्नः पाह्यंहस इति पुरस्तात्प्रयाजानां जुहुयात्सह रय्या निवर्तस्वाग्ने
पिन्वस्व धारया विश्वप्स्न्या विश्वतस्परीत्युपरिष्टादनुयाजानां जुहुया-
दूर्जा वा एष पशुभिरुत्सीदन्सहोत्सीदति पुनरेवोर्जं पशूनवरुन्द्धे ऽथो
उभयत एव यज्ञस्याशिषर्ध्नोति[3] ॥ १ ॥ cf. Mâitr. S. 1, 7, 3. 4; Kap. S. 8, 4.

नानाग्नेयं क्रियत इत्याहुः कस्मादाज्यभागौ यजन्तीति चक्षुषी वा
एते यज्ञस्य यदाज्यभागौ यदाज्यभागा अन्तरियाच्चक्षुषी[4] यज्ञस्यान्त-
रियादग्न आयूंषि पवस इत्येतौ सोमस्याज्यभागस्य लोके कुर्याद्यदा-
ग्नेयं तेनाग्नेयी यत्पावमानं[5] तेन सौमी नानाग्नेयं क्रियते न सोमम-
न्तरेत्यग्निर्मूर्धा दिवः ककुदित्येतौ सोमस्याज्यभागस्य लोके कुर्यात्प्रजा-
कामस्य वा पशुकामस्य वा यन्मिथुना तेन प्रजननवती यद्रेतस्वती
तेन सौमी नानाग्नेयं क्रियते न[6] सोमममन्तरेति ॥ वीरहा वा एष दे-
वानां यो ऽग्निमुत्सादयते शतदायो[7] वीरो यदेताश्शताक्षरा अक्षरप-
ङ्क्तयो वीरमेवैतद्देवानामवदयते[8] ऽन्यस्यै वै प्रमाया आधेयो ऽन्यस्यै
पुनराधेयो न वै तामाधेयेन[9] स्पृणोति यस्यै पुनराधेयः पुनराधेयेन
वाव तां स्पृणोति जरा वै देवहितमायुस्तावतीर्हि समा जीवति त-
स्मादाहुश्शतदायो वीर इति यदेताश्शताक्षरा अक्षरपङ्क्तयो भवन्ति
यावदेव वीर्यं तदाप्नोति तत्स्पृणोत्यायुषा वा एष वीर्येण व्यृध्यते यो

---

[1] Ch वादि वषं करो° [2] So Ch; D परोज्यान्ते [3] So corr. Ch und D षर्धोति; Kap. S. 8, 4 षर्ध्नोति [4] So corr. Ch यान्श्चक्षुषौ; D याचक्षुषौ [5] So D, desgl. Kap. S. 8, 5; Ch यत्पव° [6] Ch ना [7] Ch शतधायो [8] Ch दायते [9] So corr. Ch धेयेण; D धेयो न

ऽग्निमुत्सादयते शतायुर्वै[1] पुरुषश्शतवीर्य आयुर्वीर्यं हिरण्यं यद्धिरण्यं
शतमानं ददात्यायुरेव वीर्यं पुनरालभेत[2] ॥ २ ॥
cf. Mâitr. S. 1, 7, 4. 5; Kap. S. 8, 5.

यज्ञेन वा एष व्यृध्यते यो ऽग्निमुत्सादयते पाङ्क्तो यज्ञो यत्पञ्चक-
पालो यज्ञमेवालभते तदाहुरष्टाकपाल[3] एव कार्यो न पञ्चकपाल[4]
5 इत्यष्टाक्षरा गायत्री गायत्रो ऽग्निर्गायत्रच्छन्दा[5] आग्नेयमेतत्क्रियते य-
त्पुनराधेयं तस्मादष्टाकपालस्तत्तन्न[6] सूर्क्ष्यं पञ्चकपाल एव कार्यो ऽग्नि-
र्वा उत्सीदन्संवत्सरमनूत्सीदति पञ्च वा ऋतवस्संवत्सरः पञ्चधाद्वा[7]
अध्यृतोष्षष्ट[8] ऋतुर्बभूव समानमेतद्यत्पञ्चथश्चतुष्षष्टश्च[9] यत्पञ्चकपा-
लस्संवत्सरादेवैनमध्यवरुन्द्धे पञ्च वा ऋतवः प्रजननमृतवो यत्पञ्चक-
10 पालः प्रजननाय प्रजननं वा ऋतवो ऽग्निः प्रजनयिता यत्पञ्चकपालः
प्रजननादेवैनं प्रजनयिता प्रजनयत्यादित्या वा इतस्सर्वेणैव[10] सहामुं
लोकमायंस्ते ऽमुं लोकं गत्वा व्यतृष्यंस्ते ऽविदुरमुतः प्रदानाद्वा[11] इहाज-
गामेति त एतं पुनरादधत तेनार्ध्नुवन्नादित्या[12] वा अस्मिंल्लोक ऋ-
द्धा[13] आदित्या अमुष्मिन्पशवो ऽस्मिन्नृतवो ऽमुष्मिन्नुभयोरेव लोक-
15 योर्ऋध्नोति[14] य एवं विद्वानेतमाधत्ते केतस्सुकेतस्सकेतस्ते न आदित्या
जुषाणा अस्य हविषो व्यन्तु[15] स्वाहा सलिलस्सलिगस्सगरस्ते न
आदित्या जुषाणा अस्य हविषो व्यन्तु[15] स्वाहा दिवो ज्योतिर्विवस्व[16]
आदित्य[17] ते नो देवा देवेषु सत्यां देवहूतिमासुवध्वमादित्येभ्यस्स्वा-

---

[1] So corr. Ch शतायु वै; D शतायुः पु° [2] Kap. S. 8, 5 a. E. लभते [3] Ch ष्टक° [4] Ch repetirt एव कार्या न पंचकपाल [5] So corr. Ch ग्निर्गायत्रश्छंद; D ग्नि-र्गायउच्छंदा; Kap. S. 8, 6 गायत्रछंदा [6] Ch ष्टक° [7] So Ch; D पञ्चयाद्वा; Kap. S. 8, 6 पंचधाद्वाद्वौरितोः [8] So corr. Ch अध्यृतो षष्ट; D अधृतोदष्ट [9] So corr. Ch पंचयच्चतुष्षष्टश्च; D पंचथश्चतुः षष्टिश्च [10] D णैवा [11] Kap. S. 8, 6 प्रजानाद्वा [12] Ch दधतत तेनाध्नुव° D दधत तेनाभ्रुव° [13] So D; Ch वृद्धा; Kap. S. 8, 6 ऋध्या [14] Ch ऋंध्नुवंति [15] Ch व्यतुं [16] So Ch; D दिवो ज्योते विवस्व; Kap. S. 8, 6 देत ज्योतिर्विवस्व [17] So Ch; desgl. Kap. S. 8, 6; D आदित्या

हेत्येतैवै[1] ते तमादधत तेनार्भुवन्यदा[2] वा एतैराधत्ते ऽथाहित आदित्यो हि पुनराधेयः ॥ ३ ॥ cf. Mâitr. S. 1, 7, 4. 5; Kap. S. 8, 6.

आग्नेयो[3] ऽष्टाकपालस्सौम्यश्चरुस्सावित्रो द्वादशकपालस्सारस्वतश्चरुः पौष्णश्चरुर्मारुतस्सप्तकपालो वैश्वदेव्यामिक्षा द्यावापृथिव्य एककपाल आग्नेयो ऽष्टाकपालस्सौम्यश्चरुस्सावित्रो ऽष्टाकपालस्सारस्वतश्चरुः पौष्णश्चरुरैन्द्राग्नो द्वादशकपालो मारुत्यामिक्षा वारुण्यामिक्षा काय एककपालो नमस्त आतानानर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेण ॥

प्रघास्यान्हवामहे मरुतो यज्ञवाहसः ।
करम्भेण सजोषसः ॥
मो षू[4] ण इन्द्रात्र[5] पृत्सु[6] देवा अस्तु[7] स्म ते शुष्मिन्नवयाः[8] ।
मही देवस्य मीढुषो ऽवया हविष्मतो मरुतो वन्दते गीः ॥
यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ।
यदेनश्चकृमा[9] वयं यदप्सुश्चकृमा वयम् ।
यदेकस्यापि धर्मण्येतत्तदवयजामहे ॥ स्वाहा ॥
अक्रन्कर्म कर्मकृतस्सह वाचा मयोभुवा ।
देवेभ्यः कर्म कृत्वास्तं प्रेत सुदानवः ॥ ॥ ४ ॥
cf. Mâitr. S. 1, 10, 1. 2; Kap. S. 8, 7.

अग्नये[10] ऽनीकवते प्रातरष्टाकपालो मरुद्भ्यस्सांतपनेभ्यो मध्यंदिने चरुर्मरुद्भ्यो गृहमेधेभ्यस्सर्वासां दुग्धे[11] सायमोदनौ निष्काषौ निधीयते संतत्यै ॥

---

[1] So Ch; D सरध्य° [2] So corr. Ch वुवन्य° D भुवन्य° [3] Dies Kap. auch collat. mit Brl fol. 155. 156 und darnach accentuirt. [4] Ch षु [5] D इन्द्रात [6] Ch मृत्सु [7] cf. RV 1, 173, 12 अस्ति; Kap. S. 8, 7 देवा ह्यस्तु स्म ते [8] So corr. Die Mss. वया ॥ [9] Brl fol. 156 यदि न चकृमो [10] Collat. mit Brl fol. 156 und darnach accentuirt. [11] Ch मुग्धे

पूर्णा दर्वे[1] परापत[2] सुपूर्णा पुनरापत ।
वस्नेव[3] इव विक्रीणावहा इषमूर्जं शतक्रतो ॥
देहि मे ददामि ते नि मे धेहि[4] नि ते दधे ।
निहारमिन्नि मे हर निहारं निहरामि ते ।
5 अपामित्यमिव संभरैषमूर्जं शतक्रतो ॥

मरुद्भ्यः क्रीडिभ्यः प्रातस्सप्तकपालस्साकं सूर्यस्य रश्मिभिराग्नेयो ऽष्टाकपालस्सौम्यश्चरुस्साविचो ऽष्टाकपालस्सारस्वतश्चरुः पौष्णश्चरुरैन्द्राग्न एकादशकपाल ऐन्द्रश्चरुर्वैश्वकर्मण एककपालो ऽग्ने वेहोत्रं वेदूत्यमूर्ध्वो ऽध्वरे ऽस्था[5] अवतां त्वा द्यावापृथिवी अव त्वं द्यावापृथि-
10 वी[6] स्विष्टकृदिन्द्राय देवेभ्यो भव जुषाणो अस्य हविषो घृतस्य वीहि स्वाहा ॥ ५ ॥ cf. Mâitr. S. 1, 10, 1. 2; Kap. S. 8, 8.

सोमाय[7] पितृमत आज्यं पितृभ्यो बर्हिषद्भ्यष्षट्कपालः पुरोडाशः पितृभ्यो ऽग्निष्वात्तेभ्यो धाना अग्नये कव्यवाहनाय मन्थ एतत्ते तत ये च त्वान्वेतत्ते[8] पितामह ये च त्वान्वेतत्ते[8] प्रपितामह ये च त्वान्वत्र
15 पितरो मादयध्वम् ॥
सुसंदृशं त्वा वयं मघवन्मन्दिषीमहि ।
प्र नूनं पूर्णवन्धुर[9] स्तुतो यासि वशाँ अनु योजा न्विन्द्र ते हरी ॥
परेत पितरस्सोम्यासो गम्भीरैभिः पथिभिः पूर्विणेभिः[10] ।
दत्त्वायास्मभ्यं द्रविणेह भद्रं[11] रयिं च नस्सर्ववीरं नियच्छत ॥
20 अमीमदन्त पितरः ॥

---

[1] Brl दार्वे [2] Ch पराप्लुत [3] So Ch; D वस्त्न; Kap. S. 8, 8 वस्नेव [4] So corr. Mss. देहि; cf. Mâitr. S. 1, 10, 2; TS 1, 8, 4, 1. [5] Brl वेदूत्यमूर्ध्वा ध्वरे स्था; Kap. S. 8, 8 वेकेत्यमूर्धा अध्वरायास्था अवतां; Mâitr. S. 1, 10, 2 वेदूत्यमूर्ध्वो अध्वरो अस्थादवतां [6] In Brl fehlt अव त्वं द्यावापृथिवी; Accent ergänzt. [7] Dies Kap. collat. auch mit St fol. 34, T 1 und Brl fol. 84. 85 und nach diesen Mss. accentuirt. [8] D त्वानु एतत्ते [9] Ch बंदुर [10] So die Mss., desgl. Kap. S. 8, 9; nur St पूर्वेणेभिः [11] Brl भद्रे

अया विष्ठा जनयन्कर्वराणि स हि घृणिरुरुर्वराय गातुः ।
स प्रत्युदैद्धरुणं मध्वो अग्रं स्वां यत्तनूं[1] तन्वमैरयत[2] ॥
अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥

नमो वः पितरो मन्यवे नमो वः पितरश्शुष्माय नमो वः पितरो जीवाय नमो वः पितरो रसाय नमो वः पितरः क्रूराय नमो वः पितरो बलाय नमो नमो वः पितरस्स्वधा वः पितरो यात्र[3] पितरस्स्वधा यत्र यूयं स्थ सा युष्मासु तया यूयं यथाभागं मादयध्वं येह पितर ऊर्ग्यत्र वयं स्मस्सास्मासु तस्यै वयं ज्योग्जीवन्तो[4] भूयास्म ॥

मनो न्वाहुवामहे नाराशंसेन[5] स्तोमेन ।
पितॄणां च मन्मभिः ॥
आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे ।
ज्योक्च सूर्यं दृशे ॥
पुनर्नः पितरो मनो ददातु दैव्यो[6] जनः ।
जीवं व्रातं सचेमहि ॥
आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवि[7] ।
इषं स्तोतृभ्य आभर ॥
यदन्तरिक्षं पृथिवीमुत द्यां यत्पितरं मातरं वा जिहिंसिम ।
अग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता ॥ ॥ ६ ॥

cf. Mâitr. S. 1, 10, 3; Kap. S. 8, 9. 10.

---

1 So die Mss.! ebenso auch unten 14, 3; 5, 5, 12; nur Ch स्वा यं तनू; Kap. S. 8, 9 स्वा यतद्रू तन्वामैरयत; 2 So die Mss.; ebenso auch unten 14, 3; 5, 5, 12. 3 D यत्र 4 So betonen alle Mss., als ein Wort. 5 D नरा° 6 Mit दैव्यो schliesst St fol. 34 und von da eine grosse Lücke bis fol. 84. Das Weitere hier accentuirt nach T 1 und Brl. 7 Ch दिवि

रुद्राखु[1] ते पशुं करोमि तेन त्वा पशुभ्यो निरवदय एष ते रुद्र
भागस्सह स्वस्राम्बिकया[2] तं[3] जुषस्व स्वाहा ॥
अवाम्ब रुद्रमदिमह्यव[4] देवं त्र्यम्बकम्[5] ।
यथा नो वस्यसस्करद्यथा[6] नश्श्रेयसस्करद्यथा नो व्यवसाययात्[7] ॥
5 भेषजं गवे ऽश्वाय पुरुषाय सुगं मेषाय मेष्यै[8] ।
अथो अस्मभ्यं भेषजं सुभेषजं यथासति ॥
त्र्यम्बकं यजामहे सुगन्धिं रयिपोषणम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्[9] ॥
भगस्स्थ भगस्य वो लप्सीयैष ते रुद्र भागस्तेनावसेन परो मूज-
10 वतो ऽतीहि कृत्तिवासाः[10] पिनाकहस्तो ऽवततधन्वा ॥ एधो ऽस्येधि-
षीमहि समिदसि समेधिषीमहि तेजो ऽसि तेजो मयि धेहि ॥ ७ ॥
cf. Mâitr. S. 1, 10, 4; Kap. S. 8, 11.

चित्तिस्स्रुक्[11] चित्तमाज्यं वाग्वेदिराधीतं बर्हिः केतो अग्निर्वि-
ज्ञातमग्निर्वाचस्पतिर्होता[12] मन उपवक्ता प्राणो हविस्सामाध्वर्युरिन्द्रं
गच्छ स्वाहा पृथिवी होता द्यौरध्वर्युस्त्वष्टाग्निर्मित्र[13] उपवक्ता वाच-
15 स्पते वाचो वीर्येण संभृततमेनायक्षसे यज्ञपतये वार्यमा स्वस्करो[14]
वाचस्पतिस्सोमं पिबतु जजनदिन्द्रमिन्द्रियाय स्वाहा सोमस्सोमस्य
पुरोगाश्शुक्रश्शुक्रस्य पुरोगाश्श्रातास्त[15] इन्द्र सोमा वातापे[16] हवन-
श्रुतस्स्वाहाग्निर्होताश्विनाध्वर्यू रुद्रो ऽग्निर्बृहस्पतिरुपवक्ता[17] वाचस्पते

---

[1] Dies Kap. coll. mit St fol. 84, T1 und Brl fol. 65. 66; darnach accentuirt. [2] Ch काया [3] St त्वं [4] Ch मदोमह्यव [5] Dies Wort in den Mss. ohne Accent; von mir ergänzt. [6] St श्रेयस° [7] St व्यवसायया [8] So T1 und Brl; desgl. W1, ohne Accent; St मेषाय मेष्यै; D मेषाय मेष्यैः; Ch मेष्याय मेष्यै [9] St मुखीय मामंताम ॥ [10] St und Ch वासः [11] Collat. mit Brl fol. 226 und darnach accentuirt. [12] Kap. S. 8, 12 ग्नोर्द्धाच° [13] D und Ch ग्निर्मित्र (Missverständniss der Çâradâ); Kap. S. 8, 12 त्वष्टाग्नोर्मित्र [14] in Brl स्वस्करो ohne Accent; ergänzt. Kap. S. 8, 12 वार्यमास्यस्करो [15] Kap. S. 8, 12 श्रातास्थ [16] Kap. S. 8, 12 वातापयो; cf. Mâitr. S. 1, 9, 1. [17] Kap. S. 8, 12 ग्नोर्बृ°

हृद्धिधे[1] नाभन्वाचस्पतिस्सोममपादास्मासु नृम्णं धात्स्वाहा सोम-
स्सोमस्य पुरोगाश्शुक्रश्शुक्रस्य पुरोगाश्श्रातास्त इन्द्र सोमा[2] वातापे[3]
हवनश्रुतस्स्वाहा ॥ ८ ॥ cf. Mâitr. S. 1, 9, 1; Kap. S. 8, 12.

देवस्य[4] त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रति-
गृह्णामि वरुणस्त्वा नयतु देवि दक्षिणे यमायाश्वं तेनामृतत्वमशीय 5
वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे देवस्य त्वा सवितुः प्रसवे
ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि वरुणस्त्वा नयतु देवि
दक्षिणे ऽग्नये हिरण्यं तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं
प्रतिग्रहीत्रे देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां
प्रतिगृह्णामि वरुणस्त्वा नयतु देवि दक्षिणे रुद्राय[5] गां तेनामृतत्वमशीय 10
वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ देवस्य त्वा सवितुः प्रसवे ऽश्वि-
नोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि ग्रास्त्वाकृन्तन्नपसो ऽतन्वत[6]
वरुत्रीरवयन्वरुणस्त्वा नयतु देवि दक्षिणे बृहस्पतये वासस्तेनामृत-
त्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे देवस्य त्वा सवितुः
प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि वरुणस्त्वा नयतु 15
देवि दक्षिणे उत्तानायाङ्गिरसायाप्राणत्तेनामृतत्वमशीय[7] वयो दात्रे
भूयान्मयो मह्यं प्रतिग्रहीत्रे देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां
पूष्णो हस्ताभ्यां प्रतिगृह्णामि वरुणस्त्वा नयतु देवि दक्षिणे प्रजाप-
तये पुरुषं तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे
क इदं कस्मा अदात्कामः कामाय कामो दाता कामः प्रतिग्रहीता 20
कामस्समुद्रमाविशत्कामेन त्वा प्रतिगृह्णामि कामैतत्ते[8] महाहविर्होता

---

[1] So die Mss.; Betonung nach Brl; cf. dagegen Mâitr. S. 1, 9, 1; Kap. S. 8, 12 रिद्विधे [2] So corr. Ch und D सोम; Brl सोम [3] Kap. S. 8, 12 श्रातास्थ इंद्र सोमा वातापयो [4] Dies Kap. collat. mit T1 und Brl fol. 130, und darnach accentuirt. [5] Brl कृताय गां [6] Kap. S. 8, 13 ग्रास्त्याकृतं तपसो अन्वत वरुत्री-रवयन [7] cf. 9, 11 a. E.; auch Mâitr. S. 1, 9, 4; Ch सायाप्राणं ते° [8] Hier brechen T1 und Brl fol. 130 : b, daher weiter keine Accente.

सत्यहविरध्वर्युरचित्तपाजा अग्निदचित्तमना[1] उपवक्तानाधृष्यश्चाप्रति-
धृष्यश्चाभिगरा अयास्य उद्गाता वाचस्पते विधे नामन्विधेम ते नाम
विधेस्त्वमस्माकं[2] नाम मा देवानां तन्तुश्छेदि मा मनुष्याणाम् ॥ ९ ॥
cf. Mâitr. S. 1, 9, 1. 4; Kap. S. 8, 13.[3]

अग्निर्यजुर्भिस्सविता स्तोमैरिन्द्र उक्थामदैर्बृहस्पतिश्छन्दोभिर्वि-
5 ष्णुर्दीक्षातपोभ्यामदितिस्सदोहविर्धानाभ्यामादित्या[4 5] आज्यैर्मित्राव-
रुणौ धिष्ण्यैभिरग्निभिर्मरुतो ऽपश्च[6] बर्हिश्च त्वष्टा समिधाश्विना
आशिरा पूषा स्वगाकारैः पृथिव्यग्नेर्वाग्वातस्य सेनेन्द्रस्य धेना बृह-
स्पतेः पथ्या पूष्णो गायत्री वसूनां त्रिष्टुब्रुद्राणां जगत्यादित्यानामनु-
ष्टुम्मित्रस्य विराड्वरुणस्य पङ्क्तिर्विष्णोर्दीक्षा सोमस्य ॥ १० ॥
cf. Mâitr. S. 1, 9, 2.

10 प्रजापतिरकामयत स्यात्प्रजायेयेति स दशधात्मानं व्यधत्त तस्य[7]
चित्तिस्स्रुगासीच्चित्तमाज्यं वाग्वेदिराधीतं बर्हिः केतो अग्निर्विज्ञात-
मग्निद्वाचस्पतिर्होता मन उपवक्ता प्राणो हविस्सामाध्वर्युस्स दशधा-
त्मानं विधाय मिथुनं कृत्वा स आयतनमैच्छत्स त्रिवृतमेवायतनम-
चायत्प्राणांस्ततः प्रजा असृजत तत ऊर्ध्वो ऽन्य[8] उदतृणत्पञ्चदशो
15 ऽवाङन्यो[9] ऽवातृणत्पञ्चदशो य ऊर्ध्व उदतृणत्स पूर्वपक्षस्तेन देवान-
सृजत तमूर्ध्वमाप्यायमानं देवा ऊर्ध्वा अन्वाप्यायन्त यो ऽवाङवातृ-
णत्सो[10] ऽपरपक्षस्तेनासुरानसृजत तमपध्वंसमानमसुरा अवाञ्चो[11] ऽनु-
प्राध्वंसन्त दक्षिणं हस्तमनु देवानसृजत[12] ते वीर्यावन्तो ऽभवन्सव्यं
हस्तमन्वसुरांस्ते मृद्रा अभवंस्तस्माद्दक्षिणो ऽर्ध[13] आत्मनो वीर्यावत्त-
20 रस्सत्येन[14] देवानसृजत ते सत्यमभवन्ननृतेनासुरांस्ते ऽनृतमभवन्नह्वा

---

[1] D माना [2] So D; Ch विधे त्वम°; desgl. Kap. S. 8, 13; cf. Mâitr. S. 1, 9, 1 a. E. [3] Damit endigt Kap. 8 und folgt eine lange Lücke. [4] So corr. die Mss. उत्या° [5] So corr. Ch हविबाना° D हविर्वाना° [6] So Ch; D मरुतो तापश्च; cf. Mâitr. S. 1, 9, 2. [7] D व्यधत्तस्य [8] Ch यय [9] D वाजन्यो [10] So corr. Ch वाध्वातृणत्सो D वाजावातृणत्सा [11] D मानमस्य वा आवांचो Ch तमम-ध्वंसमानमसुरा अवांचे [12] D हस्वमनु देवानासृ° [13] So Ch; D व [14] So Ch; D वत्तरस्मा तेन

देवानसृजत ते शुक्लं[1] वर्णमपुष्यन्नाथासुराँस्ते कृष्णा अभवन्स वै तदे-
वैच्छद्यस्मिन्होष्यामीति स इन्द्रमेव वीर्यमन्तरात्मन्नपश्यत्सर्वमन्यज्जा-
तमासीत्स इन्द्रं गच्छ स्वाहेत्यपानीद्वीर्यं[2] वै प्राणो वीर्यमिन्द्रो वीर्य
एव वीर्यमादधात्ते[3] चतुर्होत्रा सोमगृहपतयो[4] न्यसीदन्निन्द्रं जनया-
मेति[5] तेषां पृथिवी होतासीद् द्यौरध्वर्युस्त्वष्टाग्निर्मित्र[6] उपवक्ता त  5
एतौ ग्रहा अगृह्णत त आयतनमैच्छँस्त एकविंशमेवायतनमचायँस्त
इन्द्रमजनयँस्ते पञ्चहोत्रा वरुणगृहपतयो न्यसीदन्स्वरयामेति तेषा-
मग्निर्होतासीदश्विनाध्वर्यू यदश्विना तेन पञ्चहोत्रा[7] रुद्रो ऽग्नीद्बृहस्प-
तिरुपवक्ता[8] त एतौ ग्रहा अगृह्णत त आयतनमैच्छँस्ते त्रिणवमेवा-
यतनमचायँस्ते[9] स्वरायँस्ते[10] सेतुं कृत्वा तत्पशवो ऽसृज्यन्त तान्देवता-  10
भ्यो ऽनयन्यमायाश्वमग्नये[11] हिरण्यं रुद्राय गां बृहस्पतये वास उत्ता-
नायाङ्गिरसायाप्राणात्प्रजापतये[12] पुरुषम् ॥ ११ ॥ cf. Mâitr. S. 1, 9, 3. 4.

तस्य[13] यमस्याश्वं प्रतिजगृहुषो ऽर्धमिन्द्रियस्यापाक्रामत्स एतेन
प्रत्यगृह्णात्सो[14] ऽर्धमिन्द्रियस्योपाधत्त य एतद्विद्वानश्वं प्रतिगृह्णात्य-
र्धमिन्द्रियस्योपधत्ते[15] य एतदविद्वान्प्रतिगृह्णात्यर्धमस्येन्द्रियस्यापक्रा-  15
मति तस्याग्नेर्हिरण्यं[16] प्रतिजगृहुषस्तृतीयमिन्द्रियस्यापाक्रामत्स एतेन
प्रत्यगृह्णात्स तृतीयमिन्द्रियस्योपाधत्त[17] य एतद्विद्वान्हिरण्यं प्रतिगृ-
ह्णाति तृतीयमिन्द्रियस्योपधत्ते य एतदविद्वान्प्रतिगृह्णाति तृतीय-
मस्येन्द्रियस्यापक्रामति तस्य रुद्रस्य गां प्रतिजगृहुषश्चतुर्थमिन्द्रिय-
स्यापाक्रामत्स[18] एतेन प्रत्यगृह्णात्स[19] चतुर्थमिन्द्रियस्योपाधत्त य एत-  20

---

[1] So Ch; D शुक्रं [2] So Ch; D स्वाहेतुपा° [3] So D; Ch एवमदधातु [4] So D; Ch चेत्तर्होत्रा सोम° [5] So Ch; D मेति [6] So corr. Ch मिंत्रा; D मिंत्र [7] Ch होता [8] Ch ग्निर्बृ° [9] Ch त्रिणवासेवायतमचायेस्ते [10] D सुरायँस्ते; Ch गस्तो [11] D याद्वामग्नये [12] Ch उत्तारा° प्राणात्प्र° D उत्ताना° प्राणात्प्र° [13] Dies Kap. collat. mit St fol. 30—32, T1 und Brl fol. 82; nach diesen Mss. auch accentuirt. [14] D und Ch प्रतिगृह्णा° [15] Ch त्यर्धमस्येन्द्रियस्यापक्रामति cet. (also Lücke in Ch). [16] St तस्याग्निं [17] W 1 β पाधत्ते; Ch पधत्ते य एतदविद्वान्हि° [18] D पक्रमत्स; T 1, Brl पक्रामत्स; desgl. Ch, W 1 β, ohne Acc. [19] Ch प्रतिगृह्णात्स

द्विद्वान्गां प्रतिगृह्णाति चतुर्थमिन्द्रियस्योपधत्ते[1] य एतदविद्वान्प्रति-
गृह्णाति चतुर्थमस्येन्द्रियस्यापक्रामति ॥ तस्य बृहस्पतेर्वासः[2] प्रतिज-
गृहुषः पञ्चममिन्द्रियस्यापाक्रामत्स[3] एतेन प्रत्यगृह्णात्स पञ्चममिन्द्रि-
यस्योपाधत्त य एतद्विद्वान्वासः प्रतिगृह्णाति पञ्चममिन्द्रियस्योप-
5 धत्ते[4] य एतदविद्वान्प्रतिगृह्णाति पञ्चममस्येन्द्रियस्यापक्रामति त-
स्योत्तानस्याङ्गिरसस्याप्राणात्प्रतिजगृहुषः षष्ठमिन्द्रियस्यापाक्रामत्स[5]
एतेन प्रत्यगृह्णात्स[6] षष्ठमिन्द्रियस्योपाधत्त य एतद्विद्वानप्राणात्प्रति-
गृह्णाति[7] षष्ठमिन्द्रियस्योपधत्ते[8] य एतदविद्वान्प्रतिगृह्णाति षष्ठम-
स्येन्द्रियस्यापक्रामति तस्य प्रजापतेः पुरुषं प्रतिजगृहुषस्सप्तममिन्द्रि-
10 यस्यापाक्रामत्स[9] एतेन प्रत्यगृह्णात्स[10] सप्तममिन्द्रियस्योपाधत्त य
एतद्विद्वान्पुरुषं प्रतिगृह्णाति[11] सप्तममिन्द्रियस्योपधत्ते[12] य एतदवि-
द्वान्प्रतिगृह्णाति[11] सप्तममस्येन्द्रियस्यापक्रामति ॥ क इदं कस्मा अदा-
त्कामः कामायेति कामो हि दाता कामः प्रतिग्रहीता कामस्समुद्रमा-
विशदिति समुद्र इव[13] हि कामो ऽपरिमितः कामेन त्वा प्रतिगृह्णा-
15 मि कामैतत्त इति कामेनैव[14] प्रतिगृह्णाति कामे प्रतिष्ठापयति न ह
वै तस्मिन्नमुष्मिंल्लोके दक्षिणामिच्छन्ति य एवं विद्वान्दक्षिणां प्रति-
गृह्णाति यस्तं देवं वेद यो ऽस्यै दक्षिणा अनयत्स तावदाप्नोति याव-
द्दक्षिणानां नेत्रं[15] य उ तान्वेद[16] येभ्यस्स तदनयद्दक्षिणीयो[17] भवति
यस्तं प्रतिग्रहं[18] वेद येन तं प्रत्यगृह्णन्वसीयान्भवति प्रतिगृह्य वसी-
20 यांसो हि तं प्रतिगृह्याभवंस्ते[19] देवास्स्वृरित्वा[20] व्यतृषंस्ते[21] ऽविदुरमुतः-

---

[1] Ch पाधत्ते [2] St बृहस्पति° [3] Ch, Brl, W 1 β पक्रा° [4] Ch und W 1 पाधत्ते [5] Ch, Brl, W 1 पक्रा° [6] D, W 1 प्रतिग° [7] So T 1 und St; so eig. auch in Brl geschrieben, aber corr. in एतद्विद्वान्प्राणात्प्रति°; desgl. Ch und W 1, ohne Acc.; D न्प्राणात् [8] Ch षष्ठमस्ये° [9] Ch, Brl, W 1 पक्रा° [10] Ch प्रतिग° [11] D schiebt hier noch ein स ein. [12] Ch पाधत्ते [13] Ch इव [14] Ch कामेरेव [15] St नेत्रे [16] Ch उदान्वेद [17] Ch उदनय° W 1 तदानय° Brl तदनय° [18] Ch प्रतिगृहं [19] Ch वांस्ते [20] In den Mss. स्वर° ohne Acc.; Brl, T 1 स्वरित्वा; St स्वरृत्वा [21] W 1 व्यांस्ते

प्रदानाद्वा इहाजगामेति ॥ त ऋषीनब्रुवन्को नो यूयं प्रयच्छतेति सप्त-
होतॄन्केनायतनेनेत्यन्नैव[1] वेत्स्यथेति ते सप्तहोत्रायमंगृहपतयो[2] न्यृसी-
दन्संतनवामेति[3] तेषां महाहविर्होतासीत्सत्यहविरध्वर्युरचित्तपाजा अ-
ग्निर्दचित्तमना[4] उपवक्तानाधृष्यश्चाप्रतिधृष्यश्चाभिगरा अयास्य उद्गाता
त एतं ग्रहमगृह्णत[5] त आयतनमैच्छंस्ते त्रयस्त्रिंशमेवायतनमचायं-
स्तेनेदं[6] समतन्वंस्त्रयस्त्रिंशेन[7] च ह वा इदं सप्तहोत्रा च संततं यदिदं
देवमनुष्या[8] अन्यो ऽन्यस्मै प्रददति[9] सं[illegible]मस्मा अविच्छिन्नं प्रदीयते
य एवं वेद ॥ १२ ॥ cf. Mâitr. S. 1, 9, 4. 5.

प्रजापतिर्दशहोता[10] दर्शपूर्णमासौ चतुर्होता चातुर्मास्यानि पञ्च-
होता सौम्यो ऽध्वरस्सप्तहोताग्निहोत्रं दशहोता दर्शपूर्णमासौ चतुर्होता
पशुयज्ञष्षड्ढोता सौम्यो ऽध्वरस्सप्तहोता प्राणो दशहोता चक्षुश्चतु-
र्होता[11] श्रोत्रं पञ्चहोता[12] वाक्चात्मा च सप्तहोतायुषे कमग्निहोत्रं हूयते
सर्वमायुरेति य एवं वेद चक्षुषे कं पूर्णमा इज्यते न चक्षुषो गृहये[13]
य एवं वेद श्रोत्राय कममावस्येज्यते न श्रोत्रस्य गृहये य एवं वेद ॥
वाचे चात्मने च कं सौम्यो[14] ऽध्वर इज्यते न वाचो नात्मनो गृहये य एवं
वेद प्रजापतिर्दशहोतैकस्सन्भूयिष्ठभाग्व्याहृतीनामुतैकस्सन्बहुर्भवति[15] य
एवं वेद तेजसे कं पूर्णमा इज्यत आग्नेयो वै ब्राह्मणो गायत्रो ऽग्निर्गा-
यत्रच्छन्दास्स्वे एव देवते सप्रस्थे अकर्नास्यान्यो[16] योगक्षेमस्येशे य एवं
वेदायुषे कममावस्येज्यते सर्वमायुरेति य एवं वेद स्वर्गाय कं सौम्यो
ऽध्वर इज्यते स्वर्गमेव तेनैति ॥ १३ ॥ cf. Mâitr. S. 1, 9, 5.

यः प्रजया पशुभिरिव प्रभवेद्वरासीं परिधाय तप्तं[17] पिबन्द्वादश रा-

---

[1] D सप्तहोत्रोन्न्वेनाय° St सप्तहोत्रान; Ch सप्तहोतृन्केनायतनेनेत्यन्नेवेत्स्य° [2] St सप्तहोता° [3] Ch म्मिति [4] D und St माना; hier bricht T 1 ab, Lücke. [5] D एतद्ग्रह° [6] Br1 यस्तिनेदं [7] Ch समतन्वा त्रय° [8] Br1 देवमनुष्या [9] W 1 प्रददाति [10] D पतिं दश° [11] D र्होत्रा [12] D होत्रा [13] गृहये nach Delbrück (mündlich) wohl ein Infinitiv, cf. तुजये (gerade nach न). [14] Ch सोम्ये [15] So corr. Ch मुतैकस्मन्बहुर्भ° D मुभेकस्संतहुर्भ° [16] So Ch; D अकर्णा [17] So Ch; D सोस्परिधाय तस्तं

चीरधश्शयीत[1] द्वादश्याः प्रातः प्रादुष्कृत्य दशहोतारं व्याचक्षीतामिथुनो
हि वा एषो ऽथ न प्रभवति प्रजापतिर्दशहोता[2] दशधैवात्मानं[3] वि-
धाय मिथुनं कृत्वा प्र प्रजया प्र पशुभिर्जायते चतुर्होत्रा याजयेत्पुत्र-
कामं चतुर्होत्रा[4] वै देवा इन्द्रमजनयन्निन्द्रियं पुत्रः पुत्रमेवास्मै जन-
5 यति न त्वेनमपरो ऽनुजायते सर्वेण हीन्द्रियेण सर्वेण वीर्येण जायते
वरो दक्षिणा वरो हि पुत्रश्चतुर्होत्रा याजयेद्राजानं संग्रामे[5] संयत्ते
चतुर्होत्रा वै देवा इन्द्रमजनयन्यतरेषामिन्द्रो भवति ते संग्रामं जय-
न्तीन्द्रमेवास्मै जनयति जयति संग्रामं यत्तत्र विन्दते[6] ततो दक्षिणा
समृद्ध्यै पञ्चहोत्रा याजयेत्पशुकामं पञ्चहोत्रा वै देवाः पशूनसृजन्त
10 सर्वानेवास्मै पशूञ्जनयति तस्यैताश्चतस्रो दक्षिणा अश्वो हिरण्यं गौ-
र्वासस्सप्तहोत्रा याजयेद्यो यज्ञस्य संस्थामनु पापीयान्स्याद्धि वा एष
च्छिनत्ति यो यज्ञस्य संस्थामनु पापीयान्भवति पराङेव संक्रामति
सप्तहोत्रा वै देवास्स्वरायन्सप्तहोत्रेदं समतन्वन्समेव तनोति न ततः
पापीयान्भवति यादृङ्ङिमन्यजते[7] यच्चतुर्होतॄननुसवनं[8] तर्पयितव्यान्वेद
15 तृप्यति प्रजया पशुभिरुपैनं सोमपीथो नमति ॥ दशहोतारं व्याख्याय
बहिष्पवमानेनोद्गायेत्प्रजापतिर्दशहोता प्रैव जनयति चतुर्होतारं व्या-
ख्यायाज्यैरुद्गायेच्चतुर्होत्रा वै देवा इन्द्रमजनयन्निन्द्रमेवास्मै[9] जनयति
सेन्द्रं तत्सवनं[10] करोति पञ्चहोतारं व्याख्याय माध्यंदिनेन पवमाने-
नोद्गायेत्पञ्चहोत्रा वै देवा असुरान्प्राणुदन्त[11] पञ्चहोत्रा पशूनसृजन्त
20 भ्रातृव्यमेव पराणुद्य पशून्सृजते सप्तहोतारं व्याख्यायार्भवेण[12] पवमा-
नेनोद्गायेत्सप्तहोत्रा वै देवास्स्वरायन्सप्तहोत्रेदं समतन्वन्समेव तनोति ॥
दशहोतारं सामिधेनीष्वनूच्यमानासु व्याचक्षीत प्रजापतिर्दशहोता
प्रैव जनयति चतुर्होतारं प्रयाजानां पुरस्ताद्व्याचक्षीत चतुर्होत्रा वै

---

[1] Ch शयेत [2] D होत्रा [3] D दशधैस्वा° [4] D चातु° [5] Ch संग्राम्ये
[6] So Ch; D विन्देत [7] So meine Vermuthung. Ch यादृङ्मन्यजते; D यादृंमन्यजते
[8] Ch यच्चतुर्होत्राननुसवनं; D यश्चतुर्होत्रोननुसवंनं [9] Ch मजयन्नि° [10] D सवंनं
[11] Ch प्रणुदत [12] D यान्भवेण; Ch यार्भवेन

देवा इन्द्रमजनयन्निन्द्रमेवास्मै जनयति सेन्द्रं यज्ञं करोति पञ्चहोतारं
हविषामवदीयमाने व्याचक्षीत पञ्चहोत्रा वै देवा असुरान्प्राणुदन्त
पञ्चहोत्रा पशूनसृजन्त भ्रातृव्यमेव प्रणुद्य पशून्सृजते सप्तहोतारम-
नुयाजानामुपरिष्टाद्व्याचक्षीत सप्तहोत्रा वै देवास्स्वरायन्सप्तहोत्रेदं स-
मतन्वन्समेव तनोति चतुर्होत्रा पूर्णमासे[1] हवींष्यासन्नान्यभिमृशेच्च- 5
तुर्होत्रा वै देवा इन्द्रमजनयन्प्रजननं पूर्णमाः प्रैव जनयति पञ्चहोत्रा-
मावस्यायां हवींष्यासन्नान्यभिमृशेत्पञ्चहोत्रा वै देवास्स्वरायन्स्वर्ग्या-
मावस्या स्वर्गस्यैवैष लोकस्य परिग्रहः ॥ १४ ॥ cf. Mâitr. S. 1, 9, 5. 6.

अन्नं वै चतुर्होतारोऽन्नवान्भवति य एवं वेद यदेक एव चतुर्हो-
तेत्याहुः कस्मात्सर्वे चतुर्होतार उच्यन्त इति चत्वारो वा एते यज्ञास्ते- 10
षां चत्वारो होतारस्तदेषां चतुर्होतृत्वं[2] संवत्सरं चतुर्णामेको[3] नाश्नीया-
त्तदेषां व्रतमेषा[4] वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतारो[5] ऽन्नाद्यायैवैतां[6]
विदुस्तेजसे वीर्याय सर्पराज्ञ्या[7] ऋग्भिर्दशमेऽहन्नुद्गातोद्गायेदियं वै
सर्पराज्ञ्यन्नं[8] चतुर्होतारोऽन्नमेवाप्त्वान्नमवरुन्द्धे[9]ऽप्रयुक्ता वा एतेऽन-
वरुद्धा यच्चतुर्होतारो[10] यच्चतुर्होतॄन्होता[11] वदति तानेव प्रयुङ्क्ते तान- 15
वरुन्द्ध एतद्वै देवानां स्तोत्रमनिरुक्तं यत्सर्पराज्ञ्या[12] ऋचस्तस्यै[13] तदु-
क्थमनिरुक्तं[14] यच्चतुर्होतारो[15] मनसा प्रस्तौति मनसोद्गायति मनसा
प्रतिहरति रेत एवैतदुद्गातारः प्रसिञ्चन्ति यच्चतुर्होतॄन्होता[16] वदति रेत
एव प्रसिक्तं होता प्रजनयत्यग्न्याधेये[17] व्याचक्षीत ब्रह्मणो वा एतदु-
दरणं[18] यदग्न्याधेयं ब्रह्मण एतदुदरणं यच्चतुर्होतारो[19] ब्रह्मण एतदुदरणं 20
यदसा आदित्य उदेति सर्वमेव ब्रह्म सृजते[20]ऽथैते संभारास्सह वै देवानां
चासुराणां च यज्ञौ प्रतता आस्तां यदेव देवा अकुर्वत तदसुरा अकुर्वत

---

[1] So Ch; D मासौ [2] D चातु° [3] Ch मेकेना° [4] So Ch; D मेषां [5] D यश्च° [6] So D; Ch नद्यायेवैतं [7] Ch ज्ञ्य [8] D ज्याचं [9] D न्तमेवा° [10] D यश्च° [11] So corr. D यश्चतुर्हात्रिर्होता; Ch यश्चतुर्होत्रून्होत्रा [12] Ch ज्ञ्य [13] So Ch; D ऋचस्तेभ्यो [14] D तदुत्थम° Ch तदुक्तम° [15] So Ch; D यश्च [16] So corr. D यश्चतुर्होत्रोर्होता; Ch यच्चतुर्होत्रून्होता [17] So D; Ch धेयौ [18] So Ch; D एतमुदरणं [19] So Ch; D यश्च° [20] Ch सृजेते

ते देवा यज्ञमादाय व्युत्क्रामंस्तमुपरि समभरंस्तेनासुरान्पराभावयन्यत्स-
मभरंस्तत्संभाराणां[1] संभारत्वं सम्भृतसोम एतेषां चतुर्भिश्चतुर्भिः प्रचरि-
ष्यञ्जुहुयात्पूर्व एव यज्ञं पूर्वो देवता गृह्णाति सयज्ञो[2] भवत्ययज्ञ इतरो
दीक्षायां वाचयेदेतावान्वै यज्ञो यावानेव यज्ञस्तं गृहीत्वा दीक्षते[3] द्वा-
5 दशाहे वाचयेदेतावान्वै यज्ञो यावान्द्वादशाहो यावानेव यज्ञो यावा-
न्द्वादशाहस्तं गृहीत्वा[4] दीक्षते ऽथैताः पत्न्यो दक्षिणतो वै देवानामसुरा
यज्ञमभ्यजयंस्तेषामाग्नीध्रमनभिजितमासीत्तद्देवाः[5] पत्नीभिस्संप्रापद्य-
न्त ते ऽसुरा ह्लीकाः[6] पत्नीः प्रख्याय पुनरावर्तन्त[7] तान्देवास्ततो ऽनू-
त्थाय माध्यंदिनेन पवमानेनाभ्यजयन्यस्य[8] पत्नीर्विद्वानग्निर्भवत्यभि
10 भ्रातृव्यस्य गृहानभि पशूनारोहति नास्य भ्रातृव्यो गृहान्न पशूनभ्या-
रोहति यस्य पत्नीर्विद्वानग्नित्पात्नीवतस्य[9] यजति विद्वान्पत्नीं तर्प-
यति तृप्ता पत्नी रेतो धत्ते रेतसः प्रजाः प्रजायन्ते प्रजनिष्णुः प्रजया
च पशुभिश्च भवति ॥ १५ ॥ cf. Mâitr. S. 1, 9, 7. 8.

प्रजापतिः प्रजास्सृष्ट्वा[10] सो ऽकामयत यज्ञं[11] सृजेयेति[12] स एतं सप्तहोतारम-
15 पश्यत्तं मनसानुद्रुत्याजुहोत्तेन[13] यज्ञमसृजत सो ऽस्माद्यज्ञस्सृष्टः परा-
ङैत्तं ग्रहेणानूद्रुत्यागृह्णात्तद्ग्रहस्य ग्रहत्वं दीक्षिष्यमाणस्सप्तहोत्रा पुर-
स्ताज्जुहुयाद्यज्ञमेव सृष्ट्वालभ्य प्रतनुते[14] ग्रहो भवति यज्ञस्य सृष्टस्य
धृत्यै यज्ञं सृष्ट्वा सो[15] ऽकामयत दर्शपूर्णमासौ सृजेयेति स एतं चतु-
र्होतारमपश्यत्तं मनसानुद्रुत्याजुहोत्तेन[16] दर्शपूर्णमासावसृजत तौ
20 अस्माद्दर्शपूर्णमासौ सृष्टौ पराञ्चा ऐतां[17] तौ ग्रहेणानूद्रुत्यागृह्णात्तद्ग्र-
हस्य ग्रहत्वं दर्शपूर्णमासावालप्स्यमानश्चतुर्होत्रा पुरस्ताज्जुहुयाद्दर्श-

---

[1] So corr. D तेनसुरान्पराभवयन्यत्स°; Ch तेनासुरान्पराभवन्यन्स [2] So Ch; D सज्ञो [3] Ch दीचिते [4] So Ch; D हस्तद्गृहोत्वा [5] Ch भ्येजयंस्ते° [6] Ch ह्लीका; D ह्लोका [7] Ch पत्वो प्र° वर्तत ता दे° [8] Ch पवमानेन पवमानेनाभ्यजय° [9] Ch पत्नो विद्वानग्निः पा° [10] Dies Kap. auch mit W 1 β und T 1 collat. und darnach accentuirt. [11] Ch यज्ञो [12] D सृजेतेति [13] Ch नुद्दुत्या° [14] So T 1; desgl. D, ohne Acc.; W 1 प्रातनुते; Ch प्रतनोति [15] Dies Wort in den Mss. ohne Accent. [16] Ch नुद्दुत्या° [17] So T 1; die andern Mss. एतां

पूर्णमासा एवं सृष्ट्वालभ्य प्रतनुते ग्रहो भवति दर्शपूर्णमासयोस्सृष्ट-
योर्धृत्यै[1] दर्शपूर्णमासौ सृष्ट्वा सो[2] ऽकामयत चातुर्मास्यानि सृजेयेति
स एतं पञ्चहोतारमपश्यत्तं मनसानूद्धृत्याजुहोत्तेन[3] चातुर्मास्यान्यसृजत
तान्यस्माच्चातुर्मास्यानि सृष्टानि पराञ्च्यायंस्तानि[4] ग्रहेणानूद्धृत्यागृ-
ह्णात्तद्ग्रहस्य ग्रहत्वं चातुर्मास्यान्यालप्स्यमानः पञ्चहोत्रा पुरस्ताज्जुहु- 5
याच्चातुर्मास्यान्येव[5] सृष्ट्वालभ्य प्रतनुते[6] ग्रहो भवति चातुर्मास्यानां
सृष्टानां धृत्या अभिचरन्दशहोत्रा जुहुयान्नव वै पुरुषे[7] प्राणा नाभि-
र्दशमी प्राणानेवास्योपदासयति स्वकृत इरिणे प्रदरे वा जुहुयादेतद्वा
अस्या निर्ऋतिगृहीतं निर्ऋत्यैवैनं ग्राहयति वषट्करोत्येतद्वै वाचः क्रूरं
वाच एवैनं क्रूरेण[8] प्रवृश्चत्यङ्गिरसश्च वा आदित्याश्च स्वर्गे लोके ऽस्प- 10
र्धन्त त आदित्या एतं पञ्चहोतारमपश्यंस्तं मनसानूद्धृत्याजुहवुस्तत[9]
आदित्यास्स्वर्गं लोकमायन्नपाङ्गिरसो[10] ऽभ्रंशन्त[11] ते ऽङ्गिरस आदि-
त्यानब्रुवन्क्व[12] स्थ कथं वो हव्यं[13] वक्ष्याम इति छन्दस्स्वित्यब्रुवन्गा-
यत्र्यां वसवस्त्रिष्टुभि रुद्रा जगत्यामादित्या इत्यच्च वै देवेभ्यस्सद्यो ह-
व्यमुह्यते य एवं देवानुपदेशनाद्वैदोपदेशनवान्भवति[14] यस्स्वर्गकाम- 15
स्स्यात्स एतं पञ्चहोतारं मनसानूद्धृत्य[15] जुहुयात्पञ्च वा ऋतव ऋत-
वस्संवत्सरस्संवत्सरस्स्वर्गो लोक ऋतुष्वेव संवत्सरे प्रतिष्ठाय स्वर्गं
लोकमेति ॥[16] यो ऽब्राह्मणो विद्यामनूच्य नैव रोचेत स एतांश्चतुर्हो-
तॄनरण्यं[17] परेत्य दर्भस्तम्बमुद्ग्रथ्य[18] ब्राह्मणं दक्षिणतो निषाद्य व्याच-
क्षीतैतद्वै देवानां ब्रह्मानिरुक्तं यच्चतुर्होतारस्तदेनं[19] निरुच्यमानं प्र- 20

---

[1] D योर्वृत्यै  [2] Dies Wort in den Mss. ohne Accent.  [3] Ch नुद्धृत्या°
[4] Ch परांच्यायंस्तानि; D पराञ्च्यायैस्तानि  [5] D याञ्चा°  [6] D प्रतन्वते; Ch प्रतनोते
[7] T 1 पुंरुषो  [8] D schreibt क्रुरं und क्रुरेण  [9] Ch नुद्धृत्याजुहुवुस्तत  [10] So betont T 1; in W 1 लोकमाय° ohne Accent.  [11] T 1 भ्रंशयन्त  [12] Ch ब्रुवं त्वे
[13] So T 1; W 1 हव्यं  [14] D शनाद्वोचोपदेमनवान्  [15] Ch नुद्धृत्य; D नूद्धृत्या  [16] W 1 geht nur bis hierher, bricht dann ab; das Weitere nur nach T 1 accentuirt.
[17] So T 1; Ch रोचेते स एताञ्चतुर्हात्रनारण्यम्परेत्य; D एतांश्चतुर्हात्रीनरार्णां परित्य  [18] Ch दर्भस्तंभमुद्वथ्य; D दर्भस्तस्यमुद्वथ्य  [19] D यञ्च°

काशं[1] गमयति दर्भस्तम्बमुद्ग्रथ्य[2] व्याचष्टे ऽग्निर्वै दर्भस्तम्बो[3] ऽग्निमेवं[4]
व्याचष्टे ब्राह्मणो दक्षिणत आस्ते ब्राह्मणो वै प्रजानामुपद्रष्टोपद्रष्टृम-
त्येव[5] व्याचष्ट ईश्वरं वा एता उभौ यशो ऽर्तोयो[6] व्याचष्टे यश्च[7] दक्षि-
णत आस्ते[8] यो दक्षिणत आस्ते तस्मै वरं दद्याद्यदेव[9] तत्र यश ऋ-
5 च्छति तद्वरेणावरुन्द्धे ॥ १६ ॥

ऐन्द्राग्नमेकादशकपालं निर्वपेद्भ्रातृव्यवानोजो वै वीर्यमिन्द्राग्नी
ओजसैवैनं वीर्येणाभिभवत्यैन्द्राग्नमेकादशकपालं[10] निर्वपेत्सजातकाम
ओजो वै वीर्यमिन्द्राग्नी ओजसैवैनान्वीर्येणाधस्तादुपास्यते[11] न वा
एत एतं प्रयान्तमकामा अनुप्रयान्त्योजो वीर्यमिन्द्राग्नी यदैन्द्राग्न
10 ओज एवैषां[12] वीर्यं संगृह्य प्रयाति तं प्रयान्तमकामा अनुप्रयान्त्यै-
न्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः प्रजापतेर्वै प्रजाः सिसृक्षमा-
नस्य[13] तस्येन्द्राग्नी प्रजा अपागूहतां सो ऽवेदिन्द्राग्नी वै मे प्रजा
अपाघुक्षतामिति स एतमैन्द्राग्नमपश्यदेकादशकपालं[14] ततो वै तस्मै[15]
तौ प्रजाः पुनरदत्तामिन्द्राग्नी एतस्य प्रजामपगूहतो यो ऽलं प्रजायै
15 सन्प्रजां न विन्दते ता एव भागधेयेनोपधावति ता अस्मै प्रीतौ प्रजां
पुनर्दत्तः पुनर्दातृमती याज्यानुवाक्ये भवतस्समृद्ध्या ऐन्द्राग्नमेकादश-
कपालं निर्वपेत्संग्राममभिप्रयानोजो वै वीर्यमिन्द्राग्नी ओजसैवैनं
वीर्येणाभिप्रयात्यैन्द्राग्नमेकादशकपालं निर्वपेत्संग्राममागत्यौजो वै
वीर्यमिन्द्राग्नी ओजसैवैनं वीर्येण जयत्यैन्द्राग्नमेकादशकपालं निर्वपे-
20 त्संग्रामं जित्वौजसा वा एष वीर्येण व्यृध्यते यस्संग्रामं जयति सर्वेण
हीन्द्रियेण सर्वेण वीर्येण जयत्योजो वीर्यमिन्द्राग्नी यदैन्द्राग्न इन्द्राग्नी
एवैनमोजसा वीर्येण समर्धयत ऐन्द्राग्नमेकादशकपालं निर्वपेत्पौष्णं

---

[1] D प्रुकासं [2] Ch दर्भस्तंभमु॰ [3] Ch स्तंभो [4] D ग्निमभ्येव [5] D मभ्येव
[6] Ch एत उभो यं चोतो॰ [7] T1 यंश्च; D यश्च; Ch यच्च [8] Dies Wort ohne
Accent in T1. [9] D fügt hier तं ein. [10] Ch मेकादशमेकादशकपालचि॰
[11] Mss. सैवैवान्वी॰ cf. Mâitr. S. 2, 1, 1 a. A. [12] D ओजवैषां [13] D मागास्य
[14] D पश्यमेका॰ [15] D वै तोस्मै

चरुं सनिं[1] प्रयन्नोजो वै वीर्यमिन्द्राग्नी ओजसैव वीर्येण प्रैति पूषा वीर्यस्यानुप्रदाता यत्पौष्णः पूषैवास्मै[2] वीर्यमनुप्रयच्छत्यैन्द्राग्नमेकादश-कपालं निर्वपेत्पौष्णं चरुं क्षेत्रस्य पतये चरुं यः कामयेतास्यां मे ज-नतायामृध्येतेत्योजो[3] वै वीर्यमिन्द्राग्नी यदैन्द्राग्न इन्द्राग्नी एवास्मा ओजसा वीर्येण लोकं विन्दतः पूषा वीर्यस्यानुप्रदाता यत्पौष्णः पूषै- 5
वास्मै वीर्यमनुप्रयच्छतीयं[4] क्षेत्रस्य पतिर्यत्क्षेत्रपत्यो ऽस्यामेव प्रति-तिष्ठति ॥ १७ ॥ cf. Mâitr. S. 2, 1, 1.

कया[5] शुभा सवयसस्सनीडास्समान्या मरुतस्संमिमिक्षुः ।
कया मती कुत एतास एते ऽर्चन्ति शुष्मं वृषणो[6] वसूया ॥
कस्य ब्रह्माणि जुजुषुर्युवानः को अध्वरे मरुत[7] आववर्त । 10
श्येनाँ इव ध्रजतो[8] अन्तरिक्षे केन महा मनसा रीरमाम ॥
कुतस्त्वमिन्द्र माहिनस्सन्नेको[9] यासि सत्पते किं त इत्था ।
संपृच्छसे समराणश्शुभानैर्वोचेस्तन्नो[10] [11] हरिवो यत्ते अस्मे ॥
ब्रह्माणि मे मतयश्शं सुतासश्शुष्म इयर्ति प्रभृतो मे अद्रिः ।
आशासते प्रतिहर्यन्त्युक्थेमा[12] हरी वहतस्ता नो अच्छ ॥ 15
अतो वयमन्तमेभिर्युजानास्स्वक्षत्रेभिस्तन्वश्शुम्भमानाः ।
महोभिरेताँ उपयुज्महे न्विन्द्र स्वधामनु हि नो बभूथ ॥
क्व[13] स्या वो मरुतस्स्वधासीद्यन्मामेकं समधत्ताहिहत्ये ।
अहं ह्युग्रस्तविषस्तुविष्मान्विश्वस्य शत्रोरनमं वधस्नैः[14] ॥

---

[1] Ch सनिम्प्र° [2] Von hier bis वीर्यमनुप्रयच्छतीयं (excl.) in D nicht vorhanden; nur nach Ch gegeben. [3] So meine Correctur; cf. dazu das entsprechende Mâitr. S. 2, 2, 9 जने म ऋध्येतेति; Ch liest मध्यैतेताभ्योजो (ein andres Ms. für die Stelle nicht vorhanden, da in D die Lücke). [4] So D; Ch तीयत्क्षे° [5] Dies Kap. collat. mit W 1, T 7 und Brl fol. 113. 114; accent. nach Brl. [6] W 1 वृषयो [7] W 1 मरुतो [8] Ch प्रजतो; D प्रजता; W 1 व्रजतो; T 7 vielleicht वंजतो [9] Ch महिनस° [10] D und W 1 समरणाश्शु° [11] T 7 वोचिस्तन्वो; in Brl शुभानै° bis यत्ते ohne Accent. [12] D त्युक्तेमा; Ch त्यक्तेमा [13] So T 7 und Brl fol. 113; W 1 क्व २ स्या [14] So Brl, W 1; T 7 रनमं वदस्नैः; Ch रनसं वधस्नैः; D रनमं वधास्नैः

भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः ।
भूरीणि[1] हि कृणवामा[2] शविष्ठेन्द्र क्रत्वा मरुतो यद्वशाम ॥
वधीं वृत्रं मरुत इन्द्रियेण स्वेन भामेन तविषो बभूवान्[3] ।
अहमेता मनवे विश्वश्चन्द्रास्सुगा अपश्चकर वज्रबाहुः ॥
5 अनुत्तमा ते मघवन्नकिर्नु[4] न त्वावाँ[5] अस्ति देवता विदानः ।
न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ॥
एकस्य चिन्मे विभ्वस्त्वोजो[6] या नु दधृष्वान्कृणवै मनीषा ।
अहं ह्युग्रो[7] मरुतो विदानो यानि च्यवमिन्द्र इदीश एषाम् ॥
अमन्दन्मा मरुतस्स्तोमो अत्र यन्मे नरश्श्रुत्यं ब्रह्म चक्र ।
10 इन्द्राय वृष्णे सुमखाय मह्यं सख्ये सखायस्तन्वे तनूभिः ॥
एवेदेते[8] प्रति मा रोचमाना अनेद्यश्श्रव एषो दधानाः[9] ।
संचक्ष्या मरुतश्चन्द्रवर्णा अच्छान्त मे छदयाथा[10] च नूनम् ॥
को न्वत्र मरुतो मामहे वः प्रयातन सखीँरच्छा[11] सखायः ।
मन्मानि चित्रा अपिवातयन्त एषां भूत नवेदा म ऋतानाम् ॥
15 आ यद्दुवस्याद्दुवसे न कारुरस्मांश्चक्रे[12] मान्यस्य मेधा ।
ओ षु वर्त मरुतो विप्रमच्छेमा ब्रह्माणि जरिता[13] वो अर्चत् ॥
एष वस्स्तोमो मरुत[14] इयं गीर्मान्दार्यस्य मान्यस्य कारोः ।
एषायासीष्ट[15] तन्वे वयां[16] विद्यामेषं वृजनं जीरदानुम् ॥ ॥ १९ ॥

cf. RV 1, 165; Mâitr. S. 4, 11, 3.

मरुतो[17] यद्ध वो दिवो[18] यूयमस्मानिन्द्रं वः ॥

---

[1] T 7 भूरिणि; desgl. D, ohne Accent. [2] D कृणवाम [3] Ch बभूवम [4] Ch कि [5] W त्वावां [6] W 1 विभ्वस्तोजो; D विद्वस्त्वोजो [7] Brl fol. 114 अहं २ ग्रो [8] So corr. Brl एवेदंते [9] Brl दधानः; desgl. W 1, ohne Accent. [10] So D, nur ohne Accent; Brl und T 7 च्छदयथा; desgl. W 1, ohne Accent; Ch श्छदयथा [11] T 7 und W 1 रच्छ [12] T 7 रस्मीश्चक्रे [13] D जरित [14] Brl मारुतो [15] Brl und St एषायासीष्ट; desgl. Ch und D, ohne Accent; T 7 एषाया-सीष्ठं [16] Ch तन्वो वयं [17] Dies Kap. collat. mit T 1 und Brl fol. 50. 51; darnach auch accentuirt. [18] Ch दिवो दिवो

आ ते शुष्मो वृषभ एतु पश्चादोत्तरादधरादा[1] पुरस्तात् ।
आ विश्वतो अभि समेत्वर्वाङिन्द्र द्युम्नं स्वर्वद्धेह्यस्मे[2] ॥
त्वा युजा तव तत्सोम सख्य इन्द्रो[3] अपो मनवे सस्रुतस्कः[4] ।
अहन्नहिमरिणात्सप्त सिन्धूनपावृणोदपिहितेव खानि ॥
ऋदूदरेण सख्या सचेय यो मा न[5] रिष्येद्धर्यश्व पीतः । 5
अयं यः सोमो[6] न्यधाय्यस्मे[7] तस्मा इन्द्रं प्रतिरमेम्यायुः ॥
अग्ने नक्षत्रमग्ने बृहन्नु दु त्यं चित्रं देवानाम् ॥
अयुक्त सप्त शुन्ध्युवः सूरो[8] रथस्य नप्त्यः ।
ताभिर्याति स्वयुक्तिभिः ॥
सप्त त्वा हरितो रथे वहन्ति देव सूर्य । 10
शोचिष्केशं विचक्षण ॥
अयं पूषा रयिर्भगः सोमः पुनानो अर्षति[9] ।
पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे[10] ॥
वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान्[11] ॥ 15
यथा ह त्यद्वसवः ॥
चक्षुर्मे धेहि चक्षुषे चक्षुर्विख्यै तनूभ्यः ।
सं चेदं वि च पश्येम ॥
सुसंदृशं त्वा वयं प्रतिपश्येम सूर्य ।
विपश्येम नृचक्षसः ॥ 20
अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते जिह्वा ऋतजात पूर्वीः ।
तिस्र उ ते तन्वो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन् ॥

---

[1] Brl und T 1 पश्चादुत्तरा° [2] स्वर्वद् in T 1 und Brl ohne Accent. [3] D ऐंद्रो [4] Brl und T 1 betonen ससुतस्कः [5] D मास [6] W 1 सोम [7] Ch न्यधायस्मे [8] Ch शुंध्यवस्सूरो [9] D अद्भिः [10] D तते [11] Brl बद्धाः

5 विद्मा ते अग्ने त्रेधा त्रयाणि[1] विद्मा ते सद्म विभृतं पुरुत्रा ।
विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ ॥
इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तिमत् ।
छर्दिर्यच्छ[2] मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥
अतिविद्धा विथुरेणा चिदस्त्रा त्रिः सप्त सानु संहिता गिरीणाम् ।
न तद्देवो न मर्त्यस्तुतुर्याद्यानि प्रवृद्धो[3] वृषभश्चकार ॥
यस्तस्तम्भ सहसा वि ज्मो अन्तान्बृहस्पतिस्त्रिषधस्थो रवेण ।
तं प्रत्नास ऋषयो दीध्यानाः पुरो विप्रा दधिरे मन्द्रजिह्वम् ॥
विभिद्या पुरं शयथेमपाचीं निस्त्रीणि साकमुदधेरकृन्तत्[4] ।
10 बृहस्पतिरुषसं[5] सूर्यं गामर्कं विवेद स्तनयन्निव द्यौः ॥ ॥ १९ ॥

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायामुत्सीदनं नाम नवमं स्थानकं संपूर्णम्[6] ॥

---

अग्नावैष्णवमेकादशकपालं निर्वपेत्सारस्वतं चरुं बार्हस्पत्यं चरु-मभिचरन्वाभिचर्यमाणो वाग्निर्वै सर्वा देवता विष्णुर्यज्ञो[7] वाक्सर-
15 स्वती ब्रह्म बृहस्पतिरग्निनैवास्य[8] देवताभिर्देवताः प्रतिचरति[9] वि-ष्णुना यज्ञेन यज्ञं[10] सरस्वत्या वाचा वाचं बृहस्पतिना ब्रह्मणा ब्रह्म सममेव[11] कृत्वा यत्किंच ततः करोति तेनातिप्रयुङ्क्त एतामेव निर्वपेद-भिचरन्नग्निर्वै सर्वा देवता विष्णुर्यज्ञो वाक्सरस्वती ब्रह्म बृहस्पतिर-

---

[1] Ch und W1 त्रयानि [2] D कर्मियच्छ [3] D प्रवृच्छे [4] Brl und W1 कन्तम [5] Ch षसो [6] So die Unterschrift des Kapitels in Ch; in D lautet dieselbe इत्युत्सीदं नाम नवमं स्थानकं समाप्तम ॥ [7] Ch विष्णो° [8] Ch ग्निरैवास्य [9] So D; Ch प्रचरति; cf. TS 2, 2, 9, 7. [10] D यज्ञो [11] So Ch; D समामेव

ग्निनैवैनं देवताभिरभिप्रयुङ्क्ते विष्णुना यज्ञेन सरस्वत्या वाचा बृहस्प-
तिना ब्रह्मणा स्तृणुत[1] एनमाग्नावैष्णवमेकादशकपालं निर्वपेत्पशुमा-
लप्स्यमानो व्यृद्धेन वा[2] एष पशुना चरति यो देवताश्च यज्ञं चानव-
रुध्य[3] पशुमालभते ऽग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं
चावरुध्य[4] पशुमालभत आग्नावैष्णवमेकादशकपालं निर्वपेत्संग्रामे[5] 5
ऽग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनं यज्ञेन च जयति यदि
मन्येत प्रति पुरस्ताच्चरन्तीति द्वे अनुवाक्ये कुर्यादेकां याज्यां सममेव
द्वाभ्यां करोत्येकया[6] प्रयुङ्क्त आग्नावैष्णवं घृते चरुं निर्वपेदभिचर्यमा-
णो[7] ऽग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं[8] च मध्यतः प्रवि-
शति ॥ मिथुनं वा एतद्यद् घृतं[9] च तण्डुलाश्च धेन्वा घृतं पयो ऽनडु- 10
हस्तण्डुला[10] मिथुनेनैवात्मानमभितः पर्यूहते स्तृत्या आग्नावैष्णवं घृते
चरुं निर्वपेच्चक्षुष्कामो ऽग्नेर्वै मनुष्याश्चक्षुषा पश्यन्ति विष्णोर्देवता-
स्तौ[11] चक्षुषः प्रदातारौ ता एव भागधेयेनोपधावति ता अस्मै चक्षुः
प्रयच्छतो मिथुनं वा एतद्यद्घृतं[12] च तण्डुलाश्च धेन्वा घृतं पयो ऽनडु-
हस्तण्डुला मिथुनं चक्षुर्मिथुनेनैवास्मै मिथुनं जनयति घृते भवति 15
तेजो वै घृतं तेजश्चक्षुस्तेजसैवास्मिंस्तेजो दधात्याग्नावैष्णवमष्टाकपालं
निर्वपेत्प्रातस्सारस्वतं चरुं बार्हस्पत्यं चरुमाग्नावैष्णवमेकादशकपालं
मध्यंदिन एतौ च चरू आग्नावैष्णवं द्वादशकपालमपराह्ण[13] एतौ च
चरू यस्य भ्रातृव्यस्सोमेन यजेताग्निर्वै सर्वा देवता विष्णुर्यज्ञो वा-
क्सरस्वती ब्रह्म बृहस्पतिरग्निनैवास्य देवताभिर्देवता आप्नोति वि- 20
ष्णुना यज्ञेन यज्ञं सरस्वत्या वाचा वाचं बृहस्पतिना ब्रह्मणा ब्रह्म पु-
रोडाशैस्सवनानि कपालैश्छन्दांसि सैषाध्वरकल्या नामेष्टिर्यज्ञमेवैत-
याप्नोति तत्र यत्किंच ददाति तद्दक्षिणा मैत्रावरुणमेककपालमनुनि-

---

[1] Ch तृणुत [2] So Ch; D वृद्धेन ना [3] D चानवरुध्यै [4] Ch चावरुध्य व्ये oder व्यै; D चावरुध्यै व्यै [5] Ch ग्रामो [6] D करोत्यत्येकया [7] Ch मानो [8] Ch यज्ञश्च [9] Ch एतद्घृतं [10] D घृतस्पयो नडुहस्तात्ताला [11] So D; Ch देवास्तौ [12] So D; Ch एतद्घृतं [13] D पराह्ना; Ch पराह्

वपति यैवासौ मैत्रावरुणी वशानूबन्ध्या तामेव तेनाप्नोत्येककपालो
भवति न वै[1] पुरुषं कपालैराप्नुमर्हत्येकधैवैनमाप्नोति ॥ १ ॥
cf. Mâitr. S. 2, 1, 7.

देवा[2] वै सत्रमासत[3] यशस्कामा अग्निस्सोम इन्द्रस्ते[4] ऽब्रुवन्यन्नो
यश ऋच्छात्तन्नस्सहेति तेषां सोमं यश आर्छत्तस्मात्स यशस्वी स
5 गिरिमगच्छत्तस्मात्स गिरौ तमग्निरन्वागच्छत्ता अग्नीषोमौ समभव-
तामथेन्द्रो[5] ऽधृतश्शिथिल इवामन्यत[6] सो ऽन्वागच्छत्तो ऽग्नीं चैव
सोमं चानाथत तमेतयेष्ट्यायाजयतामग्नीषोमीयेणैकादशकपालेन[7]
तेजो वा अग्निरिन्द्रियं सोमस्तेज एवास्मिन्नग्निराग्नेयेनादधादिन्द्रियं[8]
सोमस्सौम्येन ततो वै सो ऽभवदेतेन यजेत बुभूषन्नग्नीषोमीयेणैका-
10 दशकपालेन तेजो वा अग्निरिन्द्रियं सोमस्तेज एवास्मिन्नग्निराग्नेये-
नादधातीन्द्रियं सोमस्सौम्येन भवत्येवाग्नीषोमीयमेकादशकपालं[9]
निर्वपेत्सर्वेभ्यः कामेभ्यो ब्राह्मणो ऽग्नीषोमौ वै ब्राह्मणस्य स्वा देवता
ता एव भागधेयेनोपधावति ता अस्मै सर्वान्कामान्प्रयच्छतो ऽग्नीषो-
मीयमष्टाकपालं निर्वपेच्छ्यामाकं वसन्ता ब्राह्मणो ब्रह्मवर्चसकामो
15 ऽग्नीषोमौ वै ब्रह्मवर्चसस्य प्रदातारौ ता[10] एव भागधेयेनोपधावति
ता अस्मै ब्रह्मवर्चसं प्रयच्छतो[11] वसन्ता यजेत वसन्तो वै ब्राह्मणस्य-
र्तुस्स्व एवर्तौ ब्रह्मवर्चसमवरुन्ध एवमिव वै ब्रह्मवर्चसं बभ्रिव[12]
क्षुद्रमिव हरितमिव[13] ब्रह्मवर्चसमेव संदधाति यदष्टाकपालस्तेनाग्ने-
यो यच्छ्यामाकस्तेन सौम्यस्तेनोभयस्मान्नैत्यग्नीषोमीये[14] याज्यानु-
20 वाक्ये भवतस्सौमाग्नी[15] संयाज्ये तेजो वा अग्निरिन्द्रियं सोमस्तेजसा
चैवेन्द्रियेण च ब्रह्मवर्चसमुभयतः परिगृह्यात्मन्धत्ते ॥ २ ॥ cf. Mâitr. S. 2, 1, 4.

---

[1] D न वा [2] Dies Kap. collat. mit Brl fol. 185. 186 und darnach accentuirt. [3] Brl मासते [4] So Ch; D इंद्रस्यो; Brl इन्द्रास्ते [5] Brl मथेन्द्रे [6] Brl शिथिलां इवामन्यत; Ch शिथिला इव मन्यंत [7] So corr. Ch येष्ट्या; D योष्ट्या; Brl येष्टायाजताम° [8] So Brl; Ch धादिंद्रियां; D धातीन्द्रियं [9] So Brl; desgl. Ch, ohne Accent; D भवत्तेवा° [10] D त [11] Ch प्रयच्छते [12] D पद्भिव [13] Ch मेव [14] Ch वोत्यग्नीषोमेये [15] Ch स्सोमाग्नी

अग्नये वैश्वानराय द्वादशकपालं निर्वपेद्यो ऽनन्नमद्याद्यो[1] वा जि-
घत्सेत्संवत्सरो[2] वा अग्निर्वैश्वानरस्संवत्सरेणैव पूतं स्वदितमत्ति यदि
जग्ध्वा निर्वपति संवत्सर एवास्मै जग्धं स्वदयत्यग्नये वैश्वानराय द्वादश-
कपालं निर्वपेद्यस्समान्तमभिद्रुह्येद्यो वाभिदुद्रुक्षेत्संवत्सरो वा अग्नि-
र्वैश्वानरस्संवत्सरायैष सममते यस्सममते संवत्सरमेवाप्त्वा काममव- 5
रुणमभिद्रुह्यत्यग्नये वैश्वानराय द्वादशकपालं निर्वपेद्यः प्रतिगृहीत-
स्स्यात्सनिकामस्संवत्सरो वा अग्निर्वैश्वानरस्संवत्सरायैतं प्रतिगृह्णन्ति
यं प्रतिगृह्णन्ति संवत्सरमेवाप्त्वा सातां सनिं वनुते ऽग्नये वैश्वानराय
द्वादशकपालं निर्वपेत्सनिं[3] निदधत्संवत्सरो वा अग्निर्वैश्वानरस्संवत्स-
रमेष प्रयुङ्क्ते यो याचति[4] संवत्सरमेव विमुञ्चति संवत्सरो वा एतद- 10
स्मै सनोति यद्वनुते[5] तमेव भागिनं करोति यमुत्तममार्जन्[6] स रज्जु-
मप्रियाय भ्रातृव्याय दद्यात्पाशेन वा एष चरति यो याचति पाशमे-
वाप्रियाय[7] भ्रातृव्याय प्रतिमुञ्चत्यग्नये वैश्वानराय द्वादशकपालं नि-
र्वपेद्यः कामयेतानेन राज्ञा वा ग्रामण्या वेदं सस्यमाददीयेति संव-
त्सरो वा अग्निर्वैश्वानरस्संवत्सरो ऽन्नाद्यस्य प्रदाता तमेव भागधेयेनो- 15
पधावति सो ऽस्मा अन्नाद्यं प्रयच्छति संवत्सरं ह्यन्नमनुप्रजायते ऽग्नये
वैश्वानराय द्वादशकपालं निर्वपेद्वृष्टिकामस्संवत्सरो वा अग्निर्वैश्वानर
एषा संवत्सरस्य क्रूरा तनूर्या वैश्वानरी तयैतदभितपन्नभिशोचयंस्ति-
ष्ठति भागधेयमिच्छमानस्तामेवास्य[8] प्रीणाति सास्मै प्रीता वृष्टिं नि-
नयत्यग्नये वैश्वानराय द्वादशकपालं निर्वपेत्संग्रामे संवत्सरो वा अग्नि- 20
र्वैश्वानरो यतरस्संयत्तयोरनायतनो भवति परा स जयते[9] संवत्सरमे-
वायतनं कृत्वा जयति संग्रामम् ॥ ३ ॥ cf. Mâitr. S. 2, 1, 2.

अग्नये वैश्वानराय द्वादशकपालं निर्वपेद्ग्रामकामो भूतिकामो ब्रह्म-

---

[1] So D; Ch द्यो चचम° [2] So Ch; D जिघर्मत्सं° [3] Ch सनिनिद° [4] D यादति [5] So D; Ch यद्वनोति [6] So Ch; D माजेतुं [7] D मेवग्नि° [8] So Ch; D वास्या [9] Ch सं जयते; D स जायते

वर्चसकामस्तस्य हरितँ हिरण्यं मध्ये कुर्याद्रजतमुपरिष्टात्संवत्सरो वा
अग्निर्वैश्वानरो वीर्यँ संवत्सर आत्मा हरितँ हिरण्यं वीर्यस्यैवैनं म-
ध्यतो दधाति भूत्यै भवत्येव यद्रजतं तत्सह[1] भस्मनापोहति शमलगृ-
हीतो[2] वा एष यो ऽलं ब्रह्मवर्चसाय सन्न ब्रह्मवर्चसी भवति शमल-
5 मेवास्मादपहन्ति ब्रह्मवर्चसेनैनँ सँसृजति यथा वै नाभिमरा अभिसँ-
श्रिता एवँ[3] संवत्सरं मासाश्चर्तवश्चाभिसँश्रिता यद्धिरण्यं मध्ये करोति
नाभिमेवैनं करोति ॥ यथा नाभिमरा अभिसँश्रिता एवमेनँ सजातैर-
भिसँश्रयति वारुणं यवमयं चरुं निर्वपेदग्नये वैश्वानराय द्वादशकपा-
लमामयावी वरुणगृहीतो वा एष य आमयावी यद्वारुणो वरुणा-
10 देवैनं मुञ्चति यवमयो भवत्येतद्वै वरुणस्य भागधेयं यद्यवास्स्वेनैव
भागधेयेन वरुणं निरवदयते प्रादेशमात्रो भवत्येतावान्वै पुरुषो या-
वदस्य प्राणा अभि यावानेवास्यात्मा तं वरुणान्मुञ्चति संवत्सरो वा
अग्निर्वैश्वानर आयुस्संवत्सरस्संवत्सर[4] एवैनमायुषि प्रतिष्ठापयति सर्व-
मायुरेति वारुणं यवमयं चरुं निर्वपेदग्नये वैश्वानराय द्वादशकपालं[5]
15 राजन्यायाभिचरते[6] वा बुभूषते वा वरुणगृहीतो वा एष यो ऽन्यस्या-
ददान[7] उपहरमाणश्चरति यद्वारुणो वरुणादेवैनं मुञ्चति यवमयो
भवति प्रादेशमात्रो भवति संवत्सरो वा अग्निर्वैश्वानरो वीर्यँ संवत्स-
रस्संवत्सर एवैनं वीर्यँ प्रतिष्ठापयति भूत्यै भवत्येवाग्नये वैश्वानराय
द्वादशकपालं निर्वपेदग्निमुत्सादयिष्यन्संवत्सरो वा अग्निर्वैश्वानरस्सं-
20 वत्सरमेष उत्साद्यमानो ऽनूत्सीदति भागिनमेवैनं कृत्वा संवत्सरमनू-
त्सादयत्यग्नये वैश्वानराय द्वादशकपालं निर्वपेद्यः पुरुषं[8] प्रतिगृह्णी-
यादाग्नां वा एष आत्मना दक्षिणां प्रतिगृह्णाति यः पुरुषं प्रतिगृह्णा-
त्याग्नां दक्षिणां प्रतिगृहीतां[9] हिनस्ति संवत्सरो वा अग्निर्वैश्वानरस्सं-

---

[1] Ch यद्रजतत्सह [2] D शमाल° [3] So D; Ch एव [4] So Ch; D आयुर-स्संवत्सर [5] Ch पालं [6] D चारते [7] So D; Ch दधान [8] Ch पुरुषः [9] D ग्ना दक्षिणा प्रतिगृहीता

त्सरस्स्वदितस्य ऽस्वदयिता तमेव[1] भागधेयेनोपधावति सो[2] ऽस्मै
तत्सर्वं स्वदयति ॥ ४ ॥ cf. Mâitr. S. 2, 1, 2.

अग्नये[3] पथिकृते ऽष्टाकपालं निर्वपेद्यस्य पौर्णमासी[4] वामाव-
स्या[5] वातिपद्येत[6] बहिष्पथं[7] वा एष एति यस्य पौर्णमासी वामा-
वस्या[8] वातिपद्यते[9] ऽग्निर्देवानां पथिकृत्तमेवान्वारभते स एनं पन्था- 5
मपिनयति वि वा एतद्यज्ञं छिनत्ति यद्यज्ञे प्रतत एतामन्तरेष्टिं[10]
निर्वपति य एवासा आग्नेयो ऽष्टाकपालः पूर्णमासे यो ऽमावस्या-
यां[11] तमग्नये पथिकृते कुर्यात्तेनैव पुनः पन्थामवैति[12] न[13] यज्ञं वि-
च्छिनत्त्यग्नये वाजसृते ऽष्टाकपालं निर्वपेत्संग्रामे ऽग्निर्वै देवानां वा-
जसृद्वाजमेष धावति यस्संग्रामं[14] जयति तमेव भागधेयेनोपधावति 10
वाजमेव[15] धावति जयति संग्राममथो अग्निरिव[16] न प्रतिधृषे भव-
त्यग्नये व्रतपतये ऽष्टाकपालं निर्वपेद्य आहिताग्निस्सन्नव्रत्यं[17] चरेदा-
नीतो वा एष देवानां य आहिताग्निरदन्यस्यान्नं व्रतपतिमेतस्य व्रतं
गच्छति य आहिताग्निस्सन्नव्रत्यं[18] चरत्यग्निर्देवानां व्रतपतिस्तमेव
भागधेयेनोपधावति व्रतपतेरेवाधि[19] व्रतमालभते ऽग्नये रक्षोघ्ने ऽष्टा- 15
कपालं निर्वपेदामयावीन्द्रं वै जातं रक्षांस्यसचन्त स आदीयमानो[20]
रक्षोभिस्संमृश्यमानो[21] ऽग्निं प्राविशत्तस्मादग्नी[22] रक्षांस्यपाहन्रक्षांस्येतं[23]
सचन्ते य[24] आमयाव्यग्निर्देवानां रक्षोहा तमेव भागधेयेनोपधावति
सो ऽस्माद्रक्षांस्यपहन्त्यमावस्यां रात्री निशि[25] यजेतामावस्यां वै रात्री

---

[1] So Ch; D तमिव [2] So Ch; D न्यो [3] Dies Kap. collat. mit W 2, T 1 und Brl fol. 116. 117; darnach auch accentuirt. [4] Ch मासे [5] Ch वास्या; W 2 वस्यां [6] D वति° [7] D बर्हिष्पथं [8] W 2 वस्यां [9] D वति° [10] D न्तरिष्टिं; W रेष्टि; desgl. Ch, ohne Accent. [11] D मासो यो मावास्यायं [12] D मेवैति; W 2 मेवैतें [13] D ना [14] Ch यत्सं° [15] D मेव [16] W 2 अग्निरेव [17] So T 1 und Brl सन्नव्रत्यं; desgl. Ch, ohne Accent; D सन्नव्रतं [18] So T 1 und Brl; desgl. Ch, ohne Accent; D सन्नव्रतं [19] W 2 व्रतपतिरे°; desgl. Ch, ohne Accent. [20] D आधीय [21] W 2 मृष्यं° [22] W 2 ग्निं [23] D, Ch, W 2 स्यपह° [24] Ch न्ते स स [25] Ch रात्रौर्निशि

निशि[1] रक्षांसि प्रेरते पूर्णान्येवैनान्यपवपति[2] परिश्रिते यजेत रक्षसा-
मन्तर्हित्यै ॥ वामदेवस्यैतत्पञ्चदशं राक्षोघ्नं सामिधेन्यो भवन्ति वाम-
देवश्च वै कुसिदायी चात्मनोराजिमयातां[3] तस्य कुसिदायी पूर्वस्या-
तिद्रुतस्य कूबरं न्यमृणात्सा द्वितीयमुपपर्यावर्ततेषां वाक्षं[4] वा छेत्स्या-
5 मीति स वामदेव[5] उख्यमग्निमबिभस्तमवैक्षत स एतत्सूक्तमपश्यत्कृ-
णुष्व पाजः प्रसितिं न पृथ्वीमिति तामग्निरनूद्धृत्य[6] समदहत्सा द-
ह्यमाना ह्रदं कौसिदं[7] प्रामज्जद्यदेतदनूच्यते[8] रक्षसां दुष्ट्यै ॥ ५ ॥
cf. Mâitr. S. 2, 1, 10. 11.

नैमिषा वै सत्त्रमासत त उत्थाय सप्तविंशतिं कुरुपञ्चालेषु वत्स-
तरानवन्वत तान्वको[9] दाल्भिरब्रवीद्यूयमेवैतान्विभजध्वमिममहं[10] धृ-
10 तराष्ट्रं वैचित्रवीर्यं गमिष्यामि स मह्यं गृहान्करिष्यतीति तमागच्छ-
त्तन्नासूर्क्षत्[11] प्राकालयतैता गा[12] ब्रह्मबन्ध इत्यब्रवीत्पशुपतिर्गा हन्ति
ताः परः पचमानश्चरेति तासां देवसूर्मे[13] राजान्नं प्रासुषोदिति[14] स-
क्थान्युत्कर्तमपचत[15] तस्मिन्पचमाने व्यृदस्यत्सो ऽग्नये रुद्रवते ऽष्टाक-
पालं निरवपत्कृष्णानां व्रीहीणां[16] तस्य यत्किंच धृतराष्ट्रस्यासीत्तत्सर्व-
15 मवकर्णं[17] विद्राणमभिव्यौच्छत्ता विप्रश्निका अविन्दन्ब्राह्मणो वै त्वाय-
मभिचरति तस्मिन्नाथस्वेति तमुपाशिक्षत्तस्मै बह्वददात्सो ऽग्नये सुर-
भिमते ऽष्टाकपालं निरवपच्छुक्लानां[18] व्रीहीणां[19] ततो वै तद्व्यदस्यद-
ग्नये रुद्रवते ऽष्टाकपालं निर्वपेत्कृष्णानां व्रीहीणामभिचरन्नग्निर्वै[20] रुद्रो
रुद्रायैवैनमपिदधाति कृष्णानां व्रीहीणां भवति कृष्णमिव वै तमस्त-
20 मो मृत्युर्मृत्युनैवैनं ग्रहयत्यग्नये सुरभिमते ऽष्टाकपालं निर्वपेद्यस्य

---

[1] Ch रात्रौर्निशि [2] W 2 न्यापवपति; Ch न्यापवपंति (die beiden folgenden Worte fehlen in Ch). [3] D जौमयातां [4] Ch वत्तं [5] W 2 वामदेवं [6] W 2 तमग्निं° [7] So T 1; Brl कौसीदं; Ch, D कोसिदं; W 2 कौसिदं [8] D प्रमज्जद्यतेतदनूच्यते [9] D बकों [10] So corr. Ch दल्भि° D दाल्भ्य° [11] Ch मृत्यतम्रा° [12] Dies Wort fehlt in D. [13] So Ch; D देवसूर्मे [14] Ch प्रासुषोदिति [15] Ch सक्तान्यु° [16] Ch ब्रौ° [17] Ch मर्वकर्णां (erste Hand मर्घ°). [18] D क्रानां [19] Ch ब्रौ° [20] Ch ब्रौ°

देवः[1] प्रजा अभिमन्येत यदा कामयेत विदस्येदित्येषा वा अग्नेर्भिषज्या तनूर्या सुरभिमती तामेव भागधेयेनोपधावति तयैना भिषज्यत्यग्नये सुरभिमते ऽष्टाकपालं निर्वपेद्यं प्रमीतं शृणुयुः पूतिर्वा एष श्रूयते यः प्रमीतश्श्रूयते यैवाग्नेस्सुरभिमती तनूस्तामेव भागधेयेनोपधावति तयैनं सुरभिं करोत्यग्नये सुरभिमते ऽष्टाकपालं निर्वपेद्यमजघ्निवांसमभिशंसेयुश्शमलगृहीतो वा एष यमजघ्निवांसमभिशंसन्ति यैवाग्नेस्सुरभिमती तनूस्तामेव भागधेयेनोपधावति तयैनं पुनात्यग्नये ऽन्नादायाष्टाकपालं निर्वपेद्यः कामयेतान्नादस्स्यामित्यग्निर्वै देवानामन्नादस्तमेव भागधेयेनोपधावति स एनमन्नादं करोत्यग्नये ऽन्नवते ऽष्टाकपालं निर्वपेद्यः कामयेतान्नवान्स्यामित्यग्निर्वै देवानामन्नवांस्तमेव[2] भागधेयेनोपधावति स एनमन्नवन्तं करोत्यग्नये ऽन्नपतये ऽष्टाकपालं निर्वपेद्यः कामयेतान्नपतिस्स्यामित्यग्निर्वै देवानामन्नपतिस्तमेव भागधेयेनोपधावति स एनमन्नपतिं करोति संवत्सरं परिनिर्वपेत्संवत्सरो वा अन्नाद्यस्य प्रदाता तमेव भागधेयेनोपधावति स एनमन्नादमन्नवन्तमन्नपतिं करोत्यग्नये वसुमते ऽष्टाकपालं निर्वपेत्सर्वेभ्यः कामेभ्यो ब्राह्मणो यद्वै किंच[3] विन्दते तद्वस्वग्निर्देवानां वसुमांस्तमेव[4] भागधेयेनोपधावति सो ऽस्मै सर्वान्कामान्प्रयच्छति ॥ ६ ॥

अग्नये[5] यविष्ठायाष्टाकपालं निर्वपेदभिचरन्वाभिचर्यमाणो वा देवाश्च वा असुराश्च व्यभ्यूचरन्त ते ऽसुरा देवेभ्यो विसृष्टीर्व्यसृजंस्ते देवा अविदुर्विसृष्टीर्वै नो ऽसुरा व्यस्राक्षुरिति[6] ते ऽग्नये यविष्ठायाष्टाकपालं निरवपंस्तेन वै ते ता विसृष्टीरयावयन्तात्मनो[7] ऽधि विसृष्टिमेतस्मै विसृजन्ति यमभिचरन्ति यदग्नये यविष्ठाय निर्वपति तेनैवं ता[8] विसृष्टिं यावयत आत्मनो ऽध्यग्नये यविष्ठायाष्टाकपालं निर्वपे-

---

[1] D ह्यंयन्मेवः [2] D चवींस्त° [3] So D; Ch किंचिद्वि° [4] So Ch; D वसुमींस्त° Darnach accentuirt. [5] Dies Kap. collat. mit W 1 ε, T 1 und Brl fol. 149. 150. [6] So betont W 1 ε; in T 1 und Brl व्यंस्राक्षुरिति; Ch व्यस्रक्षु° [7] T 1 und Brl रयावयचात्मंना [8] Ch पति नैव ता

त्समृतसोमे देवतासु वा एते संमृच्छन्ते[1] येषां सोमौ समृच्छेते[2] अग्नि-
स्सर्वा देवता अग्निनैवैषां यविष्ठेन देवता वृङ्क्ते ॥ देवाश्च वा असु-
राश्च संयत्ता आसन्यान्देवानामघ्नंस्तद्देव[3] ते ऽभवन्यानसुराणां पुनस्त
उत्पत्त्यायुध्यन्त ते देवा अविदुर्ये वै न[4] इमे केच म्रियन्ते ऽग्निर्वावै-
5 तान्हन्तीति ते ऽब्रुवन्मा नश्शम्नीथाः कथा नश्शम्नीष[5] इति भागो[6]
मे ऽस्त्वित्यब्रवीन्न वो ऽभागधेयः क्षमिष्य इति ते ऽग्नये क्षमवते ऽष्टा-
कपालं निरवपंस्ततो[7] वै स तेभ्यो[8] ऽक्षमताग्नये क्षमवते ऽष्टाकपालं
निर्वपेद्यर्ह्ययं देवः[9] प्रजा अभिमन्येत यदा कामयेत विदस्येदिति[10] ये
वा इमे केच म्रियन्ते ऽग्निर्वावैतान्हन्त्यग्निर्देवानां क्षमवांस्तमेव[11] भा-
10 गधेयेनोपधावति सो ऽस्मै प्रीतः क्षमत[12] एवं देवाः पितरो मनुष्यास्ते
ऽन्यत आसन्नसुरा रक्षांसि पिशाचास्ते ऽन्यतस्ते समयतन्त[13] ते यद्दे-
वानामपल्पकं लोहितमसुरा अकुर्वंस्तद्राचीभी[14] रक्षांस्यसुम्भंस्तान्सु-
ब्धान्मृतानभिव्यौच्छन्ते[15] देवा अविदुर्ये वै न[16] इमे केच म्रियन्ते रक्षां-
सि वावैतान्सुम्भन्तीति तान्युपामन्त्रयन्त तान्यब्रुवन्वार्यं वृणामहै
15 यद्देवैमानसुराञ्जयाम तन्नस्सहासदिति[17] ततो देवा असुरानजयंस्ते ऽसु-
राञ्जित्वा रक्षांस्यपानुदन्त तान्यनृतमकर्तेति समन्तं देवान्पर्यविशंस्ते[18]
देवा अग्ना एवानाथन्त[19] ते ऽग्नये प्रवते ऽष्टाकपालं निरवपन्नग्नये
विबाधवते[20] ऽष्टाकपालमग्नये प्रतीकवते ऽष्टाकपालं यदग्नये प्रवते
यान्येव पुरस्ताद्रक्षांस्यासंस्तानि तेन[21] प्राणुदन्त यद्विबाधवते यान्ये-

---

1 T 1 und Brl संमृच्छन्ते  2 D समछते  3 T 1 und Brl मघ्नंस्तद्देव: W 1 ε मघ्नांस्तदेव; Ch घ्नस्त°  4 D वे त  5 Ch शम्नोश  6 D तासा statt भागो  7 T 1 und Brl पंस्ततो; desgl. Ch, ohne Accent; W 1 ε पांस्ततो  8 Brl त्येभ्यो  9 D दिवः  10 Ch विदस्यदिति  11 T 1 und Brl न्नमवैस्त°; desgl. D, ohne Accent.  12 Hier beginnt das Stück W 1 β fol. 42. 43.  13 T 1 न्यतस्संमयतन्त; Brl न्यतस्संमयन्त; W 1 β न्यतस्ते न्यतास्ते समयतन्त; W 1 ε न्यतस्मै समयतन्त  14 Ch अकुर्वीस्त° W 1 ε अकुर्वास्त°  15 T 1 und Brl सुम्भंस्तान्त्सुब्धां°; Ch सुंभांस्तान्मतानभिव्यौच्छत्ते; D तान्सुन्धान्मतानभि° W 1 ε und W 1 β सुम्भांस्तान्सुब्धान्मतान°  16 D त; W 1 β ना  17 W 1 ε तन्नस्सदिति  18 W 1 β समन्तान्देवान्प°; W 1 ε समन्तद्देवानान्प°  19 D अग्नये वाना; W 1 β अग्ना एवनाथेन  20 W 1 β विबाधते; Ch धवाते  21 W 1 β तेना प्रानुदन्तैतया यजेत भ्रातृव्यवान (also Lücke).

वाभित आसंस्तानि तेन व्यबाधन्त[1] यत्प्रतीकवते यान्येव पश्चाद्रक्षां-
स्यासंस्तानि तेनापानुदन्तैतया यजेत भ्रातृव्यवान्यो बहुभ्रातृव्यस्स्याद-
ग्नये प्रवते ऽष्टाकपालं निर्वपेदग्नये विबाधवते ऽष्टाकपालमग्नये प्रती-
कवते ऽष्टाकपालं यदग्नये प्रवते य एवैनं पूर्वो ऽतिक्रान्तो[2] भ्रातृव्यस्तं
तेन प्रणुदते[3] यद्विबाधवते[4] य एवैनेन सदृङ् तं तेन[5] विबाधते[6] य- 5
त्प्रतीकवते य एवास्य पश्चाद्भ्रातृव्यस्तं तेनापनुदते प्र श्रेयांसं भ्रातृव्यं
नुदते ऽति[7] सदृशं क्रामति नैनं पापीयानाप्नोति य एवं विद्वानेतया
यजते[8] देवाश्च वा असुराश्च संयत्ता आसंस्तान्गायत्र्यन्तरातिष्ठदोजो[9]
वीर्यमन्नाद्यं परिगृह्य संवत्सरो वावैनान्त्सो ऽन्तरातिष्ठच्चतुर्विंशति-
र्गायत्र्या अक्षराणि चतुर्विंशतिस्संवत्सरस्यार्धमासास्ते[10] ऽविदुर्यतरां- 10
न्वा इयमुपावर्त्स्यति[11] त इदं भविष्यन्तीति तां[12] व्यह्वयन्त[13] दाभी-
त्यसुरा अह्वयन्विश्वकर्मन्निति देवास्सा[14] नान्यतरांश्चनोपावर्तत[15] ते
देवा एतद्यजुरपश्यन्नोजो ऽसि सहो ऽसि बलमसि भ्राजो ऽसि देवा-
नां धाम नामासि विश्वमसि विश्वायुस्सर्वमसि सर्वायुरभिभूरिति
सा देवानुपावर्तत ततो देवा अभवन्परासुरा अभवन्नाग्नेयमष्टाक- 15
पालं निर्वपेद्भ्रातृव्यवान्वा स्पर्धमानो वा तमासाद्यैतैर्यजुर्भिरभिमृशेदो-
जो वै वीर्यं संवत्सर ओज एव वीर्यं भ्रातृव्यस्य वृङ्क्ते स निर्वीर्यः प-
राभवति सैषा गायत्री नामेष्टिरथो आहुः क्षत्रस्य संवर्ग इति ॥ ७ ॥

cf. Mâitr. S. 2, 1, 11.

इन्द्राय घर्मवत एकादशकपालं निर्वपेद्ब्रह्मवर्चसकामो ऽसौ वा
आदित्यो घर्म एष इन्द्र एष ब्रह्मवर्चसस्य प्रदाता तमेव भागधेयेनो- 20

---

[1] Ch व्याबाधंत [2] D भिक्रांतो [3] D प्राणुदते; Ch प्रणुदति [4] Bis zum folgenden विबाधते in Ch Lücke. [5] D सदृं कुत्तेन; W 1 ε सदृङ्कुन्तेन oder सदृङ्क्कुन्तेन [6] Brl विबाधवते [7] Ch भ्रातृव्यश्च नुदेतेति सदृशं [8] Brl यजेत; hier endet W 1 β. [9] Ch आस्तां ॥ स्तान्गा° [10] T 1 und Brl ते ohne Accent. [11] Ch und W 1 ε मुपावत्स्यति; D मुपवर्त्स्यति [12] Ch तो [13] व्यह्वयन्त in den Mss. ohne Accent. [14] सा in den Mss. ohne Accent. [15] Brl नन्यतरांश्चनोपावर्तत; Ch und W 1 ε नन्य-तरांश्चनोपावर्तत; D नान्यतरंश्चनोपवर्तत

पधावति सो ऽस्मै ब्रह्मवर्चसं प्रयच्छतीन्द्रायेन्द्रियवत एकादशकपालं
निर्वपेत्पशुकाम इन्द्रियं वै पशव इन्द्रः पशूनां प्रदाता तमेव भागधे-
येनोपधावति सो ऽस्मै पशून्प्रयच्छतीन्द्रायार्कवत एकादशकपालं
निर्वपेदन्नकामो ऽन्नं वा अर्क इन्द्रो ऽन्नाद्यस्य प्रदाता तमेव भागधे-
5 येनोपधावति सो ऽस्मा अन्नाद्यं प्रयच्छतीन्द्रायार्कवत एकादशक-
पालं निर्वपेदपरुद्धो ऽवगमकामो ऽन्नं वा एष गच्छति यमपरुन्ध-
न्त्येषेन्द्रस्यान्या[1] तनूर्यार्कवत्यन्न[2] एवास्मा अन्नं कल्पयति वशा[3] द-
क्षिणा वशं मा नयादितीन्द्राय[4] घर्मवत एकादशकपालं निर्वपेदि-
न्द्रायेन्द्रियवत एकादशकपालमिन्द्रायार्कवत एकादशकपालं समान-
10 बर्हींषि बुभूषन्यदिन्द्राय[5] घर्मवते ऽसौ वा आदित्यो घर्म एष इन्द्र
एष शिरः प्रजानां शिर एव तेन कुरुते यदिन्द्रायेन्द्रियवत इन्द्रियमेव
तेनात्मन्धत्ते यदिन्द्रायार्कवत इयं वा अर्को ऽस्यामेव तेन प्रतितिष्ठति
चरुर्मध्ये स्यादजामित्वायेन्द्राय मन्युमत एकादशकपालं निर्वपेत्संग्रामे
मन्युना वै वीर्यं करोतीन्द्रियेण जयति मन्युं चैवैष्विन्द्रियं च जित्यै
15 दधातीन्द्राय[6] मन्युमते मनस्वत एकादशकपालं निर्वपेत्संग्रामे मन्युना
वै वीर्यं करोतीन्द्रियेण जयति मन्युं चैवैष्विन्द्रियं[7] च सयुजौ कृत्वा त-
योर्मनो जित्यै दधातीन्द्राय मनस्वते त्विषीमत[8] एकादशकपालं नि-
र्वपेद्यः कामयेत मनस्वी त्विषीमान्स्यामिति[8] मनो वै श्रीस्त्विषिर्मन
एवास्मिञ्छ्रियं[9] त्विषिं[10] दधाति संवत्सरं पुरा मनसो न कीर्तयेत्संव-
20 त्सरेण वा अनाप्तमाप्यते संवत्सरमेवाप्त्वावरुन्द्धे ॥ ८ ॥

cf. Mâitr. S. 2, 2, 9. 12.

इन्द्राय सुत्राम्ण एकादशकपालं निर्वपेदपरुद्धो वापरुत्स्यमानो
वेन्द्रो वै त्रातेन्द्रो ऽपरोद्धा तमेव भागधेयेनोपधावति स एनं त्रायत[11]

---

[1] D यमापरुंधत्ये° Ch स्यात्यां [2] Ch न्कवत्यंत [3] So Ch; D वासा [4] D नयाचितीं° [5] So corr. D चभूष° Ch भूष° [6] D ददातीं° [7] So Ch; D चैवस्विं-द्रियं [8] D द्विर्षी° [9] Ch स्मिंछ्रियं [10] D द्विषिं [11] Hier schiebt D noch ein इन्द्राय ein.

यँ सर्वतो भयमागच्छति यैवेन्द्रस्य विमृधा तनूस्तामेव भागधेयेनोप-
धावति तया मृधो ऽपहत आत्मनो ऽधि ॥ ९ ॥ cf. Mâitr. S. 2, 2, 10.

प्रजापतिर्वा इन्द्राय वज्रं प्रत्यमुञ्चन्महानाम्नीस्तेन व्यजयत ततो
वै सो ऽभवत्सो ऽबिभेद्वज्रो[1] मे ऽशान्तो ग्रीवा अपिधक्ष्यतीति ततो[2]
5 रेवतीर्निरमिमीत शान्त्या ऐन्द्रं चरुं निर्वपेद्राजन्याय बुभूषत ऐन्द्रो वै
राजन्यो देवतया स्वादेवैनं योनेर्जनयति भूत्यै भवत्येव रेवत्यनुवाक्या
शक्वरी याज्या वज्रो वै रेवती वज्रश्शक्वरी वज्रमेव संदधाति तेन
विजयते भवत्येव चरुर्भवति शान्त्या अनुद्दाहायेन्द्राण्यै[3] चरुं निर्वपे-
त्सेनायामुत्थितायां राज्ञो गृहे सेना वा इन्द्राणी ब्रह्मणैवैनां विष्यै
10 संश्यति बल्बजा[4] इध्मे च बर्हिषि चापिभवन्ति शक्रो[5] वा एते जाता
न्यायेनैवैनामभिनयति यत्सा विन्देत ततो दक्षिणा समृद्ध्या इन्द्राय
चेन्द्राण्यै च चरुं निर्वपेत्सेनायामुत्थितायां राज्ञो गृह एषा वा[6] इ-
न्द्रस्य परिवृक्ती जाया गोष्वेवैनामधिनयति बल्बजा[7] इध्मे च बर्हिषि
चापिभवन्ति शक्रो[5] वा एते जाता न्यायेनैवैनामभिनयति यत्सा विन्देत
15 ततो दक्षिणा समृद्ध्यै प्रजापतिर्वै देवेभ्यो भागधेयानि व्यादिशत्तदि-
न्द्रियमत्यरिच्यत[8] तदिन्द्रो ऽब्रवीन्मयीदमस्त्विति[9] तदस्मिन्नदधात्तदेनम-
त्यत्येवारिच्यत[10] तदिमांल्लोकानूर्ध्वमनूदश्रयत[11] तन्नैकेनाप्नोन्न द्वितीयेन
तत्तृतीयेनाप्त्वावारुन्द्ध त्रीन्पुरोडाशान्निर्वपेद्बुभूषंस्त्रय[12] इमे लोका इमा-
नेव लोकानाप्त्वौजो वीर्यमवरुन्द्ध उत्तर उत्तरो ज्यायान्भवत्युत्तर उत्तरो
20 ह्येषां लोकानां ज्यायानिन्द्राय राज्ञे प्रथममथेन्द्राय स्वराज्ञे[13] ऽथेन्द्राया-
धिराजायैतानि वै सर्वाणीन्द्रो ऽभवन्नोदेतान्येव सर्वाणि भवति[14] य
एवं विद्वानेतया यजते ॥ तिस्रो ऽनुवाक्यास्तिस्रो याज्यास्तासां प्रथमाम-
नूच्य मध्यमया यजति मध्यमामनूच्योत्तमया यजत्युत्तमामनूच्य पुनः प्र-

---

[1] D बिभेद्व° [2] So Ch; D उत्तो [3] Ch vielleicht अनुद्वाहा° [4] So corr. Ch बल्वजा; D बल्पजा [5] D शक्रो [6] वा fehlt in Ch. [7] Mss. बल्वजा [8] D मभ्यरि° [9] Ch मायीदश्रस्त्विति [10] So Ch; D धत्तेदेनमत्यतेवारि° [11] So Ch; D नूदर्श्रयति [12] Ch रुन्धन्त्रों° [13] D स्वराज्ये [14] Ch भवंति

थमया यजत्येषां लोकानां संतत्यै प्रतिप्रज्ञात्यै सर्वा[1] एवानुवाक्याः
करोति सर्वा याज्या देवाश्च वा असुराश्च संयत्ता आसंस्ते ऽसुरा भूयांसो
ऽजितमनस आसन्कनीयांसः पराजितमनस्तरा[2] इव देवास्ते देवा अब्रु-
वंश्चिकित्सत[3] यो नो वीर्यावत्तमस्तमनुसमारभामहा[4] इति त इन्द्रम-
ब्रुवंस्त्वं वै नो वीर्यावत्तमो ऽसि त्वामनु समारभामहा इति सो ऽब्रवीत्ति- 5
स्रो म इमास्तन्वो वीर्यावतीस्ता मे प्रीणीताथैतानभिभविष्याम इति ता
वै ब्रूहीत्यब्रुवन्नियं[5] विमृधेत्यब्रवीदियमंहोमुगियमिन्द्रियावतीति त
इन्द्राय विमृधायैकादशकपालं निरवपन्निन्द्रायांहोमुच एकादशकपा-
लमिन्द्रायेन्द्रियवत एकादशकपालं यदिन्द्राय विमृधाय मृधा वै ते
ऽभिषक्ता आसन्ये श्रेयोभिरसुरैरस्पर्धन्त मृध एव तेनापाघ्नत यदिन्द्रा- 10
यांहोमुचे ऽंहसा वै ते गृहीता आसन्नंहस एव तेनामुच्यन्त यदि-
न्द्रायेन्द्रियवत इन्द्रियमेव तेनात्मन्नदधतैतया यजेत भ्रातृव्यवान्यो ब-
हुभ्रातव्यस्स्यादिन्द्राय विमृधायैकादशकपालं निर्वपेदिन्द्रायांहोमुच
एकादशकपालमिन्द्रायेन्द्रियवत एकादशकपालम् ॥ यदिन्द्राय विमृ-
धाय मृधा वा एषो ऽभिषक्तो यश्श्रेयसा भ्रातृव्येण स्पर्धते मृध एव 15
तेनापहते यदिन्द्रायांहोमुचे ऽंहसा वा एष गृहीतो यो भ्रातृव्यवानंहस
एव तेन मुच्यते यदिन्द्रायेन्द्रियवत इन्द्रियमेव तेनात्मन्धत्ते त्रयस्त्रिं-
शद्वै देवतास्तास्तं[6] सर्वा वीर्यैरनुसमारभन्त[7] स उत्तमां विजितिमसुरै-
र्व्यजयत ततो वै सो ऽभवद्यत्त्रयस्त्रिंशत्कपालानि भवन्ति यावतीरेव
देवतास्तास्सर्वा वीर्यैरात्मानमनुसमारम्भयते भवत्येव सैषा विजिति- 20
र्नामेष्टिरुत्तमामेव विजितिं भ्रातृव्येण[8] विजयते य एवं विद्वानेतया
यजते ॥ १० ॥ cf. Mâitr. S. 2, 2, 5; 2, 2, 10.

प्रजापतिः पशूनसृजत ते ऽस्मादपाक्रामंस्तेषां बृहस्पतिश्च पदेना-
न्वैतां ते यत्रावसंस्तज्रमुतं[9] शक्नो[10] जातामविन्दतां तामाच्छिद्याह-

[1] Ch स सर्वा; D ohne स [2] Ch पराणित° [3] Ch अब्रुवांश्चिकि° D अब्रुवंश्चित्रि-कि° [4] D ससोरभा° [5] Ch ब्रवीत्य° [6] Ch तास्तो [7] Ch रभत [8] Ch व्येन [9] Ch गन्मुतं [10] D शक्तो

रतां[1] तं बृहस्पतिरब्रवीदनया त्वाया[2] जयान्युप वै त्वैते पशवः पुनर्नि-
स्यन्तीति स प्राजापत्यं चरुं निरवपद्गामुतमप्सु[3] ततो वै तं पशवः
पुनरुपानमन्प्राजापत्यं चरुं निर्वपेद्गामुतमप्सु पशुकामो ऽपक्रान्ता
वा एतस्मात्पशवो यो ऽपशुः प्रजापतिः पशूनां प्रदाता तमेव भाग-
5 धेयेनोपधावति सो ऽस्मै पशून्पुनरुपावर्तयति गोमूत्रस्यापि स्यात्स-
योनित्वाय प्रजापतिः पशून्सृष्ट्वा तेषां पूषणमधिपामकरोत्ते ऽस्माद-
पाक्रामंस्तेषां पूषा पदेनान्वैत्त यत्रावसंस्तद्गमुतं[4] शक्नो[5] जातामवि-
न्दत्तामाच्छिद्याहरत्तया प्रजापतिमब्रवीदनया मा प्रतिष्ठस्वोप वै त्वैते
पशवः पुनर्नंस्यन्तीति तत्सोमो ऽभ्यार्तीयत[6] ॥ मम वा एतद्यद्कृष्टप-
10 च्यमिति स सौमापौष्णं चरुं निरवपद्गामुतमप्सु[7] ततो वै तं पशवः
पुनरुपानमन्सौमापौष्णं चरुं निर्वपेद्गामुतमप्सु[8] प्रजाकामो वा पशु-
कामो वा सोमो वै रेतोधाः पूषा प्रजनयिता सोम एवास्मै रेतो
दधाति पूषा प्रजनयति विन्दते प्रजा वा पशून्वा[9] यतरस्मै कामाय
निर्वपति गोमूत्रस्यापि स्यात्सयोनित्वाय मारुतं प्रैयङ्गवं[10] चरुं नि-
15 र्वपेत्पृश्न्या दुग्धे सजातकामः पृश्न्या वै मरुतो जाता वाचो वास्या
वा पृथिव्या मारुतास्सजाता एतन्मरुतां स्वं पयो यत्प्रियङ्गवस्स्वेनै-
वैनान्पयसाच्छैति यथा वत्स ऊधो ऽभ्यायच्छत्येवमेनं सजाता अभ्या-
यच्छन्ति ॥[11] प्रियंवत्यनुवाक्या[12] श्रीवती याज्या यत्प्रियंवती प्रियं-
मेवैनं सजातानां करोति यच्छ्रीवती श्रियमेवैनं गमयति द्विपदानु-
20 वाक्या चतुष्पदा याज्या द्विपदश्चैव चतुष्पदश्च पशूनवरुन्द्ध ऐन्द्रमे-
कादशकपालं निर्वपेन्मारुतं प्रैयङ्गवं[13] चरुं तं पश्चा[14] शृतं कुर्युर्यस्मा-

---

[1] Ch तामाच्छिद्याहरतां; D तामछिद्याहरता [2] So Ch; D त्वाया [3] Ch गान्मुत°; von hier an bis पशुकामो in D nicht vorhanden. [4] Ch गन्मुतं [5] D शक्तो [6] So meine Vermuthung. Ch सोमो भ्यातंर्यित; D सोमाभ्यांतीयत; ich nehme Imperf. von ऋतीय् an: „Da zankte Soma“ etc.; cf. Mâitr. S. 2, 2, 4 अब्रवीत् [7] Ch गान्मु° [8] Ch गान्मुत° [9] So Ch; D प्रजां वा पशुन्वा [10] Ch प्रियंगवं [11] Von hier an collat. auch mit W 1, T 1, Brl fol. 72; accentuirt nach T 1 und Brl. [12] D त्यानुवाक्या [13] W 1 प्रैय्य° [14] D पक्ता

त्क्षत्रियाद्विडभ्यर्धश्चरेत्क्षत्रं[1] वा इन्द्रो विण्मरुतः क्षत्रायैव विशमनु-
नियुनक्ति तमनूच्यमाने पश्चात्प्राञ्चमुदाहरन्ति विशमेवास्मै पश्चादुप-
दधात्यसंसर्गाय मारुतं सप्तकपालं निर्वपेदैन्द्रमेकादशकपालं यः का-
मयेत विशे च क्षत्राय च समदं कुर्यामिति क्षत्रं वा इन्द्रो विण्मरुतो
भागधेय एवैभ्यस्समदं करोति मारुतस्य मारुतीमनूच्यैन्द्र्या[2] यजेदै-
न्द्रस्यैन्द्रीमनूच्य मारुत्या यजेत्क्षत्रमेव[3] विशः परिहायादत्ते[4] विट्
क्षत्रस्य ते अन्यान्यां निर्णयत उभयतः पुरोडाशस्यावद्येद्यतरान्काम-
येत पराजयेरन्नित्युभयत एव विशमुपदीपयति ताजक्पराजयन्त ए-
तामेव निर्वपेद्यदा कामयेत कल्पेरन्निति तस्याः प्रसृतिं[5] यजेद्भागधे-
येनैवैनान्कल्पयति[6] मारुतं सप्तकपालं विपद्यः क्षत्रियो विशो ज्या-
न्यो बिभीयाद्ब्राह्मणो वा विड्वै मरुतो भागधेयेनैवैनाञ्छमयत्यगस्त्य-
स्यैतत्सूक्तं[7] कयाशुभीयं तस्य सामिधेनीष्वप्यनुब्रूयात्तस्य याज्यानु-
वाक्ये स्यातामगस्त्यो वै मरुद्भ्यश्शतमुक्ष्णः पृश्नीन्प्रौक्षत्तानिन्द्रायाल-
भत[8] तं मरुतः क्रुद्धा वज्रमुद्यत्याभ्यपतन्स एतत्सूक्तमपश्यत्तेनैनानश-
मयद्यदेतदनूच्यते शान्त्यै ॥ ११ ॥ cf. Mâitr. S. 2, 2, 4.

अस्मै ते प्रतिहर्यते जातवेदो विचर्षणे ।
अग्ने जनामि सुष्टुतिम् ॥
यस्मै त्वं सुकृते जातवेद उ लोकमग्ने[9] कृणवस्स्योनम् ।
अश्विनं स पुत्रिणं वीरवन्तं गोमन्तं रयिं नशते स्वस्ति ॥
य इमा विश्वा जातान्याश्रावयति[10] श्लोकेन ।
प्र च सुवाति सविता ॥

विश्वा रूपाणि ॥

---

[1] So T 1; desgl. D, ohne Accent; Brl द्विडाभ्यर्धश्चरे°; desgl. W 1, ohne Acc.; Ch द्विडाद्यर्धश्चरे° [2] W 1 च्यैन्द्रा [3] Ch मिव [4] So T 1, W 1, Brl; Ch und D धत्ते [5] Ch प्रसृतं [6] D वैनं क° [7] Ch नैवनाञ्छ°; Brl नैवानाञ्छ°; D नैवैनञ्छ° [8] W 1 लभन्त [9] Ch लूक° [10] Ch श्रवयति

वायुरग्रेगा यज्ञप्रीस्साकं गन्मनसा[1] यज्ञम् ।
शिवो नियुद्भिश्शिवाभिः ॥
प्र याभिर्यासि दाश्वांसमच्छा नियुद्भिर्वाय इष्टये[2] दुरोणे ।
नि नो रयिं सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधः ॥
5 बडित्था पर्वतानां खिद्रं[3] बिभर्षि पृथिवि ।
प्र या भूमिं प्रवत्वति[4] मह्ना जिनोषि महिनि ॥
दृढा चिद्या[5] वनस्पतीन्क्ष्मया दर्धर्ष्योजसा ।
यत्ते अभ्रस्य विद्युतो दिवो वर्षन्ति वृष्टयः ॥
आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् ।
10 विश्वासु पृत्सु दुष्टरम् ॥
गोमाँ अग्ने ॥
मदे मदे हि नो ददिर्यूथा गवामृजुक्रतुः ।
संगृभाय पुरू शतोभयाहस्त्या वसु शिशीहि राय आभर ॥
शिप्रिन्वाजानां पते शचीवस्तव दंसना ।
15 आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु[6] सहस्रेषु तुवीमघ ॥
रेवतीर्नः प्र ससाहिषे ॥
संज्ञानं नो दिवा[7] पशोस्संज्ञानं नक्तमर्वतः ।
संज्ञानं नस्स्वेभ्यस्संज्ञानमरणेभ्यस्संज्ञानमश्विना युवमिहास्मासु
नियच्छतम्[8] ॥
20 समिन्द्र राया समिषा रभेमहि सं वाजेभिः[9] पुरुश्चन्द्रैरभिद्युभिः ।
सं देव्या प्रमत्या वीरशुष्मया गोअग्रयाश्वावत्या रभेमहि ॥
इन्द्रवायू सुसंदृशा सुहवेह हवामहे ।
यथा नस्सर्व इज्जनस्संगमे[10] सुमना असत् ॥

---

[1] So corr.; Ch गर्मनसा; D घर्मनसा; cf. aber TBr 2, 4, 7, 6. [2] D द्विवायु इष्टये; Ch श्रिशर्वाय इष्टये [3] D खित्रं [4] Ch प्रवत्विति [5] Ch चेद्या [6] So corr.; Ch श्वेष्वभ्रिषु; D श्वेषु शुद्रिषु; cf. RV 1, 29, 2. [7] D दिवाः [8] So corr. Mss. ताम [9] Ch वाजिभिः [10] D सर्वमिज्जन

अग्निः प्रथमो वसुभिर्नो अव्यात्सोमो रुद्रैरभिरक्षतु[1] त्मना ।
इन्द्रो मरुद्भिर्ऋतुथा कृणोत्वादित्यैर्नो वरुणश्शर्म यंसत् ॥
समग्निर्वसुभिर्नो अव्यात्सं सोमो रुद्रियाभिस्तनूभिः ।
समिन्द्रो रातहव्यो मरुद्भिस्समादित्यैर्वरुणो विश्ववेदाः ॥
समाना व आकूतानि समाना हृदयानि[2] वः । 5
समानमस्तु वो मनो यथा वस्सुसहासति ॥
सं वो मनांसि सं व्रता समु चित्तान्याकरम्[3] ।
अमी ये विव्रतास्स्थन तान्वस्संनमयामसि ॥
यथादित्यमादित्या आप्याययन्ति यथाक्षितिमक्षितयो मदन्ति ।
एवा[4] मामिन्द्रो वरुणो[5] बृहस्पतिराप्याययन्तु भुवनस्य गोपाः ॥ 10
नवो नवो भवति जायमानो ऽह्नां केतुरुषसामेत्ययम् ।
भागं देवेभ्यो विदधात्यायन्प्र[6] चन्द्रमास्तिरते दीर्घमायुः ॥ ॥ १२ ॥

cf. Mâitr. S. 2, 2, 4. 6; TBr. 2, 4, 4 flg.

प्र[7] यो जज्ञे विद्वाँ अस्य बन्धुं विश्वा देवानां जनिमा विवक्ति ।
ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचादुच्चा[8] स्वधयाभि प्रतस्थौ[9] ॥
महान्मही अस्कभायद्वि जातो द्यां द्विता[10] पार्थिवं च रजः । 15
स बुध्नादाष्ट[11] जनुषाभ्ययं[12] बृहस्पतिर्देवता तस्य सम्राट् ॥
गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नश्शृण्वन्नूतिभिस्सीद सादनम् ॥
स सुष्टुभा स ऋक्वता गणेन वलं रुरोज फलिगं[13] रवेण[14] ।
बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत् ॥ 20
अग्निरुक्थे[15] पुरोहितो ग्रावाणो बर्हिरध्वरे ।
ऋचा यामि[16] मरुतो ब्रह्मणस्पतिं देवाँ अवो वरेण्यम् ॥

---

[1] D रक्षति [2] Ch हृदयाणि [3] Ch समुश्चित्तान्यक° [4] Ch एव [5] Ch वरुणो [6] Ch दात्या° [7] Dies Kap. collat. mit W 1, T 1, Brl fol. 63; accentuirt nach T 1 und Brl. [8] T 1 und Brl मध्या नीचाद्° ; desgl. W 1, ohne Accent. [9] Brl भि प्रतस्थौ [10] W 1 द्युता [11] Brl दष्ट [12] Ch षाभात्ययम्ब्र° [13] Brl फलिगं' [14] Ch रवेन [15] Ch und W 1 रुक्ते [16] Ch ऋचयामि

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।
उप प्रयन्तु[1] मरुतस्सुदानव इन्द्र प्राशूर्भवा सचा ॥
आर्यमा[2] यातु वृषभस्तुविष्मान्यन्ता वसूनि विधते[3] तनूपाः ।
सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणं दधातु[4] ॥
5 ये ते अर्यमन्बहवो देवयानाः पन्थानो राजन्दिव आचरन्ति ।
तेभिर्नो अद्य पथिभिस्सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥
अस्मे इन्द्राबृहस्पती रयिं धत्तं शतग्विनम् ।
अश्वावन्तं सहस्रिणम् ॥
बृहस्पतिर्नः परिपातु पश्चादुतोत्तरस्मादधरादघायोः ।
10 इन्द्रः पुरस्तादुत मध्यतो नस्सखा सखिभ्यो वरिवः कृणोतु ॥
हिरण्यगर्भो यः प्राणत उदु त्यं चित्रं देवानाम् ॥
तरणिर्विश्वदर्शतो[5] ज्योतिष्कृदसि सूर्य ।
विश्वमाभासि रोचनम् ॥
दिवो रुक्म उरुचक्षा उदेति दूरेअर्थस्तरणिर्भ्राजमानः[6] ।
15 नूनं जनास्सूर्येण[7] प्रसूता अयन्नर्थानि कृणवन्नपांसि ॥ ॥ १३ ॥

इति श्रीयजुषि चरकशाखायामिठिमिकायामाग्नावैष्णवं नाम दशमं स्थानकं संपूर्णम्[8] ॥

---

[1] Brl प्रयन्तो; desgl. W 1, ohne Accent. [2] Ch अर्यमा [3] D विद्यते
[4] Ch ददातु [5] Ch दर्शितो [6] D दूरेअर्थास्त॰ [7] Brl जनस्सूर्येण; desgl. W 1, ohne Accent; Ch जना सू॰ [8] So die Unterschrift des Kapitels in Ch; in D lautet dieselbe इत्याग्नावैष्णवं दशमं स्थानकं समाप्तम ॥

मारुतं चरुं निर्वपेत्तस्यैकविंशतिनिर्बाधो हरितो[1] रुक्मो ऽपिधा-
नस्स्यात्तस्यापय्याहमवद्येद्यत्क्षत्त्रियं[2] विण् निर्बाधे[3] कुर्वीत विड्वै मरुतो
भागधेयेनैवैनाञ्छमयत्येकविंशतिनिर्बाधो[4] भवत्येकविंशतिर्वै मारु-
ता गणा यदेकविंशतिनिर्बाधो निर्बाधैरेवैषां निर्बाधान्वृङ्क्त ऐन्द्रमे-
कादशकपालं निर्वपेद्वैश्वदेवं द्वादशकपालं सजातकामः क्षत्त्रं वा इन्द्रो 5
वैश्वदेवीरिमाः प्रजाः क्षत्त्रायैव विशमनुनियुनक्त्यैन्द्रस्यावदायाथ वैश्व-
देवस्योभे अवदाने अवद्येदथैन्द्रस्य[5] क्षत्त्रं वा इन्द्रो वैश्वदेवीरिमाः
प्रजाः क्षत्त्रेणैव विशमुभयतः परिगृह्णात्यैन्द्री वैश्वदेववर्णौ[6] याज्यानु-
वाक्ये भवतस्समृद्ध्या उपचाय्यपृडं[7] हिरण्यं[8] दक्षिणा सजातानेवा-
स्मा उपदधाति तदेतदनुवर्त्म नाम हविस्सजातानेवास्मा अनुवर्त्मनः 10
करोति सौम्यं श्यामाकं चरुं निर्वपेत्सोमवामीन्द्रो[9] वै त्वष्टुस्सोममनु-
पहूतो[10] ऽपिबत्स विश्वक्सोमपीथेन[11] व्यार्ध्यत तस्मात्सोमो नानुप-
हूतेन[12] पातवै सोमपीथेन व्यर्धुको[13] भवति स यत्परावमीत्ते[14] श्या-
माका एष वाव स सोमपीथो यच्छ्यामाकस्समक्षमेव सोमपीथम-
वरुन्द्धे सौमेन्द्रः[15] कार्य इन्द्रियेण वा एष सोमपीथेन व्यृध्यते यस्सोमं 15
वमिति सौम्यो ब्राह्मणो देवतयेन्द्रियमस्य सोमपीथो[16] यत्सौमेन्द्र
इन्द्रियेणैवैनं सोमपीथेन समर्धयत्यधृतो[17] वा एतस्मिन्सोमपीथो य-
स्सोमं वमिति तण्डुलानुच्छिंषेत्तान्क्वथति[18] प्रत्यावपेत्सोमपीथमेवा-
ऽस्मिन्दधाराग्नये[19] ज्योतिष्मते ऽष्टाकपालं निर्वपेत्सौर्यं चरुमग्नये ज्यो-
तिष्मत उपरिष्टादष्टाकपालं चक्षुष्कामो ऽग्नेर्वै मनुष्या नक्तं चक्षुषा 20
पश्यन्ति सूर्यस्य दिवा तौ चक्षुषः प्रदातारौ ता एव भागधेयेनोपधा-

---

[1] D हगिता [2] D द्यं त्त्रियं [3] So Ch; D विणिर्बाधे [4] Ch नाञ्शम°; D नाञ्छामयत्ये°; von भवत्ये° etc. bis निर्बाधै° (excl.) in D nicht vorhanden. [5] Ch थैंद्रस्य [6] In D eig. वैश्वदेववरुणौ, aber am Rande corr. in वर्णौ [7] Ch उपचायमृडे; cf. meine Abhdl. Ztschr. d. Dtsch. M. Ges. Bd. 49, p. 163; Pâ. 3, 1, 123. [8] D हिरण्यान्द° [9] D सोमयामी° [10] Ch नूपहतो [11] So Ch; D विश्वै सोम° [12] Ch नानूप° [13] So corr. D व्यर्धको; Ch व्यवुको [14] D वमित्ते [15] Ch सोमेंद्रः [16] Ch पीथा [17] So Ch; D समवयत्येधतो [18] So D; Ch क्नथते [19] D दाधारा°

वति ता अस्मै[1] चक्षुः प्रयच्छतो यत्समानी देवता द्वेधा क्रियते तस्मा-
त्समानं सच्चक्षुर्द्वेधा[2] तस्मात्समानी याज्यानुवाक्ये भवतस्सौर्यस्य म-
ध्यतो ऽवद्यतीदमेव[3] तेन करोति यदिदमन्तरा चक्षुषी चक्षुषोर्व्यावृत्त्यै
त्रीन्पिण्डान्प्रयच्छत्युदु त्यं जातवेदसमयुक्त सप्त शुन्ध्युवस्सप्त[4] त्वा हरितो
5 रथ इति चक्षुरेवास्मै तत्प्रयच्छति[5] यदेव तस्य तत्सैषा राजनी नामे-
ष्टिरेतया ह वै रजनं कोणेयं[6] क्रतुजिज्जानकिश्चक्षुष्कामं याजयांचकार
तयैतया चक्षुष्काम एव यजेताग्नेयमष्टाकपालं निर्वपेदैन्द्रमेकादशक-
पालं बार्हस्पत्यमष्टाकपालं बुभूषन्निन्द्रो वा अधृतश्शिथिल इवाम-
न्यत सो ऽग्नौ चैव बृहस्पतौ चानाथत तमेतयेष्ट्यायाजयतां यदाग्नेय-
10 स्तेज एवास्मिंस्तेन पुरस्तादधत्तां यदैन्द्र[7] इन्द्रियमेवास्मिंस्तेन मध्यतो
ऽधत्तां यद्बार्हस्पत्य उपरिष्टादेवास्मिंस्तेन[8] ब्रह्मवर्चसमधत्तां ततो वै
सो ऽभवदेतया यजेत बुभूषन्यदाग्नेयस्तेजो वा अग्निस्तेज एव तेन पु-
रस्ताद्धत्ते यदैन्द्र इन्द्रियं वा इन्द्र इन्द्रियमेव तेन मध्यतो धत्ते यद्बार्ह-
स्पत्यो ब्रह्म वै बृहस्पतिरुपरिष्टादेव तेन ब्रह्मवर्चसं धत्ते भवत्येवैन्द्र
15 इतरयोर्नाभी समादधातीन्द्रियमेवास्मिन्मध्यतस्समादधात्यैन्द्रो मध्ये
भवत्यभित इतरौ तेजो वा अग्निरिन्द्रियमिन्द्रो ब्रह्म बृहस्पतिस्तेजसा
चैव ब्रह्मवर्चसेन चेन्द्रियमुभयत आत्मन्परिगृह्णाति त्रिवतीर्याज्यानु-
वाक्या भवन्ति समृद्ध्यै तदेतत्त्रिधातु नाम हविस्त्रीणि हि स तेन
वीर्याण्यधत्त[9] ॥ १ ॥ cf. Mâitr. S. 2, 2, 13.

20 आग्नेयमष्टाकपालं निर्वपेत्सावित्रमष्टाकपालं वायव्यां यवागूं
भौममेककपालं यस्य हिरण्यमपहृतं[10] वोपहृतं[11] वा स्याद्यो वा का-
मयेत हिरण्यं विन्देयेत्यग्निर्वा अग्ने[12] हिरण्यमविन्दत्तस्मिन्सविता चा-

---

[1] Ch अस्मे [2] Ch सच्च° [3] D वद्यंतो° [4] Ch शुंध्यवस्सप्त; D स्तं ु: वः; cf. RV 1, 50, 9. [5] So corr. Die Mss. तं प्र°; [6] So die Mss. कोणेयं [7] D यदैंद्रमिंद्रि° [8] In D मध्यतो bis तेन wiederholt. [9] D णाधत्त [10] So D; in Ch मुपहृतं [11] So Ch; in D वापहृतं; cf. Mâitr. S. 2, 2, 7 a. A. यस्य हिरण्यं नश्येद्यो वा हिरण्यं विन्देत [12] So corr. Mss. अग्ने; cf. Mâitr. S. 2, 2, 7 a. A.

मन्त्रयताग्ने[1] ऽतो वायुनानुपगतमस्त्यस्यामेतद्विन्दन्त्यस्यां पुनन्ति य-
दाग्नेयो खित्त्या एव स जातवेदा इति हि प्रसवायैव सावित्रो ऽभि-
नीत्यै वायव्यास्यामेतद्विन्दन्त्यस्यां[2] पुनन्त्येता वै देवता हिरण्यस्येशते
ता एव भागधेयेनोपधावति ता अस्मै हिरण्यं ददति यदा हिरण्यं
विन्देताथैतामेव निर्वपेद्या एवास्मै देवता हिरण्यं ददति ता एव 5
भागिनीः करोत्यात्मनो ऽहिंसाया आग्नेयमष्टाकपालं निर्वपेदैन्द्रमे-
कादशकपालं दधि मधु घृतं धानास्तण्डुलास्तत्संसृष्टं स्यात्तेन पशुका-
मो यजेतद्वर्चा[3] एवाग्नेयो यदैन्द्र इन्द्रः पशूनां प्रदाता तमेव[4] भाग-
धेयेनोपधावति स्रो ऽस्मै पशून्प्रयच्छति यत्संसृष्टं[5] पशवो वै संसृष्टं
पशूनेवावरुन्द्ध ऐन्द्रं कार्यमिन्द्रः पशूनां प्रदाता यदैन्द्रे द्वे सह कुर्या- 10
ज्जामि स्यात्प्राजापत्यं कार्यं प्रजापतिः पशूनां योनिस्स्वादेवैनान्योनेः
प्रजनयति प्रजापतिः प्रदाता तमेव भागधेयेनोपधावति सो ऽस्मै प-
शून्प्रयच्छति रेवती संसृष्टस्य याज्यानुवाक्ये शक्करी इतरस्य[6] पशवो
वै रेवती पशवश्शक्करी[7] पशूनेवावरुन्द्धे पञ्चैतानि संसृष्टानि द्वे इतरे
तानि सप्त सप्तपदा शक्करी शाक्कराः पशवः पशूनेवावरुन्द्धे ॥ पङ्क्ति- 15
षिभवति पाङ्क्तः पुरुषस्सर्व एव भूत्वा पशूनुपैति घृतं भवत्याग्नेयं वै
घृतमग्निः प्रवापयिता प्रैव तेन वापयति मधु भवति सौम्यं वै मधु
सोमो रेतोधा रेत एव तेन दधाति धानाश्च तण्डुलाश्च भवन्त्यह्नो वै
रूपं धाना रात्र्यास्तण्डुला अहोरात्रे पशवो ऽनुप्रजायन्ते नक्तं वा हि
दिवा वा प्रजायन्ते ऽहोरात्रे एवैनाननुप्रजनयति दधि भवत्येतद्रूपा 20
वै पशवो यद्दधि सरूपानेव पशूनवरुन्द्धे न मधु होतव्यमायुर्वै मध्वा-
युरग्नौ प्रदध्यात्प्रमायुकस्स्यादेतयेष्ट्वायुष्पृया यजेत पशूनेवावरुध्यायु-
रुपैति यद्येतया न यजेत वरं दद्याद्वरेणैव वरं स्पृणोति ॥ द्वौ दद्याद्वौ
हि प्राणश्चापानश्च त्रीन्दद्यात्त्रयो हि प्राणाः प्राणो व्यानो ऽपानस्ता-

---

[1] corr. Mss. चामन्त्रयेता° [2] D वायव्यास्तामे° [3] So corr. Mss. यजेतव्या
[4] So Ch; D त एव [5] Ch सृष्टाः [6] D इतरस्या; Ch एतरस्य [7] Ch शाक्करी

नेव यजमाने दधात्येकमेव दद्यात्त्रिवृतं तु त्रिवृद्धि प्राणो बहु वा एतदन्यदन्यज्जुहोति स ईश्वरो ऽन्यद्रूपं[1] पोष्टोस्सिध्मां[2] गां दद्याद्रूपाणां निष्क्रीत्यै सर्वाणि वयांसि दद्यात्सर्वानेव पशूनवरुन्द्धे यदि नाभ्या-
शंसेत पष्ठौहीमन्तर्वर्त्नीं दद्यात्सा हि सर्वाणि वयांसि यद्वत्सं बिभर्ति
5 तेन वत्सा यद्वत्सतरी तेन वयो यत्परं वय आप्ता तेन स्थविरा तयैव सर्वान्पशूनवरुन्द्ध आपो वा इदं निरमृजन्स[3] मनुरेवोदशिष्यत[4] स एता-मिष्टिमपश्यत्तामाहरत्तयायजत तयाप्रथत तयेमं भूमानमगच्छत्प्रथत एव तं भूमानं गच्छति यं मनुरगच्छद्य एवं विद्वानेतया यजेत[5] ॥ २ ॥
cf. Mâitr. S. 2, 2, 7.

देवा[6] वै न समजानत ते चतुर्धा व्युदक्रामन्नग्निर्वसुभिस्सोमो रुद्रै-
10 रिन्द्रो मरुद्भिर्वरुण आदित्यैस्तान्बृहस्पतिरब्रवीद्याजयानि वस्सं वै ज्ञास्यध्व[7] इति तव गृहे याजयानीतीन्द्रमब्रवीत्तव वै श्रैष्ठ्याय सं-ज्ञास्यन्त इति सो ऽग्नये वसुमते ऽष्टाकपालं निरवपत्सोमाय रुद्रवते चरुमिन्द्राय मरुत्वत एकादशकपालं वरुणायादित्यवते चरुं तानि-न्द्रस्य[8] गृहे ऽयाजयत्ततो वै ते समजानत त इन्द्रस्यैव श्रैष्ठ्याय सम-
15 जानत स[9] त्रिष्टुभौ याज्यानुवाक्ये अकरोत्त्रिष्टुब्वा इन्द्रस्य स्वं[10] छन्द ओजो वीर्यं त्रिष्टुप्स्वेनैवास्मिञ्छन्दसौजो वीर्यमदधात्तस्मादिन्द्रो[11] देवानामोजिष्ठो ये स्वा न संजानीरंस्तानेतया[12] याजयेद्यं[13] कामये-तायं श्रेष्ठस्स्यादिति तस्य[14] गृहे संमेव जानत[15] एता एवैनं[16] देवता भागधेयमभि संजानानास्संज्ञापयन्ति[17] त्रिष्टुभौ याज्यानुवाक्ये कुर्या-
20 दोजो वै वीर्यं त्रिष्टुबोज एवैषु वीर्यं दधाति संवती[18] संयाज्ये संमृ-

---

[1] Ch न्यद्रूपो [2] D पोष्टोस्सिध्मां गन्द° Ch पुष्टोस्मिध्मान्गान्द° [3] Ch निरमृजत्स; D निरसृजंत्स [4] So Ch; D मन्वारेवो° [5] So D; Ch यजते [6] Dies Kap. collat. mit T 1, T 3, L, Brl; nach diesen Mss. auch accentuirt. [7] T 1, T 3 und Brl सं वि ज्ञास्यध्व [8] D चरुनिंद्रस्य [9] D सा [10] W स्वच्छन्द [11] Ch मधात्त° [12] T 1, T 3, Brl सञ्ज्ञानीरंस्ता°; W 1 सञ्ज्ञानीरास्ता° [13] D येद्यः [14] D तास्यो [15] D सामञ्जानत [16] L एवेनान; desgl. Ch, ohne Acc. [17] T 1 मभिंसञ्ज्ञानानास्सं° [17] D सवती

ऋद्ध्यै सैषा संज्ञानी नामेष्टिस्संमेव जानते प्रजापतिर्वै सोमाय राज्ञे
दुहितॄरददान्नक्षत्राणि[1] स रोहिण्यामेवावसत्तान्यनुपेयमानानि पुन-
रगच्छंस्तस्मात्स्त्र्यनुपेयमाना[2] पुनर्गच्छति[3] तान्यन्वागच्छत्तानि पुनर-
याचत तान्यस्मै न पुनरददात्सो ऽब्रवीत्सर्वेष्वेव समावद्वसाथ न ते पु-
नर्दास्यामीति स रोहिण्यामेवावसत्तं तस्मिन्ननृते[4] यक्ष्मो ऽगृह्णाच्च-
न्द्रमा वै सोमो राजा यद्राजानं यक्ष्मो ऽगृह्णात्तद्राजयक्ष्मस्य जन्म स
तृणमिवाशुष्यत्स प्रजापता अनाथत सो ऽब्रवीत्सर्वेष्वेव समावद्व-
साथ त्वा ततो मोक्ष्यामीति तस्माच्चन्द्रमास्सर्वेषु नक्षत्रेषु समावद्वसति
तं वैश्वदेवेन चरुणामावास्यां रात्रीमयाजयत्तेनैनं यक्ष्मादमुञ्चत्सो
ऽमुमेवाप्यायमानमन्वाप्यायत वैश्वदेवेन चरुणामावास्यां[5] रात्री य-
जेत यो राजयक्ष्माद्बिभीयाद्यक्ष्मादेवैनं मुञ्चति सो ऽमुमेवाप्यायमा-
नमन्वाप्यायते[6] ॥ ३ ॥

बार्हस्पत्यं चरुं निर्वपेदानुषूकानां[7] व्रीहीणामानुजावरो[8] बृहस्प-
तिर्वै देवानामानुजावरस्सो ऽयं पर्यैद्बृहस्पतिरेतस्य देवता य आनुजा-
वरस्तमेवान्वारभते स एनमग्र्यं परिणयति ब्रह्म वै बृहस्पतिर्ब्रह्म ब्राह्म-
णस्य पिता पिता पुत्रस्येशे प्राचो वापाचो वा नोत्तोर्ब्रह्मैवैनं[9] पि-
ताग्र्यं परिणयत्यानुषूका[10] वा एते व्रीहयो[11] य आनुजावरस्तानेतदग्र्यं
परिणयति यद्धविष्करोति तानेवान्वारभते त एनमग्र्यं परिणयन्ति
पुनः प्रवृक्णं बर्हिर्भवति पुनः प्ररूढ[12] इध्मस्समृद्ध्यै बार्हस्पत्यं चरुं
निर्वपेत्सजातकामस्तस्य गणवती याज्यानुवाक्ये स्यातां बार्हस्पत्यो
वै ब्राह्मणो देवतया स्वामेव देवतां भूयिष्ठेनार्पयते[13] गणवती या-
ज्यानुवाक्ये भवतस्सजातैरेवैनं गणिनं करोति ब्राह्मणस्पत्यं चरुं नि-

---

[1] Ch दुहित्रारद°; D दुहितृरद° [2] D स्मात्तृनु° [3] T 3 पुंन पुनर्गच्छति [4] L वावासत्तंन्तंस्मिन्नानृते; desgl. D, ohne Accent. [5] Brl मावास्यां [6] W 1 सोमम्पि-वाप्या° Brl सोममेवा° [7] D नुष्टूकाणां [8] Mss. व्रीही° [9] Ch नोत्तोर्ब्रह्मवैनम्पि°; D नोत्तोर्ब्रह्मोवैनं [10] Ch नूणूका; D नुमूका [11] Mss. व्रीहयो [12] Ch प्ररूढा; D प्ररूढ [13] D नार्पयते

र्वपेत्तस्य मारुती याज्यानुवाक्ये स्यातां यः कामयेत ब्रह्म बलं स्या-
दिति ब्रह्म वै ब्रह्मणस्पतिर्विंरमरुतो ब्रह्मण्येव विश्मनुविनाशयति
ताजग् ब्रह्म बलं भवत्यर्यम्णे चरुं निर्वपेद्यः कामयेत दानकामा मे
प्रजास्स्युरित्येष[1] वा अर्यमा यो ददाति दानमिमाः प्रजा उपजीवन्ति
5 दानकामा अस्मै भवन्त्यैन्द्राबार्हस्पत्यं चरुं निर्वपेद्राजन्याय बुभूषते
देवा वै राजन्याज्जायमानादबिभयुस्तमनुहाय दाम्नापौम्भन्नपोब्धो[2]
वा एष जायते यो राजन्यो यद्वा एषो ऽनपोब्धो जायेत न किंचन
स्यात्सर्वा इमाः प्रजा अधिषादमद्यादैन्द्रो राजन्यो देवतया ब्रह्म बृह-
स्पतिर्ब्रह्मणैवैनमपोम्भनान्मुञ्चति सो ऽनपोब्धो वीर्याय प्रस्रियते द्वि-
10 वृद्धिरण्यं[3] दक्षिणा यद्देवादो दाम तस्य निरवत्त्यै प्राजापत्यं चरुं नि-
र्वपेच्छतकृष्णलं घृत आयुष्कामो देवा वै प्रमयादबिभयुस्ते[4] प्रजापता
अनाथन्त तानेतयेष्ट्यायाजयदमृतं[5] वै हिरण्यममृतेनैवैष्वमृतमदधा-
त्ततो[6] वै ते ऽमृता अभवन्नेतया यजेत यः प्रमयाद्बिभीयादमृतं वै हि-
रण्यममृतेनैवास्मिन्नमृतं दधाति[7] शतकृष्णलो भवति शतायुर्वै पुरुष-
15 श्शतवीर्य आयुरेव वीर्यमवरुन्द्धे वैश्वदेवः कार्यो विश्वान्हि स तद्देवा-
नयाजयत्प्राजापत्यः कार्यः प्रजापतिर्योनिर्योना एव प्रतितिष्ठति ॥
चत्वारि चत्वारि कृष्णलान्यवदानं भवति समृद्ध्यै तं ब्रह्मणे परिहरन्ति
ब्रह्म वै ब्रह्मा ब्रह्मणैवास्मिन्नेकधायुर्दधात्येतया यजेत यः कामयेत व-
सीयान्स्यामित्येष वै मनुष्यस्य स्वर्गो लोको यदस्मिंल्लोके वसीयान्भ-
20 वत्यृध्नोति वसीयान्भवति य एवं विद्वानेतया यजेत सौर्यं चरुं निर्व-
पेन्नतश्रीस्तस्य हरितो रुक्मो ऽपिधानस्स्याद्रजतो ऽधस्तादसौ वा आ-
दित्यो ऽन्तो ऽन्तं[8] मनुष्यश्रियो गत्वा निवर्तते[9] ऽन्तादेवान्तमाल-
भते[10] न ततः पापीयान्भवति यादृक्[11] सन्यजते ऽसौ वा आदित्य इद-

---

[1] D त्येषा  [2] Ch दाम्णा°  [3] D रण्यान्द°  [4] Ch प्रमाया°  [5] Ch येदमृत°
[6] So Ch; D मादधात्ततो  [7] Ch ददाति  [8] So Ch; D न्ते न्त  [9] Ch वर्तति
[10] Ch तांदेवान्तम°  [11] So Ch; D यादृक्सन्यजते

मासीत्स इदं निर्दहन्नचरत्तं[1] देवा आभ्यां परिगृह्यामुं लोकमगमयन्स
न व्यरोचत ते प्रयाजेषु पञ्च हिरण्यकृष्णलान्यजुहवुस्तेजो वै हिरण्यं
तेजसैवास्मिंस्तेजो ऽदधुस्ततो[2] वै स तेजो ऽगृह्णात्स इमाः पञ्च दिशो
ऽनु तेजस्व्यभवदियं वै रजतासौ हरिण्याभ्यामेवैनं[3] परिगृह्यामुं लोकं
गमयति स वै न विरोचत इत्याहुर्न हि स व्यरोचतेति प्रयाजेषु पञ्च 5
हिरण्यकृष्णलानि जुहुयात्तेजो वै हिरण्यं तेजसैवैनं संसृजति स इमाः
पञ्च दिशो ऽनु तेजस्वी भवति ॥ ४ ॥ cf. Mâitr. S. 2, 1, 12. 2, 2, 2.

सौमारौद्रं[4] चरुं निर्वपेच्छुक्लानां व्रीहीणां श्वेतायाश्श्वेतवत्साया
आज्यं मथितं स्यात्तस्मिन्ब्रह्मवर्चसकामस्स्वर्भानुर्वा आसुरस्सूर्यं तम-
साविध्यत्स न व्यरोचत[5] तस्मै देवाः प्रायश्चित्तिमैच्छंस्तमेतयेष्ट्याया- 10
जयंस्तयास्मात्तमो[6] ऽपाघ्नंस्तमसैष[7] प्रावृतो यो ऽलं ब्रह्मवर्चसाय सन्न
ब्रह्मवर्चसी भवति तम एवास्मादपहन्ति ब्रह्मवर्चसेनैनं संसृजति[8]
श्वेतायाश्श्वेतवत्साया आज्यं भवति[9] शुक्ला[10] व्रीहय[11] एवमिव वै ब्रह्मव-
र्चसं ब्रह्मवर्चसमेव संदधाति ॥ घृतेन प्रोक्षन्ति घृतेन मार्जयन्ते शान्त्यै[12]
शान्तिर्ह्यापो ऽप्यस्य तां रात्रीमपो गृहान्नावहरेयुः परिश्रिते यजेत 15
ब्रह्मवर्चसस्य परिगृहीत्यै प्रादेशमात्रश्चरुरूर्ध्वो भवत्येवं तिर्यङ्ङेतावान्वै
पुरुषो यावदस्य प्राणा अभि यावानेवास्यात्मा तस्मात्तमो ऽपहन्ति
साकं रश्मिभिः प्रचरन्त्यसा एवास्मादादित्य उद्यंस्तमो[13] ऽपहन्ति ति-
ष्यापूर्णमासे यजेत तिष्यो वै रुद्रश्चन्द्रमास्सोमस्सौमीरितः[14] प्राचीन-
मोषधयो रौद्रीः प्रतीचीनं पुष्यन्ति प्राचीनं पुष्यन्ति प्रतीचीनं प्रत्य- 20
क्षमेवैना आप्नोतीश्वरो दुश्चर्मा भवितोर्य एतया यजते ऽतीव ह्यस्माद्-

---

[1] D निर्दहचुचरत्तं; Ch दंहचरत्तन्देवा [2] D दध [3] So D; Ch हिर॰ [4] Dies Kap. collat. mit W 1, St fol. 9—11, T 1 und Brl fol. 108. 109. Nach diesem Mss. auch accentuirt. [5] Dies Wort in den Mss. ohne Accent. [6] Brl यंस्तं॰ [7] Brl पाघ्नंस्तं॰ [8] In D fehlt das सं [9] In Brl भवति ohne Accent. [10] D शुक्ला [11] Ch und D व्री॰ [12] So corr., die Mss. (St, T 1, Brl) betonen मार्जयन्ते शान्त्यै; Ch schreibt शांते [13] Brl उद्यंस्तमो [14] St सोमास्सौ॰

पहन्ति मनोर्ऋचस्सामिधेनीष्वप्यनुब्रूयान्मनुर्वै यत्किंचावदत्तद्भेषज-
मासीद्भेषजमेवास्मै करोत्युपक्षरन्ति सिन्धवो मयोभुव इति नाराशं-
स्यां[1] परिदधाति[2] शान्त्यै षट्पदा भवति षड्वा ऋतव ऋतुष्वेव प्रति-
तिष्ठतीश्वरस्तु तदति दुश्चर्मैव भवितोस्तेजांसि ह्येष प्रत्यारोहन्नेति[3]
5 सौमापौष्णं चरुं पशुकामो ऽनुनिर्वपेत्सोमो वै ब्राह्मणस्य स्वा देवता
पशवः पूषा स्वामेव देवतां पशुभिर्विह्वयते[4] त्वचमेव कुरुते सौमा-
रौद्रं चरुं निर्वपेत्कृष्णानां व्रीहीणामभिचरन्त्सोमो वा आसां प्रजाना-
मधिपती रुद्रो ऽग्निरधिपतिर्वध्यस्य चावध्यस्य चेशे[5] ऽधिपतिमेवैनं
निर्याच्य[6] रुद्रायापिदधाति कृष्णानां व्रीहीणां भवति कृष्णमिव वै
10 तमस्तमो मृत्युर्मृत्युनैवैनं ग्राहयति[7] शरमयं बर्हिश्शीर्त्यै वैभीतक[8]
इध्मो विभित्त्यै सौमारौद्रं चरुं निर्वपेद्भ्रातृव्यतायै वा द्वितीयतायै वा[9]
तस्यार्धमर्धं सर्वं स्यादर्धं शुक्लानां[10] व्रीहीणां स्यादर्धं कृष्णानामर्धं
शरमयं बर्हिषो ऽर्धं दर्भमयमर्धं वैभीतकमिध्मस्यार्धमन्यस्य वृक्षस्य
सोमो वै ब्राह्मणस्य स्वा देवता स्वायामेवास्मै देवतायां द्वितीयं
15 जनयति यदर्धमर्धं द्वितीयत्वायैव तत्सौमारौद्रं[11] चरुं निर्वपेत्पयस्या-
मयाविनस्सौम्यो वै जीवन्नाग्नेयः प्रमीतो[12] नैष जीवो न मृतो य
आमयावी तयोरेवैनं भागधेयेन निष्क्रीणाति ॥ पयसि भवति पयो
वै पयः पयः पुरुषः पय एतस्यामयति यस्यामयति[13] पयसैवास्य[14]
पयस्स्पृणोति ग्रसितं वा एष[15] एति सोमारुद्रयोर्निष्खिदति[16] यो होता
20 भवति स ईश्वरः प्रमेतोरनड्वाहं[17] तस्मै दद्यात्तं हन्यात्तस्याश्नीयात्सैव तत्र
प्रायश्चित्तिस्सौमारौद्रं[18] चरुं निर्वपेत्प्रजाकामो वा पशुकामो वा सौ-

---

[1] D नराशंस्यात्य° [2] W 1 दधाति [3] T 1 und Brl हर्चिति [4] Ch भेह्वयते
[5] Brl चेषों; desgl. Ch, ohne Accent. [6] D यांश्च [7] So T 1 und Brl; die andern Mss. ग्रह्वयति [8] Ch शीर्त्यै वैभीतका [9] Ch य वा [10] D शुक्लानां
[11] T 1 und Brl त्वायैवैतंत्सौ° [12] D प्रमितो [13] D पयति [14] W 1 पयस्यैवास्य; Ch पयमेवास्य [15] एषं fehlt in Brl. [16] D सोमारुद्रयो°; Ch सोमारौद्रयो°: W 1 सोमारु ˙ यो नि°; St सोमारौद्रं योचिं° [17] T 1, Brl प्रमितोर° [18] D सोमा°

मो वै रेतोधा रुद्रो ऽग्निस्सं प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजनयति विन्दते प्रजां[1] वा पशून्वा यतरस्मै कामाय निर्वपति ॥ ५ ॥

cf. Mâitr. S. 2, 1, 5. 6.

आदित्येभ्यो[2] धारयद्वद्भ्यश्चरुं निर्वपेदपरुद्धो वापरुध्यमानो वादित्या वै धातार आदित्या अपरोद्धारस्तानेव भागधेयेनोपधावति त एनं दाधत्यादित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्बुभूषन्नदितिर्वै प्रजाकामौदनमपचत्तस्योच्छिष्टमाश्नात्सा गर्भमधत्त[3] तत आदित्या अजायन्त सामन्यतैतौ मे श्रेयांसो[4] ऽजनिषन्त यत्पुरस्तादाशिष्यमिति सापरमपचत्तस्योभयत आश्नात्पुरस्ताच्चोपरिष्टाच्च सा गर्भमधत्त सो ऽन्तरेव गर्भो ऽवदत्[5] आदित्या अमन्यन्तायं च वै जनिष्यते स एवेदं भविष्यतीति तं निरघ्नन्स[6] निरस्तो ऽशयत्सा तृतीयमपचदादित्येभ्य[7] एवास्त्वेव स यस्तस्माद्योनेरभूद्यस्माद्भूयमसृज्यध्वमिति तं समस्कुर्वंस्तस्य[8] यन्मृतमासीत्तदपाकृन्तन्स[9] हस्त्यभवद्यज्जीवं स विवस्वाँ[10] आदित्यस्स न तथासीद्यथा[11] तेन भवितव्यं स एतमादित्येभ्यो भुवद्वद्भ्यश्चरुं निरवपत्स्वो[12] वै स्वाय नाथिताय सुहृदयतमस्स्वानेवोपाधावत्ततो[13] [14] वै सो ऽभवदादित्या इमाः प्रजास्स्वस्स्वाय नाथिताय सुहृदयतमस्स्वानेव भागधेयेनोपधावति भूत्यै भवत्येवादित्या भागं वः करिष्यामीति निर्वपन्ब्रूयादिममुमामुष्यायणममुष्याः[15] पुत्रममुष्यां विश्यवगमयतेति भागधेयमेवैभ्यः कुर्वन्प्राह तमादित्येभ्यश्चरुं निर्वपत्यादित्या वै देवविशा देवविशा मनुष्यविशाया ईशे देवविशैवैनं मनुष्यविशामवगमयति[16] सप्ताश्वत्था मयूखा भवन्ति तानिध्मे ऽपि

---

[1] So T1 und Brl; desgl. D und W1, ohne Accent; Ch प्रजा; St प्रजांन्वा
[2] Dies Kap. collat. mit Brl fol. 157—159, und darnach accentuirt.
[3] D माधत्त
[4] Ch श्रयांसे
[5] Brl वदत्तं
[6] Brl तंच्चिर°; desgl. D und Ch, ohne Accent.
[7] Brl und Ch मपतादि°
[8] Brl ति तों संप्रस्कुर्वं°
[9] D कृन्तत्स; Brl कृणुत्सं
[10] Brl विवस्वि; Accent ergänzt.
[11] Ch सोद्यथा तेथासोद्यथा
[12] Ch निरवपत्स्वा; D निर्वपेत्सा
[13] Brl नुहृदयंतम
[14] D पधा°
[15] Ch यादिदमसुमा°
[16] D विश्रम°; Brl गमति

प्रोक्षति त आ संस्थातोर्वेद्यां शेरते तान्संस्थिते मध्यमेषायामुपहन्ती-
दमहमादित्यान्बध्नाम्यमुष्यामुष्यायणस्यावगमायेति[1] यद्वा सप्तमादह्नो
नावगच्छेदिध्मं[2] तान्कृत्वापरया यजेतैवं द्वितीययैवं[3] तृतीयया त्रिर्वा
आदित्यास्सप्त सप्त यावन्त एवादित्यास्तान्बध्नाति त एनं बद्धा मो-
5 क्षमाणा अवगमयन्ति ॥ विशो वै वीर्यमपाक्रामत्तदश्वत्थं प्राविश-
त्तस्मादेषोऽधृतस्स्वाहा पर्णमेजयंस्तिष्ठति यदाश्वत्था भवन्ति विश
एवास्मिन्वीर्यं बध्नाति सत्याशीरिह मन इति निरुद्धस्य पदमादधी-
तामनस[4] एवैनान्करोत्युप[5] प्रेत मरुतस्स्वतवस एना विश्पतिना-
भ्यमुं[6] राजानमिति विशोऽभिवातमभिध्वंसयन्परीयादभिमनस[7] एवै-
10 नान्करोति[8] यः परस्ताद्ग्राम्यवादी स्यात्तस्य गृहाद्व्रीहीनाहरेयुस्ता-
ञ्छुक्लांश्च[9] कृष्णांश्च विचिनुयुर्ये शुक्लास्तमादित्येभ्यश्चरुं निर्वपेद्ये कृष्णा
नि तान्दध्युरादित्या[10] वै देवविशा देवविशा मनुष्यविशाया ईशे देव-
विशैवैनं मनुष्यविशामवगमयत्येतद्विशमवागन्नित्याहुरथ[11] क्व क्षत्र-
मिति यदा वै क्षत्रमवगच्छत्यथावगच्छति यदावगच्छेद्ये कृष्णास्तं
15 वारुणं चरुं निर्वपेत्क्षत्रं[12] वै वरुणो वरुण एवैनं क्षत्रमवगमयत्युभे
विशा अवगच्छति देवविशां च मनुष्यविशां च यच्छुक्लानामादित्येभ्यो
निर्वपति तस्माच्छुक्ल इव वैश्यो जायते यत्कृष्णानां वारुणं[13] तस्मा-
द्धूम्र इव राजन्यः ॥ ६ ॥ cf. Mâitr. S. 2, 2, 1.

अग्नेरायुरसि[14] तस्य ते मनुष्या आयुष्कृतस्तेनास्मा अमुष्मा आयु-
20 र्धेहीन्द्रस्य प्राणस्स ते प्राणं ददातु[15] यस्य प्राणस्तस्मै ते स्वाहा पि-
तृणां प्राणस्ते ते प्राणं ददतु[16] येषां प्राणस्तेभ्यो वस्स्वाहा[17] मरुतां

---

1 D न्वधास्यमु° Brl गमयेति  2 D ध्मां  3 D यैवात्°  4 Ch ददी°
5 D एवैनाः क°  6 D एनां विश्यतिनाभ्यमुं  7 D यत्परी°  8 D एवैनाः क°  9 D
तां कुक्लां च कृ°; Ch ताञ्कुक्लान्कृष्णांश्च; Brl तांश्कुक्लांश्च कृ°  10 D दध्यु°  11 Ch
विशाम°  12 D क्षेत्रं  13 D वरुणं  14 Dies Kap. collat. mit W 1, T 6 fol.
9 flg. und Brl fol. 8; darnach auch accentuirt.  15 T 6 und Brl दधातु  16 Ch,
T 6 und W 1 ददातु  17 T 6 प्राणांस्तस्मै ते

प्राणास्ते ते प्राणं ददतु येषां प्राणास्तेभ्यो वस्स्वाहा विश्वेषां देवानां
प्राणास्ते ते प्राणं ददतु येषां प्राणास्तेभ्यो वस्स्वाहा प्रजापतेः परमेष्ठिनः
प्राणस्स ते प्राणं ददातु ययोः प्राणस्ताभ्यां वां स्वाहा यदसर्पस्तत्स-
र्पिरभवो यन्नवमैस्तन्नवनीतमभवो[1] यदघ्रियथास्तद्घृतमभवः[2] ॥

घृतस्य धाराममृतस्य पन्थामिन्द्रेण दत्तां प्रयतां मरुद्भिः ।
तं त्वा विष्णुरन्वपश्यत्तं त्वेडा गव्यैरयत्[3] ॥

पावमानेन त्वा स्तोमेन गायत्र्या वर्तन्योपांशोर्वीर्येणोद्धराम्यसौ
बृहता त्वा[4] रथन्तरेण त्रिष्टुभा वर्तन्या शुक्रस्य वीर्येणोत्सृजाम्यसौ[5]
अग्नेस्त्वा मात्रया जगत्या[6] वर्तन्या देवस्त्वा सवितोन्नयतु जीवातवे[7]
जीवनस्यायै असौ देवा आयुष्मन्तस्ते ऽमृतेनायुष्मन्तस्तेषामयमायु-
षायुष्मानस्त्वसौ ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तस्यायमायुषायुष्मानस्त्व-
सौ[8] अग्निरायुष्मान्स वनस्पतिभिरायुष्मांस्तस्यायमायुषायुष्मानस्त्वसौ[9]
यज्ञ आयुष्मान्स दक्षिणाभिरायुष्मांस्तस्यायमायुषायुष्मानस्त्वसौ[10] सोम
आयुष्मान्स ओषधीभिरायुष्मांस्तस्यायमायुषायुष्मानस्त्वसौ[11] ओषधय
आयुष्मतीस्ता अद्भिरायुष्मतीस्तासामयमायुषायुष्मानस्त्वसौ ॥

इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि ।
मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासत् ॥

अश्विनोः प्राणस्तौ ते प्राणं दत्तां[12] तेन जीव मित्रावरुणयोः प्रा-
णस्तौ ते प्राणं दत्तां[12] तेन जीव बृहस्पतेः[13] प्राणस्स ते प्राणं ददातु
तेन जीव ॥ ७ ॥ cf. Mâitr. S. 2, 3, 4.

अग्नाविष्णवमेकादशकपालं[14] निर्वपेत्सारस्वतं चरुं बार्हस्पत्यं चरुं

---

[1] D यन्नवामैस्तन्नवमीतमभवे; in Brl das Stück weggebrochen. [2] D यदघ्रिय° [3] Brl गव्यैरयत्; desgl. Ch und W 1, ohne Accent; T 6 गव्यैरयत; D गव्यैरयम [4] Das त्वा fehlt in W 1. [5] T 6 und W 1 म्यसौ [6] D जागत्या [7] D जीवातये [8] T 6 ब्रह्मायु°; D तद्ब्रह्मणैरा°; T 6 णैरायुष्मांस्तिस्या° त्वसौ'; W 1 स्त्वसौ । [9] T 6 सौ [10] So Brl; T 6 स्त्वसौ ohne Accent. [11] T 6 und W 1 स्त्वसौ [12] Ch दत्त [13] Ch पतिः [14] Dies Kap. collat. mit T 6, T 1 und Brl fol. 146. 147; darnach accentuirt.

पूर्वेद्युरेतया यक्ष्यमाणो ऽग्निर्वै सर्वा देवता विष्णुर्यज्ञो वाक्सरस्वती
ब्रह्म बृहस्पतिरेता एव देवताः पूर्वेद्युर्गृह्णाति प्राणा वै देवताः प्रा-
णानेव[1] गृहीत्वोपवसत्याग्नेयमष्टाकपालं श्वो[2] निर्वपेत्सौम्यं चरुमदित्यै
चरुं वारुणं यवमयं चरुमग्नये वैश्वानराय द्वादशकपालमामयाव्यग्निं[3]
5 वै पुरुषस्य प्रमीतस्य[4] मांसानि[5] गच्छन्ति सोमं रसः[6] पृथिवीं शरी-
रमियमदितिरस्यां हि शय एता वै देवताः पुरुषस्येशते ताभ्य एवैन-
मधि समीरयति ॥ सौम्यो वै जीवन्नाग्नेयः[7] प्रमीतो नैष जीवो न
मृतो य आमयावी तयोरेवैनं भागधेयेन निष्क्रीणाति वरुणगृहीत
एष य आमयावी यद्वारुणो वरुणादेवैनं मुञ्चति यवमयो[8] भवति
10 प्रादेशमात्रो भवति संवत्सरो वा अग्निर्वैश्वानर आयुस्संवत्सरस्संवत्सर
एवैनमायुषि[9] प्रतिष्ठापयति सर्वमायुरेति[10] पञ्चैतानि हवींषि पाङ्क्तः
पुरुषः पुरुषमेवाप्नोत्यग्नेरायुरसीति हिरण्यं घृते[11] ऽवदधात्यग्निजा वै
हिरण्यं मनुष्या[12] अग्नेरायुष्कृतस्तैरेवास्मा आयुर्दधातीन्द्रस्य प्राण इ-
त्येतद्देवत्या वै प्राणास्तानेवास्मिन्दधात्येतद्देवत्या दिशो यथादेवत-
15 मेवैनं दिग्भ्यो ऽधि समीरयति पञ्चैतानि जुहोति[13] पाङ्क्तः पुरुषः पुरु-
षमेव[14] स्पृणोति ॥ सर्व ऋत्विजः पर्याहुस्सर्व एवास्मा ऋत्विजश्चि-
कित्सन्ति ब्रह्मणो[15] हस्तमनु पर्याहुर्ब्रह्म वै ब्रह्मा ब्रह्मणैवास्मिन्नेक-
धायुर्दधाति[16] यदसर्प इति घृतस्यैवैतज्जन्म[17] बन्धुता[18] वीर्यं व्याचष्टे
पावमानेन त्वा स्तोमेनेत्येतावद्वावास्ति यावद्ब्रह्मास्स्तोमाश्छन्दांसि[19]
20 यावदेवास्ति तावतास्मै चिकित्सत्युद्धराम्युत्सृजाम्युन्नयामीति यथा
वध्यमुद्धरत्युत्सृजत्युन्नयत्येवमेवैनमेतदुद्धरत्युत्सृजत्युन्नयति[20] देवा आयु-

---

[1] Ch प्राणोनैव [2] D द्वौ [3] T1 und Brl मामयाव्यग्निं; Ch मासंयाव्यग्निं [4] Ch प्रसो° [5] In T6 Lücke von मांसा bis षस्येशते (sic) [6] D वसः [7] D जीवाचा° [8] Ch यवोमयो; T6 यवमयो [9] T6 मायुषे [10] Ch युरिति [11] D मते [12] Brl हिरणयस्सं मनुष्यां [13] So Brl; T6 जुहोति [14] T6 मेवा [15] T6 ब्रह्मणो; Ch ब्रह्मणा [16] Ch दधाति [17] Ch घृतस्य वै [18] T6 बन्धुता; Ch बंधतां [19] T6 यावद्ब्राह्मा [20] T6 वंध्यमु°; Ch वज्रमु°; cf. Mâitr. S. 2, 3, 5; T6 und Brl तदुद्धर°

ष्मन्त इति प्रयच्छत्येते वै देवा आयुष्मन्तस्तैरेवास्मा आयुः प्र-
यच्छति तत्पिबत्यायुरेव तत्पिबति यदेवं तस्य तन्निरिव[1] धयेद्धिर-
ण्याद्घृतं तेजो वै हिरण्यमायुर्घृतं तेजस एवाध्यायुरात्मन्धत्त इममग्न
आयुषे वर्चसे कृधीति हिरण्यमाबध्नात्यग्निर्वै सर्वा देवता आयुर्हि-
रण्यं सर्वाभिरेवास्मै देवताभिराबध्नाति तिग्ममोजो वरुण संशिशाधीति 5
समेवैनं श्यति[2] मातेवास्मा अदिते शर्म यच्छेतीयमदितिरस्यामेवैनं
प्रतिष्ठापयति विश्वे देवा[3] जरदष्टिर्यथासदिति जरामृत्युमेवैनं करोत्य-
श्विनोः प्राणौ मित्रावरुणयोर्बृहस्पतेरित्येतद्देवत्या[4] वै प्राणास्तान-
वास्मिन्दधाति[5] तानस्मिन्नधि वियातयति तानस्मादनपगान्करो-
ति[6] ॥ ८ ॥ cf. Mâitr. S. 2, 3, 5. 10

पुरोवातो जिन्व रावत्स्वाहा वातावान्वर्षन्नुग्र[7] रावत्स्वाहा स्तन-
यन्वर्षन्भीम रावत्स्वाहावस्फूर्जन्विद्युद्वर्षंस्त्वेष रावत्स्वाहातिरात्रं[8] ववृ-
ष्वान्पूर्त[9] रावत्स्वाहा बहु हायमवृषदिति श्रुत रावत्स्वाहा तपति
वर्षन्विराड् रावत्स्वाहा नशन्यवस्फूर्जन्विद्युद्वर्षन्भूत रावत्स्वाहा मान्दा
वाशाश्शुन्ध्युवो ऽजिरा उन्दतीस्सुफेना ज्योतिष्मतीस्तमस्वतीर्मित्रभृतः 15
क्षत्रभृतस्सुराष्ट्रा[10] इह मावत ॥ वृष्णस्संदानमसि वृष्ट्यै त्वोपनह्यामि
देवा वसव्या[11] अग्ने सोम सूर्येन्द्रो दत्तोदधिं भिन्त दिवः पर्जन्यादन्त-
रिक्षात्पृथिव्यास्ततो मा वृष्ट्यावत देवाश्शर्मण्या मित्र वरुणार्यम-
न्निन्द्रो दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो मा वृष्ट्या-
वत देवास्सपीतयो ऽपां नपादाशुहेमन्निन्द्रो दत्तोदधिं भिन्त दिवः प- 20
र्जन्यादन्तरिक्षात्पृथिव्यास्ततो मा वृष्ट्यावत ॥

---

[1] So D, ohne Accent; T 1 und Brl तंच्चिरवधये°; desgl. Ch, ohne Accent; T 6 तंच्चिरंवदये°; cf. Mâitr. S. 2, 3, 5 निरिवधयति [2] D श्ययति [3] T 6 देवां [4] T 6 स्पंतिरि°; desgl. Ch, ohne Accent. [5] Ch ददाति [6] D गाः करोति; T 6 तांनप-गान्करोति [7] So D und W 1; Ch वातान्वर्षं° [8] Ch स्वाहारात्रं [9] So Ch; D वावृष्वान्पूर्तं; W 1 ववृष्वान्पूर्तं oder पूत्त [10] D मित्रतृतः चतृतः [11] Ch वश्यव्या

दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन ।
यत्पृथिवीं व्युन्दन्ति ॥
उदीरयत मरुतस्समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः ।
न वो दस्रा उपदस्यन्ति धेनवश्शुभं[1] यातामनु रथा अवृत्सत ॥
आ यं नरस्सुदानवो ददाशुषे दिवः कोशमचुच्यवुः ।
प्र पर्जन्यस्सृजतां रोदसी अनु धन्वना यन्तु वृष्टयः ॥
सृजा वृष्टिं दिव आद्भिस्समुद्रं पृण ये देवा दिविभागा ये ऽन्तरिक्षभागा ये पृथिविभागास्त[2] इमं यज्ञमवन्तु त इदं क्षेत्रमाविशन्तु त इदं क्षेत्रमनुविविशन्त्वब्जा असि प्रथमजा बलमसि समुद्रियं दिवो धारां भिन्द्धि[3] मारुतमसि मरुतामोजो ऽपां धारां भिन्द्धि[3] ॥
उन्नम्भय पृथिवीं भिन्द्धीदं[4] दिव्यं नभः ।
उद्नो दिव्यस्य[5] नो देहीशानो विष्या दृतिम् ॥
कृष्णं नियानं हरयस्सुपर्णा अपो वसाना दिवमुत्पतन्ति ।
त आववृत्रन्सदनानि रात्वी[6] घृतेन द्यावापृथिवी व्युन्दन् ॥ ॥ ९ ॥

cf. Mâitr. S. 2, 4, 7.

कृष्णाजिनं[7] भवति मधु करीराणि श्यावस्याश्वस्य दाम[8] तानि पूर्वस्यामरत्नौ निधाय[9] कृष्णं वासो यजमानं परिधापयित्वान्वारम्भयित्वैतानि जुहोति वातनामानि वा एतान्येष वै वर्षस्येशे यदा[10] ह्येष आप्याययति यदा समीरयति यदा प्रदापयत्यथ वर्षति तमेव भागधेयेनोपधावति सो ऽस्मै प्रीतो वृष्टिं निनयत्यष्टा एतानि जुहोति चतस्रो दिशश्चतस्र उपदिशो यथादिशमेव दिग्भ्यो वृष्टिं संप्रच्यावयति[11] कृष्णाजिने संयौति हविरेव करोति मधुना संयौत्यपां[12] वा

---

[1] D शुभे; W 1 शुभां [2] So Ch; D und W 1 पृथिवी° [3] Mss. भिन्धि [4] D भिन्धिदं; Ch पृथिवीम्भिधीदन्दि° [5] D und W 1 देव्यस्य [6] So Ch und W 1; in D शत्री; cf. RV 1, 164, 47; unten 11, 13 derselbe Vers, mit RV conform. [7] Dies Kap. collat. mit T 1 und Brl fol. 147—149; darnach accentuirt. [8] Brl धाम [9] Brl विधाय [10] यदा in T 1 und Brl ohne Accent; ergänzt. [11] D संप्रख्या° [12] Ch संयत्यपां

एष ओषधीनां रसो यन्मध्वग्न एष ओषधिभ्यो वर्षति यर्हि वर्षत्यग्न
एवौषधिभ्यो वृष्टिं निनयति ॥ मान्दा वशा इत्येतानि वा अपां ना-
मधेयानि यथाद आहासा[1] एहसा एहीत्येवमेवैना[2] एतन्नामयाहं दि-
वश्च्यावयति[3] न वा अन्ययेत्याहुस्सौम्या आहुत्या दिवो वृष्टिं च्याव-
यितुमर्हतीति[4] यतीन्वै सालावृकेया[5] आदंस्तेषां शीर्षाणि परापत- 5
स्ते[6] खर्जूरा[7] अभवन्यस्सोमपीथस्स ऊर्ध्वो ऽपतत्तानि करीराणि यत्क-
रीराणि[8] भवन्ति सौम्यैवाहुत्या[9] दिवो वृष्टिं निनयति तस्मात्करीरा-
णि[10] न स्त्रियै दद्यान्न शूद्रायासोमपीथ[11] इव[12] ह्येष वृष्णस्संदानमसि
वृष्ट्यै त्वोपनह्यामीति वृषा ह्यश्वो वृषा पर्जन्यस्समृद्ध्यै श्यावस्या-
श्वस्य दाम भवति श्याव इव ह्येष वर्षिष्यन्भवति ॥ देवा वसव्या दे- 10
वाश्शर्मण्या देवास्सपीतय इत्येता वै देवता वर्षस्येशते ताभिरेवास्मा
अन्वहं वृष्टिमिच्छति कृष्णाजिनं उपनह्यत्यृक्सामयोर्वा एतद्रूपं य-
त्कृष्णाजिनमृक्सामाभ्यामेवास्मै वृष्टिमिच्छति यदि वर्षेत्तदेवेष्टिं नि-
र्वपेद्यदि न वर्षेत्तथैव वसेयुरहोरात्रे[13] वै मित्रावरुणा अहोरात्रे पर्ज-
न्यो ऽनुवर्षति नक्तं वा हि दिवा वा वर्षत्येतौ[14] वर्षस्येशाते ता[15] एव 15
भागधेयेनोपधावति ता अस्मै प्रीतौ वृष्टिं निनयतो ऽग्नये धामच्छदे
श्वो[16] ऽष्टाकपालं निर्वपेन्मारुतं चरुं सौर्यमेककपालमग्निर्वा[17] इतो
वृष्टिमुदीरयति धामच्छदिव[18] भूत्वा वर्षति मरुतस्सृष्टां[19] वृष्टिं नय-
न्ति ॥ यदासा आदित्यो ऽर्वाङ् रश्मिभिः पर्यावर्ततेऽथ वर्षत्येता वै
देवता वर्षस्येशते ता एव[20] भागधेयेनोपधावति ता अस्मै प्रीता[21] 20

---

[1] T1 und Brl आसा
[2] T1 und Brl एहीत्येवमेवैना
[3] D दिवश्श्याव°*
[4] Ch श्यावयि°; T1 und Brl च्यावयितुमर्हयतीति; Accent corr.
[5] Ch कीया
[6] T1 पतास्ते; desgl. Ch, ohne Accent.
[7] Dies Wort in den Mss. ohne Accent; Acc. ergänzt nach TS 2, 4, 9, 2.
[8] D यः क°
[9] D सोम्यो वा°
[10] D तस्याः क°
[11] T1 und Brl शूद्राय सोमपीथं
[12] Ch इवा
[13] Ch वसेयुर°
[14] Brl दिवा वर्षं°
[15] Ch त
[16] So Acc. corr.; T1 und Brl श्वो ष्टा°; Ch schreibt श्वोष्टाक°
[17] Ch सौर्यमेकादशकपाल°
[18] Brl धामच्छंदेव
[19] T1 und Brl सृष्टं; Ch सृष्टा
[20] Brl एवा
[21] D प्रीतां

वृष्टिं निनयन्त्यप्यवर्षिष्यन्वर्षत्येव[1] षडेतानि हवींषि षड्वा ऋतव ऋतुभ्य एवं वृष्टिं संप्रच्यावयति[2] यत्सप्तमं संवत्सरादेव तेन वृष्टिं च्यावयत्यथैता[3] मारुतीश्चतस्रः पिच्छ्यास्तासां[4] तिसृभिः प्रचरन्ति[5] न्येकां दधत्यृचो ऽनुवाक्या यजूंषि याज्या मरुतो वै वर्षस्येशते तेभ्य एव भूयो भागधेयं करोति यां चतुर्थीं तां संस्थिते ऽप्सु जुहोति सृजा वृष्टिं दिव आञ्जिस्समुद्रं पृणेत्याभिरेवामूरच्छैत्यथो इमाश्चैवामूश्च संसृजति ये देवा दिविभागा इति कृष्णाजिनमवधूनोति दिशश्चैव देवताश्च तर्पयत्यथो इमं एवास्य लोका अभीष्टाः प्रीता भवन्ति सैषा[6] कारीरी नामेष्टिस्संवत्सरं करीराणां नाश्नीयाद्य एतया यजेताथो यो ऽनुब्रुवीत[7] तदस्या व्रतम् ॥ १० ॥ cf. Mâitr. S. 2, 4, 8; TS 2, 4, 9. 10.

या वां मित्रावरुणौ सहस्यौजस्या रक्षस्या यातव्या तनूस्तया वां विधेम तयेममनुमामुष्यायणममुष्याः पुत्रमंहसो मुञ्चतं यस्ते राजन्वरुण देवेषु पाशस्तं त एतदवयजे तस्मै स्वाहा यस्ते राजन्वरुणान्ने द्विपात्सु चतुष्पात्सु पशुषु वनस्पतिष्वोषधीष्वप्सु पृथिव्यां पाशस्तं त एतदवयजे तस्मै स्वाहा या वां मित्रावरुणौ सहस्यौजस्या रक्षस्या यातव्या तनूस्तया वामविधाम[8] तयेममनुमामुष्यायणममुष्याः पुत्रमंहसो ऽमौक्तम्[9] ॥ ११ ॥ cf. Mâitr. S. 2, 3, 1.

मक्षू[10] देववतो रथश्शूरो वा पृत्सु कासु चित् ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥
नकिष्टं कर्मणा नशन्न[11] प्रयोषन्न[12] योषति[13] ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥

---

[1] D वर्षत्येव [2] Ch प्रयावयति; D च्यावयति [3] Ch प्रयावयत्य॰ [4] Ch पिंछास्तासां [5] Ch रंते [6] T 1 und Brl सैषा; Acc. corr. [7] So D, ohne Acc.; T 1 und Brl नुब्रवीत्तं; Ch नुब्रवीत [8] So Ch; D वामविधेम [9] Ch मोक्तम
[10] Dies Kap. collat. mit W 1, W 2, T 1, T 3, Brl; soweit diese Ṛcaka-Mss den Text bieten, ist derselbe nach ihnen accentuirt; der Anfang nach W 2, T 1, Brl.
[11] T 1 und Brl नंशच [12] T 1, W 2, Brl योशवं [13] D योषत

न यजमान[1] रिष्यसि[2] न सुन्वान[3] न देवयो ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥
असदत्र सुवीर्यमुत त्यदाश्वश्व्यम् ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥[4]
अग्निं वः पूर्व्यं गिरा देवमीडे वसूनाम् । 5
सपर्यन्तः पुरुप्रियं मित्रं न क्षेत्रसाधसम् ॥
उपक्षरन्ति सिन्धवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः ।
पृणन्तं च पपुरिं च श्रवस्यवो घृतस्य धारा उपयन्ति विश्वतः ॥
सोमारुद्रा विवृहतं विषूचीममीवा[5] या नो गयमाविवेश ।
आरे बाधेथां निर्ऋतिं पराचैरस्मे[6] भद्रा सौश्रवसानि सन्तु ॥ 10
सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् ।
अवस्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत् ॥
सोमारुद्रा धारयेथामसुर्यं प्र वामिष्टयो ऽरमश्नुवन्तु ।
दमे दमे सप्त रत्ना दधाना शं नो भूतं द्विपदे शं चतुष्पदे ॥
सोमापूषणेमौ[7] देवौ महि वो महतामवः ।[8] 15
वरुण मित्रार्यमन्नवांस्यावृणीमहे[9] ॥

यज्ञो देवानाम् ॥

धारयन्त[10] आदित्यासो जगत्स्था देवा विश्वस्य भुवनस्य गोपाः[11] ।
दीर्घाधियो रक्षमाणा असुर्यमृतावानश्चयमाना ऋणानि ॥
तिस्रो भूमीर्धारयन्त्रींरुत[12] द्यून्त्रीणि व्रता विदथे[13] अन्तरेषाम्[14] । 20
ऋतेनादित्या महि वो महित्वं तदर्यमन्वरुण मित्र चारु ॥

---

[1] T 1, Brl यजमानं [2] Ch und W 2 ऋष्यसि [3] T 1 und Brl सोन्वान; D सुत्वान [4] Hier brechen die Rcaka-Mss ab. [5] Ch समीवया [6] Ch ऋंतिमराचैरस्मै [7] So corr. Ch पोषणोमो; D पोषाणोमौ [8] So corr. D महतामवो वरुण; Ch मवतामवो वरुणो [9] So corr. Die Mss. (Ch und D) मन् । अवाँ° [10] Mit धारयन्त beginnt wieder ein Stück in den Rcakas W 1, T 1, T 3, Brl fol. 33; mit diesen Mss. collat. und nach ihnen accentuirt. [11] W 1 गोपः [12] D धारयंतीरुतं द्युं; Ch धारयंत्रीरुतद्यूंत्रीणि [13] D विदधे [14] T 3 अन्तरिक्षम् ।

इमां गिर आदित्येभ्यो घृतस्नूस्सनाद्राजभ्यो[1 2] जुह्वा जुहोमि ।
शृणोतु मित्रो अर्यमा भगो मे तुविजातो वरुणो दक्षो अंशः ॥
आदित्यासो अदितयस्स्याम पूर्देवत्रा वसवो मर्त्यत्रा ।
सनेम मित्रावरुणा सनन्तो भवेम द्यावापृथिवी भवन्तः ॥
ऽमं मे वरुणास्तभ्नाद् द्यामसुरः ॥ १२ ॥ cf. Mâitr. S. 4, 11, 2.

अग्नाविष्णू[3] अग्नाविष्णू पावका न आ नो दिवो बृहस्पते जुषस्व नः ॥
बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन्[4] ।
सप्तास्यस्तुविजातो रवेण[5] वि सप्तरश्मिरधमत्तमांसि ॥
अग्न आयूंषि पवसे ॥
आयुर्दा देव जरसं वृणानो घृतं वसानो घृतपृष्ठो अग्ने ।
घृतं पिबन्नमृतं चारु ग्व्यं पितेव पुत्रं जरसे नयेमम् ॥
गयस्फानः ॥
या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् ।
गयस्फानः प्रतरणस्सुवीरो ऽवीरहा प्रचरा सोम दुर्यान्[6] ॥
सुत्रामाणं महीमू ष्विमं मे वरुण तत्त्वायामि वैश्वानरो न ऊतये पृष्टो दिवि ॥
रमयता[7] मरुतश्श्येनमायिनं मनोजवसं वृषणं सुवृक्तिम् ।
येन शर्धो ऽवसृष्टमुयमेति[8] तमश्विना परिधत्तं स्वस्ति ॥
अभिक्रन्द स्तनय गर्भमाधा[9] उदन्वता परिदीया रथेन ।
दृतिं सु कर्ष विषितं[10] न्यञ्चं समा भवन्तूद्वतो निपादाः ॥

---

[1] Brl घृतांस्नुस° [2] D समाद्रा° [3] Dies Kap. collat. mit T 1, T 3, Brl fol. 33. 34; darnach accentuirt. [4] Dies Wort in allen Mss. ohne Accent; dieser daher von mir ergänzt. [5] Ch रवेन [6] Brl und T 3 दौर्यान् [7] T 1, T 3, Brl रमयत [8] D वावृष्टमुयमिति [9] T 1, T 3, Brl स्तनयद्गर्भमाधा [10] T 1, T 3, Brl विषितो

आ ते सुपर्णा अमिनन्तँ[1] एवैः कृष्णो नोनाव वृषभो यदीदम् ।
शिवाभिर्न[2] स्मयमानाभिरागात्पतन्ति मिहस्स्तनयन्त्यभ्रा[3] ॥
कृष्णं नियानं हरयस्सुपर्णा अपो वसाना[4] दिवमुत्पतन्ति ।
त आववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते[5] ॥
वाश्रेव विद्युन्मिमाति[6] वत्सं न माता सिषक्ति ।
यदेषां[7] वृष्टिरसर्जि ॥
दिवो नो[8] वृष्टिं मरुतो ररीध्वं[9] प्रपिन्वत वृष्णो अश्वस्य धाराः ।
अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः ॥
परि यो रश्मिना दिवो ऽन्तान्ममे पृथिव्याः ।
उभे आपप्रौ रोदसी महित्वा ॥
वहिष्ठेभिर्विहरन्यासि तन्तुमवव्ययन्नसितं देव वस्म ।
दविध्वतो रश्मयस्सूर्यस्य चर्मेवावाधुस्तमो[10] अप्स्वन्तः ॥ ॥ १३ ॥

cf. Mâitr. S. 4, 11. 2; 4, 12, 5.

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां मारुतं नाम एकादशं स्थानकं संपूर्णम्[11] ॥

---

[1] D अमिनन्ती; Ch अमिरंती; cf. RV 1, 79, 2. [2] T 1, T 3, Brl नस्स्मय°; desgl. W 1, ohne Acc. [3] Ch त्यन्त्रा [4] D वसानो [5] Dies Wort in allen Mss. ohne Accent; dieser von mir ergänzt. [6] Ch विद्यन्दमाति [7] Ch यदोषां [8] Ch, T 1, T 3, Brl न [9] T 1, T 3, Brl रोरध्वं [10] W 1 वाध्वस्तोमो [11] So die Unterschrift dieses Kapitels in Ch: in D lautet dieselbe इति मारुतं नाम एकादशं स्थानकं समाप्तम् ॥

पयस्यया यजेतामयावी मैत्रावरुणी ब्राह्मणस्य स्यादैन्द्रावरुणी[1] राजन्यस्याग्निवारुणी वैश्यस्यर्द्धचा एवाग्नेयो मैत्रो ब्राह्मणो देवतया वरुणगृहीत एष य आमयावी स्वामेव देवतां भागधेयेनोपधावति वरुणादेनं वारुणेन मुञ्चत्यैन्द्रो राजन्यो देवतया वरुणगृहीत एष य
5 आमयावी स्वामेव देवतां भागधेयेनोपधावति वरुणादेनं वारुणेन मुञ्चत्यग्निस्सर्वा देवतास्तच्च वैश्यस्यापि वरुणगृहीत एष य आमयावी स्वामेव देवतां भागधेयेनोपधावति वरुणादेनं वारुणेन मुञ्चति पयस्या[2] भवति पयो वै पयस्या पयः पुरुषः पय एतस्यामयति यस्यामयति पयसैवास्य पयस्स्पृणोति ॥ पुरोडाशो भवत्यस्थन्वन्तमेवैनं
10 कृत्वा प्रतिष्ठापयति पशुर्वै पुरुषः पशुः पुरोडाशः पशुनैव पशुं स्पृणोति व्युह्यावद्यति यथानुभिद्य शल्यं निर्हरत्येवमेवास्यैतन्मध्यतो यक्ष्मं निर्हरति समुह्याग्नये ऽवद्यति यथा शल्यं निर्हृत्य समायत्य संनह्यत्येवमेव तदथैत एककपाला न वै पुरुषं कपालैराप्नुमर्हत्येकधैवैनमाप्नोत्यष्टौ भवन्त्यष्टौ वै पुरुषस्य शफाश्शफश एवैनमाप्नोति ताननुपरिचारं[3] जु-
15 होत्यत्रात्र वै वरुणपाशो यत्र यत्रैव वरुणपाशस्तत एनं वरुणान्मुञ्चति ॥ व्यृद्धा[4] वा एषाहुतिर्यामनग्नौ जुहोत्यग्नौ सर्वे होतव्या अग्निस्सर्वा देवतास्तेनैव तान्कामान्स्पृणोति[5] न व्यृद्धामाहुतिं[6] जुहोति पयस्यया यजेत सजातकाम ऋद्धचा एवाग्नेयो मैत्रो ब्राह्मणो देवतया वरुणगृहीत एष यो ऽलं सजातेभ्यस्सन्नसजातो भवति स्वामेव[7] दे-
20 वतां भागधेयेनोपधावति वरुणादेनं वारुणेन मुञ्चति पयस्या[8] भवति पयो वै पयस्या पयस्सजाताः पयसैव पयो ऽवरुन्द्धे व्यूहति दिशस्तर्पयति समूहति सजातानेवास्मै समूहति समानमेककपालानां ब्राह्मणं पयस्यया यजेत पशुकाम ऋद्धचा एवाग्नेयो मैत्रो ब्राह्मणो[9]

---

[1] So Ch; in D वारुणौ; cf. Pâ. 7, 3, 23. [2] Ch पयस्यो [3] Ch पचारं
[4] D वृद्धा [5] तान् fehlt in Ch [6] D वृद्धा° [7] So Ch; D सत्रसजातो देवतिमेव
[8] Ch पयस्यो [9] D मैत्राब्राह्मणो

देवतया वरुणगृहीत एष यो ऽलं पशुभ्यस्सन्नपशुर्भवति स्वामेव दे-
वतां भागधेयेनोपधावति वरुणादेनं वारुणेन मुञ्चति पयस्या[1] भवति
पयो वै पयस्या पयः पशवः पयसैव पयो ऽवरुन्द्धे व्यूहति दिशस्तर्प-
यति समूहति पशूनेवास्मै समूहति समानमेककपालानां ब्राह्मणं
पयस्यया यजेत बुभूषन्नृद्ध्या एवाग्नेयो मैत्रो ब्राह्मणो[2] देवतया वरु-
णगृहीत एष यो ऽलं भूत्यै सन्न भवति[3] स्वामेव देवतां भागधेयेनोप-
धावति वरुणादेनं वारुणेन मुञ्चति पयस्या भवति पयो वै पयस्या
पयः पुरुषः पयसैव पयो ऽवरुन्द्धे व्यूहति दिशस्तर्पयति समूहति भू-
तिमेवास्मै समूहति समानमेककपालानां ब्राह्मणम् ॥ १ ॥

cf. Mâitr. S. 2, 3, 1.

ध्रुवो ऽसि ध्रुवो ऽहं सजातेषु भूयासं ध्रुवा मयि सजाता उग्रश्चेत्ता
वसुविदभिभूरस्यभ्यहं सजातान्भूयासं धीरश्चेत्ता वसुवित्परिभूरसि पर्यहं
सजातान्भूयासं धीरश्चेत्ता वसुवित्सूरिरसि सूरिरहं सजातेष्वधिभूयास-
मुग्रश्चेत्ता वसुविदामनस्य देवा ये सजातास्समनसो यानहं कामये
हृदा ते मां कामयन्तां हृदा तान्म आमनसस्कृधि स्वाहामनस्य देवा
यास्स्त्रियस्समनसो या अहं कामये हृदा ता मां कामयन्तां हृदा ता
म आमनसस्कृधि स्वाहामनस्य देवा ये पुत्रासो ये[4] पशवस्समनसो
यानहं कामये[5] हृदा ते मां कामयन्तां हृदा तान्म आमनसस्कृधि
स्वाहा ॥ देवाश्च वा असुराश्च संयत्ता आसंस्ते ऽसुरा मनस्वितरा आ-
सन्नमनस्तरा[6] इव देवास्ते[7] देवा एतत्संग्रहणमपश्यंस्तेनासुराणां म-
नांसि[8] समगृह्णंस्ततो वै ते समनसः[9] पराभवन्मन एव भ्रातृव्यस्य
संगृह्णाति सो ऽस्यामनाः[10] पराभवत्येतया यजेत पशुकाम एतया वै
देवा असुराणां पशून्समगृह्णंस्ततो वै ते पशवः पराभवन्पशूनेव भ्रा-
तृव्यस्य संगृह्णाति सो ऽस्यापशुः[11] पराभवत्येतया यजेत सजातकामो

---

[1] Ch पयस्यो [2] D मैत्राब्राह्मणो [3] D मग्न भवंति [4] So Ch; D यं [5] Ch कामयेत [6] So Ch; D आसन्नमास्तरा [7] Ch देवांस्ते [8] D राणास्मेनांसि [9] D सनसः [10] Ch स्यामनः [11] D मो स्यापशुः; Ch सो स्याः पशुः

मनोग्रहणं[1] वा एतन्मनस्विन इव सजाता यावन्त एव सजातास्तेषां मनांसि गृह्णाति ते ऽस्मान्मनोगृहीता नापयन्ति ॥ वैश्वदेवः कार्यो वैश्वदेवा हि सजाताः पृषत्याः पृषद्वत्साया दुग्धे भवति वैश्वदेवी हि पृषती सर्वेभ्यस्सजातेभ्य आज्यं समाहरन्ति वैश्वदेवत्वाय वैश्वदेवा हि 5 सजाता ध्रुवो ऽसीति परिधीन्परिदधाति सजातानेवास्मा उपदधात्यामनस्य देवा इत्यन्वारम्भयित्वा जुहोति मनोग्रहणं वा एतदेवमिव[2] सजातास्स्त्रिय इव पुमांस इव कुमारा[3] इव यावन्त एव सजातास्तेषां मनांसि गृह्णाति ते ऽस्मान्मनोगृहीता[4] नापयन्ति ॥ वि वा एतद्यज्ञं छिनत्ति यद्यज्ञे प्रतत एता अन्तराहुतीर्जुहोति संस्थिते होतव्या 10 यत्संस्थिते जुहुयाद्बहिरात्मं सजातान्कुर्वीतान्तरा प्रयाजानुयाजाञ्जुहुयात्प्राणा वै प्रयाजा अपाना अनुयाजा आत्मा हविरात्मन्नेव मध्यतस्सजातान्धत्ते दारुमयेण जुहुयाद्यदि कामयेत क्षिप्रं मा सजाता एयुः क्षिप्रं पुनः[5] परेयुरित्येवमिव हि वनस्पतयो ऽध्रुवा इव चराचरा इव मृन्मयेन[6] जुहुयाद्यदि कामयेत चिरं मा सजाता एयुश्चिरं पुनः 15 परेयुरित्येवमिव हीयं ध्रुवेव[7] प्रतिष्ठितेवाचराचरेव ॥ २ ॥

cf. Mâitr. S. 2, 3, 2.

इन्द्रो वै वृत्राय वज्रमुदयच्छत सो ऽब्रवीद्वीर्यं वा इदं मय्यस्ति तत्ते प्रदास्यामि मा मे प्रहारिति तदस्मै प्रायच्छत्सो ऽवेदस्ति वावास्मिन्वीर्यमिति तस्मै द्वितीयं तस्मै तृतीयमुदयच्छत सो ऽब्रवीद्वीर्यं वा इदं मय्यस्ति तत्ते प्रदास्यामि मा मे प्रहारिति तदस्मै प्रायच्छद्यज्ञं वा- 20 वास्मै तत्प्रायच्छद्यज्ञं प्रायच्छदिन्द्राय प्रायच्छत्तस्मादैन्द्रावैष्णवं हविर्भवति वीर्यं वावास्मै तत्प्रायच्छत्तन्निर्वीर्यं भूतमस्तृणुत[8] तं विष्णुर्वीर्येणान्वतिष्ठत सो ऽब्रवीत्सकृन्माधा विष्णो द्विर्माधा विष्णो त्रिर्माधा विष्णा[9] इति तत्त्रैधातव्यायास्त्रैधातव्यात्वमिन्द्रो वै वृत्रं हत्वा तं शवे

---

[1] So Ch; D ग्रहाणां [2] So Ch; D एतदेवमव इव [3] Ch कुमार [4] D मनुगृ° [5] Ch पुर [6] Ch सृगम° [7] D हीयन्ध्रुवेव [8] D स्तृणत [9] So D; Ch विष्णो

मानवे प्रौहत्सोमो वै वृत्र उदरं शवो मानवस्तस्मादुदरे[1] सोमः पी-
यते ॥ तस्मादाहुर्हतो[2] वृत्रो ऽस्तृतस्त्वति यज्ञो वा असुरेभ्यो ऽपाक्रा-
मदुत्सङ्गे पात्राण्योप्यैतद्रूपं[3] कृत्वा यत्तार्प्याणि विषीव्यन्ति[4] स इन्द्रं
प्रतिन्यागच्छेत्तेनेन्द्रो[5] ऽयजत[6] ततो देवा अभवन्परासुरा अभवन्य एवं
विद्वानेतेन यजेत[7] भवत्यात्मना परास्य भ्रातृव्यो भवति यज्ञो न्याग- 5
च्छदिन्द्रं प्रतिन्यागच्छत्तस्मादैन्द्रावैष्णवं हविर्भवत्यृचो[8] वावास्मै तदग्रे
प्रायच्छदथ सामान्यथ यजूंषि ब्रह्मणो[9] वा एष योनिरतो[10] वा इदं
सर्वमसृज्यतर्चस्सामानि[11] स्तोमा यजूंषि ब्रह्मण एव योनिमालभते ॥
स इदं सर्वमत्येत्येतेन वै सृञ्जया अयजन्त त[12] इदं सर्वमत्यायंस्तदेना-
न्मुहुः प्रयुज्यमानमवाधूनुत तस्मान्न मुहुः प्रयोज्यं[13] वि वा एष च्छि- 10
नत्ति य एतेन यजते ऽपि पुत्रं याजयेदनुसंतत्या एतस्य वै वीर्येण
वृत्रो ऽहरहरिषुमात्रमूर्ध्वो ऽवर्धतेषुमात्रं तिर्यङ्ङथो यत्प्राणीत्तत्पुनर्नं
समैद्वर्धते[14] प्रजया प्र पशुभिर्भवति य एवं विद्वानेतेन[15] यजते सर्वे-
भ्यः कामेभ्यो यजेत सर्वो वा एष यज्ञस्सर्वेभ्यो हि कामेभ्यस्सौम्यो
ऽध्वरः प्रयुज्यते ऽभिचरन्यजेत न दक्षिणां दद्यान्मेनिमेवैनं कृत्वाभि- 15
प्रयुङ्क्ते[16] मेनिर्ह्यदक्षिणः ॥ ३ ॥ cf. Mâitr. S. 2, 4, 3.

त्रीन्पुरोडाशान्निर्वपेद्भूयंस्त्रय इमे लोका इमानेव लोकानाप्त्वौ-
जो वीर्यमवरुन्द्ध उत्तर उत्तरो ज्यायान्भवत्युत्तर उत्तरो ह्येषां लोकानां
ज्यायानधरोत्तरं भवन्त्येवमिव हीमे लोका द्वादश कपालानि भवन्ति
त्रयो हि ते चतुष्कपालास्समृद्ध्यै सर्वेषामभिघातमवद्यत्यच्छम्बट्कारं[17] 20
यस्य नावद्यति च्छम्बट्करोति च्छम्बट्णास्य[18] चरति[19] व्रीहिमयः प्रथमो

---

[1] D शवो मानवास्तस्मादुदरो; Ch शवै मानव तस्मादुदरे [2] So Ch; D र्होतो [3] So corr. D पात्रणोप्यैतद्रूपं; Ch पात्राण्युप्यैतद्रूयं [4] Ch निषेव्यंति [5] Ch प्रतिगम्छत्ते° [6] D अजते [7] So Ch; D यजते [8] D त्याचा [9] So D; Ch ब्राह्मणो [10] Ch रेतो [11] Ch सृजतर्चस्सा° [12] Dies त fehlt in D [13] So Ch; D प्रयुज्यं [14] Ch पुनरममैद्व° [15] So D; Ch नेतया; cf. aber oben. [16] Ch युंक्त मे° [17] D मतिघातम° [18] Dh ग्छम्बरणनास्य; D छम्बनास्य [19] So Ch; D च तरति

भवत्यथ यवमयो ऽथ व्रीहिमयो रोहिता इव वै व्रीहयो रोहित[1] इ-
वायं लोको रोहित इवासौ शुक्ला इव यवाः शुक्लमिवान्तरिक्षमन्त-
रिक्षेणेमे लोकास्संतता एषां लोकानामनुसंतत्यै नैवारमुत्तमं कुर्याद-
जामित्वाय ॥ तिस्रो धेनवो दक्षिणा त्रीणि तार्प्याणि त्रीणि हिर-
ण्यानि यजुषां वा एतद्रूपं यत्तार्प्याणि विषीव्यन्ति[2] साम्नां हिरण्या-
नि छन्दसां[3] धेनव एतानि वै यज्ञस्य रूपाणि रूपैरेव यज्ञमवरुन्द्धे
सर्वदेवत्यं[4] वासो यद्वासांसि ददाति सर्वा एव देवता अवरुन्द्धे तेजो
ब्रह्मवर्चसं हिरण्यं यद्धिरण्यानि ददाति तेज एव ब्रह्मवर्चसमवरुन्द्धे ॥
त्रिस्समृद्धा धेनुरात्मा वत्सः पयो यद्धेनूर्ददाति[5] त्रिस्समृद्धमेवैनं[6] करो-
10 ति सर्वाणि छन्दांस्यनुब्रूयात्सर्वो वा एष यज्ञस्सर्वाणि हि छन्दांसि
सौम्ये ऽध्वरे ऽनूच्यन्ते[7] यज्ञो यदसृज्यत[8] तस्योल्बमन्ववेष्टत[9] तत्तार्प्यम-
भवद्यज्ञस्त्वैधातव्या यत्तार्प्यं यजमानः परिधत्ते स्वेनैव योनिनात्मान-
मोर्णुत उष्णिहककुभौ सामिधेनीष्वप्यनुब्रूयादुष्णिहा वै ककुभो[10] वीर्यं
ककुबुष्णिहायास्सवीर्यं एवैने अवरुन्द्धे न जगत्या परिदध्यादन्तो[11] वा
15 एषा छन्दसामन्तं गच्छेद्यज्ञं[12] विच्छिन्द्यादग्ने त्री ते वाजिना त्री षध-
स्थेति त्रिष्टुभा परिदधात्योजो[13] वै वीर्यं त्रिष्टुब्नान्तं[14] गच्छत्योजस्येनं
वीर्ये प्रतिष्ठापयति ॥ ४ ॥ cf. Mâitr. S. 2, 4. 4. 5.

देवा वा असुराणां वेशत्वमुपायंस्तदिन्द्रो ऽपि नोपैत्तेषां[15] वीर्या-
ण्यपाक्रामन्नग्ने रथन्तरमिन्द्राद्बृहद्विश्वेभ्यो देवेभ्यो वैरूपं[16] सवितुर्वैराजं
20 मरुतां शक्वरी त्वष्टू रेवती तानीन्द्रो ऽवरुरुत्समानो[17] ऽन्वचरत्स एत-
मैन्द्रमपश्यद्द्वादशकपालं तेन वै[18] स तानीन्द्रियाणि वीर्याण्यवारुन्द्ध
ततो वै सो ऽभवत्तत एनं देवा अनुसमभवन्नेतेन[19] यजेत बुभूषन्नैन्द्रेण

[1] D व्रीहया रोहिता [2] So Ch; D निषी° [3] D छंदांसि [4] D देवभ्यर्वासो
[5] So D; Ch नून्ददाति [6] D समृद्धामेवैनं [7] So Ch; D सोम्यो ध्वारनूच्यंते [8] Ch
सृजत [9] D न्वविष्टत [10] Ch ककुभा [11] Ch दध्यादंतो [12] Ch मंतगम्छे°
[13] Ch दधत्योजो [14] Ch त्रिष्टुब्नांनांतं [15] D पिरोमैत्तेषां [16] D वैरूपी [17] D
रेवतोर्यानीन्द्रो मरुरुत्सामानो; Ch रेवतो तानोन्द्रो वरुत्समानो [18] तेन वै fehlt in D.
[19] D वेते

द्वादशकपालेनैतान्येवेन्द्रियाणि वीर्याण्यवरुन्द्धे भवत्येवान्वेनं स्वा-
स्संभवन्ति द्वादशकपालो भवति वैश्वदेवत्वायोत्तानेषु कपालेष्वधि-
श्रयति चरुमेव करोति शान्त्या अनिर्दाहाय[1] सर्वाणि वा एतानी-
न्द्रियाणि वीर्याणि यत्पृष्ठानि तान्येनमीश्वराण्यनायतनानि[2] निर्मृजो
व्यतिषजेद्याज्यानुवाक्या[3] इन्द्राय राथन्तरायानुब्रूहीति[4] रथन्तरस्यर्च- 5
मनूच्य बृहत[5] ऋचा[6] यजेदिन्द्राय बार्हतायानुब्रूहीति बृहत ऋचम-
नूच्य[7] रथन्तरस्यर्चा यजेदिन्द्राय वैरूपायानुब्रूहीति वैरूपस्यर्चमनूच्य
वैराजस्यर्चा यजेदिन्द्राय वैराजायानुब्रूहीति वैराजस्यर्चमनूच्य वैरूप-
स्यर्चा यजेदिन्द्राय शाक्वरायानुब्रूहीति शक्वरीमनूच्य रेवत्या यजेदि-
न्द्राय रैवतायानुब्रूहीति रेवतीमनूच्य शक्वर्या यजेदेतैरेवेन्द्रियैर्वीर्यैरा- 10
त्मानमभ्यतिषजत्यनिर्मार्गाय न बृहत्या वषट्कुर्याद्बृहत्या वा इदमन्व-
यातयामत्वं प्रजाः प्रजायन्ते प्रजननमपिहन्यात्पशवो वै बृहती रुद्रो
ऽसौ रुद्राय पशूनपिदध्यादपशुस्स्यादनुवाक्यायाश्चत्वार्यक्षराणि या-
ज्यामभ्यत्यूहेत्तथा ते पङ्क्तिश्चानुष्टुप्च संपद्येते[8] अनुष्टुबनुवाक्या स्या-
त्पङ्क्तिर्याज्या[9] प्रजाकामस्य वा पशुकामस्य वा प्रजापतिर्वा इदमा- 15
सीत्तस्य वाग्द्वितीयासीत्तां मिथुनं समभवत्सा गर्भमधत्त सास्मादपा-
क्रामत्सेमाः[10] प्रजा असृजत सा प्रजापतिमेव पुनः प्राविशद्यदनुष्टु-
बनुवाक्या भवति पङ्क्तिर्याज्या वाग्वा अनुष्टुप्पाङ्क्तस्संवत्सरस्संवत्सरः
प्रजापतिर्वाच्येव संवत्सरं वृषाणमपिसृजति सो ऽस्मै मिथुनं करो-
ति समन्तं पर्यूहं[11] पुरोडाशस्यावद्येदेतैरेवेन्द्रियैर्वीर्यैस्समन्तमात्मान- 20
मभितः पर्यूहति[12] स्तृत्या एतया यजेत यमजघ्निवांसमभिशंसेयुर्देवता
वा एतस्यान्नं नादन्ति यमजघ्निवांसमभिशंसन्ति तस्य देवैः परिवृज्य-
मानस्य मनुष्या अन्नं नादन्ति तस्मादपि यमनृतमभिशंसेयुस्तस्यान्नं

[1] D अनिर्मार्हाय [2] Ch राण्यनातनानि; D राण्यानायतना [3] D व्यंतिषद्ये° [4] D रथंतरमयानु° [5] Ch बृहता [6] ऋचा fehlt in Ch. [7] D नूच्या [8] Ch सम्पद्यते
[9] D पंक्तिर्याज्याः; Ch पांक्तिर्याज्या [10] Ch पक्रामत्सोमाः [11] D प्रर्युहं; Ch पर्यूह
[12] So·Ch; D पर्युहते

नाद्यात्सर्वदेवत्यानि[1] पृष्ठानि यत्सर्वपृष्ठया यजते देवता एवास्यान्न-
मादयन्ति तस्य पूतस्य स्वदितस्य मनुष्या अन्नमदन्ति सैषा सर्वपृष्ठा
नामेष्टिः पृष्ठमेव समानानां भवति य एवं विद्वानेतया यजते ॥ ५ ॥
cf. Mâitr. S. 2, 3, 7.

अश्वो न[2] प्रतिगृह्य उभयादन्वा एष एतस्येन्द्रियं वीर्यं निर्बभस्ति
यः प्रतिगृह्णाति तस्मान्न प्रतिगृह्यो[3] वरुणो वा एतमग्रे प्रत्यगृह्णात्स
स्वां देवतामार्छत्तं वरुणो ऽगृह्णात्स एतेन वारुणेन हविषायजत[4]
निर्वरुणत्वाय यो ऽश्वं प्रतिगृह्णीयात्स एतेन वारुणेन हविषा यजेत
निर्वरुणत्वाय चतुष्कपालो[5] भवति चतुष्पाद्वा अश्वः प्रत्यक्षमेवैनं व-
रुणपाशान्मुञ्चति तदाहुर्न वै तेनेतरेभ्यो मुच्यते यदेनमेकस्मान्मुञ्चती-
ति[6] यावतो ऽश्वान्प्रतिगृह्णीयात्तावतश्चतुष्कपालान्निर्वपेद्यत्र वै वरु-
णपाशो यत्र यत्रैव वरुणपाशस्तत[7] एनं वरुणान्मुञ्चत्येको ऽधिभवति
यस्यैव[8] नाधियन्ति तस्मादेनं तेन मुञ्चत्यथो भविष्यदेव वरुणस्याव-
यजते भूयस्त्वा[9] एतं वरुणो गृह्णाति य एतयेष्ट्वापरमश्वं प्रतिगृह्णाति
यद्यपरमश्वं प्रतिग्रहीष्यन्स्यात्सौर्यवारुणं[10] कुर्यात्सूर्यमेव देवतामेतं
लोकमुपप्रतिगृह्णाति[11] वरुणादेनं वारुणेन मुञ्चत्यपांनप्त्रीयश्चरुर-
पिभवत्ययोनिर्वा अश्वो ऽप्सुजा योनिमन्तमेवैनं कृत्वा प्रतिष्ठापय-
त्येकविंशतिस्सामिधेन्यो भवन्त्येकविंशो वै संवत्सरः पञ्चर्तवो द्वादश
मासास्त्रय इमे लोका असा आदित्य एकविंश एष प्रजापतिः प्रा-
जापत्यो ऽश्वो ऽश्वमेवाप्नोति ॥ यस्ते राजन्वरुण गायत्रच्छन्दाः पाश-
स्तं त एतदवयजे तस्मै स्वाहा यस्ते राजन्वरुण त्रिष्टुप्छन्दा जगच्छन्दा
अनुष्टुप्छन्दाः पाशस्तं त एतदवयजे तस्मै स्वाहेत्येतावन्ति[12] वै छन्दां-
सि छन्दांसि[13] वरुणपाशास्तैरेष गृह्णाति यं वरुणो गृह्णात्यत्रात्र वै

---

[1] Ch स्यात्रत्राद्यात्सर्वदैवत्यानि [2] So Ch; D अट्टेन [3] D गह्ये [4] Ch यजेत
[5] D पाला [6] D याचेनमे° [7] D वारुणा° [8] Ch यस्येव [9] So Ch; D भूयांस्त्वा
[10] Ch णान्कु° [11] So D; Ch मेल्लोक° [12] D स्वाहा इत्ये° [13] In Ch ist dieses
Wort nur ein Mal gesetzt.

वरुणपाशो यत्र यत्रैव वरुणपाशस्तत[1] एनं वरुणान्मुञ्चत्यपांनप्त्रीये द्वे ऽपिभवतो या एवास्याप्सव्यौ पाशौ ताभ्यामेनं तेन मुञ्चति षडेतानि जुहोति षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति ॥ ६ ॥ cf. Mâitr. S. 2, 3, 3.

देवा वा ओषधीषु[2] पक्कास्वाजिमयुस्स इन्द्रो ऽवेदग्निर्वा उज्जे-ष्यतीति सो ऽब्रवीद्यतरो[3] ना उज्जयात्तन्नौ[4] सहेति सो ऽग्निरेव पूर्व 5 उदजयत्तदिन्द्रो ऽनूदजयत्तस्मादाग्नेन्द्रमैन्द्राग्नं कार्यमग्निर्हि पूर्व उदज-यत्तदिन्द्रो ऽनूदजयदभिजित्या एवाग्रायणं द्वादशकपालो भवति संव-त्सराद्ध्येतदधिभवति सप्तदश सामिधेन्यो भवन्ति संवत्सराद्ध्येतदधि-भवत्येका वै तर्हि व्रीहेरंशुरासीदेका[5] यवस्यैका माषस्यैका तिलस्य ते विश्वे देवा अब्रुवन्भागो नो ऽस्तु वयमिदं[6] प्रथयिष्याम इति तेभ्य 10 एतं भागमकुर्वंस्ततो वा इदमप्रथत भूम्ने वैश्वदेवः प्रथयत्येवैतेन पय-सि भवति वैश्वदेवत्वाय वैश्वदेवं हि पयो ऽथ वा इयमब्रवीन्मयि वा एतदध्यसौ वृष्ट्या पचति नावाभ्यामृत उज्जेष्यथेति ताभ्यामेतं भाग-मकुर्वन्नेककपालं प्रतिष्ठित्यै द्यावापृथिव्यं ग्राम्या वा अन्या ओषधय आरण्या अन्यास्ता अस्यैतेनोभयीरेष्टा भवन्ति सोम ओषधीनाम- 15 धिराजस्तस्यैष उद्वारो यदकृष्टपच्यमुद्वार एवास्यैष भाग एव यदा-रण्यं तस्यैतेनाप्यं क्रियते यत्फालकृष्टं[7] तस्येतरेण वत्सः[8] प्रथमजो द-क्षिणा रेत एव[9] ह्येषो ऽप्रजातः प्रजननाय सर्वस्मै वा एषो ऽभिषि-च्यते[10] यदाग्रायणं राजसूये भवत्यन्नमेवावरुन्द्धे[11] तदस्य स्वदितमिष्टं[12] भवत्यानीतो वा एष देवानां य आहिताग्निरदन्त्यस्यान्नं यदनिष्ट्वाग्रा- 20 यणेन नवस्याश्नीयाद्देवानां भागं प्रतिक्लृप्तमद्यादार्तिमार्छेत्तस्मान्नानि-ष्ट्वाग्रायणेन नवस्याशितव्यमेतेन वै देवा अग्रं पर्यायंस्तदाग्रायणस्या-

---

[1] So Ch; D वारुण° [2] So D; Ch ओषधिषु° [3] So corr. Ch सौ ब्रवी°; D सोध्र्वंवी° [4] So D; Ch उज्जेयात्तचो [5] Ch व्रीहेरंशुष्टि° [6] Ch स्तु यत्रमिदम्प्र° [7] D कृष्यं [8] So Ch; D यत्स [9] So Ch; D द्व [10] D विद्यते [11] So corr. die Mss. वारुंधे [12] So Ch; D मेष्टं

ग्रायणत्वमग्रमेव समानानां पर्येति य एवं विद्वानाग्रायणेन य-
जते ॥ ७ ॥

संवत्सरं वा एतस्य छन्दांसि यातयामानि भवन्ति यस्सोमेन य-
जते छन्दांसि देविकाश्छन्दांस्येवायातयामानि[1] पुनर्यामाणि कुरुते
5 पष्ठौह्यप्रवीता[2] दक्षिणाशा वा एषाशामेष उपाभिषिच्यत आशामे-
वास्मै करोति पशुकामो देविकाभिर्यजेत छन्दांसि देविका मिथुनं
छन्दांसि गायत्र्यनुमती राका त्रिष्टुप्सिनीवाली जगती कुहूरनुष्टु-
ब्धाता वषट्कारो यद्वे अवरे द्वे परे तन्मिथुनं यद्धाता[3] वषट्कारस्तन्मि-
थुनं तस्मादेवास्मै मिथुनात्पशून्प्रजनयति ॥ या पूर्वा पौर्णमासी सा-
10 नुमतिर्योत्तरा[4] सा राका या पूर्वामावस्या सा सिनीवाली योत्तरा
सा कुहूश्चन्द्रमा एव धाता यत्पूर्णो ऽन्यां वसत्यूनो ऽन्यां तन्मिथुनं
यत्पश्यन्त्यन्या नान्यां तन्मिथुनं यच्चन्द्रमा अमावस्याया अधि प्रजायते
तन्मिथुनं तस्मादेवास्मै मिथुनात्पशून्प्रजनयति प्रजाकामो देविका-
भिर्यजेत धातारमुत्तमं कुर्यात्स्त्रियो वै देविकाः पुमान्धाता पराचीः
15 प्रजा रेतो दधते पराचीष्वेवैतद्रेतो धीयते तदाहुर्न वै तेन पराधत्ते
यत्पूर्वा प्रवीयत इति व्यवदध्याद्धातारं सर्वा एवैना वृषामोदिनीः
करोति ॥ विन्दते पुत्रं पश्चाच्चर[5] इव तु भवति स्त्रीभिर्ह्येनं पश्चात्परि-
णयति यदाजायेत धातारं पुरस्तात्कृत्वाथैतामेव निर्वपेदग्रमेवैनं परि-
णयत्यामयावी देविकाभिर्यजेत धातारं मध्ये कुर्यात्संवत्सरो वै धाता
20 संवत्सरो हि वा एतस्य लुब्धो ऽथैतस्यामयति संवत्सरमेवास्मै मध्यतः
कल्पयित्वाथैनमेतस्मान्मिथुनात्पुनः प्रजनयतीश्वराणि वा एनमेतानि
छन्दांस्यशान्तानि निर्मृजः पशुमालभेत शान्त्या अनिर्मार्गाय ॥ वी-
रस्था वा अन्ये पशवो ऽवीरस्था अन्ये ये पुरस्तात्पुरोडाशास्ते वीरस्था
ये पश्चात्पुरोडाशास्ते ऽवीरस्था ये वीरस्था भुञ्जन्तस्त[6] उपतिष्ठन्ते ये

---

[1] D देविका छं° [2] So corr. Ch पष्टौह्यप्रविता; D पष्टौह्यपूर्धीता [3] Ch व्यध्वाता [4] D यैत्तुरा [5] Ch पश्चाच्चर [6] Ch भुंजंत उप°

ऽवीरस्थाः परा ते भवन्ति ये पुरस्तात्पुरोडाशास्ते वीरस्थाः प्रजापतिं ते प्रतिष्ठामभिसृज्यन्ते यासु स्थालीषु सोमा भवन्ति तासु देविकाः कुर्याद्रेतोधा हि सोमस्सर्ववेदसी देविकाभिर्यजेत पशुभिर्वा एष व्यृध्यते यस्सर्वं ददाति छन्दांसि देविकाः पशवश्छन्दांस्यत्रैष जघन्यं[1] पशून्पश्यति यत्रैनान्विभजति यत्रैवैनाञ्जघन्यं पश्यति तत एनान्पुनः प्रजनयति य एव कश्च सोमेन यजेत स देविकाभिर्यजेत छन्दांसि देविकाश्छन्दांस्येवायातयामानि पुनर्यामाणि कुरुते ॥ ८ ॥

स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेण देवीं देवेन[2] शुक्रां शुक्रेणामृताममृतेन[3] सृजामि सं सोमेन सोमो ऽस्यश्विभ्यां पच्यस्व[4] सरस्वत्यै पच्यस्वेन्द्राय[5] सुत्राम्णे पच्यस्व[6] ॥

पुनातु ते परिस्रुतं सोमं सूर्यस्य दुहिता ।
वारेण शश्वता तना ॥
वायुः पूतः पवित्रेण प्रत्यङ्[7] सोमो अतिद्रुतः[8] ।
इन्द्रस्य युज्यस्सखा ॥
कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुत भोजनानि ये बर्हिषो नमोवृक्तिं[9] न जग्मुः ॥

उपयामगृहीतो ऽस्यच्छिद्रां त्वाच्छिद्रेणाश्विभ्यां जुष्टां[10] गृह्णाम्येष ते योनिरश्विभ्यां त्वोपयामगृहीतो ऽस्यच्छिद्रां त्वाच्छिद्रेण सरस्वत्यै जुष्टां[11] गृह्णाम्येष ते योनिस्सरस्वत्यै त्वोपयामगृहीतो ऽस्यच्छिद्रां त्वाच्छिद्रेणेन्द्राय सुत्राम्णे जुष्टां[12] गृह्णाम्येष ते योनिरिन्द्राय त्वा सुत्राम्णे ॥ स्वाद्वीं त्वा स्वादुनेति ब्रह्मणैवैनां[13] संसृजति तिस्रो रात्रीस्संसृष्टा वसति तिस्रो हि रात्रीस्सोमः क्रीतो वसत्यश्विभ्यां पच्यस्व सरस्वत्यै

---

[1] D जघन्यां [2] Ch देवोंर्देवेन [3] Ch मतममतेन [4] So Ch; D पश्यस्व [5] So Ch; D पश्यस्वे° [6] So Ch; D पश्यस्व [7] So D; Ch प्रत्यक्; cf. Mâitr. S. 2, 3, 8. [8] So D; Ch अतिश्रुतः [9] Ch वृक्तिनं [10] So D; Ch जुष्टं; cf. ebenso Mâitr. S. 2, 3, 8. [11] So D; Ch जुष्टं [12] So D; Ch जुष्टं [13] Ch वैनां; D वैनाः

पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेत्येताभ्यो ह्येषा देवताभ्यः पच्यते[1] वायुः पूतः पवित्रेणेति व्यृद्धस्यातिपवितस्यैतया[2] पुनीयादेका पुरोरुगेकधैवास्मिन्वीर्यं दधात्यनिरुक्तः प्राजापत्यारुक्तः प्रजापतिः प्रजापतिमेवाप्नोति ॥ ९ ॥ cf. Mâitr. S. 2, 3, 8.

विश्वरूपो वै त्रिशीर्षासीत्त्वष्टुः पुत्रो ऽसुराणां स्वस्रीयस्स सोममेकेन[3] शीर्ष्णापिबदन्नमेकेनावयत्सुरामेकेनापिबत्स इन्द्रो ऽमन्यतायं वावेदं भविष्यतीति तेन समलभत तेन युगशरमपद्यत स तक्षाणं तिष्ठन्तमब्रवीदाधावास्येमानि[4] शीर्षाणि च्छिन्धीति तस्य तक्षोपाद्रुत्य परशुना शीर्षाण्यच्छिनत्तस्मात्तक्ष्णश्शिरो[5] धृतं तस्मादस्यान्नमन्नाद्यं तस्य यत्सोमपानं शिर आसीत्स कपिञ्जलो ऽभवद्यदन्नादनं स तित्तिरिर्यत्सुरापानं[6] स कलविङ्कस्तस्मात्स निततपर्णमिव[7] वदति ॥ स त्वष्टा पुत्रहतो वीन्द्रं सोममाहरत्तमधस्सहस्रशले ऽसुनोदयो आहुश्शतशल इति तमस्येन्द्रः प्रासहापहृत्य[8] नाड्या निरपिबत्स विष्वङ्[9] सोमपीथेन व्यार्ध्यत[10] तस्मात्सोमो नानुपहूतेन पातवै सोमपीथेन व्यर्धुको भवति तस्य यन्नस्तो ऽमुच्यत तौ सिंहा अभवतां यदक्षीभ्यां तौ शार्दूलौ यत्कर्णाभ्यां तौ वृकौ यदधस्तात्सा सौत्रामणी यत्प्रथमं निरष्ठीवत्तत्कुवलमभवद्यद्द्वितीयं तद्बदरं[11] यत्तृतीयं तत्कर्कन्धु तमश्विना अभिषज्यतां तमयाजयतामेतया सौत्रामण्या स यैरेव तद्वीर्यैर्व्यार्ध्यत[12] तान्यस्मिन्नाप्त्वाधत्तामेतया[13] यजेत यं सोमो ऽतिपवेत[14] वीर्येण वा एष व्यृध्यते यं सोमो ऽतिपवते यावदेव वीर्यं तदस्मिन्दधात्येषैव राजसूये ऽपि भवति वीर्येण वा एष व्यृध्यते यो[15] राजसूयेनाभिषिच्यते वृत्रं हि हन्ति यावदेव वीर्यं तदस्मिन्दधात्येतयैव ब्राह्मणो वा राजन्यो

---

[1] So Ch; D पश्यते [2] D वृद्ध° [3] D स्वस्त्रीयस्स सोम°; Ch स्वस्त्रीयस्समोसमेकेन
[4] Ch धावस्येमाणि [5] D ण्याच्छि नतस्मातुर्क्ष्णः; Ch ण्यच्छिनतस्मात्तक्ष्णः [6] D पाणं
[7] So Ch; D तस्मास्त नितततम [8] So corr. D प्रासह्यो° Ch प्रसह्यो° [9] So corr. D विश्वं; Ch विष्वत्सो° [10] Ch व्यावृत [11] Ch तद्वदरं; D तदुदरं [12] Ch वृत
[13] Ch धत्तमे° [14] So Ch; D पवेत्त [15] Ch या

नृतं सुरानृतेनैवानृतादध्यनृतं[1] क्रीणाति वडवा दक्षिणा सृत्वरी ह्येषा सृत्वरीव सुरा समृद्ध्यै ॥ ११ ॥ cf. Mâitr. S. 2, 3, 9; 2, 4, 2.

आश्विनमजमालभेत सारस्वतीं मेषीमैन्द्रमृषभं वा वृष्णिं वैवमेव वपाभिश्चरन्ति यदैन्द्री वपानामुत्तमा भवतीन्द्र एवास्मिंस्तदधिभवति 5 यत्प्रचरन्त ऐन्द्रेण पुनः प्रथमेन प्रचरन्तीन्द्रमेव तत्पुनरालब्ध सेन्द्रत्वाय यदाश्विनो ऽश्विनौ ह्यभिषज्यतां यत्सारस्वती वाग्वै सरस्वती वाच्येव प्रतितिष्ठत्यैन्द्री वपानामुत्तमा भवत्यैन्द्रः पुरोडाशानां प्रथमो वीर्यं वा इन्द्रो वीर्य एवैनमभिसंधत्तः प्रसवायैव सावित्रो निर्वरुणत्वाय वारुणो[2] मध्यतो ह्येष वरुणगृहीतः पश्चाद्वा एषा सृष्टा प्रतीचीन- 10 शीर्ष्णी[3] यदुपरिष्टात्पुरोडाशा[4] भवन्त्यपिहित्या एवाच्छिद्रत्वाय सह संमवत्तं भवति सहेडामुपह्वयन्ते संहित्या एवाथो इडाया अविदो- हाय ॥ यद्वै सौत्रामण्या व्यृद्धं[5] तदस्यास्समृद्धं यदन्यदेवत्याः पशवो भ- वन्त्यन्यदेवत्याः पुरोडाशा एतद्वा अस्या व्यृद्धं[5] सदथ समृद्धं नाना वै[6] तैर्वीर्याण्यवरुन्द्धे ऽर्धं[7] वै प्रजापतेर्धैर्यमासीदर्धं[8] माल्व्यं यद्धैर्यमासी- 15 त्तत्पुरस्तात्पर्यहरत सोमो वाव स[9] ततो ब्राह्मणमसृजत तस्माद्ब्राह्मण- स्सर्वो ब्रह्माभि धीरो यन्माल्व्यमासीत्तत्पश्चात्पर्यौहत[10] सुरा वाव सा ततो राजन्यमसृजत तस्माज्ज्यायांश्च कनीयांश्च स्नुषा च श्वशुरश्च[11] सुरां पीत्वा सह लालपत आसते पाप्मा वै माल्व्यं तस्माद्ब्राह्मणस्सुरां न पिबति पाप्मना नेत्संसृज्या इति तदेतत्क्षत्रियाय ब्राह्मणं ब्रूयान्नैनं 20 सुरा पीता हिनस्ति य एवं विद्वान्सुरां पिबति प्रजापतेर्वा एषा तनूर्वीर्यं प्रजापतिर्वीर्यमेवास्मिन्दधाति[12] ॥ १२ ॥ cf. Mâitr. S. 2, 4, 2.

---

[1] Ch सुरा ऋतेनैवा ऋतादध्यऋतं [2] So Ch; D वारुणो [3] D शीर्ष्णा यादु° [4] D ष्ठ्यात्पु° [5] D वृद्धं [6] Ch नानैवै [7] D णावरुंधे वं; Ch ण्यवरुंधे धं [8] D पतेर्वैर्यं° [9] Ch सा [10] D पर्योहत [11] So corr. die Mss. (Ch und D) राश्च [12] Ch ददाति

स्वृर्भानुर्वा[1] आसुरस्सूर्यं तमसाविध्यत्स न व्यृरोचत[2] तस्माद्देवा-
स्तमो ऽपालुम्पन्यत्प्रथममपालुम्पन्त्सा विष्कृष्णाभवद्यद्द्वितीयं[3] सा फ-
ल्गुर्यत्तृतीयं सा बलक्षी यदध्यस्थादपालुम्पन्त्सा विवर्शाभवदथ वा
इयं तर्ह्यृक्षालोमकासीत्तां[5] देवा[6] अदित्यै कामायालभन्त तयास्यां लो-
मान्यरोहयंस्ततो[7] वा इयं लोमान्यगृह्णात्तामेतामेवमालभेतादित्यै का- 5
माय यमेव कामं कामयते तं स्पृणोत्यमुतो वा आदित्यस्यार्वाङ्रश्मिर-
वातिष्ठच्चात्वालमभि[8] तदिमे[9] मिथुनं समभवतां साविवर्शाभवदथ वा[10]
इमास्तर्ह्यफला ओषधय आसंस्तां[11] देवा आदित्येभ्यः कामेभ्य आल-
भन्त तया सु फलमग्राहयंस्ततो[12] वा इमाः फलमगृह्णंस्ते[13] एते एव-
मालभेतादित्या अन्यां कामायादित्येभ्यो ऽन्यां कामेभ्य उभाभ्यामेव[14] 10
सृष्टिभ्यां कामायालभते सारस्वतीं मेषीमालभेत यस्माद्वागपक्रामे-
द्वाग्वै सरस्वती[15] सरस्वत्येतस्मादपक्रामति[16] यस्माद्वागपक्रामति[17]
यत्सारस्वती वाचमेव समक्षमाप्त्वावरुन्द्धे ऽपन्नदती[17] भवति सर्व-
त्वायानास्कन्वा[18] समृद्ध्यै यस्त्वेतानामुत्तमो जायेत तमूर्जं आलभेतो-
त्कामो[19] नाना वा एतौ स्तना अभिजायेते[20] अथैष ऊर्जमेवाभिजायत 15
ऊर्जमेवैतेनाप्त्वावरुन्द्ध औदुम्बरो यूपो भवति देवा वै यत्रोर्जं व्यभ-
जन्त तत उदुम्बरो ऽजायत यदौदुम्बर ऊर्ज एवावरुद्ध्या एतमेव सौमा-
पौष्णमालभेत प्रजाकामो वा पशुकामो वा सोमो वै रेतोधाः पूषा

---

[1] Dies Kap. coll. mit W 1 und Brl fol. 177. 178; accent. nach Brl. [2] Dies Wort in Brl ohne Accent; der Accent von mir ergänzt. [3] D लुम्पत्सा; Ch लुम्पंत्सा; W 1 लुम्पन्सा; Brl लुम्पत्सं विकक्ष्णा [4] D लुम्पत्सा; Brl लुम्पत्सा; Ch und W 1 लुम्पन्सा [5] Brl तर्ह्यत्वा; desgl. D, ohne Accent. [6] Brl तन्देवा [7] Ch यस्ततो; W 1 यांस्ततो [8] D und Ch ष्टश्चात्वा° W 1 ष्ठच्चत्वा° [9] Brl तदिवमे [10] Ch थवामा W 1 थावा इमा [11] So corr. die Mss. तान्देवा [12] W 1 यांस्ततो [13] Ch गह्णंस्ति; W गह्णांस्ते; Brl गह्णंस्त [14] D श्रोभा° [15] Dies Wort in Brl ohne Accent. [16] W 1 क्रामयति [17] D मन्नदतो [18] D यानास्कन्वाः; Ch यानस्कन्वा; Brl यानास्कन्वा; W 1 यानास्कन्वास्त° [19] Ch तमूर्जं आलभेतोत्कामो; D तमूर्जा ततुलाभेतर्कामो; W तमूर्जं आलभेतोकामे; Brl vielleicht = Corr. [20] So Brl und Ch; D जायेत; W 1 जायते

प्रजनयिता सोम एवास्मै रेतो दधाति पूषा प्रजनयति विन्दते प्रजां वा पशून्वा यतरस्मै कामायालभते वायवे श्वेतमजमालभेत बुभूषन्वायुर्वै देवानां क्षेपिष्ठस्तमेव भागधेयेनोपधावति स एनमाशिष्टि[1] श्रियमभिप्रणयति स[2] निमार्ष्टि स प्रधन्वति स एवैनं श्रियमभिप्रणयति ॥ स एष आचोपच[3] उत पुण्यो भवत्युतो[4] यथेव तथेव[5] वायवे नियुत्वते श्वेतमजं पिप्रुकर्णमालभेत[6] सजातकामो वायुं वा[7] इमाः प्रजा नस्योता इत्थं चेत्थं चानुचरन्ति प्राणो वायुर्वायुर्देवानां विशो नेता नियुतो देवानां विशस्तमेव भागधेयेनोपधावति सो ऽस्मै विशं निनयति यन्नियुत्वत[8] आरम्भणमेव कुरुते ऽनिर्मार्गाय वायवे श्वेतमजमालभेत कामेभ्यो ऽणुं वा एष कामयते यः कामयते[9] वायुर्देवानामस्त्वनुवाति[10] तमेव भागधेयेनोपधावति सो ऽस्य कामाननुवाति ॥ १३ ॥ cf. Mâitr. S. 2, 5, 1. 2.

आ[11] नो मित्रावरुणा प्र बाहवा ॥
इन्द्रावरुणयोरहं सम्राजोरव आवृणे ।
तां नो मृडात ईदृशे ॥
नू न इन्द्रावरुणा गृणाना पृङ्क्तं रयिं सौश्रवसाय देवा[12] ।
इत्था गृणन्तो महिनस्य शर्धो ऽपो न नावा दुरिता तरेम ॥
त्वं नो अग्ने स त्वं नो अग्ने शं नो भवन्तु वाजे वाजे ॥
विश्वाहेन्द्रो अधिवक्ता नो अस्त्वपरिह्वृतास्सनुयाम[13] वाजम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिस्सिन्धुः पृथिवी उत[14] द्यौः ॥

---

[1] W 1 एवमाशिष्ठो [2] Von hier bis ॥ in Brl nicht vorhanden; Accent von mir ergänzt. [3] Brl एष आचोपच; W 1 एवन्तचोपच [4] W 1 भवत्यन्तो [5] W 1 यतोव तथेव [6] Brl पिप्रुकर्णमालभेत; W 1 पिपुकर्णमालभते [7] So Ch; ohne Accent वायुं वा; D वायुर्वा; W 1 वायुवा; Brl वाव्वां, viell. वाय्वां? [8] W 1 यनियुत्वा [9] Ch कामयेत; W 1 कामयेत्त [10] Von hier an in W 1 fehlend. [11] Dies Kap. collat. mit W 1 ζ, T 1, T 6 und Brl fol. 166; darnach accentuirt. [12] T 6 und Brl देवाः [13] Brl ह्वृतस्स॰ [14] D und Ch वोमुत

एनाङ्गूषेण[1] वयमिन्द्रवन्तोऽभिष्याम वृजने सर्ववीराः ।
तन्नो मित्रो वरुणो मामहन्तामदितिस्सिन्धुः पृथिवी उत[2] द्यौः ॥
अग्निर्मूर्धा ॥
प्र सो अग्ने तवोतिभिस्सुवीराभिस्तिरते वाजभर्मभिः[3] ।
यस्य त्वं सख्यमावरः ॥ 5
अग्ने वाजस्याग्ने त्वी ते ॥
सं वां कर्मणा समिषा हिनोमीन्द्राविष्णू अपसस्पारे अस्य[4] ।
जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैनः[5] पथिभिः पारयन्ता ॥
उभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनोः ।
इन्द्रश्च विष्णो[6] यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम्[7] ॥ 10
इषं दुहन्त्सुदुघां विश्वधायसं यज्ञप्रिये[8] यजमानाय सुन्वते ।
अग्ने घृतस्नुस्त्रिर्ऋतानि[9] दीद्यद्वर्तिर्यज्ञं परियन्त्सुक्रतूयसि[10] ॥
त्रीण्यायूंषि तव जातवेदः ॥ १४ ॥

दूतं[11] वो विश्ववेदसं हव्यवाहममर्त्यम् ।
यजिष्ठमृञ्जसे गिरा ॥ 15
स हि वेदा वसुधितिं[12] महां[13] आरोधनं दिवः ।
स देवां एह[14] वक्षति ॥
स वेद देव[15] आनमं देवां ऋतायते दमे ।
दाति प्रियाणि चिद्वसु ॥

---

[1] Ch एनांगुषेण [2] D, Ch und W 1 ζ वोमुत [3] Ch वाजभदभिः [4] Brl पारे अस्यं [5] Brl दत्तमं°; D धत्थम° [6] So Brl, desgl. Ch und W 1 ζ ohne Accent; T 1 und T 6 विष्णो; D विष्णू [7] Ch तदेरयेरयेथाम् [8] W 1 ζ यज्ञे प्रिये; D यज्ञप्रेय [9] Ch स्त्रिनृतानि; W 1 ζ स्त्रिवृतानि [10] Brl परीयंत्सुक्रतूयसि; desgl. W 1 ζ, ohne Accent; Ch परीयत्सुतूयसि [11] Dies Kap. collat. mit W 1 ζ, T 1, T 6, Brl; darnach accentuirt. [12] T 6 वसुमति [13] Ch सहां [14] W 1 ζ इह [15] Ch देवा

स होता सेदु दूत्यं चिकित्वाँ अन्तरीयते[1] ।
विद्वाँ आरोधनं दिवः ॥
ते स्याम ये अग्नये ददाशुर्हव्यदातिभिः ।
य ईं पुष्यन्त इन्धते ॥
5 ते राया ते सुवीर्यैस्ससवांसो विशृण्विरे ।
ये अग्ना दधिरे दुवः ॥
अभि त्वा शूर नोनुमस्त्वामिद्धि हवामहे ॥
यद् द्याव[2] इन्द्र ते शतं शतं[3] भूमीरुत[4] स्युः ।
न त्वा वज्रिन्सहस्रं सूर्या[5] अनु न जातमष्ट रोदसी ॥
10 बोधा सु मे मघवन्वाचमेमां[6] यां ते[7] वसिष्ठो अर्चति प्रशस्तिम् ।
इमा ब्रह्म सधमादे जुषस्व ॥
ता अस्य नमसा सहो रेवतीर्न इमं मे वरुण तत्त्वायामि ॥
रदत्पथो वरुणस्सूर्याय प्रार्णांसि समुद्रिया नदीनाम् ।
सर्गो न सृष्टो अर्वतीर्ऋतायञ्चकार महीरवनीरहभ्यः ॥
15 प्र सम्राजे बृहदर्चा गभीरं ब्रह्म प्रियं वरुणाय श्रुताय ।
वि यो जघान शमितेव चर्मोपस्तिरे[8] पृथिवीं सूर्याय ॥
उपेमसृक्षि वाजयुर्वचस्यां चनो दधीत नाद्यो गिरो मे ।
अपां नपादाशुहेमा कुवित्स सुपेशसस्करोति[9] जोषिषद्धि ॥
इमं[10] स्वस्मै[11] हृद[12] आ सुतष्टं मन्त्रं वोचेम कुविदस्य वेदत्[13]
20 अपां नपादसुर्यस्य[14] मह्ना विश्वान्यर्यो[15] भुवना जजान ॥
आपो रेवतीः ॥

---

[1] D रीयतो [2] Ch द्यावा [3] In Ch nur ein Mal शतं; auch Brl ते शतंभूमी° [4] T 6 भूमीरुता स्युः [5] Ch सूर्यां; W 1८ सूर्य [6] T 1 मिमां; T 6 मिमीं [7] T 1, T 6, Brl यान्ते; D ॰ ते; Ch यां ते [8] Ch स्थिरे [9] T 1 und Brl करति [10] W 1८ इमां; Ch इमे [11] स्वस्मै ohne Accent in den Mss. (T 1, T 6, Brl); von mir ergänzt. [12] हृदय [13] T 6 विंदत् [14] Ch दासुर्यस्य; W 1८ दस्वर्यस्य [15] Ch न्यन्यो

आ॑पः पृणी॒त भे॑ष॒जं वरू॑थं त॒न्वे॒ मम॑।
ज्योक् च॒ सूर्यं॑ दृ॒शे॥ ॥ १५ ॥

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां पयस्स्थानकं[1] नाम द्वादशं संपूर्णम्[2] ॥

---

तिस्रो ऽजाश्श्वेता मल्हा गर्भिणीरालभेत ब्रह्मवर्चसकाम आग्नेयीं[3] वसन्ता सौरीं ग्रीष्मे बार्हस्पत्यां[4] शरदि यदाग्नेयी[5] मुखत एव तया तेजो धत्ते यत्सौरी मध्यत एव तया रुचं धत्ते यद्बार्हस्पत्योपरिष्टादेव तया ब्रह्मवर्चसं धत्ते संवत्सरं पर्यालभ्यन्ते वीर्यं वै संवत्सरस्संवत्सरमेव वीर्यमाप्नोति यच्छ्वेता रुच एव तद्रूपं गर्भिणीर्भवन्तीन्द्रियं वै गर्भ इन्द्रियमेवावरुन्द्धे तिस्रो मल्हा गर्भिणीरालभेत यं पर्यम्युर्वायव्यां श्वेतां[6] सारस्वतीं मेषीमादित्यामजामधोरामां मेषीं वा मनसा वा एत एतं पर्यमन्ति मनो वायुर्यद्वायव्या[7] मनसैवैषां[8] मनांसि शमयति वाचा वा एत एतं[9] पर्यमन्ति वाक्सरस्वती यत्सारस्वती[10] वाचैवैषां वाचं शमयत्यप्रतिष्ठितो वा एष यं पर्यमन्तीयमदितिर्यदादित्यास्यामेव प्रतितिष्ठत्यनपिमन्त्रो वा एष एतेषु यं पर्यमन्ति वाचो मन्त्रो गर्भो यद्गर्भिणीर्वाच एवैनं[11] गर्भमकरपिमन्त्रमेनं करोत्यप वा एतस्मादिन्द्रियं क्रामति यं पर्यमन्तीन्द्रियं गर्भो यद्गर्भिणीरिन्द्रि-

---

[1] Ch पयस्थानकं [2] So die Unterschrift des Kapitels in Ch; in D lautet dieselbe इति पयस्स्थानकं द्वादशं समाप्तम् ॥ [3] Ch आग्नेयं [4] Ch पत्यं [5] D ग्नेयंर्नें [6] Ch यम्पर्यस्य वायव्यां श्वेता [7] D मनोर्वाय° [8] Ch वेषा [9] So corr. D वा एते पर्यमंति; Ch वा एता एतम्पर्यमंति [10] Ch यस्सा° [11] So Ch; D एवैनन्होद् गर्भं°

यमेवावरुन्द्धे ऽग्नये वैश्वानराय कृष्णं पेत्वमालभेत यस्समान्तमभिद्रु-
ह्येद्यो[1] वाभिदुद्रुक्षेत्संवत्सरो वा अग्निर्वैश्वानरस्संवत्सरायैष सममते
यस्सममते[2] संवत्सरमेवाप्त्वा काममवरुणमभिद्रुह्यति प्राजापत्यमजं
तूपरं[3] विश्वरूपमालभेत सर्वेभ्यः कामेभ्यः प्रजापतिर्योनिर्योनेरेव प्र-
5 जायते प्रजापतिः प्रदाता तमेव[4] भागधेयेनोपधावति सो ऽस्मै सर्वा-
न्कामान्प्रयच्छत्यश्वस्येव वा एतस्य शिरो गर्दभस्येव[5] कर्णौ पुरुषस्येव
श्मश्रूणि गोरिव पूर्वौ पादा अवेरिवापरौ शुन इव लोमान्यजो भ-
वत्येतावन्तो वै ग्राम्याः पशवस्तानेवैतेनाप्त्वावरुन्द्धे द्वादश धेनवो
दक्षिणा तार्प्यं[6] हिरण्यमधीवासः प्रजापतेर्यास्सामिधेन्यस्तास्सामिधे-
10 न्यः प्रजापतेर्या आप्रियस्ता आप्रियो हिरण्यगर्भवत्याघार[7] एतस्य
सूक्तस्य याज्यानुवाक्ये एतेन ह वा उपकेतू रराध ऽर्ध्नोति[8] य एतेन
यजते द्वादशधा ह त्वै[9] स प्राशित्राणि परिजहार तत्र[10] द्वादश द्वादश
धेनूर्ददौ यद्द्वादश ददाति सैव तस्य प्रतिमा यत्तार्प्यं[11] हिरण्यमधीवा-
समपरिमितमेव तेनावरुन्द्धे ॥ १ ॥ cf. Mâitr. S. 2, 5, 1. 2.

15 वारुणं कृष्णं पेत्वमेकशितिपादमालभेतामयावी ज्योगामयावी
प्रजापतिः प्रजा असृजत ता एनमत्यचरंस्ता अतिचरन्तीर्वरुणेनाग्रा-
हयत्ता जिह्माः पन्ना अशेरत वरुणगृहीतास्ताः कृष्णः पेत्व आप्रवत
तस्याभिहाय[12] पादमगृह्णात्स[13] प्रावृह्यत स एकशितिपादभवत्ताः प्र-
जापता अनाथन्त सो ऽपश्यद्यो ऽयमवरुणगृहीतस्तेनैना वरुणान्मु-
20 ञ्चानीति तं वारुणमालभत तेनैना वरुणादमुञ्चद्वरुणगृहीत[14] एष य
आमयावी यद्वारुणो[15] वरुणादेवैनं मुञ्चति ॥ द्वीपे[16] यजेतापो वै व-
रुणास्समक्षमेवैनं[17] वरुणान्मुञ्चति प्रजापतिः पशूंस्सृष्ट्वा वरुणं वरम-

---

1 Ch सामंतम॰ 2 Ch समते यस्सममते 3 D मजन्भूपरं 4 Ch तामेव 5 So Ch; D गर्मयस्यव 6 Ch तार्म्यं 7 Die Silben प्रियस्ता आप्रियो हि fehlen in D. 8 So corr. Ch रराध व्रोति; D रराध तोति 9 Ch हत्वो 10 D तित्रा 11 Ch यत्तार्म्यं 12 So Ch; D तिहाय 13 So Ch; D पदम॰ 14 D वारुणाद॰ 15 So Ch; D यद्वरुणो 16 D द्वीमे 17 D सपत्न

भ्यसृजन्त एतमवृणीत तस्माद्वरुणदेवत्यः[1] पाप्मनैष गृहीतो य आम-
यावी कृष्ण इव पाप्मा यत्कृष्णः पाप्मानमेवापहते यदेकशितिपाद्व-
रुणपाशमेव तेन प्रमुञ्चत आग्नेयमजमालभेत वारुणं कृष्णं पेत्वं बु-
भूषन्नृद्ध्या एवाग्नेयो वरुणगृहीत एष यो ऽलं भूत्यै सन्न भवति यद्वा-
रुणो वरुणादेवैनं मुञ्चत्यर्धं वै पुरुषस्याग्नेयमर्धं वारुणमस्थान्याग्ने- 5
यानि मांसानि[2] वारुणानि तयोरेवैनं भागधेयेन निष्क्रीणाति ॥ सो
ऽनृणो भूत्वा भवत्येव वारुणं कृष्णं वृष्णिमभिचरन्नालभेत[3] मृत्युर्वै व-
रुणो मृत्युनैवैनं ग्राहयत्येतद्वै पाप्मनो रूपं कृष्ण इव पाप्मा यत्कृष्णः
पाप्मनैवैनमभिषुवति ॥

पशुं बध्नामि वरुणाय राज्ञ इन्द्राय[4] भागमृषभं केवलो हि । 10
गात्राणि देवा अभिसंविशन्तु यमो गृह्णातु[5] निर्ऋतिस्सपत्नान् ॥
इत्येता वै देवताः पुरुषस्येशते[6] ताभ्य एवैनमधिनिष्क्रीय मृत्यु-
र्यमो मृत्युनैवैनं ग्राहयति ॥ २ ॥ cf. Mâitr. S. 2, 5, 6.

वैष्णवं वामनमालभेत भ्रातृव्यवान्विष्णुर्वा इमांल्लोकानुदजयत्स
एभ्यो लोकेभ्यो ऽसुरान्प्राणुदतेमानेव लोकानुज्जयत्येभ्यो लोकेभ्यो 15
भ्रातृव्यं प्रणुदते विषमे यजेत विषमा इव हीमे लोका ऐन्द्रामारुतं
पृश्निसक्थमालभेत[7] यस्मात्क्षत्रियाद्विडभ्यर्धश्चरेत्क्षत्रं[8] वा इन्द्रो वि-
ण्मरुतः क्षत्रायैव विशमनुनियुनक्ति[9] पृश्निसक्थो[10] भवति विशमे-
वास्मै पश्चादुपदधात्यसंसर्गायैन्द्रमुत्पृष्टिमालभेत पशुकाम इन्द्रो वै
वलमपावृणोत्[11] सहस्रमनूदैत्तस्यैषो ऽयत उदतृणत्स[12] समैषदुत्तितृ- 20
त्सन्निमांल्लोकान्पश्यंस्तस्मादेष समीषितः प्रतीषितग्रीवस्तमेतं पुर-
स्तात्सहस्रस्यालभेत प्र सहस्रं पशूनाप्नोति वलमेवापवृणोति यदा
सहस्रं पशून्प्राप्नुयादथ वैष्णवं वामनमालभेत प्रतिष्ठित्या एतस्मिन्वै

---

[1] So Ch; D देवत्याः [2] So D; Ch सोमानि [3] Ch वृष्णिम° [4] D इन्द्राय
[5] D गृह्णात्त [6] Ch पुरुषस्येते [7] Ch सक्त° [8] Ch द्विडाभ्य° [9] Ch युक्ति
[10] Ch सक्तो [11] Ch बल° [12] Ch तदतृणत्स

तत्सहस्रमध्यतिष्ठत्स व्यैषदधिष्ठीयमानस्तस्मादेष तिर्यङ्ङिव वीषितस्ता
एता एवमभित आलभेत सहस्रस्य परिगृहीत्यै यज्ञो वै दक्षिणाम-
भ्यकामयत ताँ समभवत्सा[1] गर्भमधत्त तमववृज्य प्राद्रवत्तमववृक्णँ
शयानमदितिरचायत्तमाहरत्तमधस्तादूर्वोरुपास्यत सो ऽधस्तादूर्वोरव-
5 र्धत तस्मादेष तिर्यङ्ङिव वीषितो ऽधस्ताच्चूर्वोरवर्धत[2] तं विष्णुरचा-
यत्तमभ्यवदत्तस्मिन्नश्नमैतां तं विष्णवे ऽन्वब्रुवँस्तस्मादाहुः कर्तुरेव पुत्र
इति येन वामनेनेर्त्सेददित्यै[3] चरुं पुरस्तान्निर्वपेददितिर्वा[4] एतमवर्ध-
यत्तस्या एवैनमधिनिष्क्रीणाति तेनानृणेन[5] निष्क्रीतेन[6] मेध्येन[7] प्रसू-
तेनर्ध्नोत्येव[8] सौम्यं बभ्रुमृषभं प्रथमकुसिन्धमालभेत यो[9] राज्य आशँ-
10 सेत सोमो वै देवानां राजा सोम एतस्य देवता यो राज्य आशँसते
स्वामेव देवतां भागधेयेनोपधावति सैनं राज्याय परिणयति यत्प्रथ-
मकुसिन्धो वीर्यस्य तद्रूपमिन्द्राय वज्रिणे रोहितमृषभं प्रथमकुसिन्ध-
मालभेत राजन्यायाभिचरते वा बुभूषते वैन्द्रो वै राजन्यो देवतया वज्रो
ऽस्य वीर्यं वज्रमेवास्मिन्दधाति तेन विजयति[10] भवत्येव यत्प्रथमकुसि-
15 न्धो वीर्यस्य तद्रूपं य एकाष्टकायां जायेत तमुत्सृजेद्यदि द्वौ जायेयातां
ता उभा उत्सृजेद्यदि संवत्सरे द्वितीयो जायेत तँ संवत्सरे ऽनूत्सृजेदा-
ग्नेयमष्टाकपालं निर्वपेज्जातयोराग्नेया वै पशवस्तस्मादेवैना अधिनि-
ष्क्रीणात्यग्नये वैश्वानराय द्वादशकपालं निर्वपेत्संवत्सरे पर्यते संवत्सरो
वा अग्निर्वैश्वानरस्संवत्सरादेवैना अधिनिष्क्रीणात्या[11] मेध्याभ्यां भवि-
20 तोस्संवत्सरे संवत्सरे ऽग्नये वैश्वानराय द्वादशकपालं निर्वपेत्संवत्सरो
वा अग्निर्वैश्वानरस्संवत्सरात्संवत्सरादेवैना अधिनिष्क्रीणाति ॥ ता-
भ्याँ सर्वतो निष्क्रीताभ्यां मेध्याभ्यां प्रसूताभ्यामृध्नोत्येवैतस्यां[12] वा
इन्द्रो ऽजायत स देवानां वीर्यावत्तमस्तस्माद्य एकाष्टकायां पशूनां

---

[1] So D; Ch त्स   [2] Ch स्तादूर्वो°   [3] D वामनेनेर्छेद°; Ch गामनेनेत्सेद°   [4] D चरुं पश्चान्निर्व°   [5] So D; Ch तेनावृतेन   [6] D निष्क्रितेन   [7] D मेधेन; Ch मेमेध्येन
[8] Ch नब्नोत्येव   [9] D setzt zwei Mal यो   [10] Ch जयते   [11] Ch णाभ्यां; D णात्य
[12] So D; Ch तस्या

जायते स वीर्यावान्भवति वीर्यावान्भवति य एवं विद्वानेताभ्यां
यजत इन्द्रायाभिमातिघ्ने पूर्वमालभेत पाप्मा वा अभिमातिः[1] पा-
प्मानमेवापहत इन्द्राय वृत्रतुर[2] उत्तरं पाप्मा वा अभिमातिः[1] पा-
प्मानमेवापहत्याथैतेन वृत्रतूर्भवति स्वाराज्यमुपैति नास्मादन्यस्समा-
नेषु वसीयान्भवति य एवं विद्वानेताभ्यां यजते शतमन्यस्य दक्षि- 5
णाश्वो ऽन्यस्य पूर्ववाडा एव कौच द्वा[3] एतद्ब्राह्मणा अनेवमुत्सृष्टा
आलभेत ताभ्यामेवर्ध्नोति[4] तत्र यत्किंच ददाति तद्दक्षिणा ॥ ३ ॥
cf. Mâitr. S. 2, 5, 3. 8. 9.

इन्द्राय मन्युमते ललाममृषभमालभेत संग्रामे मन्युना वै वीर्यं
करोतीन्द्रियेण जयति मन्युं चैवैष्विन्द्रियं च जित्यै दधाति यल्ललामः
पुरस्तान्मन्योस्समृद्ध्यै देवाश्च वा असुराश्च संयत्ता आसंस्ते न व्यज- 10
यन्त ते ऽब्रुवन्ब्रह्मणा[5] नो मेनी विजयेतामिति त ऋषभौ समवा-
सृजञ्छ्वैत्रेयो[6] ऽरुणस्तूपरो देवानामासीच्छ्यैनेयश्श्यैतो[7] ऽयश्शृङ्गो
ऽसुराणां तौ समहतां तं श्वैत्रेयस्समयाभिनत्सा या वाक्पराजिता-
सीत्सावाच्यपतद्याजयत्सोर्ध्वा तस्माद्यस्यावाची वाक्सो ऽनार्त्विजी-
नो[8] ऽसुर्यो हि स वर्णस्तस्माद्यस्योर्ध्वा वाक्स आर्त्विजीनो देवत्रेव[9] 15
हि स बार्हस्पत्यमरुणं तूपरमभिचरन्नालभेत ब्रह्म वै बृहस्पतिर्ब्रह्म-
णैवैनमभिप्रयुङ्क्त एतेन वै देवा असुरानस्तृण्वत यत्तूपरस्स्तृत्या[10] इन्द्रो
वै वृत्रमहंस्तं हतस्सप्तभिर्भोगैः पर्यहंस्तस्य मूर्ध्नो वैदेहीरुदायंस्ताः प्रा-
चीरायंस्तस्मात्ताः पुरस्स जघन्यमृषभं[11] वैदेहमनूद्यन्तममन्यतेममिदा-
नीमालभेय तेन त्वा इतो मुच्येयेति तमालभत तेन नामुच्यत स आ- 20
ग्नेयमजमालभतैन्द्रमृषभं तेन वै स तानग्निना पाप्मनो भोगानपिद-
ह्याथैन्द्रेणेन्द्रियं वीर्यमात्मन्नधत्त ततो वै सो ऽभवदाग्नेयमजमालभेतै-

---

[1] So Ch; D मतिः   [2] So corr.; Mss. वृत्रतर   [3] Ch द्वानेत°   [4] Ch वध्नोति
[5] So D; Ch ब्राह्मणा   [6] Ch समवासृजञ्छ्वैत्रेयो   [7] Ch श्यैनेयश्श्यैतो; D श्यैनेयाश्श्यतां
[8] D वाक्तेनार्त्विजिनो; Ch वाक्तोनार्त्विजीनो   [9] D आर्त्विजिनो देवद्रेव   [10] So Ch; D स्तृभ्या   [11] Ch स घन्यम°

न्द्रमृषभं बुभूषन्यः पाप्मगृहीत इव मन्येत पाप्मा वै स तं[1] सप्तभिर्भो-
गैः पर्यहन्पाप्मन एष भोगैः परिहितो यो ऽलं भूत्यै सन्न भवति यदा-
ग्नेयो ऽग्निनैव पाप्मनो[2] भोगानपिदह्याथैन्द्रेणेन्द्रियं वीर्यमात्मन्धत्ते भ-
वत्येव ॥ देवाश्च वा असुराश्चास्मिंल्लोक आसंस्ते ऽसुरा देवाननुदन्ता-
5 स्माल्लोकात्ते देवाः प्रजापता एवानाथन्त स एता असृजतर्षभं च व-
शां च यमं च यम्यं च तस्माद्यौ यमौ मिथुनौ जायेते ऋषभ एवान्यो
भवति वशान्या स वैष्णुवारुणीं वशामालभतैन्द्रमृषभं[3] तेन वै स
तान्वरुणेनासुरान्ग्राहयित्वा विष्णुना यज्ञेन प्राणुदताथैन्द्रेणेन्द्रियं[4] वी-
र्यमात्मन्नदधाद्देषु ततो देवा अभवन्परासुरा अभवंस्ता एता एवमा-
10 लभेत यो भ्रातृव्येन व्यायच्छेत वैष्णुवारुणीं वशामैन्द्रमृषभं वरुणेनैव
भ्रातृव्यं ग्राहयित्वा विष्णुना यज्ञेन प्रणुदते ऽथैन्द्रेणेन्द्रियं वीर्यमात्मन्धत्ते
भवत्यात्मना परास्य भ्रातृव्यो भवत्योषधिभ्यो वेहतमालभेत प्रजाकाम
ओषधीनां वा एषा प्रिया ता एतां सूतोः परिबाधन्ते तस्मादेषा
सर्वेषां पशूनां प्रियाप ओषधय आपो ऽसत्खनन्ति[5] ता एव भाग-
15 धेयेनोपधावति ता अस्मै प्रजां खनन्ति यावन्तस्तां वाशितामन्वा-
धावन्ति[6] ते दक्षिणा समृद्ध्या ऐन्द्रीं सूतवशामालभेत[7] राजन्याय
बुभूषत इन्द्रो वा एतस्या अजायत स पुनः प्रत्यवैक्षत सो ऽमन्यत यो
वा इतो ऽपरो जनिष्यते स मे भ्रातृव्यो भविष्यतीति तं प्रत्यवमृश्य[8]
योनिं न्यवेष्टयत्तस्मादेषा नापरं सूत ऐन्द्रो राजन्यो देवतया स्वादेवैनं
20 योनेर्जनयति भूत्यै भवत्येव यस्तस्या अधिजायेत तमैन्द्रमालभेतेन्द्रिय-
काम इन्द्रियं वा एतदेतस्या अधिजायते तदेव समक्षमाप्त्वावरुन्द्धे
ब्राह्मणस्पत्यमतिष्ठायमालभेत यः कामयेतातिष्ठायस्स्यामित्यग्रेवै[9] जि-

---

[1] D तां  [2] Mss. पाप्मानो  [3] Ch लभेतै°  [4] So corr. Ch प्रणुदतेथै°; D प्रारादताथै°  [5] So Ch; D सत् वनंति  [6] So D; Ch वासिता  [7] So Ch; D ऐन्द्रीं सूतांवशा°  [8] D मृष्य  [9] So Ch; D ग्निवै ·

ह्मा ब्रह्मणस्पतिस्सर्वमेषातितिष्ठति रूपेणैवैनं[1] समर्धयति सैनमतिष्ठायं करोति ॥ ४ ॥ cf. Mâitr. S. 2, 5, 3. 4. 8. 9.

आग्नेयमजमालभेत सौम्यमृषभं यस्य पिता पितामहः पुण्यस्स्याद्थ तन्न प्राप्नुयादग्निस्सर्वा देवता मुखत एव देवता आलभत इन्द्रियेण वा एष सोमपीथेन व्यृध्यते[2] यस्य पिता पितामहः पुण्यो भव- 5 त्यथ तन्न प्राप्नोति सौम्यो ब्राह्मणो देवतयेन्द्रियमस्य सोमपीथो यत्सौम्य इन्द्रियेणैवैनं सोमपीथेन समर्धयति[3] द्यावापृथिव्यां धेनुं पर्यारिणीमालभेत निरूढो ज्योङ्निरूढो द्यावापृथिव्योर्वा एष निर्भक्तो यो निरूढो ज्योङ्निरूढो यद् द्यावापृथिव्या द्यावापृथिव्योरेवैनमाभजति पर्यारी वा एष यो निरूढो ज्योङ्निरूढः पर्यारिण्यस्य देवता य- 10 त्पर्यारिणी स्व[4] एवास्य तेन पशुरेतस्या एव वायव्यं वत्सं श्व[5] आलभेत वायुर्वा अनयोर्वत्सस्स इमे आप्याययति स प्रदापयति तमेव भागधेयेनोपधावति सो ऽस्मा इमे प्रदापयत्यैन्द्राग्नमेतमनुसृष्टमालभेत यस्य पिता पितामहस्सोमं न पिबेदथ स पिपासेदिन्द्रियेण वा एष सोमपीथेन व्यृध्यते[6] यस्य पिता पितामहस्सोमं न पिबत्याग्नेयो ब्रा- 15 ह्मणो देवतयेन्द्रियमस्य सोमपीथो यदैन्द्राग्नस्स्वयैव देवतया सोमपीथमनुसंतनोत्यनुसृष्टो वा एतस्य सोमपीथो यस्य पिता पितामहस्सोमं न पिबति यदनुसृष्टस्स्व एवास्य तेन पशुर्यदेतौ द्विदेवत्यस्य तद्रूपं त्वाष्ट्रं शुण्ठमालभेत यः कामयेत रूपकाशो मे पुत्रो जायेतेति त्वष्टा वै रूपाणां विकर्ता तमेव भागधेयेनोपधावति सो ऽस्मै रूपा- 20 णि विकरोत्याश्विनं कृष्णललाममालभेत भ्रातृव्यवान्देवा वा असुरानह्नो ऽनुदन्त तेषां यत्स्वमासीद्यद्वित्तं यद्वेद्यं तेन रात्रीं समवायंस्ते देवा एतमाश्विनं कृष्णललामममपश्यंस्तमालभन्त तेनैनान्रात्रीमन्ववायन्द्यावापृथिवी[7] वा अश्विनौ तान्द्यावापृथिवीभ्यामेवावस्तान्नि-

---

[1] Ch नैवैनं [2] So corr. Die Mss. वृध्यते [3] Von hier bis द्यावापृथिव्योर्वा (excl.) in D fehlend. [4] D सु [5] D सु [6] Mss. वृध्यते [7] Mss. वायं द्या°

बाध्यादित्येन[1] परस्ताद्राव्या अनुदन्त तेषां यत्स्वमासीद्यद्वित्तं यद्वेद्यं
तदवृञ्जत ततो देवा अभवन्परासुरा अभवन्द्यावापृथिवी वा अश्वि-
नौ द्यावापृथिवीभ्यामेवावस्ताद्भ्रातृव्यं निबाध्यादित्येन परस्तादहोरा-
त्रयोः प्रणुदते तस्य यत्स्वं यद्वित्तं यद्वेद्यं तद्वृङ्क्ते भवत्यात्मना परास्य
5 भ्रातृव्यो भवति ॥ यल्ललामो ऽहस्तद्रूपं यत्कृष्णो राव्यास्तदुभयोरेवैनं
वर्णयोः प्रणुदते[2] इन्द्रो वै विलिस्तेङ्गां[3] दानवीमकामयत सो ऽसुरे-
ष्वचरत्स्त्र्येव[4] स्त्रीष्वभवत्पुमान्पुंसु स निर्ऋतिगृहीत इवामन्यत स
एतमैन्द्रानैर्ऋतं विपुंसकमपश्यद्येन रूपेणाचरत्तमालभत तस्य यद-
नवदानीयमासीत्तेन पूर्वेण प्राचरद्दक्षिणा परेत्य स्वकृत इरिणे[5] जु-
10 षाणा निर्ऋतिर्वेत्तु स्वाहेत्यथेतरं पुनरेत्यैन्द्रं समस्थापयत्स निर्ऋति-
मेव पूर्वां निरवदायाथैन्द्रेणेन्द्रियं वीर्यमात्मन्नधत्त ततो[6] वै सो ऽभ-
वदैन्द्रानैर्ऋतं[7] विपुंसकमालभेत बुभूषन्यो निर्ऋतिगृहीत इव मन्येत
तस्य यदनवदानीयं[8] स्यात्तेन पूर्वेण प्रचरेद्दक्षिणा परेत्य स्वकृत इरिणे
जुषाणा निर्ऋतिर्वेत्तु[9] स्वाहेत्यथेतरं पुनरेत्यैन्द्रं[10] संस्थापयेन्निर्ऋतिमेव
15 पूर्वां निरवदायाथैन्द्रेणेन्द्रियं वीर्यमात्मन्धत्ते भवत्येवैन्द्रं विशालमृष-
भमालभेत संग्रामे यः कामयेतायं संग्रामो न विजयेतेतीन्द्रो वै सं-
ग्रामस्य विनेतेन्द्रो विजापयिता तमेव भागधेयेनोपधावति स एना-
न्विनयति[11] यद्विशालो वियतां तद्रूपमिन्द्राय विघनाय विशालमृष-
भमालभेत जनतयोस्संधौ यः कामयेतोभे जनते ऋच्छेयमित्युभे एव
20 जनते ऋच्छति ते अन्यान्यां घ्नती[12] चरतो यद्विशाल आव्रस्कमेवैने[13]
गमयति ॥ ५ ॥ cf. Mâitr. S. 2, 5, 5.

आग्निवारुणीमनड्वाहीमालभेतानाज्ञातयक्ष्मगृहीतो[14] ऽनाज्ञातय-

---

[1] Mss. तां द्या [2] Ch वर्णयेः प्रणुदात [3] So Ch; D विलिस्तिंगान्दा° [4] Ch सुरेषु चर° [5] Ch इरिणये [6] Ch त्मन्नधत्त तो; D त्मन्धत्त ततो [7] Ch निर्ऋतं [8] Ch यदवदा° [9] So corr.; Mss. वेत्त [10] Ch त्यैंद्रे [11] D एना वि° [12] So Ch; D अन्यान्याघ्नौतौ [13] D आचस्क° [14] Zu diesem Kap. ist auch W 1 verglichen.

क्ष्मो वा एतां विन्दो या स्त्री सत्यनड्वाही तस्मादेनामनाज्ञातयक्ष्मगृ-
हीत[1] आलभेताग्निस्सर्वा देवता यदेवास्य देवताभिर्निर्षितं तदग्निना
मुञ्चति यद्वरुणगृहीतं[2] तद्वरुणेन[3] यद्वहिनी तेनाग्नेयी यत्स्त्री सती
दान्ता[4] तेन वारुणी तस्मादाग्निवारुणी भवति त्वाष्ट्रमैंसेपादमाल-
भेत[5] पशुकामो मिथुनो वा एष यों ऽसेपास्त्वष्टा[6] मिथुनस्य प्रजनयि- 5
ता तमेव भागधेयेनोपधावति सो ऽस्मा एतस्मान्मिथुनात्पशून्प्रजन-
यति वारुणीं श्यामशितिकण्ठमालभेत यं व्येमानं[7] यक्ष्मो गृह्णीया-
द्वरुणो वा एतं[8] गृह्णाति यं व्येमानं[9] यक्ष्मो गृह्णाति यद्वारुणो[10]
वरुणादेवैनं मुञ्चति पाप्मनैष गृहीतो य आमयावी श्याम इव पा-
प्मा यच्छ्यामः पाप्मानमेवापहते यच्छितिकण्ठो वरुणपाशमेव तेन 10
प्रमुञ्चत आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणः[11] सोमं पिपाय-
यिषेदश्विनौ वै देवानामसोमपा आस्तां तौ पश्चात्सोमपीथं[12] प्राप्नु-
तामश्विना एतस्य देवता यः पश्चात्सोमपस्ता[13] एव भागधेयेनोपधा-
वति ता एनं सोमपीथाय परिणयतस्तायदिव[14] यजेत स्तायदिव हि
दुर्ब्राह्मणो ब्राह्मणो बुभूषति धूम्र इव वा एष यो दुर्ब्राह्मणो यद्धूम्रो 15
धूम्रिमाणमेवापहते यल्ललामो मुखत एव तेन तेजो धत्ते सारस्वतीं
धेनुष्टरीमालभेत यं भ्रातृव्या नीव[15] श्वासयेरन्वाचा वा एत एतं नि-
श्वासयन्ते[16] वाक्सरस्वती यत्सारस्वती वाचैवैषां वाचं प्रतिशृणाति॥
धेनुर्वा एषा सती न दुहे तस्माद्धेनुष्टर्युच्यते[17] यद्धेनुष्टरी वाचमेवैषां
स्तरीकरोति सारस्वतीं धेनुष्टरीमालभेत यमजघ्निवांसमभिशंसेयुरशा- 20
न्ता वा एतं[18] वागृच्छति[19] यमजघ्निवांसमभिशंसन्ति वाक्सरस्वती

---

[1] Ch देताम° [2] Ch यद्वारुण° [3] Ch तद्वारुणेन [4] D दंता [5] So D; Ch त्वाष्ट्रेमांसेपाद°; W 1 त्वाष्ट्रमांसेपाद° [6] So D; Ch यीं सोपात्वष्टा; W 1 यो सेपात्वष्टा [7] So W 1; in Ch und D व्योमानं [8] So W 1; Ch und D एतद्व° [9] Ch व्योमानं [10] W 1 यद्वरुणो [11] Ch दुर्ब्राह्मणो [12] So W 1; Ch und D पश्चा सोमपीथं [13] So W 1; Ch und D पश्चा सोम° [14] So Ch; D यतस्तायदिवा; W 1 यतस्तायदेव [15] D व्याचीव [16] W 1 निश्श्वासयन्तो; Ch निश्श्वासयंति [17] Ch ष्टर्याच्यते [18] W 1 सतां [19] D वाग्रुकसे

यत्सारस्वती वाचैवैषां वाचं शमयति धेनुर्वा एषा सती न दुहे त-
स्माद्धेनुष्टर्युच्यते यद्धेनुष्टरी वाचमेवैषां स्तरीकरोति सावित्रं पुनरुत्सृ-
ष्टमालभेत यः पुरा[1] पुण्यो भूत्वा पश्चात्पापीयान्स्याद्द्वया[2] वा एष
देवतया पुरा[3] पुण्यो भवति सा हि वा एतमनुसृजत्यथैष पापीया-
5 न्भवति सविता श्रियः प्रसविता तमेव[4] भागधेयेनोपधावति स एनं
पुनश्श्रियै[5] प्रसुवति पापो वा एष[6] पुरा[7] भूत्वा पश्चाच्छ्रियं[8] प्राप्नोति
यो ऽनड्वान्भूत्वोक्षा भवति यथैव स श्रियं प्राप्नोत्येवमेनं श्रियं प्राप-
यति ॥ ६ ॥ cf. Mâitr. S. 2, 5, 4.

त्रींल्ललामानृषभान्वसन्तालभेत त्रीञ्छितिककुदो[9] ग्रीष्मे त्री-
10 ञ्छितिभसदश्शरदि[10] यल्ललामा मुखत एव तेन तेजो धत्ते यच्छिति-
ककुदो[11] मध्यत एव तेन रुचं धत्ते यच्छितिभसद उपरिष्टादेव तेन ब्र-
ह्मवर्चसं धत्ते संवत्सरं पर्यालभ्यन्ते वीर्यं वै संवत्सरस्संवत्सरमेव वीर्य-
माप्नोति नव भवन्ति नव प्राणाः प्राणानेवात्मन्धत्त ऐन्द्रास्स्युर्बुभूष-
न्यजेतासौ वा आदित्य इन्द्रस्स एतैरभवत्स एतैस्तेजो वीर्यमात्मन्नधत्त
15 भवत्येव तेजो वीर्यमात्मन्धत्ते य एवं विद्वानेतैर्यजते प्राजापत्यं सर्व-
रूपं दशममालभेत संवत्सरे[12] पर्यन्ते संवत्सरस्याप्त्यै प्रजापतिर्योनि-
र्योना एव प्रतितिष्ठति ॥ सर्वरूपो भवति सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै
दश भवन्ति दश प्राणाः प्राणा वीर्यं वीर्य एव प्रतितिष्ठति द्यावा-
पृथिव्ये[13] धेनू संमातरा आलभेतान्नकामो द्यावापृथिवी वा अन्नाद्य-
20 स्येशाते अमुतो वर्षत्यस्यां प्रतितिष्ठत्येते अन्नाद्यस्य प्रदात्री ते एव
भागधेयेनोपधावति ते अस्मा अन्नाद्यं प्रयच्छतस्संमातरौ भवतस्सं-
मातरा इव हीमे एतयोरेव वायव्यं वत्सं च आलभेत वायुर्वा अन-

---

[1] W 1 पुरः [2] Ch पश्चात्पापीयस्स्या° [3] W 1 पुरः [4] Ch तामेव [5] Ch श्रियः [6] Ch एषा [7] W 1 hier auch पुरा [8] So W 1; D पश्चा श्रियं; Ch पश्चाच्छ्रियम्प्रा° [9] So D; Ch त्रींश्छि° [10] So Ch; D त्रींश्छि° [11] Ch यश्छिति° [12] D संवत्सरं [13] So D; Ch द्यावापृथिव्यौ

योर्वत्सस्य इमे आप्याययति स प्रदापयति[1] तमेव भागधेयेनोपधा-
वति सो ऽस्मा इमे प्रदापयति बार्हस्पत्यं शितिपृष्ठमालभेत ब्रह्मवर्च-
सकामो ब्रह्म वै बृहस्पतिर्बृहस्पतिर्ब्रह्मवर्चसस्य[2] प्रदाता तमेव भाग-
धेयेनोपधावति सो ऽस्मै ब्रह्मवर्चसं प्रयच्छति ॥ पृष्ठमिव[3] वा एष
भवति यो भवति यच्छितिपृष्ठः पृष्ठमेवैनं करोत्याश्विनं कृष्णललाम-
मालभेतानुजावरो ऽश्विनौ वै देवानामानुजावरौ[4] ता अग्रं पर्यैताम-
श्विना एतस्य देवता य आनुजावरस्ता एवान्वारभते ता एनमग्रं प-
रिणयतः पाप्मनैष गृहीतो य आनुजावरः कृष्ण इव पाप्मा यत्कृष्णः
पाप्मानमेवापहते यल्ललामो मुखत एव तेन तेजो धत्त आश्विनं कृ-
ष्णललाममालभेतामयाव्यश्विनौ वै देवानां भिषजा अश्विनौ एतस्य
देवता य आमयावी ता एव[5] भागधेयेनोपधावति ता एनं भिषज्यतः
पाप्मनैष गृहीतो य आमयावी कृष्ण इव पाप्मा यत्कृष्णः पाप्मा-
नमेवापहते यल्ललामो मुखत एव तेन तेजो धत्ते ॥ त्वाष्ट्रं विपुंसक-
मालभेत प्रजाकामो वा पशुकामो वा प्रजापतिर्वै प्रजास्सिसृक्षमा-
णस्स द्वितीयं मिथुनं नाविन्दत स एतद्रूपं कृत्वाङ्गुष्ठेनात्मानं समभ-
वत्ततः प्रजा असृजत त्वष्टा मिथुनस्य प्रजनयिता तमेव भागधेयेनो-
पधावति सो ऽस्मा एतस्मान्मिथुनात्पशून्प्रजनयत्येतेन वै रूपेण प्र-
जापतिः प्रजा असृजत येनैव रूपेण प्रजापतिः प्रजा असृजत तस्मा-
देव रूपात्प्रजया च पशुभिश्च प्रजायत ऐन्द्रं विपुंसकमालभेत यः प-
ण्डकत्वाद्बिभीयादिन्द्रो[6] वा एतां त्वचमेतं पाप्मानमपाहत[7] तमेव
भागधेयेनोपधावति सो ऽस्मात्तां त्वचं[8] तं पाप्मानमपहन्त्यृषभो दक्षि-
णा वीर्यं वा ऋषभो वीर्यमेवास्मिन्दधाति ॥ ७ ॥

cf. Mâitr. S. 2, 5, 4. 6.

---

[1] Von hier bis zum folgenden प्रदापयति (incl.) in D fehlend. [2] In Ch nur ein Mal बृहस्पति und dann ब्रह्मवर्चसकामस्य für ब्रह्मवर्चसस्य [3] So D; Ch पृष्ठमेव [4] Ch मनुजावरौ [5] D एवं [6] Ch द्विभीया°; D द्वितीया° [7] Ch हते [8] Ch स्मात्तत्त्वचं

छन्दांसि वै यज्ञमभ्यमन्यन्त स वषट्कारो ऽभ्यय्य[1] गायत्र्याश्शिरो ऽच्छिनत्ततो यो रसो ऽस्रवत्सा वशाभवद्यद्वशमस्रवत्तद्वशाया वशात्वं यत्प्रथममस्रवल्लोहितं वाव तदस्रवत्तद्बृहस्पतिरुपागृह्णात्सा या रोहिणी साभवत्तस्मात्सा बार्हस्पत्या यद्द्वितीयमस्रवत्तन्मित्रावरुणा उपा-
5 गृह्णीतां सा या द्विरूपा साभवत्तस्मात्सा मैत्रावरुणी यत्तृतीयमस्रवत्तद्विश्वे देवा उपागृह्णन्सा या बहुरूपा साभवत्तस्मात्सा वैश्वदेवी ॥ यदुदौक्षत तद्बृहस्पतिरभ्यगृह्णात्स उक्षाभवत्तदुक्ष्ण उक्षत्वं यदत्यमुच्यत तानीमान्यन्यानि रूपाणि बार्हस्पत्यां रोहिणीमालभेत ब्रह्मवर्चसकामो रसेन वा एष व्यृध्यते यो ऽलं ब्रह्मवर्चसाय सन्न ब्रह्मवर्चसी भवति
10 छन्दसामेष रसो ब्रह्म बृहस्पतिर्ब्रह्मणैवास्मिंस्तेजो रसं दधाति ब्रह्मवर्चसी भवति मैत्रावरुणीं द्विरूपामालभेत वृष्टिकामो ऽहोरात्रे वै मित्रावरुणा अहोरात्रे पर्जन्यो ऽनुवर्षति नक्तं वा हि दिवा वा वर्षत्येतौ वर्षस्येशाते ता एव भागधेयेनोपधावति ता अस्मै प्रीतौ वृष्टिं निनयतो मैत्रावरुणीं द्विरूपामालभेत प्रजाकामो ऽहोरात्रे वै मि-
15 त्रावरुणा अहोरात्रे प्रजा अनुप्रजायन्ते नक्तं वा हि दिवा वा प्रजायन्ते ऽहोरात्रे एवैना अनुप्रजनयति ॥ वैश्वदेवीं बहुरूपामालभेत कामेभ्यः कामा वै विश्वे देवास्तानेव भागधेयेनोपधावति ते ऽस्मै सर्वान्कामान्प्रयच्छन्ति बार्हस्पत्यमुक्षाणमालभेत बुभूषन्रसेन वा एष व्यृध्यते[2] यो ऽलं भूत्यै सन्न भवति छन्दसामेष रसो ब्रह्म बृहस्पतिर्ब्र-
20 ह्मणैवास्मिन्भूतिं रसं दधाति[3] भवत्येव सौरीं[4] श्वेतामालभेत रुक्कामो ऽसौ वा आदित्यो रुचः प्रदाता तमेव भागधेयेनोपधावति सो ऽस्मै रुचं प्रयच्छति ब्राह्मणस्पत्यां बभ्रूमभिचरन्नालभेत ब्रह्म वै ब्रह्मणस्पतिर्ब्रह्मणैवैनमभिप्रयुङ्क्त एतद्वै ब्रह्मणो रूपं यद्बभ्रू रूपेणैवैनत्संश्यति ॥ ८ ॥
cf. Mâitr. S. 2, 5, 7.

---

[1] So Ch; D त्यय्य [2] So corr.; D वृध्यते; in Ch fehlt dies Wort. [3] Ch भूतिरसन्द° [4] Die Mss. सौरीं

धाता रातिस्सवितेदं जुषन्तां प्रजापतिर्वरुणो मित्रो अग्निः।
त्वष्टा विष्णुः प्रजया संरराणा यजमानाय द्रविणं दधात॥
आवर्तय निवर्तया वर्तन[1] वर्तय नि निवर्तन[2] वर्तय।
इन्द्र[3] नन्दबल भूम्याश्चतस्रस्स्रूक्तयस्ताभ्यस्त्वा वर्तयामसि॥
वि ते भिनद्मि तकरिं वि योनिं वि परीणहम्। 5
वि मातरं च पुत्रं च वि गर्भं च जरायु च॥
बहिष्टे अस्तु बालिति पुरुदस्मवद्विश्वरूपमिन्दुः पवमानो गर्भमानञ्ज धीरः[4]।
एकपादं द्विपादं त्रिपादं चतुष्पादं भुवनानुप्रथन्ताम्॥
गर्भो यस्ते यज्ञियो योनिर्यस्ते हिरण्ययः। 10
अङ्गान्यहुता यस्य तं देवास्समचीकॢपन्॥
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्।
पिपृतां नो भरीमभिः॥
नमो महिम्न उत चक्षुषे ते मरुतां पितरुत तद्गृणीमः।
हुतो याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः॥ 15
देवानामेष उपनाह आसीदपां पतिरोषधीनाम्।
सोमस्य द्रप्समवृणीत पूषा बृहन्नद्रिरभवद्यत्तदासीत्॥
पिता वत्सानां पतिरघ्न्यानामथो पिता महतां[5] गर्गराणाम्।
गर्भो जरायुः प्रतिधुक्पीयूष आमिक्षा मस्तु घृतमस्य योनिः॥
द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः। 20
समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः॥ ॥ ९॥

cf. Mâitr. S. 2, 5, 10 ; TS 3, 3, 9. 10.

यदाष्टापद्यभूदित्यनुबुध्येत धाता रातिस्सवितेदं जुषन्तामिति स्रुवेणाहवनीये जुहुयाद्देवताभ्य एवैनान्निवेदयत्यावर्तय निवर्तयेतीन्द्र-

[1] So D; Ch निवर्तयाव वतन [2] So corr. D नि निवर्त; Ch bloss निवतन; cf. RV 10, 19, 8; TS 3, 3, 10, 1. [3] Ch इंद्रं [4] D धीराः; vgl. zu diesem Verse TS 3, 3, 10, 2. [5] So corr. Ch महतो; D महता

मेव[1] दिग्भ्य आवर्तयति प्रायश्चित्त्यै वि ते भिनद्मि तकरिमिति[2] प्रैव जनयत्यन्तरा श्रोणी[3] निघ्नन्ति प्रजननाय पुरूदस्मवदिति पाचमुपद-धात्यस्कन्दायैकपादं द्विपादमिति प्रथयत्येव यदवद्येदवदानान्यतिरेच-येद्यन्नावद्येत्पशोरालब्धस्य नावद्येदार्तिमार्छेत्पुरस्तादन्यन्नाभ्या अवद्ये-
5 त्पश्चादन्यत्पुरस्ताद्वै नाभ्याः प्राणः पश्चादपान एतावान्वै पशुर्यावानेव पशुस्तस्यावद्यत्यच्छम्बट्कारं यद्रसमवदानेषु व्यानयति तेनैव सर्वेषाम-ङ्गानामवत्तं भवत्यष्टापृडि[4] हिरण्यं दक्षिणाष्टापदी वा एषात्मा नवमो ऽष्टापृडमेतन्नेमिर्नवमः पशोराप्त्यै तृतीये ऽन्तरकोश उष्णीषेणावेष्टितं[5] भवति विबिलानिव कोशान्कुर्यादेवमेव[6] हि पशुर्लोम चर्म मांसम-
10 स्थि मज्जा पशुमेवाप्नोति तद्विष्णवे शिपिविष्टाय जुहोति यो वै पशूनां भूमा यदतिरिक्तं तद्विष्णोश्शिपिविष्टमतिरिक्तं वा एतदतिरिक्तं शिपिविष्टमतिरिक्तेनैवातिरिक्तमाप्नोत्यथो अतिरिक्त एवातिरिक्तं द-धाति ॥ गर्भो यस्ते यज्ञिय इति यज्ञियमेवैनं करोति योनिर्यस्ते हिर-ण्यय इति हिरण्ययमेवैनं करोत्यङ्गान्यहुता यस्य तं देवास्समचीकॢप-
15 न्निति समेवैनं कल्पयति मही द्यौः पृथिवी च न इति पशुश्रपण उपवपत्यनयोर्वा एष गर्भो ऽनयोरेवैनं प्रतिष्ठापयति नमो महिम्न उत चक्षुषे त इति व्यृद्धेन[7] वा एष पशुना चरति यस्यैतानि न क्रि-यन्ते[8] यदेतानि करोति सर्वमेवैनं सवीर्यं सयोनिं सतनूमृद्ध्यै संभर-ति ॥ १० ॥ cf. TS 3, 4, 1.

20 आ वायो भूष शुचिपा उपा नस्सहस्रं ते नियुतो विश्ववार ।
उपो ते अन्धो मद्यमयामि[9] यतो देव दधिषे पूर्वपेयम् ॥

आकूत्यै त्वा कामाय त्वा समृधे त्वा किक्किटा ते मनः प्रजापतये स्वाहा किक्किटा ते चक्षुस्सूर्याय स्वाहा किक्किटा ते श्रोत्रं द्यावापृ-

---

[1] Ch यतो° [2] D तकरोमिति [3] So Ch; D द्रोणों [4] So D; Ch बवत्यष्टा-मृडे [5] cf. TS 3, 4, 1, 4 nâvishtitam [6] So Ch; D वमिव [7] D वृद्धेन [8] Ch नि क्रि° [9] Ch उपा त अंधा मध्यम°

थिवीभ्यां स्वाहा किक्किटा ते वाचे सरस्वत्यै स्वाहा किक्किटा ते प्राणं वाताय स्वाहा ॥

वशासि वशिनी सकृद्यत्ते मनसा गर्भमाशयत् ।
वशा त्वं वशिनी गच्छ देवान्सत्यास्सन्तु[1] यजमानस्य कामाः ॥
अजासि रयिष्ठाः पृथिव्यां सीद । 5
ऊर्ध्वान्तरिक्षमुपतिष्ठस्व दिवि ते बृहद्भास्स्वाहा ॥
तन्तुं तनं[2] रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष[3] धिया कृतान् ।
अनुल्बणं वयसि जोगुवामपो मनुर्भव जनया दैव्यं जनम् ॥

तपसो[4] हविरसि प्रजापतेर्वर्णो गात्राणां ते गात्रभाग्भूयासं सूर्यो दिवो दिविषद्भ्यो धाता क्षत्रस्य वायुः प्रजानां बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मते ज्योतिष्मतीं जुहोतु स्वाहा ॥ ११ ॥ cf. TS 3, 4, 2. 10

इमे वै सहास्तां ते वायुर्व्यवात्ते[5] गर्भमदधातां[6] ततो ऽजा वशाजायत तामग्निरग्रसत[7] तां प्रजापतिरेतेन पुरोडाशेन निरक्रीणाद्यदाग्नेयः पुरोडाशो भवति निष्क्रीत्यै यद्वायुर्व्यवात्तस्माद्वायव्या यद् द्यावापृथिवी गर्भमदधातां[8] तस्माद् द्यावापृथिव्येमे[9] वै सहास्तां ते यथा 15 वेणू[10] संधाव्येते एवं समधाव्येतां[11] सा या वागासीत्साजा वशाभवत्तस्मात्सारस्वती भवत्यसौ वा आदित्य इमे अभ्यक्रन्दत्ते गर्भमदधातां ततो ऽजा वशाजायत तस्मात्सौरी भवति वायव्यामालभेत[12] बुभूषन् क्षिप्रा देवताजिरं भूतिमुपैति द्यावापृथिव्यामालभेत कृषिमवस्यन्प्रतिष्ठा वा एतस्मा एष्टव्या यः कृषिमवस्यति[13] यद् द्यावापृथिव्या द्या- 20 वापृथिव्योरेव प्रतितिष्ठति वर्षुको ऽस्मै पर्जन्यो भवति तानेतां कण्वास्सौश्रवसा[14] विदुस्सारस्वतीमालभेत यस्माद्वागपक्रामेद्वाग्वै सर-

---

[1] D देवास्स° [2] Beide Mss. hier तनं [3] So corr. Ch पथो रक्षं; D पथो रक्ष
[4] So corr. Ch तप; D तपोसो [5] Ch व्यधात्ते; cf. TS 3, 4, 3, 1 und hier unten.
[6] So combinirt; Ch गर्भमदधतां; D गर्भमादधातां [7] D ता अग्नि° [8] Ch दधतां
[9] Ch वोमे [10] So Ch; D वोग्रा [11] So comb. Ch समधाव्यता; D समधन्येत
[12] D वायंतमा° [13] So D; Ch यत्कृषि° [14] Ch सौंश्रवसा; D सांश्रवसा

स्वती सरस्वत्येतस्मादपक्रामति यस्माद्वागपक्रामति यत्सारस्वती वाचमेवावरुन्द्धे तामेतां गर्भाः[1] प्रावरेया विदुस्सौरीमालभेत रुक्कामो ऽसौ वा आदित्यो रुचः प्रदाता सो ऽस्मै रुचं[2] प्रयच्छति तामेतां यस्का गैरिक्षिता विदुराग्नेन्द्रीमालभेत पुरोधाकाम आग्नेयो वै ब्राह्मण ऐन्द्रो राजन्यो ब्रह्म चैव क्षत्रं च सयुजौ करोति तामेतां कापेया[3] विदुरग्नीषोमीयामालभेतान्नकामो ऽग्निर्वै देवानामन्नादस्सोमो ऽन्नमग्निनैवान्नमत्ति सोमेनावरुन्द्धे तामेतामारुणयो[4] विदुरा वायो भूष शुचिपा उपा[5] न इति य एव प्राजनयत्तस्मादेनामध्यवरुन्द्धे[6] आकूत्यै त्वेत्याकूत्यै ह्येषालभ्यते कामाय त्वेति कामाय ह्येषालभ्यते समृधे त्वेति समृधे ह्येषालभ्यते[7] किक्किटा ते मनः प्रजापतये स्वाहेति प्रजापतिमेवास्या मनो गमयति[8] किक्किटा ते चक्षुस्सूर्याय स्वाहेति सूर्यमेवास्याश्चक्षुर्गमयति किक्किटा ते श्रोत्रं द्यावापृथिवीभ्यां स्वाहेति द्यावापृथिवी एवास्याश्श्रोत्रं गमयति किक्किटा ते वाचं सरस्वत्यै स्वाहेति सरस्वतीमेवास्या वाचं गमयति किक्किटा ते प्राणं वाताय स्वाहेति वातमेवास्याः प्राणं गमयति ॥ किक्किटा त इति जुहोति तस्मात्किक्किटाकारं याम्याः पशव उपतिष्ठन्ते किक्किटाकारादारण्याः प्रत्रसन्ति पञ्चैतानि जुहोति पाङ्क्ताः पशवो यावानेव पशुस्तं स्वर्गं लोकं गमयति वशासि वशिनीत्याशिषमेवाशास्ते सकृद्यत्ते मनसा गर्भमाशयदिति प्रैव जनयत्यजासि[9] रयिष्ठाः पृथिव्यां सीदेतीमानेवैनांल्लोकानामयत्यथ्वान्तरिक्षमुपतिष्ठस्व दिवि ते बृहद्भास्स्वाहेति स्वर्गमेवैनांल्लोकान्गमयति तन्तुं तन्वं[10] रजसो भानुमन्विहीत्याशिषमेवाशास्ते ज्योतिष्मतः पथो रक्ष धिया कृतानिति रक्षसामपहत्या अनुल्बणं[11] वयसि जोगुवामप[12] इत्यनुल्बणमेवैनां[13] तनुते मनुर्भव जनया दैव्यं जनमिति

---

[1] Ch गर्भः [2] Ch रुचः [3] So Ch; D कामेया [4] Ch मरुणयो [5] D उप
[6] D प्रजनयत्तेस्मा [7] Die Worte समृधे त्वेति समृधे ह्येषालभ्यते in Ch zwei Mal vorhanden. [8] D ग्रमयति [9] Ch त्युजासि [10] D तनिं; Ch तनीं [11] Mss. अनुल्वणं, desgl. oben [12] Ch वाम इत्य° [13] Mss. ल्वण

प्रैव जनयति तपसो[1] हविरसि प्रजापतेर्वर्णो गात्राणां ते गात्रभा-
ग्भूयासमित्याशिषमेवाशास्ते ॥ यदप्सु प्रवपति वृष्टिस्सा[2] यदग्नौ जु-
होति स्वगाकृतिस्सा यन्मेघ आलभते वृष्टा[3] तेनाप्रजातैव तर्हि वीध्र-
समृद्धा[4] वा एषा वीध्र एवैतया यजेत त्रयाणां वावैषावरुद्धा संवत्सर-
सदो गृहमेधिनस्सहस्रयाजिनस्त एवैतया यजेरन्सूर्यो देवो[5] दिविषद्भ्यो 5
धाता क्षत्रस्य वायुः प्रजानां बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मते
ज्योतिष्मतीं जुहोतु स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनां प्रजापतये
ज्योतिष्मते ज्योतिष्मतीं जुहोति ॥ १२ ॥ cf. TS 3, 4, 3.

अग्निर्वै जातो न व्यरोचत सो ऽकामयत तेजस्वी स्यामिति सो
ऽग्नये तेजस्विने ऽजं कृष्णग्रीवमालभत ततो वै स तेजस्व्यभवत्सो 10
ऽकामयत सर्वत्र विभवेयमिति सो ऽग्नये विभुमते ऽजं कृष्णग्रीवमा-
लभत ततो वै स सर्वत्र व्यभवत्सो ऽकामयत सर्वत्रापिभागस्स्यामि-
ति सो ऽग्नये भागिने ऽजं कृष्णग्रीवमालभत ततो वै स सर्वत्रापिभा-
गो ऽभवद्यः कामयेत तेजस्वी स्यां सर्वत्र विभवेयं सर्वत्रापिभाग-
स्स्यामिति स एतानाग्नेयानजान्कृष्णग्रीवानालभेत तेजस्व्येव भवति 15
सर्वत्र विभवति सर्वत्रापिभागो भवति ॥ १३ ॥

देव सवितः प्रसुव[6] यज्ञं प्रसुव[6] यज्ञपतिं भगाय ।
दिव्यो गन्धर्वः केतपूः केतं[7] पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः ॥
वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे ।
यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो[8] देवस्सविता धर्म 20
साविषत् ॥

अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिषु ।
अश्वा भवथ[9] वाजिनः ॥

---

[1] Ch तपसे [2] So corr. Mss. वृद्धिः [3] So Ch; D वृद्धौ [4] Ch वीध्र
[5] So Ch; D दिवो; cf. TS 3, 4, 1, 1. [6] D प्रसुवा [7] D केतं प्रकेतं [8] Ch
तस्यान्नां [9] So Ch; D भवति; cf. RV 1, 23, 19 भवत

वायुर्वा त्वा मनुर्वा त्वा गन्धर्वास्सप्तविंशतिः ।
ते अग्रे[1] अश्वमयुञ्जंस्ते अस्मिञ्जवमादधुः ॥
अपां नपादाशुहेमन्य ऊर्मिः प्रतूर्तिः ककुद्मान्[2] ।
वाजसास्तेन[3] वाजं सेषम् ॥

देवस्य सवितुः प्रसवे सत्यसवस्य वर्षिष्ठं नाकं रुहेयं देवस्य वयं सवितुः प्रसवे सत्यसवनस्य बृहस्पतेर्वाजिनो वाजजितो[4] वाजं जेष्म॥ वाजं वाजिनो जयताध्वनस्स्कभुवन्तो योजना मिमानाः काष्ठां[5] गच्छत ॥

शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवस्स्वर्काः ।
जम्भयन्तो ऽहिं वृकं रक्षांसि[6] सनेम्यस्मद्युयवन्नमीवाः ॥
वाजे वाजे ऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥
ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः ।
सहस्रसा मेधसाता सनिष्यवो महो ये धना समिथेषु जभ्रिरे ॥
एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवासु बद्धो अपिकक्ष आसनि ।
क्रतुं[7] दधिक्रा अनुसंसनिष्यदत्पथामङ्कांस्यन्वापनीफणत्[8] ॥
उत स्मास्य द्रवतस्तुरण्यतः[9] पर्णं न वेरनुवाति प्रगर्धिनः[10] ।
श्येनस्येव द्रवतो अङ्कसं[11] परि दधिक्राव्णस्सहोर्जा तरित्रतः ॥ ॥ १४॥

cf. Mâitr. S. 1, 11, 1. 2.

त्वमिमा ओषधीस्सोम विश्वास्त्वमपो अजनयस्त्वं[12] गाः ।
त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥
या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु ।
तेभिर्नो विश्वैस्सुमना अहेडन्राजन्सोम प्रति हव्या गृभाय ॥

---

[1] D अग्ने [2] D ककुद्माम् [3] Ch सस्तेन [4] Ch वाजंजितो [5] So corr. Ch काष्टां; D काष्टं [6] Ch हि वृक्षांसि [7] Ch क्रतुदं°; cf. TS 1, 7, 8, 3. [8] Ch पर्णोफणत् [9] So corr. Ch द्रवतस्भुर°; D द्रवभस्तुर° [10] So corr. Ch प्रगधिनः; D प्रगविनः [11] Mss. अङ्कसस्परि [12] So corr. nach RV 1, 91, 22. Mss. अजायस्त्वं

सदा सुगः पितुमाँ अस्तु पन्था मध्वा देवा ओषधीस्संपिपृक्त ।
भगो मे अग्ने सख्ये न मृध्या उद्रायो अश्यां सदनं पुरुक्षोः ॥
स्वदस्व हव्या समिषो दिदीह्यस्मद्र्यक्संमिमीहि श्रवांसि ।
विश्वाँ[1] अग्ने पृत्सु ताञ्जेषि शत्रूँरहा[2] विश्वा सुमना दीदिही नः ॥
आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।　5
येषामिन्द्रो युवा सखा ॥
सुकर्माणस्सुरुचो[3] देवयन्तो ऽयो न देवा जनिमा धमन्तः ।
शुचन्तो अग्निं ववृधन्त इन्द्रमूर्वं[4] गव्यं परिषदन्तो अग्मन्[5] ॥
इयं वामस्य मन्मन[6] इन्द्राग्नी पूर्व्यस्तुतिः ।
अभ्राद्वृष्टिरिवाजनि ॥　10
शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम् ।
उभा हि वां सुहवा जोहवीमि ता वाजं सद्य उशते धेष्ठा ॥
विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुतः ।
जुषन्तां युज्यं पयः ॥
ये के च ज्मा[7] महिनो अहिमाया दिवो जज्ञिरे अपां सधस्थे ।　15
ते अस्मभ्यमिषये विश्वमायुः क्षप उस्रा वरिवस्यन्तु देवाः ॥
मही द्यौर्घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे ।
सुपेशसा द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे
भूरिरेतसा ॥
शतायुधाय शतवीर्याय शतोतये ऽभिमातिषाहे ।　20
शतं यो नश्शरदो ऽनयदिन्द्रो विश्वस्य दुरितस्य पारम् ॥
इमे चत्वारो[8] रजसो विमाना अन्तरा द्यावापृथिवी वियन्ति
पन्थानः ।
तेषामज्यानिं यतमो न आवहात्तस्मै नो देवाः परिदत्त[9] सर्वे ॥

---

[1] Ch विश्वां　[2] D शत्रूँरहा　[3] Ch सुकर्मणा　[4] Ch मूर्व्यं; D पूर्वं　[5] D अग्मम्　[6] Ch मन्मना　[7] Ch ग्मा　[8] cf. TS 5, 7, 2, 3 ये चत्वारः etc.　[9] D परिधत्त

वसन्तो[1] ग्रीष्मो मधुमन्ति वर्षाश्शरद्धेमन्तस्सुविते दधात ।
तेषां वयं सुमतौ यज्ञियानां ज्योगजीता अहतास्स्याम ॥
संवत्सराय परिवत्सरायेदावत्सरायानुवत्सरायोद्वत्सराय कृणुता बृहन्नमः ।
5 तेषां वयं सुमतौ यज्ञियानां निवात एषामभये स्याम[2] ॥
इयं स्वस्तिस्संवत्सरीया परिवत्सरीयेदावत्सरीयानुवत्सरीयोद्वत्सरीया[3] ।
सा नः पिपर्त्वहृणीयमानेनाहृदमहरशीय[4] स्वाहा ॥
आ[5] नः प्रजां जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः ।
10 संवत्सर ऋतुभिश्चाकॢपानो मयि पुष्टिं पुष्टिपतिर्दधातु ॥
अग्निः प्राश्नातु प्रथमस्स हि वेद यथा हविः ।
शिवा अस्मभ्यमोषधीः करोतु विश्वचर्षणिः ॥
भद्रान्नश्श्रेयस्समनैष्ट[6] देवास्त्वयावसेन समशीमहि त्वा ।
स नः पितो मधुमाँ आविशेह शिवस्तोकाय तन्वे न एधि ॥
15 एतमु त्यं[7] मधुना संयुतं यवं सरस्वत्या अधि माना[8] अचकृषुः[9] ।
इन्द्र आसीत्सीरपतिश्शतक्रतुः कीनाशा आसन्मरुतस्सुदानवः ॥ ॥ १५ ॥ cf. TS 5, 7, 2.

शं[10] नो देवीरभिष्टय आपो भवन्तु पीतये ।
शं योरभिस्रवन्तु नः ॥
20 एवेद्यूने[11] युवतयो नमन्त यदीमुशन्नुशतीरेत्यच्छ ।
संजानते मनसा संचिकित्रे[12] ऽध्वर्यवो धिषणापश्च देवीः ॥

---

[1] cf. TS 5, 7, 2, 4 ग्रीष्मो हेमन्त etc. [2] W 2 fol. 4 liest statt निवात etc. ज्योगजीता अहतास्स्याम wie im vorhergehenden Verse und TS 5, 7, 2, 4.. [3] Ch परी° [4] D मानेनाहृद°; Ch मानैनाहृीद° [5] Dieser Vers mit Accenten T 7 fol. 13b. [6] So corr.; Ch समनोष्ट; D समानैष्ट; cf. TS 5, 7, 2, 4. 5. [7] cf. TBr 2, 4, 8, 7. [8] So Ch; D मना [9] D अचकृषुः [10] Dies Kap. collationirt mit Brl fol. 59, 60, T 1 und W 1, und nach diesen Mss. accentuirt. [11] Ch एवेद्धेने [12] So D, ohne Accent; Brl und T 1 संचिकित्रे; desgl. Ch, ohne Accent; W 1 संचिकेते

ओषधीरिति मातरः ॥

या ओषधीः पूर्वा[1] जाता देवेभ्यस्त्रियुगं पुरा ।
मन्ने नु[2] बभ्रूणामहं शतं धामानि सप्त च ॥
गावो भगो[3] गाव इन्द्रो मे[4] अच्छान्गावस्सोमस्य प्रथमस्य भक्षः ।
इमा या गावस्स जनास इन्द्र इच्छामीद्धृदा मनसा चिदिन्द्रम् ॥ 5
न ता अर्वा रेणुककाटो अश्नुते न संस्कृतत्रमुपयन्ति ता अभि ।
उरुगायमभयं तस्य ता अनु गावो मर्तस्य[5] विचरन्ति यज्वनः ॥
रात्री व्यख्यदायती पुरुत्रा देव्यक्षभिः[6] ।
विश्वा अधि श्रियो ऽधित ॥
उप ते गा इवाकरं वृणीष्व दुहितर्दिवः । 10
रात्रि[7] स्तोमं न जिग्युषी[8] ॥

उदु त्यं चित्रं देवानाम् ॥

अन्विदनुमते[9] त्वं मन्यासै शं च नस्कृधि ।
इषं तोकाय नो दधः प्र ण आयूंषि तारिषः[10] ॥
यत्ते नाम सुहवं सुप्रणीते ऽनुमते अनुमतं सुदानु । 15
तेन त्वं सुमतिं देव्यस्मे इषं पिन्व विश्ववारां सुवीराम्[11] ॥
राकामहं सुहवां सुष्टुती हुवे शृणोतु नस्सुभगा बोधतु त्मना ।
सीव्यत्वपस्सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥
यास्ते राके सुमतयस्सुपेशसो याभिर्ददासि दाशुषे वसूनि ।
ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ 20
सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥

---

[1] Ch पूर्वं [2] W 1 नू [3] Ch भागो [4] Brl und T 1 म [5] D मर्त्यस्य [6] Ch देव्यख्यभिः [7] So T 1 und Brl; die andern Mss. रात्रिः [8] Alle Mss. जिग्युषी, resp. mit Accent; Brl betont जिग्युषी [9] Von hier an auch mit Brl fol. 15. 16 collationirt. [10] Ch, W 1 und Brl fol. 60 तारिषत्; cf. TS 3, 3, 11, 4. [11] Ch वारा सुवीरम्

या सुबाहुस्स्वङ्गुरिस्सुषूमा[1] बहुसूवरी ।
तस्यै विश्पत्न्यै हविस्सिनीवाल्यै जुहोतन ॥[2]
कुहूमहं सुकृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि ।
या नो ददाति श्रवणं पितृणां तस्यै ते देवि हविषा विधेम ॥
5 कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषश्शृणोतु ।
स्वसा देवानां महयन्त्यस्मै रायस्पोषं चिकितुषे दधातु ॥
धाता दधातु नो रयिमीशानो जगतस्पतिः ।
स नः पूर्णेन वावनत् ॥
प्रजापती रमयतु प्रजा इह धाता दधातु सुमनस्यमानः ।
10 संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु ॥ ॥ १६ ॥

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां पशुबन्धं नाम त्रयोदशं स्थानकं संपूर्णम् ॥[3]

---

इन्द्राय[4] वाचं वदतेन्द्राय वाचं संवदतेन्द्रं वाजं जापयतेन्द्र[5] वाजं जय ॥
15 आ मा वाजस्य प्रसवो जगम्यादा मा द्यावापृथिवी विश्वरूपे ।
आ मा गन्ता[6] पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात् ॥
एषा वस्सा सत्या संवागभूद्यामिन्द्रेण समदध्वम् ।
अजीजपत वनस्पतय इन्द्रं वाजं विमुच्यध्वम् ॥

---

[1] Ch सुषमा [2] Brl 15. 16 schiebt hier 3 Verse ein. [3] So die Unterschrift des Kapitels in Ch; in D lautet dieselbe इति पशुबन्धस्थानकं त्रयोदशं समाप्तम् ॥ [4] Dies Kap. collationirt auch mit T 1, T 3, Brl fol. 51, W 1; nach diesen Mss. auch accentuirt. [5] Ch जयय° [6] D गन्तं

वाजिनौ वाजजितौ वाजं जित्वा बृहस्पतेर्भागमवजिघ्रतां[1] वाजिनो वाजजितो[2] वाजं जिगीवांसो[3] बृहस्पतेर्भागे[4] निमृजतां पत्नी ३ स्वो रोहावेहि स्वो रोहावेहि[5] स्वो रोहाव स्वो रोहाव स्वो रोहाव स्वो रोहावायुर्यज्ञेन[6] कल्पतां मनो यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पतां श्रोत्रं यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां ब्रह्मा यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतां स्वर्देवा[7] अगन्म प्रजापतेः प्रजा अभूवन्नमृता अभम वाजाय स्वाहा प्रसवाय स्वाहापिजाय स्वाहा क्रतवे स्वाहा वाक्पतये स्वाहा वसवे स्वाहा स्वर्मौर्ध्याय[8] स्वाहा मूर्ध्ने वैयश्नाय[9] स्वाहा व्यश्नुवन आन्त्याय[10] स्वाहान्त्याय भौवनाय स्वाहा भुवनस्य पतये[11] स्वाहा प्रजापतये स्वाहाधिपतये स्वाहान्नाय त्वा वाजाय त्वा वाजजित्यै त्वा ॥ १ ॥ cf. Mâitr. S. 1, 11, 3.

वाजस्य नु प्रसवस्सुषुवेऽग्रे सोमो राजौषधीष्वप्सु ।
ता अस्मभ्यं मधुमतीर्भवन्तु वयं राष्ट्रे जागृयामा पुरोहिताः ॥
वाजस्येदं प्रसव आबभूवेमा विश्वा भुवनानि सर्वतः ।
अदित्सन्तं दापयति[12] प्रजानन्सोमो रयिं सहवीरं नियंसत् ॥
वाजस्य नु प्रसवश्शिश्रिये देवीमा विश्वा भुवनानि सम्राट् ।
स विराजा परियाति प्रजानन्प्रजां पुष्टिं वर्धयमानो अस्मे ॥
सोमं राजानमवस इन्द्रं दानाय चोदय ।
विष्णुं वाचं सरस्वतीं सवितारं च वाजिनम् ॥

---

[1] W 1 भागमेवं जिघ्रतां [2] So die Mss.; nur W 1 वाजिनौ वाजजितौ; cf. aber auch unten 14, 7 a. E.; cf. Mâitr. S. 1, 11, 3. [3] So alle Mss., resp. so ohne Accent. [4] Ch भोगो [5] T 3 पत्नी ३ स्वो रोहावेहि स्वो रोहावेहि; Brl पत्नी ३ स्वो रोहावेहि स्वो रोहावेहि; Ch । ३ ॥ स्वरोहावेहि स्वो रोहावेहि; in W 1 fehlt die ३ [6] Brl हिं स्वो रोहाव स्वो रोहाव स्वं रोहाव स्वं रोहावायुर्यज्ञेन; T 3 हिं स्व रोहाव स्वं रोहाव स्वं रोहाव स्वं रोहावायु°; T 1 स्वो रोहाव स्वो रोहाव; in W 1 ist ein स्वो रोहाव weniger, als in den andern Mss. [7] W 1 wohl स्वर्देवां [8] W 1 स्वर्मोर्ध्याय; Ch स्वर्मोध्याय [9] D वैयसनाय; cf. unten 18, 2. [10] Ch श्रंत्याय [11] D भुवनस्पतये [12] Ch आदित्संतन्मापयति

प्र नो यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः ।
प्र वाग्देवी ददातु नः ॥
अग्ने अच्छा वदेह नः प्रत्यङ् नस्सुमना भव ।
प्र नो रास्व विशस्पते धनदा असि नस्त्वम् ॥
5 इन्द्रवायू सुसंदृशा सुहवेह हवामहे ।
यथा नस्सर्व इज्जनस्संगमे सुमना असत् ॥
सोमं राजानं वरुणमग्निमन्वारभामहे ।
आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्व-
10 त्या वाचा यन्तुर्यन्त्रेणेममुमामुष्यायणममुष्याः[1] पुत्रं बृहस्पतेस्सा-
म्राज्येनाभिषिञ्चामीन्द्रस्य साम्राज्येनाभिषिञ्चामि ॥ २ ॥
cf. Mâitr. S. 1, 11, 4.

उपयामगृहीतो ऽसि दुषदं त्वा नृषदमायुस्सदमिन्द्राय जुष्टं गृह्णा-
म्येष ते योनिरिन्द्राय त्वोपयामगृहीतो ऽस्यप्सुषदं त्वा घृतसदं भूतस-
दमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वोपयामगृहीतो ऽसि पृ-
15 थिविषदं त्वान्तरिक्षसदं नाकसदमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरि-
न्द्राय त्वा ॥ उपयामगृहीतो ऽसि ग्रह विश्वजनीन न्यन्तर्विप्र आ सती ॥
यास्तिस्रः परमंजा दैव्यः कोशस्समुब्जितः ।
तासां विशिग्न्यानामिषमूर्जं समग्रभम् ॥
एष ते योनिरिन्द्राय त्वोपयामगृहीतो ऽसि ॥
20 अपां[2] रसमुदयंसं[3] सूर्ये शुक्रं समाभृतम्[4] ।
अपां[2] रसस्य यो रसस्तं वो गृह्णाम्युत्तमम् ॥
एष ते योनिरिन्द्राय त्वा ॥
अया विष्ठा जनयन्कर्वराणि स हि घृणिरुरुर्वराय गातुः ।
स प्रत्युदैद्धरुणं मध्वो अग्रं स्वा यत्तनू तन्वमैरयत[5] ॥

---

[1] Ch वाचयंतुयंत्रेणामम° [2] Die Mss. अपां [3] So D; Ch रसमुदायंसं; cf. aber Mâitr. S. 1, 11, 4. [4] So Ch; D समाहृतम् [5] So die Mss.; cf. oben 9, 6.

उपयामगृहीतो ऽसि प्रजापतये त्वैष ते योनिः प्रजापतये त्वा ॥
कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुत भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः ॥
उपयामगृहीतो ऽसि प्रजापतये त्वैष ते योनिः प्रजापतये त्वा ॥ ३ ॥
cf. Mâitr. S. 1, 11, 4.

अग्निरेकाक्षरामश्विनौ द्व्यक्षरां विष्णुस्त्र्यक्षरां सोमश्चतुरक्षरां सविता पञ्चाक्षरां पूषा षडक्षरां मरुतस्सप्ताक्षरां बृहस्पतिरष्टाक्षरां मित्रो नवाक्षरां वरुणो दशाक्षरामिन्द्र एकादशाक्षरां विश्वे देवा द्वादशाक्षरां वसवस्त्रयोदशाक्षरां[1] रुद्राश्चतुर्दशाक्षरामादित्याः पञ्चदशमदितिष्षोडशं प्रजापतिस्सप्तदशो ऽग्निरेकाक्षरया वाचमुदजयदश्विनौ द्व्यक्षरया प्राणापाना उदजयतां विष्णुस्त्र्यक्षरया त्रीनिमांल्लोकानुदजयत्सोमश्चतुरक्षरया चतुष्पदः पशूनुदजयत्सविता पञ्चाक्षरया पञ्च दिश उदजयत्पूषा षडक्षरया षडृतूनुदजयन्मरुतस्सप्ताक्षरया शक्करीमुदजयन्बृहस्पतिरष्टाक्षरयाष्टौ दिश उदजयच्चतस्रो दिशश्चतस्र उपदिशा मित्रो नवाक्षरया नव प्राणानुदजयद्वरुणो दशाक्षरया विराजमुदजयदिन्द्र एकादशाक्षरया त्रिष्टुभमुदजयद्विश्वे देवा द्वादशाक्षरया जगतीमुदजयन्वसवस्त्रयोदशाक्षरया त्रयोदशं मासमुदजयन्रुद्राश्चतुर्दशाक्षरया चतुर्दश रात्रीरुदजयन्या इमा अन्तरार्धमासा आदित्याः पञ्चदशमदितिष्षोडशं प्रजापतिस्सप्तदशो ऽग्निरेकाक्षरया मामुदजयदिमां पृथिवीमश्विनौ द्व्यक्षरया प्रमामन्तरिक्षं विष्णुस्त्र्यक्षरया प्रतिमां स्वर्गं लोकं सोमश्चतुरक्षरयास्त्रीवीर्नक्षत्राणि सविता पञ्चाक्षरया पङ्क्तिमुदजयद्द्वा ह्यक्षरपङ्क्तिस्सा पङ्क्तिश्चतुर्धा हि तस्याः पञ्च पञ्चाक्षराणि ॥ पूषा षडक्षरया गायत्रीमुदजयच्चतुर्धा हि तस्याष्षट्[2] षडक्षराणि मरुतस्सप्ताक्षरयोष्णिहमुदजयंश्चतुर्धा हि तस्यास्सप्त सप्ताक्षराणि बृहस्पतिरष्टाक्षरयानुष्टुभमुदजयच्चतुर्धा हि तस्या अष्टा अष्टाक्षराणि मित्रो न-

[1] Ch वसंतस्त्रयोदशाक्षरां [2] In Ch fehlt षट्

वाक्षरया बृहतीमुदजयच्चतुर्धा हि तस्या नव नवाक्षराणि वरुणो द्-
शाक्षरया विराजमुदजयदिन्द्र एकादशाक्षरया त्रिष्टुभमुदजयद्विश्वे देवा
द्वादशाक्षरया जगतीमुदजयन्वसवस्त्रयोदशाक्षरया त्रयोदशं मासमु-
दजयन्रुद्राश्चतुर्दशाक्षरया चतुर्दश रात्रीरुदजयन्या इमा अन्तरार्धमासा
5 आदित्याः पञ्चदशमदितिष्षोडशं प्रजापतिस्सप्तदशः ॥ ४ ॥
cf. Mâitr. S. 1, 11, 10.

देवा वै नानैव यज्ञानपश्यन्निममहमिमं त्वमित्यथैतं सर्वे ऽपश्यं-
स्तस्मिन्नायतन्त तस्मिन्नाजिमयुस्तं बृहस्पतिरुदजयद्बृहस्पतिर्वै देवानां
पुरोहितो यद्वै पुरोहितो ब्रह्म स्पृणोति तद्राज्ञे तेनेन्द्रमयाजयत्स स्वा-
राज्यमगच्छत्स एष स्वाराज्यो[1] यज्ञस्स्वाराज्यं गच्छति य एतेन यजते
10 यद्बृहस्पतिरुदजयत्तस्माद्ब्राह्मणो यजेत यदिन्द्रमयाजयत्तस्माद्राजन्यो
देवा वै नानैव यज्ञानाहरन्नथैतं प्रजापतिराहरत्तस्मिन्देवा अपित्वमै-
च्छन्त तेभ्यश्छन्दांस्युज्जितीः प्रायच्छदथैतेन प्रजापतिरयजत स स्वा-
राज्यमगच्छत्स एष स्वाराज्यो यज्ञस्स्वाराज्यं गच्छति य एतेन यजते
ऽन्नं वै वाजो य एवं विद्वानन्नमत्ति वाजयत्येनं सोमो वाजपेयो य
15 एवं विद्वान्सोमं पिबति वाजमेव गच्छति यावन्तो हि देवास्सोम-
मपिबंस्ते वाजमगच्छंस्तस्मात्सर्व एव सोमं पिपासति वाग्वै वाज-
स्य प्रसवस्सा वाग्दृष्टा[2] चतुर्धा व्यभवदेषु लोकेषु त्रीणि तुरीयाणि
पशुषु तुरीयं या दिवि सा बृहति सा स्तनयित्नौ यान्तरिक्षे सा वाते
सा वामदेव्ये या पृथिव्यां साग्नौ सा रथन्तरे या पशुषु तस्या यदत्य-
20 रिच्यत तां ब्राह्मणे[3] न्यदधुस्तस्माद्ब्राह्मण उभे वाचौ वदति दैवीं च
मानुषीं च करोति वाचा वीर्यं य एवं वेद ॥ या बृहद्रथन्तरयोस्तयैनं
यज्ञ आगच्छति या पशुषु तयर्तेयज्ञमाह[4] वा एनमप्रतिख्यातागच्-
छति य एवं वेद यावती हि वाक्तां वेद वाचा हि दीयते वाचा प्र-

---

[1] Ch स्वाराज्य [2] So corr. Ch वाक् दृष्टा; D वान्दृष्टा [3] Ch ब्राह्मणो
[4] So corr. Mss. तयंते; cf. Mâitr. S. 1, 11, 5 a. E.

दीयते यो गाथानाराशंसीभ्यां सनोति तस्य न प्रतिगृह्यमनृतेन हि स सनोत्यनृतं हि गाथानृतं नाराशंसी मत्तस्य न प्रतिगृह्यमनृतं हि मत्तो यदा हि सो ऽमत्तो भवत्यथ तं तत्तुपति[1] ॥ ५ ॥
cf. Mâitr. S. 1, 11. 5.

सप्तदशैते द्वया ग्रहाः प्राजापत्यास्सप्तदशो वै पुरुषः प्राजापत्यश्चत्वार्यङ्गानि शिरोग्रीवमात्मा वाक्सप्तमी दश प्राणा अङ्गे ऽङ्गे वै पुरुषस्य पाप्मोपश्लिष्टो यद्यतिषङ्गं ग्रहान्गृह्णात्यङ्गादङ्गादेवैनं पाप्मनो मुञ्चति श्रीर्वै सोमः पाप्मा सुरोपयामा यदागते काले प्राञ्चस्सोमैरुद्द्रवन्ति प्रत्यञ्चस्सुरोपयामैः पाप्मनैवैनं विपुनाति तस्मादाहुर्वाजपेययाजी त्वै पूत इति पाप्मना ह्येनं विपुनाति पञ्चैते ग्रहा गृह्यन्ते पाङ्क्तो यज्ञो यज्ञमेवावरुन्द्ध ऐन्द्रास्सर्वे भवन्त्येकधैवास्मिन्निन्द्रियं दधाति ॥ परं वा एतद्देवानामन्नं यत्सोमः परममेतन्मनुष्याणामन्नाद्यं यत्सुरा यत्सोमग्रहाश्च सुराग्रहाश्च सह गृह्यन्ते परेणैवान्नेनावरमन्नाद्यमवरुन्द्धे ब्रह्मणो वा एतत्तेजो यत्सोमो ऽन्नस्य शमलं सुरा यत्सोमग्रहाश्च सुराग्रहाश्च सह गृह्यन्ते ब्रह्मण एव तेजसा तेज आत्मन्धत्ते ऽन्नस्य शमलेन शमलमपहते देवलोकमेव सोमग्रहैरभिजयति मनुष्यलोकं सुराग्रहैरात्मानमेव सोमग्रहैस्स्पृणोति पत्नीं सुराग्रहैस्तस्मादाहुर्वाजपेययाजी त्वा अमुष्मिंल्लोके संभवतीति यज्ञेन ह्यस्याभिजितं देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति[2] सावित्र्या परुषि परुषि जुहोत्युत्सन्नयज्ञो वा एष को ह तद्वेद यावदेतस्याधियन्ति यावन्न सर्वत्वायैव प्रसवाय वाजस्य नु प्रसवे मातरं महीमिति रथमुपावहरतीयमदितिरनया चैव सवित्रा[3] च प्रसूत उपावहरति वाजस्योज्जित्या अप्स्वन्तरमृतमप्सु भेषजमित्यश्वान्पल्पूलयत्यप्सुजा[4] वा

[1] D तं ततुपति; Ch etwa तं तत्त्रुपति; cf. Mâitr. S. 1, 11, 5 a. E.; Wurzeln तुप und त्रुप im Dhâtup. 11, 10 flg.; insbesondere aber vergl. Ztschr. d. D. Morg. Ges. Bd. 49 p. 169. [2] Ch भागायेति [3] So corr. Mss. सविता; cf. Mâitr. S. 1, 11, 6. [4] Ch पल्पूलयत्यथोत्यप्सुजा

अश्वस्त्वादेवैनान्योनेर्जनयत्यथो मेध्यानेवैनान्यज्ञियान्करोति[1] वायुर्वा
त्वा मनुर्वा त्वेति युनक्ति न वा एतान्मनुष्यो योक्तुमर्हति देवताभिरे-
वैनान्युनक्त्यपां नपादाशुहेमन्निति रराटानि प्रतिमार्ष्टि पूर्वमेवोदित-
मनुवदति ॥ ६ ॥ cf. Mâitr. S. 1, 11, 6.

5 सप्तदशस्सर्वो भवति सप्तदशः प्रजापतिः प्रजापतिमेवाप्नोति दुन्दु-
भीन्विह्रादयन्ति[2] वाग्वा एषैकारण्यं प्राविशत्तामेवोज्जयति देवस्य
सवितुः प्रसवे सत्यसवस्येति सवितृप्रसूत एव वज्रं रोहति देवस्य वयं
सवितुः प्रसवे सत्यसवनस्येति सवितृप्रसूत एव रथमभ्यातिष्ठति वा-
जस्योज्जित्यै ब्रह्मन्वेति प्रजापतिर्वै ब्रह्मा यज्ञस्य प्रजापतिरिन्द्रमसु-
10 वत प्रजापतिरेवैनं वज्रादधि प्रसुवति साम गायति सत्यं[3] वै साम
सत्येनैवैनमुज्जापयति वाजिनामृचो ऽन्वाह वाजस्योज्जित्या अनुदिष्टे
रथैर्धावन्ति[4] दक्षिणया वै देवास्स्वर्गं लोकमायन्यदनुदिष्टे रथैर्धाव-
न्ति[4] दक्षिणयैव स्वर्गं लोकमेति ॥ दर्भमयं वासो भवति पवित्रत्वा-
योज्जितीर्वाचयति वाग्वा उज्जितयो वाचमेवोज्जयति देवा वा ओ-
15 षधीषु पक्वास्वाजिमयुस्ता बृहस्पतिरुदजयत्स नीवारान्निरवृणीत त-
न्नीवाराणां नीवारत्वं बृहस्पतिर्वा एतमुदजयत्तमेव भागिनं करोति
चात्वाले ऽवदधातीह वा असा आदित्य आसीत्तं देवा आभ्यां[5] परि-
गृह्यामुं लोकमगमयन्स्वर्गस्य लोकस्य समष्ट्या आ मा वाजस्य प्र-
सवो जगम्यादिति पुनरागतेषु जुहोति यमेव ते वाजमुज्जयन्ति त-
20 मात्मन्धत्त एषा वस्सा सत्या संवागभूद्यामिन्द्रेण समदध्वम् ॥ अजी-
जपत वनस्पतय इन्द्रं[6] वाजं विमुच्यध्वमिति यजुषैव युज्यन्ते यजुषा
विमुच्यन्ते वाजिनौ वाजजिता इति युग्या[7] अवघ्रापयति भागिना

---

[1] Ch मेध्यानिवै° [2] D दुन्दुभीर्निह्रा° [3] D सत्यो [4] D रथैवावंति [5] D आद्याम्य° [6] cf. Mâitr. S. 1, 11, 7 इन्द्राय mit v. l. इन्द्रस्य [7] So Ch; D अध्या

एवैनौ करोति वाजिनो वाजजित इत्यनुदिशति सर्वानेवैनान्प्रीणाति ॥ ७ ॥ cf. Mâitr. S. 1, 11, 6 und 7.

अर्धवशां[1] च सुरोपयामांश्च हरन्ति[2] य आजिं धावन्ति[3] तेभ्यो यमेव ते वाजमुज्जयन्ति तं तेन परिक्रीणाति मधुष्ठालं ब्रह्मणे हरन्ति ब्रह्मण एव तेन परिक्रीणाति ककुभो राजपुत्रः प्राश्नाति वीर्यं वै ककुब्वीर्यं राजपुत्रो वीर्य एवं वीर्यं दधाति पत्नी ३ स्वो रोहावेति[4] स्वरेव रोक्ष्यन्पत्न्या संवदते[5] पत्न्या एवैष यज्ञस्यान्वारम्भो ऽथो मिथुनमेव यज्ञमुखे दधाति प्रजननायायुर्यज्ञेन[6] कल्पतामित्येतावान्वै पुरुषस्सर्व एव भूत्वा स्वर्गं लोकमेति गौधूमं चषालं भवति प्राजापत्या वै गोधूमा अर्धं प्रत्योषधीनां[7] सहैवान्नाद्येन स्वर्गं लोकमेति वाजाय स्वाहा प्रसवाय स्वाहेति त्रयोदशैता आहुतयस्त्रयोदश मासास्संवत्सरस्संवत्सरस्स्वर्गो[8] लोकस्संवत्सरमेवास्मै स्वर्गं लोक[9] उपाधात्तस्मिन्नधि प्रतितिष्ठत्यूषपुटैरर्पयन्ति प्राजापत्या वा ऊषा अन्नाद्येनैवैनमर्पयन्त्येति वा एषो ऽस्माल्लोकाद्यो ऽमुं लोकं गच्छति यदूषपुटैरर्पयन्ति तेनास्माल्लोकान्नैति बस्ताजिनं च रुक्मं चाभ्यवरोहति[10] पशवो वै बस्ताजिनं यद्बस्ताजिनमभ्यवरोहति[11] पशुष्वेव प्रतितिष्ठति तेजो हिरण्यं यद्रुक्ममभ्यवरोहति[12] तेजस्येव प्रतितिष्ठति शतमानो भवति शतायुर्वै पुरुषश्शतवीर्य आयुरेव वीर्यमवरुन्द्धे वाजप्रसव्याभिरन्नस्यान्नस्य जुहोत्यन्नाद्यस्यावरुद्ध्यै सप्तभिस्सप्त वै छन्दांसि छन्दोभिरेवान्नाद्यमवरुन्द्धे वाग्वै छन्दांसि वाचैवान्नाद्यमवरुन्द्धे देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्या वाचा यन्तुर्यन्त्रेणाममुमामुष्यायणममुष्याः पुत्रं बृहस्पतेस्साम्राज्येनाभिषि-

---

[1] So corr. nach Mâitr. S. 1, 11, 7; Ch अर्धवशं; D युववंशं [2] D हरति [3] Ch धावति [4] Ch स्वरोहावीति [5] Ch संविशते [6] D नाया अर्यम्णो क° [7] So corr.; Mss. प्रत्यो° [8] D स्वर्गं [9] Ch लोके [10] So corr. Ch चाभ्यांव°; D चाभ्योव° [11] Ch भ्यरोहति [12] So Ch; D भ्यन्तरोहति

स्वामीति यदि ब्राह्मणो यजेत बृहस्पतिसवो[1] ह्येष इन्द्रस्येति यदि
राजन्य इन्द्रसवो ह्येषः ॥ ८ ॥ cf. Mâitr. S. 1, 11, 7 und 8.

अथैते ऽतिग्राह्या यदेव परमन्नाद्यमनवरुद्धं तस्यावरुद्ध्या अथैते
पशवो यज्ञक्रतूनामवरुद्ध्यै यदाग्नेयो ऽग्निष्टोमं तेनाप्नोत्यग्निप्रतिष्ठानो
5 ह्यग्निष्टोमो यदैन्द्राग्न उक्थानि[2] तेनाप्नोत्यैन्द्राग्नानि ह्युक्थानि[3] यदै-
न्द्रष्षोडशिनं तेनाप्नोत्यैन्द्रो हि षोडश्यात्मानमेवाग्निष्टोमेन स्पृणोति
प्राणापाना उक्थेन वीर्यं षोडशिनस्स्तोत्रेण वाचमतिरात्रेण प्रजां
बृहतस्स्तोत्रेणास्मिन्नेव[4] लोके ऽग्निष्टोमेन प्रतितिष्ठत्यन्तरिक्ष उक्थेन
स्वर्गे लोके षोडशिनस्स्तोत्रेण ये देवयानाः पन्थानस्तेष्वतिरात्रेण
10 नाके बृहतस्स्तोत्रेणैतावन्तो[5] वै देवलोका यावन्त एव देवलोका-
स्तानाप्नोत्यथैषा सारस्वती मेषी यदेवादस्सप्तदशं स्तोत्रमनवरुद्धं त-
स्यावरुद्ध्या अथैषा मारुती पृश्निर्वशा देवाश्च वा असुराश्चास्मिं-
ल्लोक आसन्नेमे देवा नेमे ऽसुरास्ते देवा एतां मारुतीं पृश्निं वशाम-
पश्यंस्तामालभन्त तया लोकं द्वितीयमवृञ्जतासुरलोकं यस्यावद्यन्ति
15 स देवलोको यस्य नावद्यन्ति सो ऽसुरलोको लोकमेवैतया द्वितीयं
वृङ्क्ते भ्रातृव्यलोकं द्वितीये हि लोके भ्रातृव्यस्सारस्वत्येतेषां पञ्चानामु-
त्तमा भवति सारस्वत इतरेषां सप्तदशानामुत्तमो वाग्वै सरस्वती वा-
चैव यज्ञं संतनोति यद्वै विद्वान्यज्ञस्य न करोति यद्वाविद्वानन्तरेति
तच्छिद्रं तद्वाचैव सरस्वत्या कल्पयति सप्तदशैते प्राजापत्याः पशव
20 आलभ्यन्ते सप्तदशः प्रजापतिः प्रजापतिमेवाप्नोत्येकरूपा भवन्त्येकधै-
वास्मिन्वीर्यं दधाति सारस्वत उत्तमो भवति वाग्वै सरस्वती वा-
च्येव प्रतितिष्ठति ॥ ९ ॥ cf. Mâitr. S. 1, 11, 9.

रथन्तरं[6] साम भवत्याशीय उज्जित्या इयं वै रथन्तरमस्यामेवाध्य-

---

[1] D सहो [2] D उत्तानि [3] Mss. ह्युत्तानि [4] Ch स्तोत्रेनास्मिचव [5] Ch स्तोत्रेनै° [6] Dies Kapitel collationirt auch mit T1, Brl fol. 44. 45 und W1; accentuirt nach T1, coll. mit Brl.

भिषिच्यते वियोनिर्वै वाजपेयो ऽनिरुक्तस्संम्राजापत्यो ऽनिरुक्तसामा तेन वियोनिर्यदनिरुक्ताः[1] प्रातस्सवास्तेन संयोनिरनिरुक्ताः प्रातस्सवा अनिरुक्तः प्रजापतिः प्रजापतिमेवाप्नोति वाजवतीभिर्मध्यंदिने स्तुवन्त्यन्नं[2] वै वाजो ऽन्नाद्यस्यावरुद्ध्यै चित्रवतीभिरार्भवे पवमाने स्वर्गस्य लोकस्य समष्ट्या आष्टादंष्ट्रमुत्तममुक्थानां[3] भवत्युत्तरे एव स्तोत्रे अभिसंतनोति बृहत्साम भवति यद्वा अतिरिच्यते ऽमुं तल्लोकमभ्यतिरिच्यते[4] बृहद्वा अमुं लोकमाप्नुमर्हतीन्द्रियं वीर्यं[5] बृहदिन्द्रियं एव वीर्यं प्रतितिष्ठति वैष्णवीषु शिपिविष्टवतीषु स्तुवन्त्येषा वै प्रजापतेः पशुष्टास्तनूर्या शिपिविष्टवती तस्माच्छिपिविष्टवतीषु स्तुवन्त्यतिरिक्तं[6] वा एतदतिरिक्तं[7] शिपिविष्टमतिरिक्तेनैवातिरिक्तमाप्नोति ॥ १० ॥ cf. Mâitr. S. 1, 11, 9.

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां वाजपेयनाम चतुर्दशं स्थानकं संपूर्णम्[8] ॥

---

अनुमत्या अष्टाकपालो धेनुर्दक्षिणा ये प्रत्यञ्चश्शम्यामतिशीयन्ते स नैर्ऋत[9] एककपालो भवति ता उभौ सह शृतौ[10] कुर्वन्ति तयोर्नैर्ऋतेन पूर्वेण प्रचरन्ति दक्षिणा परेत्य[11] स्वकृत इरिणे एकोल्मुकं

---

[1] Ch नियुक्तयदनिरुक्ताः [2] W1 स्तुवत्यन्नं [3] Ch मुक्तानां; D मुत्थानां [4] T1 wahrsch. मुन्तंल्लो°; Brl मुन्तंल्लो°; Ch मुं तल्लो°; D मुं तं लो°; W1 मुन्तलो [5] T1 und Brl वीर्यं बृहं° [6] Ch स्तुवंति तिरित्तं [7] So der Accent corr.; T1 und Brl वा एतदं° [8] So die Unterschrift des Kapitels in Ch; in D lautet dieselbe इति वाजपेयस्थानकं चतुर्दशं समाप्तम ॥ [9] D स नोनृत [10] D मतौ [11] Ch परेत्य

निधाय[1] विस्रंसिकायाः काण्डाभ्यां जुहोति जुषाणा निर्ऋतिर्वेतु[2]
स्वाहा वासो भिन्नान्तं दक्षिणा य उदञ्चो ऽवशीयन्ते तानुदक्परेत्य
वल्मीकवपामुद्धृत्य जुहोतीदमहममुष्यामुष्यायणस्य क्षेत्रियमवयजे
स्वाहेदमहममुष्यामुष्यायणस्य क्षेत्रियमपिदधामीत्यपिदधात्यादित्ये-
5 भ्यो[3] भुवद्भ्यो घृते चरुर्वरो दक्षिणाग्नावैष्णव एकादशकपालो ऽन-
ड्वान्वामनो दक्षिणाग्नीषोमीय एकादशकपालो हिरण्यं दक्षिणैन्द्राग्न
एकादशकपाल ऋषभो ऽनड्वान्दक्षिणाग्नेयो ऽष्टाकपालो महेन्द्रीयं[4] द-
धि वासः क्षौमं दक्षिणा सौम्यश्श्यामाकश्चरुर्बभ्रुः पिङ्गलो दक्षिणै-
न्द्राग्नो द्वादशकपालो वैश्वदेवश्चरुर्द्यावापृथिव्य एककपालो वत्सः प्र-
10 थमजो दक्षिणा ॥ १ ॥ cf. Mâitr. S. 2, 6, 1. 2.

आग्नेयो ऽष्टाकपालस्सौम्यश्चरुस्सावित्रो ऽष्टाकपालस्सारस्वतश्चरुः
पौष्णश्चरुर्वायवे नियुत्वते[5] पयो वा यवागूर्वैन्द्राय[6] शुनासीराय द्वाद-
शकपालस्सौर्य एककपाल उष्टारौ दक्षिणा सीरं वा द्वादशायोगमा-
ग्नेयो ऽष्टाकपालो वारुणो यवमयो दशकपालो रौद्रो गावीधुकश्च-
15 रुरैन्द्रं सान्नाय्यं धेनुरनड्वाही दक्षिणापां न्ययनादपामार्गानाहरन्ति ता-
न्सक्तून्कुर्वन्ति तान्पर्णमयेन स्रुवेण जुहोति दक्षिणा परेत्य स्वकृत
इरिणे देवस्य सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिन्द्र-
स्यौजसा रक्षोहासि[7] स्वाहा हतं रक्षो ऽवधिष्म रक्षो वरो दक्षिणा ॥
ये[8] देवाः पुरस्सदो ऽग्निनेत्रा रक्षोहणस्ते नः पान्तु ते नो ऽवन्तु तेभ्य-
20 स्स्वाहा ये देवा दक्षिणात्सदो यमनेत्रा रक्षोहणस्ते नः पान्तु ते नो
ऽवन्तु तेभ्यस्स्वाहा ये देवाः पश्चात्सदो मरुन्नेत्रा रक्षोहणस्ते नः पान्तु
ते नो ऽवन्तु तेभ्यस्स्वाहा ये देवा उत्तरात्सदो मित्रावरुणनेत्रा रक्षो-
हणस्ते नः पान्तु ते नो ऽवन्तु तेभ्यस्स्वाहा ये देवा उपरिषदस्सोम-

---

[1] Ch इरिणे एकोल्मुकि° [2] D वेत्त [3] Ch भिदधा° [4] Ch महेन्द्रीयन्दधि
[5] D नियुङ्कृते [6] Ch गुर्वैन्द्राय; D गूर्दैन्द्राय [7] So corr.; Ch रक्षोहामि; D रक्षोवा-
हसि [8] Von hier ab accentuirt nach T 6, fol. 10 flg., collationirt mit Brl
fol. 9 und W 1.

मण्यो गृहे पृश्निः पष्ठौही दक्षिणा पौष्णश्चरुर्भागदुघस्य गृहे श्यामो
दक्षिणा रौद्रो[1] गावीधुकश्चरुरक्षावपस्य च गोव्यच्छस्य[2] च गृहे ऽसि-
वालावृतो वध्रिर्वालप्रतिग्रथिता[3] बरासी दामभूषा वत्सतरो वा श-
बलो दक्षिणेन्द्राय सुत्राम्ण एकादशकपाल इन्द्रायांहोमुच एकादश-
5 कपालो राज्ञो गृह[4] ऋषभो दक्षिणा ॥ ४ ॥ cf. Mâitr. S. 2, 6, 5. 6.

स्वयमवपन्नाया अश्वत्थशाखायाः पात्रं भवति श्वेतां श्वेतवत्सां
दुहन्ति[5] तत्स्वयं मूर्छति स्वयं मथ्यते स्वयं विलीयते ऽथ मैत्राबार्ह-
स्पत्यं हविर्निर्वपति तान्द्वेधा[6] तण्डुलान्विभजन्ति ये क्षोदीयांसस्तं
बार्हस्पत्यं चरुं शृतं कुर्वन्ति स यदाशृतो भवत्यथ तत्पात्रमाश्वत्थम-
10 पिधाय पवित्रवत्याज्यमानयति तत्स्थवीयस आवपति स मैत्रश्चरु-
स्स्वयंशृतो भवत्यर्धं[7] वेद्याः कुर्वन्त्यर्धं स्वयंकृतमर्धं[8] बर्हिषो दान्त्यर्धं
स्वयंदिनमर्धमिध्मस्य कुर्वन्त्यर्धं स्वयंकृतं शितिपृष्ठो बार्हस्पत्यस्य दक्षि-
णाश्वो मैत्रस्य सा वै[9] श्वेता श्वेतवत्साग्नये गृहपतय आशूनामष्टाक-
पालस्सवित्रे प्रसवित्रे सतीनानामष्टाकपालस्सोमाय वनस्पतये श्या-
15 माकश्चरुर्बृहस्पतये वाचस्पतये नैवारश्चरुरिन्द्राय ज्येष्ठाय हायनाना-
मेकादशकपालो मित्राय सत्यस्य पतय आम्बानां चरुर्वरुणाय धर्म-
णस्पतये यवमयो दशकपालो रुद्राय पशुपतये गावीधुकश्चरुस्सवि-
ता त्वा प्रसवानां सुवतामग्निर्गार्हपत्यानां सोमो वनस्पतीनां बृहस्प-
तिर्वाचामिन्द्रो ज्यैष्ठ्यानां मित्रस्सत्यानां वरुणो धर्मणां[10] रुद्रः प-
20 शूनां ते देवा असपत्नमिमं[11] सुवध्वं[12] महते क्षत्राय महते ज्यैष्ठ्याय
महते राज्याय महते जानराज्याय महते विश्वस्य भुवनस्याधिप-
त्याय ॥ ५ ॥ cf. Mâitr. S. 2, 6, 6.

---

[1] Ch रौधो [2] Ch गोवृछस्य च गृहे; D गोव्यछस्य गृहे [3] So corr. D वाव्रीवाल°; Ch वाव्रीर्याल° [4] Ch हे [5] So corr. Mss. मुहन्ति; cf. Mâitr. S. 2, 6, 6. [6] Ch तान्स्वधा [7] D भवन्त्यर्घं [8] Ch कृतमवम्ब [9] So corr.; die Mss. वैव [10] Ch धर्माणां [11] D आसपत्नमिमं; Ch अस असपत्नमिमं [12] D सवध्व

देवीरापो अपां नपाद्राष्ट्रदास्स्थ राष्ट्रं दत्त स्वाहा वृषोर्मिरसि राष्ट्रदास्स्थ राष्ट्रं दत्त स्वाहा वृषसेनो[1] ऽसि राष्ट्रदास्स्थ राष्ट्रं दत्त स्वाहापां पतिरसि राष्ट्रदास्स्थ राष्ट्रं दत्त स्वाहा प्रहावरीस्स्थ परिवाहिणीस्स्थौजस्विनीस्स्थ व्रजक्षितस्स्थ सूर्यवर्चसस्स्थ सूर्यत्वचसस्स्थ मान्दास्स्थ वशास्स्थ शक्करीस्स्थ मरुतामोजस्स्थ जनभृतस्स्थ विश्वभृतस्स्थानाधृष्टास्स्थापामोषधीनां रसश्श्रविष्ठास्स्थ[2] राष्ट्रदास्स्थ राष्ट्रं दत्त स्वाहा ॥ 5

अपो देवीर्मधुमतीरगृभ्णामूर्जस्वती राजसूयाश्चितानाः ।
याभिर्मित्रावरुणा अभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥
देवीरापो मधुमतीस्संसृज्यध्वं महि क्षत्रं क्षत्रियाय वन्वानाः ।
अनाधृष्टास्सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय ददतीः ॥ 10

अनिभृष्टमसि[3] वाचो बन्धुस्तपोजास्सोमस्य दात्रं शुक्रा वश्शुक्रेण पुनामि चन्द्रा वश्चन्द्रेण पुनामि देवो वस्सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिस्स्वाहा राजसूयाः ॥

सधमादो द्युम्न्या ऊर्ज[4] एका अनाधृष्टा अपस्यो वसानः[5] ।
पस्त्यासु चक्रे वरुणस्सधस्थमपां शिशुर्मातृतमास्वन्तः ॥ 15

रुद्र यत्ते क्रिवि[6] परं नाम तस्मै हुतमसि यमेष्टमसि स्वाहा सोम इन्द्रो वरुणो मित्रो अग्निस्ते देवा धर्मधृतो धर्मं धारयन्तां ते ऽस्मै वाचं सुवन्ताम् ॥ ६ ॥ cf. Mâitr. S. 2, 6, 7. 8.

क्षत्रस्य योनिरसि क्षत्रस्योल्बमसि क्षत्रस्य नाभिरस्याविद आवेदयताविन्नो अग्निर्गृहपतिराविन्न[7] इन्द्रो वृद्धश्रवा आविन्नौ[8] मित्रावरुणौ धृतव्रता[9] आविन्ने द्यावापृथिवी ऋतावृधा आविन्ना[10] देव्यदितिराविन्नः[11] पूषा विश्ववेदा आविन्नो ऽयमसा आमुष्यायणो ऽमु- 20

---

[1] D वृषसेवो [2] D रस द्रविष्ठाः [3] D अनिद्वष्ट° [4] So corr. Ch द्युम्न्यजं; D द्युम्न्य ऊर्जं [5] Mss. वमानः; cf. aber Mâitr. S. 2, 6, 8; TS 1, 8, 12, 1; VS 10, 7. [6] So corr. D क्रवि; Ch wohl क्रिवि; cf. Mâitr. S. 2, 6, 8; VS 10, 20; TS 1, 8, 14, 2. [7] Ch रवित्त [8] Ch अवित्तौ [9] Ch धतवतो [10] Ch अविता [11] Ch वितुः

ष्याः पुत्रो ऽमुष्यां विश्येष ते जनते राजा सोमो ऽस्माकं ब्राह्मणानां
राजेन्द्रस्य वज्रो ऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्याच्छत्रुबाधनास्स्थ पात
प्राचः पात प्रतीचः पातानूचः पात तिरश्चो मित्रो ऽसि वरुणो ऽसि॥
हिरण्यवर्णमुषसो व्युष्टा अयस्स्थूणमुदितौ[1] सूर्यस्य।
5 आरोहथो वरुण मित्र गर्तं तत्र चक्राथे[2] अदितिं दितिं च॥
समिधमातिष्ठ गायत्री त्वा छन्दसावतु त्रिवृत्स्तोमो रथन्तरं सा-
माग्निर्देवता ब्रह्म द्रविणमुग्रामातिष्ठ[3] त्रिष्टुप्त्वा छन्दसावतु पञ्चदश-
स्स्तोमो बृहत्सामेन्द्रो देवता क्षत्रं द्रविणं प्राचीमातिष्ठ जगती त्वा
छन्दसावतु सप्तदशस्स्तोमो वैरूपं साम मरुतो देवता विड् द्रविणमु-
10 दीचीमातिष्ठानुष्टुप्त्वा छन्दसावत्वेकविंशस्स्तोमो वैराजं साम मित्रा-
वरुणौ देवता पुष्टं[4] द्रविणमूर्ध्वामातिष्ठ पङ्क्तिस्त्वा छन्दसावतु॥ त्रि-
णवत्रयस्त्रिंशौ स्तोमौ शाक्वररैवते सामनी बृहस्पतिर्देवता वर्चो द्रविणं
सोमस्य त्विषिरसि त्विषिमां असि तवेव मे त्विषिर्भूयात्प्रत्यस्तं नमु-
चेश्शिरो ऽवेष्टा दन्दशूका[5] मृत्योः पाहि दिद्योत्पाह्यग्नये[6] स्वाहा सो-
15 माय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये
स्वाहेन्द्राय स्वाहा घोषाय स्वाहा श्लोकाय स्वाहांशाय स्वाहा भगाय
स्वाहा क्षेत्रस्य पतये स्वाहा सोमस्य त्वा द्युम्नेनाग्नेस्तेजसा सूर्यस्य व-
र्चसेन्द्रस्येन्द्रियेण विश्वेषां त्वा देवानां क्रतुनाभिषिञ्चाम्यति[7] दिवस्पा-
हीन्द्रस्य योनिरसि जनय॥
20 समाववृत्रन्नधरागुदक्ता अहिं बुध्न्यमन्वीयमानाः।
ताः पर्वतस्य वृषभस्य पृष्ठे नावो वियन्ति सुषिचो न वाणीः॥ ॥७॥
cf. Mâitr. S. 2, 6, 9—11

इन्द्रस्य[8] वज्रो ऽसि वाजसास्त्वयायं वाजं सेन्मित्रावरुणयोस्त्वा

---

[1] D स्याणमु॰ [2] Ch गंतं तत्र चक्रकाथे; D गर्तं त उ चन्क्रोथे; cf. Mâitr. S. 2, 6, 9 गर्तं ततश्च॰ [3] Ch ग्रमा॰ [4] Ch पुष्टान्द्र॰ [5] D वेष्ट्या चर्मशूका [6] Ch दिद्योत्या॰ [7] D षिंच्योमिति [8] Dies Kapitel collationirt auch mit St fol. 85 flg., T 1, Brl fol. 70 und W 1; accentuirt nach St, coll. mit T 1 und Brl.

प्रशास्त्रोः प्रशिषा युनज्मि विष्णोः क्रमो ऽसि मरुतां प्रसवे जयाप्तं मनस्समिन्द्रियेणैष वज्रो वाजसातमस्तेन[1] नौ पुत्रो वाजं सेदियद-स्यायुरस्यायुर्मे धेह्यूर्गस्यूर्जं मे धेहि युङ्ङसि वर्चो ऽसि वर्चो मे धेहि मित्रो ऽसि वरुणो ऽसि सं विश्वैर्देवैर्नमो मात्रे पृथिव्यै ॥

प्रति त्यन्नाम राज्यमधायि[2] स्वां तन्वं वरुणो[3] ऽसुषोत् । 5
शुचेर्मित्रस्य[4] व्रत्या अभूमामन्महि महद्दतस्य नाम ॥
सर्वे व्राता वरुणस्याभूवन्वि मित्रयुररतीनतारीत्[5] ।
अमूमुभन्त[6] यज्ञिया ऋतेन नि त्रितो नो जरिमाणमानट् ॥

स्योनासि सुषदासि स्योनामासीद सुषदामासीद ॥

निषसाद धृतव्रतो वरुणः पस्त्यास्वा । 10
साम्राज्याय सुक्रतुः ॥

अग्नये गृहपतये स्वाहा सोमाय वनस्पतये स्वाहेन्द्रस्य बलाय स्वाहा मरुतामोजसे स्वाहा ॥

हंसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ 15

ब्रह्मा३ त्वं[7] ब्रह्मासि सवितासि सत्यसवो ब्रह्मा३ त्वं[8] ब्रह्मासि मित्रो ऽसि सुशेवो ब्रह्मा३ त्वं[9] ब्रह्मासीन्द्रो ऽसि सत्यौजा ब्रह्मा३ त्वं[10] ब्रह्मासि वरुणो ऽसि विश्वौजा एष वज्रस्तेन मे रध्य दिशो अ-भ्यभूदयम् ॥

प्रजापते नहि त्वदन्य एता विश्वा जातानि परि ता[11] बभूव । 20
यत्कामास्ते जुहुमस्तन्नो[12] अस्तु ॥

---

[1] St वाजसातम॰ [2] T1 und Brl राज्यम॰; in St beide Worte ohne Accent. [3] Brl तन्व २ वरुणो [4] So W1, ohne Accent; St, T1, Brl शुचिर्मित्रस्य; desgl. Ch, ohne Accent; D शुचिं मि॰ [5] St मित्रयोर॰ [6] St अमुमुभन्त; Ch आमूमु॰ [7] T1 und Brl ब्रह्मास्त्वं; St ब्रह्मा ३ स्त्व; Ch und W1 ब्रह्मा ३ स्त्वं; D ब्रह्मा ३ स्त्वं [8] T1, Brl, Ch und W1 wie oben; D ब्रह्मा ३ स्त्वं [9] T1, Brl, W1 wie oben; D wie an erster Stelle; Ch ब्रह्मास्त्वं [10] T1, Brl, W1 wie oben; D wie an erster Stelle; Ch ब्रह्मास्त्वं [11] St परेता [12] D, St, W1 जुहो॰

असा अमुष्य पुत्रो[1] ऽमुष्यासौ पुत्रः ।
वयं स्याम पतयो रयीणाम् ॥
अपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाग्नये[2] गृहपतये स्वाहा ॥ ८ ॥
cf. Mâitr. 2, 6, 12.

सावित्रो ऽष्टाकपालश्श्येतो दक्षिणा सारस्वतश्चरुः पष्ठौह्यप्रवीता
5 दक्षिणा पौष्णश्चरुश्श्यामो दक्षिणा बार्हस्पत्यश्चरुश्शितिपृष्ठो दक्षि-
णैन्द्र एकादशकपाल ऋषभो दक्षिणा वारुणो यवमयो दशकपालो
बभ्रुर्महानिरष्टो[3] दक्षिणा त्वाष्ट्रो ऽष्टाकपालश्शुण्ठो दक्षिणाग्नेयो ऽष्टा-
कपालस्सौम्यश्चरुर्वैष्णवस्त्रिकपाल आग्नेयो ऽष्टाकपालो हिरण्यं द-
क्षिणैन्द्र एकादशकपाल ऋषभो दक्षिणा ॥ वैश्वदेवश्चरुर्धेनुः पिशङ्गी
10 दक्षिणा मैत्रावरुण्यामिक्षा वशा दक्षिणा बार्हस्पत्यश्चरुश्शितिपृष्ठो
दक्षिणाग्नेयो ऽष्टाकपालस्सौम्यश्चरुस्सावित्रो ऽष्टाकपालो बार्हस्पत्य-
श्चरुरग्नये वैश्वानराय द्वादशकपालस्त्वाष्ट्रो ऽष्टाकपालो[4] दक्षिणो रथ-
वाहनवाहो दक्षिणा सारस्वतश्चरुः पौष्णश्चरुर्मैत्रश्चरुर्वारुणश्चरुरदि-
त्यै[5] चरुः क्षेत्रस्य पतये चरुरितरो रथवाहनवाहो दक्षिणा सवित्रे
15 द्वादशकपालो ऽश्विभ्यां पूष्ण एकादशकपालस्सरस्वत्यै सत्यवाचे चरु-
स्त्रिसृधन्वं शुष्कदृतिर्दण्ड उपानहौ तद्दक्षिणाश्वो वा शोणकर्णः[6] ॥ ९ ॥
cf. Mâitr. S. 2, 6, 13.

त्रिवृद्बहिष्पवमानं पञ्चदशान्याज्यानि पञ्चदशो माध्यंदिनः पव-
मानस्सप्तदशानि पृष्ठानि सप्तदश आर्भवः पवमान एकविंशो ऽग्नि-
ष्टोमश्चतुस्त्रिंशाः पवमाना अभिषेचनीयस्य पञ्चदशान्याज्यानि सप्त-
20 दशानि पृष्ठान्येकविंशो ऽग्निष्टोमश्चोक्थानि[7] च सप्तदशो दशपेयस्सर्व
एकविंशं बहिष्पवमानं केशवपनीयस्य सप्तदशान्याज्यानि सप्तदशो
माध्यंदिनः पवमानः पञ्चदशानि पृष्ठानि पञ्चदश आर्भवः पवमान-

---

[1] T 1 पुत्रो २ सुंष्यासा [2] W 1 स्वाहा । अग्नये [3] So corr. Ch बभ्रुमेहा°; D बद्रुमेहा° [4] So corr. Ch त्वाष्ट्राष्टाक°; D त्वाष्ट्रो क° [5] So D = Mâitr. S. 2, 6, 13; Ch रादित्यो [6] D शैणकर्णः [7] So corr. Ch चोक्तानि; D चोस्थानि

स्त्रिवृदग्निष्टोमस्त्रयोक्थानि चैकविंशष्षोडशी पञ्चदशी रात्री त्रिवृत्स-न्धिरथैष द्विरात्रो व्युष्टिस्तस्य यावन्ति संवत्सरस्याहोरात्राणि तावती-रस्तोत्रीयाः ॥ १० ॥

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः ।
अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ 5
युक्तेन मनसा वयं देवस्य सवितुस्सवे ।
स्वर्ग्यया शक्त्या ॥
युक्त्वाय सविता देवान्स्वर्यतो[1] धिया दिवम् ।
बृहज्ज्योतिः करिष्यतस्सविता प्रसुवाति तान् ॥
युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । 10
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥
युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोक एतु पथेव[2] सूरः ।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥
यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमर्चतः ।
यः पार्थिवानि विममे स एतशो रजांसि देवस्सविता महित्वना ॥ 15

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय ॥ दिव्यो गन्धर्वः केतपः केतं पुनातु वाचस्पतिर्वाचं नस्स्वदतु[3] ॥

इमं मे देव सवितर्यज्ञं प्रणय देवाव्यम् ।
सखिविदं[4] सत्राजितं धनजितं स्वर्विदम् ॥
ऋचा स्तोमं समर्धय गायत्रेण रथन्तरम् । 20
बृहद्गायत्रवर्तनि ॥ ॥ ११ ॥

cf. Mâitr. S. 2, 7, 1.

प्र देवं देव्या धिया भरता जातवेदसम् ।
हव्या नो वक्षदानुषक् ॥

---

[1] Ch द्वयंतो [2] So Ch; D पथेवा [3] So corr. Mss. स्वदत्त [4] So Ch; D सख्यविदं

अयमु ष्य प्र देवयुर्होता यज्ञाय नीयते ।
रथो न योरभीवृतो घृणीवाञ्चेतति त्मना ॥
अयमग्निरुरुष्यत्यमृतादिव[1] जन्मनः ।
सहसश्चित्सहीयान्देवो जीवातवे कृतः ॥
5 इडायास्त्वा पदे वयं नाभा पृथिव्या अधि ।
जातवेदो निधीमह्यग्ने हव्याय वोढवे ॥
अग्ने विश्वेभिस्स्वनीक देवैरूर्णावन्तं प्रथमस्सीद योनिम् ।
कुलायिनं घृतवन्तं सवित्रे यज्ञं नय यजमानाय साधु ॥
सीद होतर्नि होता ॥
10 त्वं दूतस्त्वमु नः परस्पास्त्वं[2] वस्य आ वृषभ[3] प्रणेता ।
अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपाः ॥
अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन ।
यदूर्ध्वस्तिष्ठाद्द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे ॥
उच्छ्रयस्व वनस्पते वर्ष्मन्पृथिव्या अधि ।
15 सुमिती मीयमानो वर्चो धा यज्ञवाहसे ॥
समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वानो अजरं सुवीरम् ।
आरे अस्मदमतिं बाधमान[4] उच्छ्रयस्व महते सौभगाय ॥
ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो[5] न सविता ।
ऊर्ध्वो वाजस्य सनिता[6] यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥
20 ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह ।
कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ॥
युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः ।
तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥

---

[1] D देव [2] Ch परस्पास्त्वं [3] D वृषभः [4] D माना [5] D तिष्ठन्देवो
[6] D सविता

अभि त्वा देव सवितरीशानं वार्याणाम् ।
सदावन्भागमीमहे ॥
मही द्यौः पृथिवी च नस्त्वामग्ने पुष्करादधि तमु त्वा दध्यङ्कृषि-
स्तमु त्वा पाथ्यो वृषाग्नी रक्षांसि सेधन्त्युत ब्रुवन्तु जन्तवः ॥
आ यं[1] हस्ते न खादिनं शिशुं जातं न बिभ्रति ।
विशामग्निं स्वध्वरम् ॥
प्र देवं देववीतये भरता वसुवित्तमम्[2] ।
आ स्वे योनौ निषीदतु ॥
आ जातं जातवेदसि प्रियं शिशीतातिथिम् ।
स्योन आ गृहपतिम् ॥
अग्निनाग्निस्समिध्यते कविर्गृहपतिर्युवा ।
हव्यवाड् जुह्वास्यः ॥
त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्सता ।
सखा सख्या समिध्यसे ॥
तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु ।
स्वेषु क्षयेषु वाजिनम् ॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानस्सचन्त यत्र पूर्वे साध्यास्सन्ति देवाः ॥ ॥ १२ ॥

cf. Mâitr. S. 4, 10, 4; 4, 13, 1.

होता यक्षदग्निं समिधा सुषमिधा समिधं नाभा पृथिव्यास्संगथे वामस्य वर्ष्मन्दिव इडस्पदे वेत्वाज्यस्य होतर्यज होता यक्षत्तनूनपात-मदितेर्गर्भं भुवनस्य गोपां मध्वाद्य देवो देवेभ्यो देवयानान्पथो अनक्तु वेत्वाज्यस्य होतर्यज होता यक्षदग्निमिड ईडितो देवो देवाँ आ वक्ष-द्दूतो हव्यवाडमूर उपेमं यज्ञमुपेमां देवो देवहूतिं वेत्वाज्यस्य होतर्यज होता यक्षद्बर्हिस्सुष्टरीमोर्णम्रदा अस्मिन्यज्ञे वि च प्र च प्रथतां स्वा-

[1] Ch थयं  [2] D वसुविभुम्

सस्थं देवेभ्य एमेनदद्य वसवो रुद्रा आदित्यास्सदन्तु[1] प्रियमिन्द्रस्यास्तु
वेत्वाज्यस्य होतर्यज होता यक्षद्दुर ऋष्वाः कवष्यो कोषधावनीरुदाता-
भिर्जिहतां वि पक्षोभिश्श्रयन्तां[2] सुप्रायणा अस्मिन्यज्ञे विश्रयन्तामृ-
तावृधो व्यन्त्वाज्यस्य होतर्यज होता यक्षदुषासानक्ता बृहती सुपेशसा
नॄः[3] पतिभ्यो योनिं कृण्वाने संस्मयमाने इन्द्रेण देवैरेदं बर्हिस्सीदतां
वीतामाज्यस्य होतर्यज होता यक्षद्दैव्या होतारा मन्द्रा पोतारा कवी
प्रचेतसा स्विष्टमद्यान्यः करत्स्वभिगूर्तमन्यस्स्वतवसेमं यज्ञं दिवि दे-
वेषु धत्तां वीतामाज्यस्य होतर्यज होता यक्षत्तिस्रो देवीरपसामप-
स्तमा अच्छिद्रमद्येदमपस्तन्वतां देवेभ्यो देवीर्देवमपो व्यन्त्वाज्यस्य
होतर्यज होता यक्षत्त्वष्टारमचिष्टुममपाकं रेतोधां विश्रवसं यशोधां पु-
रुरूपमकामकर्शनं[4] सुपोषः पोषैस्स्यात्सुवीरो[5] वीरैर्वेत्वाज्यस्य होतर्यज
होता यक्षद्वनस्पतिमुपावस्रक्षद्धियो[6] जोष्टारं शशमन्नरस्स्वदात्स्व-
धितिर्ऋतुथाद्य[7] देवो देवेभ्यो हव्यवाड्वेत्वाज्यस्य[8] होतर्यज होता यक्ष-
दग्निं स्वाहाज्यस्य स्वाहा मेदसस्स्वाहा[9] स्तोकानां स्वाहा स्वाहाकृ-
तीनां स्वाहा हव्यसूक्तीनां स्वाहा देवा आज्यपा जुषाणा अग्न आ-
ज्यस्य व्यन्तु होतर्यज ॥ १३ ॥ cf. Mâitr. S. 4, 13, 2.

इति श्रीमद्यजुषि काठके चरकशाखायामिठिमिकायां श्रीराजसूयं नाम पञ्चदशं स्थानकं संपूर्णम्[10] ॥

---

[1] Mâitr. S. 4, 13, 2 स्वदन्तु [2] Ch पत्तेभि [3] So corr. Ch नूः; D दाः [4] Ch पुरोरूप°; D कर्षणां [5] So corr. Ch पषैस्स्या°; D पोषैः [6] D चद्धियो [7] So corr. Ch शशमन्नरस्स्वदात्सुदितिन्नृतयाद्य; D शशसंतरस्स्ववात्स्वधितिन्नृतोधाद्य [8] D हव्यावाड्वे° [9] D मेधस्स [10] So die Unterschrift dieses Kapitels in Ch; in D lautet dieselbe इति राजसूयस्थानकं पञ्चदशं समाप्तम् ॥

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसि गायत्रेण छन्दसा पृथिव्यास्सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभर त्रैष्टुभेन छन्दसाभ्रिरसि[1] नार्यसि त्वया वयमग्निं शकेम खनितुं सधस्थ आ जागतेन छन्दसा ॥

हस्त आधाय[2] सविता बिभ्रदभ्रिं हिरण्ययीम् । 5
अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥

आनुष्टुभेन छन्दसा ॥

प्रतूर्तं वाजिन्नाद्रव वरिष्ठामनु संवतम् ।
दिवि ते जन्म परममन्तरिक्षे तव नाभिः ।
पृथिव्यामधि योनिरित् ॥ 10
युञ्जाथां[3] रासभं युवमस्मिन्यामे वृषण्वसू ।
अग्निं भरन्ता अस्मयुम् ॥
योगे योगे तवस्तरं वाजे वाजे हवामहे ।
सखाय इन्द्रमूतये ॥
प्रतूर्वन्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्ये मयोभूरेहि[4] । 15
उर्वन्तरिक्षं वीहि ॥

स्वस्ति गव्यूतिरभयानि कृण्वन्पूष्णा सयुजा सह पृथिव्यास्सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभराग्निं पुरीष्यमङ्गिरस्वदच्छेमो ऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामो ऽग्निं पुरीष्यमङ्गिरस्वद्भरामः ॥ १ ॥

cf. Mâitr. S. 2, 7, 1. 2.

अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । 20
अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततन्थ[5] ॥
आगत्य वाज्यध्वानं सर्वा मृधो विधूनुते[6] ।
अग्निं सधस्थे महति चक्षुषा निचिकीषते ॥

---

[1] So corr. Die Mss. साभ्रिरसि [2] Ch आदाय [3] Die Mss. युञ्जाथीं [4] Ch भूरिहि [5] Ch आततंतू [6] D विधुनुते

आक्रम्य वाजिन्पृथिवीमग्निमिच्छ[1] रुचा त्वम् ।
भूम्या वृत्वाय नो ब्रूहि यतः खनेम तं[2] वयम् ॥
द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षं समुद्रो योनिः ।
विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यतः ॥
5 उत्क्राम महते सौभगायास्मादास्थानाद्द्रविणोदा[3] वाजिन् ।
वयं स्याम सुमतौ पृथिव्या अग्निं खनन्त उपस्थे अस्याः ॥
उदक्रमीद्द्रविणोदा वाज्यर्वाकस्सु लोकं सुकृतं पृथिव्याः ।
ततः खनेम सुप्रतीकमग्निं स्वो[4] रुहाणा अधि नाक उत्तमे ॥
जिघर्म्यग्निं मनसा घृतेन प्रतिक्षियन्तं भुवनानि विश्वा ।
10 पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नं रभसं विदानम् ॥
आ त्वा जिघर्मि वचसा घृतेनारक्षसा मनसा तज्जुषेथाः ।
मर्यश्रीस्स्पृहयद्वर्णो अग्निर्नाभिधृषे तन्वा जर्हृषाणः[5] ॥
परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ।
दधद्रत्नानि दाशुषे ॥
15 परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि ।
धृषद्वर्णं दिवे दिवे हन्तारं भङ्गुरावताम् ॥
त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृभ्यो नृमणो[6] जायसे शुचिः ॥ ॥ २ ॥

cf. Mâitr. S. 2, 7, 2.

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां पृथि-
20 व्यास्सधस्थे अग्निं पुरीष्यमङ्गिरस्वत्खनामि[7] ज्योतिष्मन्तं त्वाग्ने सुप्र-
तीकमजस्रेण भानुना दीद्यतं शिवं प्रजाभ्यो अहिंसन्तं पृथिव्यास्स-
धस्थे ॥ अग्निं पुरीष्यमङ्गिरस्वत्खनामि[8] ॥

---

[1] Ch वाजन्पृ°  [2] Ch तैं  [3] So corr. Die Mss. यास्थादा°  [4] Ch स्निस्वो
[5] D तत्वाणहृंषाणः  [6] Ch नमाणो  [7] D स्वत् वनामि  [8] D स्वद्वनामि

अपां पृष्ठमसि योनिरग्नेस्समुद्रमभितः पिन्वमानम् ।
वर्धमानो महाँ आ च पुष्करे दिवो मात्रया वरिणा प्रथस्व ॥
शर्म च स्थो वर्म च स्थो अच्छिद्रे बहुले उभे ।
व्यचस्वती संवसाथां भर्तमग्निं पुरीष्यम् ॥
संवसाथाँ[1] स्वर्विदौ समीची उरसा[2] त्मना । 5
अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित् ॥
पुरीष्यो ऽसि विश्वभराः ॥ अथर्वा त्वा प्रथमो निरमन्थदग्ने ॥
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत ।
मूर्ध्नो विश्वस्य वाघतः ॥
तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः । 10
वृत्रहणं पुरंदरम् ॥
तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् ।
धनंजयं[3] रणे रणे ॥
सीद होतस्स्व उ लोके चिकित्वान्सादया यज्ञं सुकृतस्य योनौ
देवावीर्देवान्हविषा[4] यजास्यग्ने[5] बृहद्यजमाने वयो धाः ॥ 15
नि होता होतृषदने विदानस्त्वेषो दीदिवाँ असदत्सुदक्षः ।
अदब्धव्रतप्रमतिर्वसिष्ठस्सहस्रंभरश्शुचिजिह्वो[6] अग्निः ॥
संसीदस्व महाँ असि शोचस्व देववित्तमः ।
वि धूममग्ने अरुषं विविग्धि सृज प्रशस्त दर्शतम् ॥
जनिष्ट हि जेन्यो अग्रे[7] अह्नां हितो हितेष्वरुषो वनेषु । 20
दमे दमे सप्त रत्ना दधानो ऽग्निर्होता निषसादा यजीयान् ॥ ॥३॥

cf. Mâitr. S. 2, 7, 2. 3.

अपो देवीरुपसृज मधुमतीरयक्ष्माय प्रजाभ्यः ।
तासामास्थानादुज्जिहतामोषधयस्सुपिप्पलाः ॥

---

[1] So auch unten 19, 4. [2] Ch तरसा [3] Mss. धनंजयै [4] Ch देवान्हविष्या [5] Ch स्यग्ने; D स्यये [6] D सहस्रंभारः [7] Ch जिन्यो अग्ने

सं ते वायुर्मातरिश्वा दधातूत्तानाया हृदयं यद्विकस्तम् ।
यो देवानां चरसि प्राणथेन तस्मै देव[1] वषडस्तु तुभ्यम् ॥
सुजातो ज्योतिषा शर्म वरूथमासदत्स्वः ।
वासो अग्ने विश्वरूपं संव्ययस्व विभावसो ॥
5 उदु तिष्ठ स्वध्वरावा[2] नो देव्या कृपा ।
दृशे च भासा बृहता सुशुक्वभिराग्ने याहि सुशस्तिभिः ॥
ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥
स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु ।
10 चित्रश्शिशुः परि तमांस्यक्तः[3] प्र मातृभ्यो अधि कनिक्रदग्गाः ॥
स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् ।
पृथुर्भव[4] सुषदस्त्वमग्नेः पुरीषवाहनः ॥
शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः ।
मा द्यावापृथिवी अभिशुचो मान्तरिक्षं मा वनस्पतीन् ॥
15 प्रैतु वाजी कनिक्रदन्नानदद्रासभः[5] पत्वा ।
भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा ॥
वृषाग्निं वृषणं[6] भरन्नपां गर्भं समुद्रियम् ।
अग्न आयाहि वीतये ॥
ऋतं सत्यमृतं सत्यम् ॥
20 ओषधयः प्रतिगृह्णीताग्निमेतं शिवमायन्तमभ्यत्र युष्मान् ।
व्यस्यन्विश्वा अनिरा अमीवा निषीदन्नो अप दुर्मतिं जहि ॥
ओषधयः प्रतिमोदध्वं पुष्पवतीस्सुपिप्पलाः ।
अयं वो गर्भ ऋत्वियः प्रत्नं[7] सधस्थमासदत् ॥

---

[1] D देवा [2] So D; Ch राव [3] Ch तमोसूक्तः [4] So Ch; D भवा [5] D नामदश्चासतः [6] Ch वृषाणा [7] D पुत्रं

वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो[1] रक्षसो अमीवाः ।
सुशर्मणो बृहतश्शर्मणि[2] स्यामग्नेरहं सुहवस्य प्रणीतौ ॥
आपो[3] हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ॥
यो वश्शिवतमो रसस्तस्य भाजयतेह नः । 5
उशतीरिव मातरः ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥ ॥ ४ ॥ cf. Mâitr. S. 2, 7, 4.

मित्रस्संसृज्य पृथिवीं भूमिं च ज्योतिषा सह ।
सुजातं जातवेदसमयक्ष्माय त्वा संसृजामि प्रजाभ्यः ॥ 10
रुद्रास्संसृज्य[4] पृथिवीं बृहज्ज्योतिस्समीधिरे ।
तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते ॥
संसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम् ।
हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली करोतु ताम्[5] ॥
सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा[6] । 15
सा तुभ्यमदिते मह्योखां दधातु[7] हस्तयोः ॥
उखां करोतु शक्त्या बाहुभ्यामदितिर्धिया ।
माता पुत्रं यथोपस्थे साग्निं[8] बिभर्तु गर्भ आ ॥

मखस्य शिरो ऽसि वसवस्त्वा कुर्वन्तु गायत्रेण छन्दसाङ्गिरस्वद् ध्रुवासि पृथिव्यसि धारया मयि प्रजां रायस्पोषं गौपत्यं[9] सुवीर्यं स- 20 जातान्यजमानाय रुद्रास्त्वा कुर्वन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वद् ध्रुवास्यन्तरिक्षमसि धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं सजातान्यजमानायादित्यास्त्वा कुर्वन्तु जागतेन छन्दसाङ्गिरस्वद् ध्रुवासि

---

[1] Ch द्विषो [2] Ch मणा वृंहत [3] Von hier bis zum Schluss accentuirt nach T6 fol. 11, coll. mit Brl fol. 9. [4] Ch रुद्रस्स° [5] D तान् [6] D पाशा [7] So D; Ch मह्युखान्ददाति; cf. Mâitr. S. 2, 7, 5 मह्योखां ददातु [8] Ch पस्थमाग्नेभ्नि° [9] Ch गोपत्यं

द्यौरसि धारया मयि प्रजां रायस्पोषं गौपत्यं[1] सुवीर्यं सजातान्यज-
मानाय विश्वे त्वा देवा वैश्वानराः कुर्वन्त्वानुष्टुभेन छन्दसाङ्गिरस्वद्
ध्रुवासि दिशो ऽसि धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्यं स-
जातान्यजमानायादित्या[2] रास्नास्यदितिस्ते बिलं गृह्णातु ॥
5 कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नये ।
तां पुत्रेभ्यस्संप्रायच्छददितिश्श्रपयानिति ॥
वसवस्त्वा[3] धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वा धूपयन्तु
त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन छन्दसाङ्गिर-
स्वद्विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाङ्गिरस्वदिन्द्रस्त्वा
10 धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु ॥ ५ ॥
cf. Mâitr. S. 2, 7, 5. 6.

अदितिस्त्वा देवी[4] विश्वदेव्यावती पृथिव्यास्सधस्थे अङ्गिरस्वत्ख-
नत्ववट[5] देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थे[6] अ-
ङ्गिरस्वद्दधतूखे धिषणास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थे अ-
ङ्गिरस्वदभीन्धतामुखे वरूत्रीस्त्वा देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थे
15 अङ्गिरस्वच्छ्रपयन्तूखे ग्नास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थे
अङ्गिरस्वत्पचन्तूखे जनयस्त्वाच्छिन्नपत्रा देवीर्विश्वदेव्यावतीः पृथिव्या-
स्सधस्थे अङ्गिरस्वत्पचन्तूखे ॥
मित्रस्य चर्षणीधृतश्श्रवो देवस्य सानसि ।
द्युम्नं चित्रश्रवस्तमम् ॥

---

[1] Ch गोपत्यं [2] Ch schaltet am Rande aus nicht ersichtlichem Grunde eine Wiederholung ein von यादित्यास्त्वा कुर्वन्तु जागतेन छ° etc. bis hierher सजाता-न्यजमाना [3] Accentuirt von hier ab bis zum Ende nach Brl fol. 10. [4] In Ch fehlt देवी, dafür steht विश्वा विश्वदेव्यावती [5] D वनत्व° [6] Von hier bis zu den Versen nach Ch gegeben. In D lautet der Text mit Lücken von hier ab अङ्गिरस्वदभीन्धतामुखे वरूत्रीस्त्वा देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थे अङ्गिरस्वत्पचन्तूखे जनयस्त्वा-च्छिन्नपत्रा देवीर्विश्वदेव्यावतीः पृथिव्यास्सधस्थे अङ्गिरस्वत्पचन्तूखे ॥ folgen die Verse.

देवस्त्वा सवितोद्वपतु सुपाणिस्स्वङ्गुरिः ।
सुबाहुरुत शक्त्या ॥
अव्यथमाना पृथिव्यामाशा दिश आपृण ।
उत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वम् ॥

मित्रैतां त उखां परिददाम्यभित्त्या एषा मा भेदि वसवस्त्वाच्छृन्दन्तु गायत्रेण छन्दसाङ्गिरस्वद्रुद्रास्त्वाच्छृन्दन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वदादित्यास्त्वाच्छृन्दन्तु जागतेन छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा आच्छृन्दन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत् ॥ ६ ॥ cf. Mâitr. S. 2, 7, 6.

आकूतिमग्निं प्रयुजं स्वाहा मनो मेधामग्निं प्रयुजं स्वाहा चित्तं विज्ञातमग्निं प्रयुजं स्वाहा वाचो विधृतिमग्निं प्रयुजं स्वाहा प्रजापतये मनवे स्वाहाग्नये[1] वैश्वानराय स्वाहा ॥

विश्वो देवस्य नेतुर्मर्तो वरेत[2] सख्यम् ।
विश्वो राय इषुध्यति द्युम्नं वरेत[3] पुष्यतु ॥
स्वाहा मा सु भित्था[4] मा सु रिषो ऽम्ब धृष्णु वीरयस्व सु ।
अग्निश्चेदं करिष्यथः ॥
दृंहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृतासि ।
जुष्टं देवेभ्य इदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन् ॥
द्रुन्नस्सर्पिरासुतिः प्रत्नो[5] होता वरेण्यः ।
सहसस्पुत्रो अद्भुतः ॥
परस्या अधि संवतो ऽवराँ अभ्यातर ।
यत्राहमस्मि ताँ अव ॥
परमस्याः परावतो रोहिदश्व उपागहि ।
पुरीष्यः पुरुप्रियो ऽग्ने त्वं तरा मृधः ॥

---

[1] D स्वाहा अग्नये [2] So beide Mss. [3] So Ch; D वरेउ [4] So corr. Ch सु भित्या; D स्वभित्र्या [5] So corr. Ch प्रत्ने; D पुत्रो

यदग्ने कानि कानि चा[1] ते दारूणि दध्मसि ।
सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥
यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति ।
सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य ॥
5 रात्रीं[2] रात्रीमप्रयावं भरन्तो ऽश्वायेव तिष्ठते घासमस्मै ।
रायस्पोषेण समिषा मदन्तो[3] ऽग्ने मा ते प्रतिवेशा रिषाम[4] ॥
नाभा पृथिव्यास्समिधानो अग्निं रायस्पोषाय बृहते हवामहे ।
इरंमदं बृहदुक्थं यजत्रं जेतारमग्निं पृतनासु सासहिम् ॥
यास्सेना अभीत्वरीराव्याधिनीरुगणा उत ।
10 ये स्तेना ये च तस्करास्तांस्ते अग्ने[5] ऽपि दधाम्यास्ये ॥
दंष्ट्राभ्यां मलिम्लूनग्ने जम्भ्येभिस्तस्करानुत[6] ।
हनुभ्यां स्तेनान्भगवस्तांस्त्वं खाद सुखादितान् ॥
ये जनेषु मलिम्लवस्स्तेनासस्तस्करा वने ।
ये कक्षेष्वघायवस्तांस्ते[7] दधामि जम्भयोः ॥
15 यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः ।
निन्दाद्यो अस्मान्दिप्साच्च[8] सर्वांस्तान्मष्मषा कुरु ॥
संशितं मे ब्रह्म संशितं वीर्यं बलम् ।
संशितं क्षत्रं मे जिष्णु[9] यस्याहमस्मि पुरोहितः ॥
उदेषां बाहू[10] अतिरमुद्वर्चो अथो बलम् ।
20 क्षिणोमि ब्रह्मणामित्रानुन्नयामि स्वाँ अहम् ॥ ॥ ७ ॥

cf. Mâitr. S. 2, 7, 7.

दृशानो रुक्म उर्विया व्यद्यौद्दुर्मर्षमायुश्श्रिये[11] रुचानः ।
अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः ॥

---

[1] D च [2] Ch रात्रीं [3] Ch मदंता [4] Ch प्रतिविशां रिशाम [5] Ch रास्त॰ अग्नि [6] Ch जस्त्येभि॰ [7] So corr. Ch कच्चेषु घायवास्तां॰; D कच्चेषु परायवस्तां॰ [8] So corr. Die Mss. प्साम्च. [9] Ch जिष्णा [10] Ebenso unten 19, 10 a. E. [11] D श्रियो

नक्तोषासा समनसा विरूपे धापयेते शिशुमेकं समीची ।
द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन्द्रविणोदाः ॥
विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे ।
वि नाकमख्यत्सविता वरेण्यो ऽनु प्रयाणमुषसो विराजति ॥

सुपर्णो ऽसि गरुत्मांस्त्रिवृत्ते शिरो गायत्रं चक्षुर्बृहद्रथन्तरे पक्षौ स्तोम आत्मा छन्दांस्यङ्गानि यजूंषि नाम साम ते तनूर्वामदेव्यं यज्ञायज्ञीयं पुच्छं धिष्ण्याश्शफास्सुपर्णो[1] ऽसि गरुत्मान्दिवं गच्छ स्वः पत ॥ विष्णोः क्रमो ऽसि सपत्नहा गायत्रं छन्द आरोह पृथिवीमनुविक्रमस्व विष्णोः क्रमो ऽस्यभिमातिहा त्रैष्टुभं छन्द आरोहान्तरिक्षमनुविक्रमस्व विष्णोः क्रमो ऽस्यरातीयतो हन्ता जागतं छन्द आरोह दिवमनुविक्रमस्व विष्णोः क्रमो ऽसि शत्रूयतो हन्तानुष्टुभं छन्द आरोह दिशो ऽनुविक्रमस्व ॥

अक्रन्ददग्निस्स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधस्समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा[2] रोदसी भानुना भात्यन्तः ॥

अग्ने ऽभ्यावर्तिन्नभि नो निवर्तस्वायुषा वर्चसा प्रजया धनेन सन्या मेधया ॥

अग्ने अङ्गिरश्शतं ते सन्त्वावृतस्सहस्रं[3] त[4] उपावृतः ।
अधा पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि ॥
पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा ।
पुनर्नः पाह्यंहसः ॥
सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया ।
विश्वप्स्न्या विश्वतस्परि ॥
आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलत्[5] ।
विशस्त्वा सर्वा वाञ्छन्त्वस्मे[6] राष्ट्रमधिश्रय ॥

---

[1] Ch पुच्छेन्धिष्ण्याया  [2] So corr. Ch वि ह सिद्धो आख्यदा; D वि हीमिद्धो अख्तरा; cf. unten 16, 9 und 10.  [3] D सन्त्वावृधः  [4] Ch ते  [5] Ch हर्षमंतरभूर्ध्रुं°; D हार्षमन्तरभूद् ध्रु°; W १८ हार्षमन्तरभू ध्रु°  [6] Ch स्मै

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमँ श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥
अग्ने बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान्तमसो ज्योतिषागात् ।
अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः ॥
हँसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥
सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् ।
मैनां तपसा मार्चिषाभिशोचो[1] ऽन्तरस्याँ शुक्रज्योतिर्विभाहि ॥
अन्तरग्ने रुचा त्वमुखायाँ सदने स्वे ।
तस्यास्त्वँ[2] हरसा तपञ्जातवेदश्शिवो भव ॥
शिवो भूत्वा मह्यमग्ने ऽथो सीद शिवस्त्वम् ।
शिवाः कृत्वा दिशस्सर्वास्स्वं योनिमिहासदः ॥ ॥ ८ ॥

cf. Mâitr. S. 2, 7, 8.

दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जनते[3] स्वाधीः ॥
विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा ।
विद्मा तमुत्सं यत आजगन्थ विद्मा ते नाम परमं गुहा यत् ॥
समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् ।
तृतीये त्वा रजसि तस्थिवाँसमृतस्य योनौ महिषा अहिन्वन् ॥
अक्रन्ददग्निस्स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधस्समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा[4] रोदसी भानुना भात्यन्तः ॥
उशिक्पावको अरतिस्सुमेधा मर्त्येष्वग्निरमृतो निधायि ।
इयर्ति धूममरुषो[5] भरिभ्रदुच्छुक्रेण[6] शोचिषा द्यामिनक्षन्[7] ॥

---

[1] Ch und W 1८ भिशुचो [2] So corr. Ch तस्यात्वं; D तस्या त्वं; W 1८ तस्यान्त्वं
[3] D जरिते [4] Ch आख्यदा; D अख्यरा; cf. 16, 8 und 10. [5] Ch मरुतो [6] D भरिंद्रदु॰ [7] Ch द्यान्

श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणस्सोमगोपाः ।
वसुस्सूनुस्सहसो अप्सु राजा विभात्यग्र उषसामिधानः ॥
विश्वस्य जज्ञे भुवनस्य राजा रोदसी अपृणाज्जायमानः ।
वीडुं चिददद्रिरभिनत्परायञ्जना[1] यदग्निमयजन्त पञ्च ॥
यस्ते अद्य कृणवद्भद्रशोचे ऽपूपं देव घृतवन्तमग्ने ।
प्र तं नय प्रतरं वस्यो[2] अच्छाभि द्युम्नं देवहितं यविष्ठ्य ॥
आ तं भज सौश्रवसेष्वग्न उक्थ आभज शस्यमाने ।
प्रियस्सूर्ये प्रियो अग्ना भवात्युज्जातेन[3] भिनददुज्जनित्वैः ॥
दृशानो रुक्म उर्विया व्यद्यौद्दुर्मर्षमायुश्श्रिये[4] रुचानः ।
अग्निरमृतो अभवत्सहोभिर्यदेनं द्यौरजनयत्सुरेताः[5] ॥
त्वामग्ने यजमाना अनु द्यून्विश्वा वसु[6] दधिरे वार्याणि ।
त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो अपव्रन्[7] ॥ ॥९॥

cf. Mâitr. S. 2, 7, 9.

उदु[8] त्वा विश्वे देवा अग्ने भरन्तु[9] चित्तिभिः ।
स नो भव शिवस्त्वं सुप्रतीको विभावसुः ॥
प्रेदग्ने ज्योतिष्मान्याहि शिवेभिरर्चिभिष्ट्वम् ।
बृहद्भिर्भानुभिर्भासन्मा हिंसीस्तन्वा प्रजाः ॥
अक्रन्ददग्निस्स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधस्समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा[10] रोदसी भानुना भात्यन्तः ॥
अन्नपते अन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्र प्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥
समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् ।
आस्मिन्हव्या जुहोतन ॥

---

[1] So die Mss.; muss natürlich द्रिम° heissen; D त्मनाय  [2] Ch पूतत्रय पूतरं घास्या  [3] D ज्जातं न  [4] D श्रियो  [5] D स्वरेताः  [6] Ch वसू  [7] D अपव्रुन्
[8] Dies Kap. accentuirt nach Brl fol. 167. 168.  [9] Ch भरंतो  [10] So Brl, desgl. Ch und W 1ζ, ohne Accent; D अख्यरो; cf. oben 16, 8 und 9.

प्र प्रायमग्निर्भरतस्य शृण्वे वि यत्सूर्यो न रोचते बृहद्भाः ।
अभि यः पूरुं[1] पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः ॥
आपो देवीः प्रतिगृह्णीत भस्मैतत्स्योने कृणुध्वं सुरभा उ लोके ।
तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृता[2] स्वेनम् ॥
अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे ।
गर्भे संजायसे पुनः ॥
गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् ।
गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि ॥
प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने ।
संसृज्य मातृभिष्ट्वं ज्योतिष्मान्पुनरासदः[3] ॥
पुनरासद्य सदनमपश्च[4] पृथिवीमग्ने ।
शेषे मातुर्यथोपस्थे ऽन्तरस्यां शिवतमः ॥
पुनरूर्जा सह रय्या ॥
बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः ।
निन्दति त्वो अनु त्वो गृणाति[5] वन्दारु ते तन्वं[6] वन्दे अग्ने ॥
स बोधि सूरिर्मघवा वसुदावा वसुपतिः ।
युयोध्यस्मद्द्वेषांसि ॥ ॥ १० ॥ cf. Mâitr. S. 2, 7, 10; Kap. S. 25, 1.
अपेत वीत वि च सर्पतातो ये ऽत्र[7] स्थ पुराणा ये च नूतनाः ।
अदाद्यमो ऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै ॥
संज्ञानमसि[8] कामधरणं मयि ते कामधरणं भूयादग्नेर्भस्मास्यग्नेः पुरीषमसि चितस्स्थ परिचित ऊर्ध्वचितश्श्रयध्वम् ॥
अयं सो अग्निर्यस्मिन्सोममिन्द्रः सुतं दधे जठरे वावशानः[9] ।
सहस्रिणं वाजमत्यं न सप्तिं ससवान्सन्स्तूयसे जातवेदः ॥

---

[1] D पुरुं [2] So Ch und W1८; D बिभता; Brl बिभ्रतो [3] D सदाः [4] D साधनम॰ [5] D गृह्णाति [6] Accent ergänzt; in Brl dies Wort ohne Accent. [7] Ch ये उ [8] Ch मस्य [9] So corr. Ch वावसानः; D वारसानः

अग्ने दिवो[1] अर्णमच्छा[2] जिगास्यच्छा देवाँ ऊचिषे धिष्ण्या ये ।
या स्वावस्तादुपतिष्ठन्त आपो या वा परो रोचने सूर्यस्य ॥
अग्ने यत्ते दिवि वर्चः पृथिव्यां यत्पर्वतेष्वोषधीष्वप्सु ।
येनान्तरिक्षमुर्वाततन्थ[3] त्वेषस्स भानुरर्णवो[4] नृचक्षाः ॥
पुरीष्यासो अग्नयः प्रवणेन सजोषसः । 5
जुषन्ताँ हव्यमाहुतमनमीवा इषो महीः ॥
इडामग्ने पुरुदँसँ सनिं गोश्शश्वत्तमँ हवमानाय साध ।
स्यान्नस्सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥ 10
चिदसि तया देवतयाङ्गिरस्वद् ध्रुवा सीद परिचिदसि तया देव-
तयाङ्गिरस्वद् ध्रुवा सीद ॥
समितँ संकल्पेथाँ संप्रियौ रोचिष्णू सुमनस्यमानौ ।
इषमूर्जमभिसंवसानौ ॥
सं वां मनाँसि सं व्रता समु चित्तान्याकरम् । 15
अग्ने पुरीष्याधिपा भव त्वं न इषमूर्जं यजमानाय धेहि ॥
अग्ने त्वं पुरीष्यो रयिमान्पुष्टिमाँ असि ।
शिवाः[5] कृत्वा दिशस्सर्वास्स्वं योनिमिहासदः ॥
भवतं नस्समनसौ समोकसा अरेपसौ ।
मा हिँसिष्टं यज्ञपतिं मा यज्ञं जातवेदसौ शिवौ भवतमद्य नः ॥ 20
मातेव पुत्रं पृथिवी पुरीष्यमग्निँ स्वे योना अभारुखा ।
तां विश्वे देवा ऋतुभिस्संविदानाः[6] प्रजापतिर्विश्वकर्मा
विमुञ्चतु ॥ ॥ ११ ॥ cf. Mâitr. S. 2, 7, 11; Kap. S. 25, 2.

---

[1] D देवा [2] Ch मम्छ [3] Ch ततंतू [4] D रायावो [5] Ch शिवः
[6] D दानः

यदस्य पारे रजसश्शिवं ज्योतिरजायत ।
तन्नः पर्षदति द्विषो ऽग्ने वैश्वानर द्युमत् ॥
असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यां तस्करस्यान्विहि ।
अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥
5 यत्ते अस्मिन्घोर[1] आसञ्जुहोम्येषां बन्धानामवसर्जनाय कम् ।
यां त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिरिति त्वाहं परि वेद
विश्वतः ॥
नमस्तु ते निर्ऋते तिग्मतेजो ऽयस्मयं विचृता[2] बन्धमेतम् ।
यमेन त्वं यम्या संविदानोत्तमे नाके अधि रोहयैनम् ॥
10 यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचर्त्यम् ।
तं ते विष्याम्यायुषो नु मध्ये ऽधा विषितः[3] पितुमद्धि प्रमुक्तः[4] ॥
निवेशनस्संगमनो वसूनां विश्वा[5] रूपाभिचष्टे शचीभिः ।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे[6] पथीनाम् ॥
सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् ।
15 धीरा देवेषु सुम्नया[7] ॥
युनक्त सीरा वि युगा तनोत कृते योनिर्वपतेह बीजम् ।
गिरा च श्रुष्टिस्सभरा[8] असन्नो नेदीय इत्सृण्यः[9] पक्वमायत् ॥
पूषा युनक्तु सविता युनक्तु बृहस्पतिस्सविता देवो अग्निः[10] ॥
शुनं सुफाला[11] वितुदन्तु भूमिं शुनं कीनाशा अभियन्तु वाहैः ।
20 शुनासीरा हव्यजुष्टिं जुषाणेदं बीजमवतमुप्यमानम्[12] ॥
लाङ्गलं पवीरवं सुशेवं सोमपित्सरु ।
उदिद्वपति गामविं प्रस्थावद्रथवाहनं प्रफर्व्यं[13] च पीवरीम् ॥

---

[1] Ch घोरे; cf. VS 12, 64 den Vers यस्यास्ते घोरे [2] So Ch; D द्वता [3] Ch विस्याम्यायुषा नु माद्या धा विषतः [4] D प्रयुक्तः [5] D विद्वा [6] D समरो [7] D सुम्नयुः [8] Ch सबरा [9] So corr. Ch इत्मृग्यः; D इत्सगया: [10] Der zweite Theil des Verses fehlt. [11] D स्वफाला [12] So corr. Ch णोदमीजमवतमुप्यमानम्; D णोदं बीजमेव तमुप्यमानम् [13] Ch प्र हव्यं

घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमतं मरुद्भिः ।
ऊर्जो भागं मधुमत्पिन्वमानास्मान्सीते पयसाभ्याववृत्स्व[1] ॥
विमुच्यध्वमघ्न्या देवयाना अगन्म तमसस्पारम् ।
ज्योतिरापाम ॥
कामं कामदुघे धुक्ष्व मित्राय वरुणाय च । 5
इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्य ओषधीभ्यः ॥ ॥ १२ ॥

cf. Mâitr. S. 2, 7, 12; Kap. S. 25, 3.

या[2] ओषधयः प्रथमजा देवेभ्यस्त्रियुगं पुरा ।
मन्ये नु बभ्रूणामहं शतं धामानि सप्त च ॥
शतं वो अम्ब धामानि सहस्रमुत वो रुहः । 10
अधा शतक्रतवो यूयमिमं मे अगदं कृत ॥
पुष्पवतीः प्रसूमतीः[3] फलिनीरफला उत ।
अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥
ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे ।
रपांसि विघ्नतीरित रक्षश्चातयमानाः[4] ॥
अश्वत्थे वो निषदनं[5] पर्णे वो वसतिष्कृता[6] । 15
गोभाज इत्किलासथ यत्सनवाथ[7] पूरुषम् ॥
अश्वावतीं सोमावतीमूर्जयन्तीमुदोजसम्[8] ।
आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये ॥
यदोषधयस्समग्मत[9] राजानस्समिता इव ।
विप्रस्स उच्यते भिषग्रक्षोहामीवचातनः ॥ 20
उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते ।
धनं सनिष्यन्तीनामात्मानं तव पूरुष[10] ॥

---

[1] Ch भ्यावृत्स्व [2] Dies Kapitel auch mit T 1 und W 1 coll.; accentuirt nach T 1 [3] Ch प्रसुमतीः [4] D रक्षश्चेत° [5] W 1 षादनं [6] Ch तिष्ठता [7] So T 1; desgl. Ch und D, ohne Accent, cf. Mâitr. S. 2, 7, 13; W 1 सनवथ, so RV 10, 97, 5. [8] Ch सोमव°; W 1 सोमुमाव° [9] So T 1; W 1 समजमत; in Ch wohl ebenso; in D die resp. Ligatur ganz undeutlich. [10] T 1 पुरुष; D पुरुषः

अति विश्वाः[1] परिष्ठास्तेन इव[2] व्रजमक्रमुः ।
ओषधयः प्राचुच्यवुर्यत्किंचित्तन्वो[3] रपः ॥
यास्त आतस्थुरात्मानमाविविशुः परुष्परुः ।
तास्ते यक्ष्मं विबाधन्तामुग्रो मध्यमशीरिव ॥
5 यदहं वाजयन्निमा ओषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥
निष्कृतिर्नाम वो माताथो त्वमसि[4] निष्कृतिः ।
सराः पतत्रिणीस्स्थ[5] यदामयति निष्कृत ॥
साकं यक्ष्म प्रपत चाषेण किकिदीविना[6] ।
10 साकं वातस्य ध्राज्या[7] साकं नश्य[8] निहाकया ॥
अन्या वो अन्यामवत्वन्यान्यस्या उपावत[9] ।
तास्सर्वास्संविदाना इदं मे प्रावता वचः ॥
अवपतन्तीरवदन्दिवो ऽन्तेभ्यस्परि[10] ।
यं जीवमश्नवामहै न स रिष्याति पूरुषः[11] ॥
15 याः फलिनीर्या अफला अकोशाः कोशिनीश्च याः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥
यांश्चेदमुपशृण्वन्ति[12] याश्च दूरं परागताः[13] ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥
यास्सोमराज्ञीर्वरुणस्य राज्ञो यासां विश्वे देवा अधिपतयश्च सर्वे ।
20 या अन्तरिक्षे दिवि याः पृथिव्यां ता नस्स्तुता ओषधीः
पारयन्तु ॥ ॥ १३ ॥ cf. Mâitr. S. 2, 7, 13; Kap. S. 25, 4.

---

[1] Von hier an eine Lücke in T1 bis ओषधीर्हस्त आदधे (excl.), daher nicht accentuirt (das Dazwischenliegende ist abgebrochen). [2] D इवा [3] Ch und W1 प्रचच्युवु° [4] Ch त्वमस्य [5] W1 स नः पतत्रिणीस्स्या [6] W1 कीकिदीविना [7] Ch प्राज्या [8] D साकवास्य [9] Kleine Lücke in T1, daher unaccentuirt. [10] In T1 kleine Lücke, daher Accente unvollständig. [11] Ch पुरुषः [12] Ch यश्चेदमपशृण्वंति [13] W1 दूरमुपागताः

मा नो हिंसीज्जनिता यः पृथिव्या यो दिवं सत्यधर्मा व्यानट् ।
यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम ॥
अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह ।
वपां ते अग्निरिषितो अरोहत् ॥
अग्ने यत्ते शुक्रं यच्चन्द्रं यत्पूतं यच्च यज्ञियम् ।
तद्देवेभ्यो भरामसि ॥
इषमूर्जमहमित आदृतस्य[1] योनिं महिषस्य धाराम् ।
आ नो गोषु विशत्वा तनूषु जहामि सेदिमनिराममीवाम् ॥
अग्ने तव श्रवो वयो महि भ्राजन्त्यर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्यं[2] दधासि दाशुषे कवे ॥ 10
पावकवर्चाश्शुक्रवर्चा अनूनवर्चा उदियर्षि[3] भानुना ।
पुत्रः पितरा विचरन्नुपावसि[4] पृणक्षि रोदसी उभे ॥
ऊर्जो नपाज्जातवेदस्सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
त्वे विश्वे संदधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥
इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य । 15
स दर्शतस्य वपुषो विराजसि पृणक्षि सानसिं रयिम् ॥
ऋतावानं महिषं विश्वदर्शतमग्निं सुम्नाय दधिरे पुरो जनाः ।
श्रुत्कर्णं सप्रथस्तमं त्वा युजा विप्रासो मानुषा युगा ॥
निष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तं शवसे महे ।
रातिं वामस्य सुभगां महीमिषं[5] पृणक्षि दर्शतं क्रतुम् ॥ 20
आप्यायस्व समेतु ते विश्वतस्सोम वृष्ण्यम् ।
भवा वाजस्य संगथे ॥

---

[1] cf. Kap. S. 25, 5 ऊर्मितादमृतस्य  [2] So corr. Ch मुतमन्द°; D मुत्थं द°
[3] Ch यत्ति  [4] D नूपावसि  [5] D महीमेषं

सं ते पयांसि समु यन्तु वाजास्सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि[1] श्रवांस्युत्तमानि
धिष्व[2] ॥ ॥ १४ ॥ cf. Mâitr. S. 2, 7, 14; Kap. S. 25, 5.

अपां पृष्ठमसि योनिरग्नेस्समुद्रमभितः पिन्वमानम् ।
5 वर्धमानो महाँ आ च पुष्करे दिवो मात्रया वरिणा प्रथस्व ॥
ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतस्सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठास्सतश्च योनिमसतश्च वि वः ॥
हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार[3] पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥
10 द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।
समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥
नमो[4] अस्तु सर्पेभ्यो ये के च पृथिव्यामधि ।
ये अन्तरिक्षे ये दिवि तेभ्यस्सर्पेभ्यो नमः ॥
येषु वा यातुधाना ये वा वनस्पतींरनु ।
15 ये ऽवटेषु शेरते तेभ्यस्सर्पेभ्यो नमः ॥
ये वादो रोचने दिवो ये वा सूर्यस्य रश्मिषु ।
ये ऽप्सु सदांसि चक्रिरे तेभ्यस्सर्पेभ्यो नमः ॥
कृणुष्व[5] पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानो ऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥
20 तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचानः ।
तपूंष्यग्ने जुह्वा पतङ्गानसंदितो विसृज विष्वगुल्काः ॥
प्रति स्पशो विसृज तूर्णितमो भवा[6] पायुर्विशो अस्या अदब्धः ।
यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥

[1] Ch दिवे [2] So corr. Ch स्यत्तमानिष्व; D स्युतुमानि धिष्व [3] Ch दधार
[4] Von hier ab 3 Verse accentuirt nach Brl fol. 12. [5] Die folgenden Verse accentuirt nach T1 und Brl fol. 117. [6] Ch भव

उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ[1] ओषतात्तिग्महेते ।
यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥
ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून्[2] ॥
अग्नेस्त्वा तेजसा सादयामीन्द्रस्य त्वौजसा सादयामि ॥
अयमग्निस्सहस्रिणो वाजस्य शतिनस्पतिः ।
मूर्धा कवी रयीणाम् ॥
भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिस्सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥ ॥ १५ ॥

cf. Mâitr. S. 2, 7, 15.

ध्रुवासि[3] धरुणास्तृता विश्वकर्मणा मा त्वा समुद्र उद्वधीन्मा सुपर्णो ऽव्यथमाना पृथिवीं दृंह प्रथो ऽसि पृथिव्यसि भूरसि भूमिरस्यदितिरसि तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥
काण्डात्काण्डात्प्ररोहन्ती परुषस्परुषस्परि[4] ।
एवा नो[5] दूर्वे प्रतनु सहस्रेण शतेन च ॥
या शतेन प्रतनोषि सहस्रेण विरोहसि[6] ।
तस्यै ते देवीष्टके विधेम हविषा वयम् ॥
यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः ।
ताभिर्नो अद्य सर्वाभी रुचे जनाय नस्कृधि ॥
या वो देवास्सूर्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिस्सर्वाभी रुचं नो धत्त बृहस्पते ॥
विराड् ज्योतिरधारयत्स्वराड् ज्योतिरधारयदषाढासि सहमाना[7] सहस्वारातिं सहस्व पृतनायतस्सहस्रवीर्यासि सा मा जिन्व ॥

---

[1] T1 und Brl schreiben beide न्य २ मित्रा  [2] Hier brechen T1 und Brl ab.  [3] Für dies Kap. W1ε collat.  [4] Ch परुषः प°  [5] Ch एवा नु  [6] W1ε विरोहति  [7] Ch सहसानां

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ।
पिपृतां नो भरीमभिः ॥
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यस्सखा ॥
5 सरित्स्रवन्ति[1] सरितो न धेना अन्तर्हृदा मनसा यश्चिकित्रे ।
घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्ये[2] अग्नेः ॥
ऋचे त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वाभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य चाग्निर्ज्योतिषा ज्योतिष्मान्रुक्मो वर्चसा वर्चस्वान्ध्रुवासि धरुणा सहस्रदा असि सहस्राय त्वा ॥ १६ ॥
cf. Mâitr. S. 2, 7, 16.

10 आदित्यं[3] गर्भं पयसा समञ्जन्त्सहस्रस्य[4] प्रतिमां विश्वरूपम् ।
परिवृङ्धि[5] हरसा माभिमंस्थाश्शतायुषं कृणुहि चीयमानः ॥
वातस्य जूतिं वरुणस्य नाभिमश्वं जज्ञानं सरिरस्य मध्ये ।
शिशुं नदीनां हरिमद्रिबुध्नमग्ने मा हिंसीः परमे व्योमन्[6] ॥
अजस्रमिन्द्रमरुषं भुरण्युमग्निमीडे पूर्वचित्तिं नमोभिः[7] ।
15 स पर्वभिर्ऋतुशः कल्पमानस्स गां मा हिंसीरदितिं[8] विराजम् ॥
वरूत्रीं त्वष्टुर्वरुणस्य नाभिमविं जज्ञानां[9] रजसः परस्मात् ।
महीं साहस्रीमसुरस्य मायां तामग्ने हेडः परि ते वृणक्तु ॥
यो अग्निरग्नेस्तपसोऽधि जातश्शोकात्पृथिव्या उत वा दिवस्परि ।[10]
येन प्रजा विश्वकर्मा जजान तमग्ने[11] हेडः परि ते वृणक्तु ॥

---

[1] So alle Mss., auch W 1 ε, weswegen ich die Correctur in समित् unterlassen habe; cf. Mâitr. S. 2, 7, 17. [2] Ch वेत्रसो मख्य [3] Dies Kap. collat. auch mit Brl fol. 188. 189 und weiter unten auch mit T 5; nach diesen beiden Mss. accentuirt. [4] D समंजत्स॰ [5] So Brl, desgl. wohl auch Ch, ohne Acc.; D परिवृग्धि [6] Der Accent hinzugesetzt; in Brl व्योमन् ohne Accent. [7] Ch चित्तिनं॰ [8] Ch द्रिर्तिं [9] Ch जज्ञानीं; D जज्ञाने [10] Von hier ab auch in T 5 vorhanden; damit collat. und darnach accentuirt. [11] Brl und T 5 जजांनस्तंम॰

इमं मा हिंसीर्द्विपादं पशूनां सहस्राक्ष मेध आ चीयमानः[1] ।
मयुं पशुं मेधमग्ने जुषस्व तेन चिन्वानस्तन्वो[2] निषीद ॥
मयुं ते क्षुद्यं द्विष्मस्तं ते शुगृच्छतु ॥
इमं मा हिंसीरेकशफं पशूनां कनिक्रदं वाजिनं वाजिनेषु[3] ।
गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद[4] ॥ 5
गौरं ते क्षुद्यं द्विष्मस्तं ते शुगृच्छतु ॥
इमं साहस्रं शतधारमुत्सं व्यच्यमानं[5] सरिरस्य मध्ये ।
घृतं दुहानामदितिं जनायाग्ने मा हिंसीः परमे व्योमन्[6] ॥
गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ॥
गवयं ते क्षुद्यं द्विष्मस्तं ते शुगृच्छतु ॥ 10
इममूर्णायुं वरुणस्य नाभिं त्वचं पशूनां द्विपदां चतुष्पदाम् ।
त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हिंसीः परमे व्योमन्[7] ॥
मेषमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ॥
मेषं ते क्षुद्यं द्विष्मस्तं ते शुगृच्छतु ॥
अजो ह्यग्नेरजनिष्ट शोकात्सो अपश्यज्जनितारमग्ने । 15
तेन देवा देवतामग्रमायंस्तेन रोहमायन्नुप मेध्यासः ॥
शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ॥
शरभं ते क्षुद्यं द्विष्मस्तं ते शुगृच्छतु ॥ १७ ॥

cf. Mâitr. S. 2, 7, 17; Kap. S. 25, 8.

अपां त्वेमन्सादयाम्यपां त्वोद्मन्सादयाम्यपां त्वा भस्मनि सादया-
म्यपां त्वा ज्योतिषि[8] सादयाम्यपां त्वायने[9] सादयाम्यर्णवे त्वा सदने 20
सादयामि समुद्रे त्वा सदने सादयामि सरिरे त्वा सदने सादयाम्यपां
त्वा क्षये सादयाम्यपां त्वा सधिषि सादयाम्यपां त्वा सदने सादया-

---

[1] Ch चोयमानः [2] Brl तन्वे [3] Ch वाजिनीषु [4] Brl तन्वो षीद [5] Brl und T5 द्राच्यमानं [6] Accent hinzugesetzt; in Brl und T5 व्योमन् ohne Accent. [7] Accent hinzugesetzt; in Brl und T5 व्योमन् ohne Accent. [8] Ch ज्योतिषे [9] E त्वायनि

म्यपां त्वा सधस्थे सादयाम्यपां त्वा योनौ सादयाम्यपां त्वा पुरीषे
सादयाम्यपां त्वा पाथिषि सादयामि गायत्रेण त्वा छन्दसा सादयामि
त्रैष्टुभेन जागतेनानुष्टुभेन पाङ्क्तेन त्वा छन्दसा सादयामि ॥ १८ ॥
cf. Mâitr. S. 2, 7, 18; Kap. S. 25, 9.

अयं[1] पुरो भूस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री
5 वासन्ती गायत्र्या गायत्रं गायत्रादुपांशुरुपांशोस्त्रिवृत्त्रिवृतो रथन्तरं
वसिष्ठ[2] ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यो ऽयं
दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणं ग्रीष्मो मानसस्त्रिष्टुब् ग्रै-
ष्मी त्रिष्टुभस्स्वारं स्वारादन्तर्यामो ऽन्तर्यामात्पञ्चदशः पञ्चदशाद्बृह-
द्भरद्वाज[3] ऋषिः प्रजापतिगृहीतया त्वया मनो गृह्णामि प्रजाभ्यो
10 ऽयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाणि[4] चाक्षुषाणि जगती
वार्षी जगत्या ऋक्सममृक्समाच्छुक्रश्शुक्रात्सप्तदशस्सप्तदशाद्वैरूपं
जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्य इदमु-
त्तरात्स्वस्तस्य श्रोत्रं सौवं[5] शरच्छ्रौत्र्यनुष्टुप् शारद्यनुष्टुभ[6] ऐडमैडान्म-
न्थी मन्थिन एकविंश एकविंशाद्वैराजं विश्वामित्र ऋषिः प्रजाप-
15 तिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्य इयमुपरि मतिस्तस्या
वाङ् मात्या हेमन्तो वाच्यः[7] पङ्क्तिर्हैमन्ती पङ्क्त्या निधनवन्निधनवत
आग्रायणं आग्रायणात्त्रिणवत्रयस्त्रिंशौ त्रिणवत्रयस्त्रिंशाभ्यां शाक्वररै-
वते विश्वकर्मर्षिः प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः ॥

लोकं पृण च्छिद्रं पृणाथो सीद ध्रुवा त्वम् ।
20 इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योना असीषदन् ॥
ता अस्य सूददोहसस्सोमं श्रीणन्ति पृश्नयः ।
जन्मन्देवानां विशस्त्रिष्वा रोचने दिवः ॥ ॥ १९ ॥

cf. Mâitr. S. 2, 7, 19; Kap. S. 25, 9.

---

[1] Dies Kap. collat. auch mit T1 und Brl fol. 141; nach diesen Mss. accentuirt. [2] D वासिष्ट [3] So T1 und Brl; Ch, D भारद्वाज [4] D वर्षाणि [5] Brl सौवं [6] Ch शा° ष्टुभे [7] Brl वाच्यः

समिद्धो[1] अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः ।
आ च वह मित्रमहश्चिकित्वान्त्वं[2] दूतः कविरसि प्रचेताः ॥
तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन्स्वदया[3] सुजिह्व ।
मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा च कृणुह्यध्वरं नः ॥
आजुह्वान ईड्यो वन्द्यश्चा[4] याह्यग्ने वसुभिस्सजोषाः । 5
त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् ॥
प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् ।
व्यु[5] प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥
व्यचस्वतीरुर्विया[6] विश्रयन्तां पतिभ्यो न जनयश्शुम्भमानाः ।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः[7] ॥ 10
आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ ।
दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ॥
दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै ।
प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ॥
आ नो यज्ञं भारती तूयमेत्विडा मनुष्वदिह चेतयन्ती । 15
तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसस्सदन्तु[8] ॥
य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा ।
तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यक्षि विद्वान् ॥
उपावसृज त्मन्या समञ्जन्देवानां पाथ[9] ऋतुथा हवींषि ।
वनस्पतिश्शमिता देवो अग्निस्स्वदन्तु हव्यं मधुना घृतेन ॥ 20
सद्यो जातो व्यमिमीत[10] यज्ञमग्निर्देवानामभवत्पुरोगाः[11] ।
अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः ॥ ॥२०॥

cf. Mâitr. S. 4, 13, 3.

---

[1] Dies Kap. collat. auch mit T1 (No. 11, sehr defect) und Brl fol. 184. 185; nach diesen Mss. accentuirt. [2] D त्वान्त्स्वं [3] Brl स्वधया; Ch सुधया [4] Brl und T1 वन्द्यश्चां [5] Ch व्युँ [6] So corr. im Accent; Brl व्यचस्वतो°; in T1 fehlt das Wort. [7] Dies Wort in den Mss. ohne Acc.; Brl सुप्रयानाः; Ch प्रयणाः [8] Ch स्वदंतु [9] D देवानानाथ [10] Der Accent in diesem Wort hinzugesetzt; T1 und Brl bieten dasselbe ohne Accent. [11] Brl पुरोगः

अग्निर्होता[1] नो अध्वरे वाजी सन्परिणीयते ।
देवो देवेषु यज्ञियः ॥
परि त्रिविष्ट्यध्वरं यात्यग्नी[2] रथीरिव ।
आ देवेषु प्रयो दधत् ॥
परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ।
दधद्रत्नानि दाशुषे ॥

अजैदग्निरसनद्वाजं नि देवो देवेभ्यो हव्यावाट्[3] प्राञ्जोभिर्हिन्वानो धेनाभिः कल्पमानो यज्ञस्यायुः प्रतिरन्नुप प्रेष होतर्हव्या देवेभ्यो दैव्याश्शमितार उत च मनुष्या आरभध्वमुपनयत मेध्या दुर आशासाना मेधपतये मेधं प्रास्मा अग्निं भरत स्तृणीत[4] बर्हिरन्वेनं माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः ॥ उदीचीनां अस्य पदः[5] कृणुतात्सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं पृथिवीं शरीरमेकधास्य त्वचमाच्छ्यतात्पुरा[6] नाभ्या अपिशसो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वाच्छ्येनमस्य[7] वक्षः कृणुतात्प्रशसा बाहू शला दोषणी कश्यपेवांसाच्छिद्रे श्रोणी कवषोरुस्रे[8] कपर्णाष्ठीवन्ता षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठुयोच्यावयताद्गात्रं गात्रमस्यानूनं कृणुतादूवध्यगोहं पार्थिवं खनतादस्ना रक्षस्संसृजताद्वनिष्टुमस्य[9] मा राविष्टोरूकं[10] मन्यमाना नेद्वस्तोके तनये रविता रवदध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगो ॥

जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम् ।
हव्या जुह्वान आसनि ॥

---

[1] Dies Kap. collat. auch mit T1, T3, L und Brl fol. 41. 42; nach diesen Mss. accentuirt. [2] L यात्यग्ने; desgl. D, ohne Accent. [3] So L; T3 und Brl हव्यवाट्; T1 हव्यवाट्; desgl. Ch und D, ohne Accent; cf. Mâitr. S. 4, 13, 4. [4] L स्तृणीता; desgl. D, ohne Accent. [5] Ch अस्य पदं; D अस्यापदः [6] D कृता° [7] cf. Whitney, Gramm. § 570; Mâitr. S. 4, 13, 4 anders. [8] Ch कवषोत्यस्रे; कवषोऊँस्रे [9] D स्ना वद्यः [10] Ch ष्टोत्यकम्म°

इमं नो यज्ञममृतेषु धेहीमा हव्या जातवेदो जुषस्व ।
स्तोकानामग्ने मेदसो घृतस्य होतः प्राशान[1] प्रथमो निषद्य ॥
घृतवन्तः पावक ते स्तोकाश्श्चोतन्ति मेदसः ।
स्वधर्मन्देववीतये श्रेष्ठं नो धेहि वार्यम् ॥
तुभ्यं स्तोका घृतश्चुतो[2] ऽग्ने विप्राय सन्त्य[3] ।
ऋषिश्श्रेष्ठस्समिध्यसे यज्ञस्य प्राविता[4] भव ॥
तुभ्यं श्चोतन्त्यध्रिगो शचीवस्स्तोकासो अग्ने मेदसो घृतस्य ।
कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिर[5] ॥
ओजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे ।
श्चोतन्ति[6] ते वसो[7] स्तोका अधि त्वचि प्रति तान्देवशो विहि ॥
होता यक्षद्बृहस्पतिं छागस्य[8] वपाया मेदसो जुषतां हविर्होतर्यज होता यक्षदश्विना छागस्य वपाया मेदसो जुषेतां हविर्होतर्यज होता यक्षत्सरस्वतीं मेषृ वपाया मेदसो जुषतां[9] हविर्होतर्यज होता यक्षदिन्द्रं मेषस्य वपाया मेदसो जुषतां[10] हविर्होतर्यज ॥ २१ ॥

॥ इति श्रीयजुषि काठके चरकशाखायामिठिमिकायामग्निवीशिका नाम षोडशं स्थानकं संपूर्णम्[11] ॥

---

[1] Brl प्राशाना; D प्राशामोन [2] D घृतच्युतो; L घृतश्च्यु° [3] Brl wohl मर्त्य; doch kann im Çâradâ सन्त्य fast ebenso gut मर्त्य gelesen werden. Ch मर्त्य [4] Brl प्रविता [5] Brl und W मेधिरः; Ch und T3 मेधिरे [6] D च्योतंति; W1 श्च्योतन्ते [7] D ते वसोः; Ch तव मां; Brl und T3 ते वस [8] T3 पतिञ्छका°; Ch पतिश्छका° [9] T3 जुषेतां [10] T3 जुषेतां [11] So die Unterschrift des Kapitels in Ch; in D lautet dieselbe इत्यग्निवीशिका षोडशस्थानकं समाप्तम् ॥

ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि[1] ध्रुवं योनिमासीद साध्या ।
उख्यस्य केतुं प्रथमं जुषाणाश्विनाध्वर्यू सादयतामिह त्वा ॥
कुलायिनी घृतवती पुरंधिस्स्योने[2] सीद सदने[3] पृथिव्याः ।
अभि त्वा रुद्रा वसवो गृणन्त्विमा ब्रह्म[4] पीपिहि सौभगायाश्वि-
नाध्वर्यू सादयतामिह त्वा ॥
स्वैर्दक्षैर्दक्षपितेह सीद देवानां सुम्ने बृहते रणाय ।
पितेवैधि सूनव[5] आ सुशेवस्स्वावेशया[6] तन्वा संविशस्वाश्विना-
ध्वर्यू सादयतामिह त्वा ॥
अग्नेः पुरीषमस्यप्सो नाम तां[7] त्वा विश्वे अभिगृणन्तु देवाः ।
स्तोमपृष्ठा[8] घृतवतीह सीद प्रजावदस्मे द्रविणायजस्वाश्विनाध्वर्यू
सादयतामिह त्वा ॥
अदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धर्त्रीं विष्टम्भनीं दिशाम्[9] ॥
अधिपत्नी भुवनानामूर्मिर्द्रप्सो अपामसि ।
विश्वकर्मा त ऋषिरश्विनाध्वर्यू सादयतामिह त्वा ॥
सजूरृतुभिस्सजूर्विधाभिस्सजूर्देवैस्सजूर्देवैर्वयोनाधैरग्नये[10] त्वा वै-
श्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ सजूरृतुभिस्सजूर्विधाभि-
स्सजूर्वसुभिस्सजू रुद्रैस्सजूरादित्यैस्सजूर्विश्वैर्देवैर्वयोनाधैरग्नये[11] त्वा वै-
श्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ प्राणं मे पाहि व्यानं मे पा-
ह्यपानं मे पाहि चक्षुर्म उर्विया विभाहि[12] श्रोत्रं मे श्लोकयापः पि-
न्वौषधीर्जिन्व द्विपादव[13] चतुष्पात्पाहि दिवो वा[14] वृष्टिमेरय ॥ १ ॥

cf. Mâitr. S. 2, 8, 1. 2; Kap. S. 25, 10.

---

[1] Dies Kap. collat. auch mit St fol. 26. 27 und 87, T1, Brl fol. 70. 71 und W1; nach St, T1, Brl accentuirt. [2] St स्योने (fol. 26 und 87); Ch स्योनै [3] W1 सदनं; aber W1ε सदने [4] W1ε ब्रह्मा [5] St सुनव; desgl. D, ohne Accent. [6] Brl स्वावेशया [7] W1ε तन्त्वा [8] Brl स्तोमपृष्ठ [9] D विष्टम्भनीं-दिं°; in St von hier ab keine Accente mehr. [10] Ch नादैर° [11] Ch वयुनाधैर° [12] St वियाहि (sowohl auf fol. 27 wie fol. 87). [13] St द्विपादेव (fol. 27 und 87); W1ε द्विपदेवा; W1 द्विपदाव; Kap. S. 25, 10 द्विपादव [14] वा fehlt in Ch.

त्रियविर्वयो गायत्री छन्दो दित्यवाड् वयस्त्रिष्टुप्छन्दः पञ्चाविर्व-
यो विराट् छन्दस्त्रिवत्सो वय उष्णिहा छन्दस्तुर्यवाड् वयो ऽनुष्टुप्छन्दः
पष्ठवाड्वयो बृहती छन्द उक्षा वयः ककुप्छन्दो धेनुर्वयो जगती छन्दो
ऽनड्वान्वयः पङ्क्तिश्छन्द ऋषभो वयस्सतोबृहती छन्दो बस्तो वयो यु-
वलं छन्दो वृष्णिर्वयो विशालं छन्दो व्याघ्रो वयो ऽनाधृष्यं[1] छन्दस्सिं-
हो वयश्छदिश्छन्दः पुरुषो वयस्तन्द्रं छन्दः क्षत्रं वयो मयन्दं छन्दो
विष्टम्भो वयो ऽधिपतिश्छन्दो मूर्धा वयः प्रजापतिश्छन्दो विश्वकर्मा
वयः परमेष्ठी छन्दः ॥ २ ॥ cf. Mâitr. S. 2, 8, 2; Kap. S. 26, 1.

इन्द्राग्नी अव्यथमानामिष्टकां दृंहतं युवम् ।
पृष्ठेन द्यावापृथिवी अन्तरिक्षं च विबाधसे ॥

राड्यसि प्राची दिग्विराडसि दक्षिणा दिक्सम्राडसि प्रतीची
दिक्स्वराडस्युदीची दिगधिपत्न्यसि बृहती दिगायुर्मे पाहि प्राणं मे
पाहि व्यानं मे पाह्यपानं मे पाहि चक्षुर्मे पाहि श्रोत्रं मे पाहि मनो
मे पिन्व वाचं मे[2] जिन्वात्मानं मे पाहि ज्योतिर्मे यच्छ मा छन्दः
प्रमा छन्दः प्रतिमा छन्दो ऽस्रीवयश्छन्दः पङ्क्तिश्छन्द उष्णिहा छन्दो
ऽनुष्टुप्छन्दो विराट् छन्दो बृहती छन्दो गायत्री छन्दस्त्रिष्टुप्छन्दो ज-
गती छन्दः पृथिवी छन्दो ऽन्तरिक्षं छन्दो द्यौश्छन्दस्समा छन्दो[3] नक्ष-
त्राणि छन्दो वाक् छन्दो मनश्छन्दः कृषिश्छन्दो हिरण्यं छन्दो गौ-
श्छन्दो ऽजा[4] छन्दो ऽश्वश्छन्दो ऽग्निर्देवता वातो देवता सूर्यो देवता
चन्द्रमा देवता वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता
विश्वे देवा देवतेन्द्रो देवता वरुणो[5] देवता बृहस्पतिर्देवता मूर्धासि
राड् ध्रुवासि धरुणा धर्त्र्यसि धरण्यायुषे त्वा वर्चसे त्वा कृष्यै[6] त्वा क्षे-
माय त्वा यन्त्री राड्यन्त्र्यसि[7] यमनी ध्रुवासि धरित्रीषे त्वोर्जे त्वा रय्यै
त्वा पोषाय त्वा ॥ ३ ॥ cf. Mâitr. S. 2, 8, 3; Kap. S. 26, 2.

---

[1] Ch धृष्यश्छं° [2] Ch वाजम्मे [3] D wohl समाश्छंदो [4] Ch जाश्छंदो; D जागछन्दो [5] D वारुणो [6] So Ch; D कृषे [7] D राज्यंत्र्यसि

आशुस्त्रिवृद्भान्तः पञ्चदशो व्योमा सप्तदशः प्रतूर्तिरष्टादशस्तपो
नवदशो ऽभीवर्तस्सविंशो[1] धरुण एकविंशो वर्चो द्वाविंशस्संभरण-
स्त्रयोविंशो योनिश्चतुर्विंशो गर्भाः पञ्चविंश ओजस्त्रिणवः क्रतुरे-
कत्रिंशः प्रतिष्ठा त्रयस्त्रिंशो ब्रध्नस्य विष्टपं चतुस्त्रिंशो नाकष्षट्त्रिंशो
5 वीवर्तो[2] अष्टाचत्वारिंशो[3] धर्त्रं चतुष्टोमो ऽग्नेर्भागो ऽसि दीक्षाया
आधिपत्यं ब्रह्म स्पृतं त्रिवृत्स्तोम इन्द्रस्य भागो ऽसि विष्णोराधिप-
त्यं[4] क्षत्रं स्पृतं पञ्चदशस्तोमो नृचक्षसां भागो ऽसि धातुराधिपत्यं
जनित्रं स्पृतं सप्तदशस्तोमो मित्रस्य भागो ऽसि वरुणस्याधिपत्यं
दिवो वृष्टिर्वातस्स्पृत[5] एकविंशस्तोमो वसूनां भागो ऽसि रुद्राणा-
10 माधिपत्यं चतुष्पात्स्पृतं चतुर्विंशस्तोम आदित्यानां भागो ऽसि म-
रुतामाधिपत्यं गर्भास्स्पृताः[6] पञ्चविंशस्तोमो ऽदित्या भागो ऽसि
पूष्ण आधिपत्यमोजस्स्पृतं[7] त्रिणवस्तोमो देवस्य सवितुर्भागो ऽसि
बृहस्पतेराधिपत्यं समीचीर्दिशस्स्पृताश्चतुष्टोमस्तोमो यवानां भागो
ऽस्ययवानामाधिपत्यं[8] प्रजास्स्पृताश्चतुश्चत्वारिंशस्तोम ऋभूणां[9] भागो
15 ऽसि विश्वेषां देवानामाधिपत्यं भूतं निशान्तं त्रयस्त्रिंशस्तोमः ॥ ४ ॥
cf. Mâitr. S. 2, 8, 4. 5, Kap. S. 26, 3.

एकयास्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्त्रिभिरस्तु-
वत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत्पञ्चभिरस्तुवत भूतान्यसृ-
ज्यन्त भूतानां पतिरधिपतिरासीत्सप्तभिरस्तुवत सप्तर्षयो ऽसृज्यन्त धा-
ताधिपतिरासीन्नवभिरस्तुवत पितरो ऽसृज्यन्तादितिरधिपत्न्यासीदे-
20 कादशभिरस्तुवतार्तवा असृज्यन्तर्तवो ऽधिपतय आसंस्त्रयोदशभिर-
स्तुवत मासा असृज्यन्त संवत्सरो ऽधिपतिरासीत्पञ्चदशभिरस्तुवत
क्षत्रमसृज्यतेन्द्रो ऽधिपतिरासीत्सप्तदशभिरस्तुवत पशवो ऽसृज्यन्त बृ-
हस्पतिरधिपतिरासीन्नवदशभिरस्तुवत शूद्रार्या असृज्येतामहोरात्रे अ-

---

[1] Ch भीवंतस्स॰ [2] Ch वींवंतो [3] Ch चतुरिंशो [4] Von विष्णोर॰ bis zum folgenden भागो सि in Ch Lücke. [5] D स्रत [6] Ch स्पृतः [7] Ch स्मृतं॰ [8] D स्यायवा॰ [9] Ch ऋतूनाम्भा॰

वरिवश्छन्दो वयश्छन्दो[1] वयस्कृच्छन्दो विशालं छन्दो विष्पर्धाश्छन्द-श्छदिश्छन्दो[2] दूरोहणं छन्दस्तन्द्रं छन्दो अङ्कङ्कं छन्दः ॥ ६ ॥
cf. Mâitr. S. 2, 8, 7; Kap. S. 26, 5.

रश्मिरसि क्षयाय त्वा क्षयं जिन्व प्रेतिरसि[3] धर्मणे[4] त्वा धर्मं[5] जिन्वान्वितिरसि दिवे त्वा दिवं जिन्व संधिरस्यन्तरिक्षाय त्वान्तरिक्षं जिन्व प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्व विष्टम्भो ऽसि वृष्ट्यै त्वा वृष्टिं जिन्व प्रवास्यह्ने त्वाहर्जिन्वानुवासि रात्र्यै त्वा रात्रीं जिन्वोशिगसि वसुभ्यस्त्वा वसूञ्जिन्व प्रकेतो ऽसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्व[6] सुदितिरस्यादित्येभ्यस्त्वादित्याञ्जिन्वौजो ऽसि पितृभ्यस्त्वा पितॄञ्जिन्व तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्व पृतनाषाडसि पशुभ्यस्त्वा पशूञ्जिन्व रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वाभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्वाधिपतिरसि प्राणाय त्वा प्राणं जिन्व धरुणो ऽस्यपानाय त्वापानं जिन्व संसर्पो ऽसि चक्षुषे त्वा चक्षुर्जिन्व वयोधा असि श्रोत्राय त्वा श्रोत्रं जिन्व त्रिवृदसि त्रिवृते त्वा सवृदसि सवृते त्वा प्रवृदसि प्रवृते त्वानूवृदस्यनूवृते[7] त्वा संरोहो ऽसि विरोहो ऽसि प्ररोहो[8] ऽस्यनूरोहो[9] ऽसि वसुको ऽसि वस्यष्टिरसि वेषश्रीरसि[10] देवस्य सवितुः प्रसवे बृहस्पतये स्तुत ॥ ७ ॥ cf. Mâitr. S. 2, 8, 8; Kap. S. 26, 6.

राड्यसि प्राची दिग्वसवस्ते देवा अधिपतयो ऽग्निर्हेतीनां प्रतिधर्ता त्रिवृत्त्वा[11] स्तोमः पृथिव्यां श्रयत्वाज्यमुक्थमव्यथाय[12] स्तभ्नातु रथन्तरं साम प्रतिष्ठित्या अन्तरिक्षमृषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिस्ते[13] त्वा सर्वे संविदाना[14] नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु विराडसि दक्षि-

---

[1] D एवछंदो वरिवछंदो वयछंदो [4] So corr. Ch विष्पवाश्छंद॰ D विष्पर्धाछंद [3] Ch प्रीतिरसि [4] Ch धर्मेणा [5] D धर्मं [6] Ch रुद्रं जिन्व [7] So corr. Ch चवृते; D नवृते [8] Fehlt in Ch. [9] So Ch; D स्यनुरोहो [10] D विषश्री [11] D त्रिवृद्वा [12] So corr. Ch मुत्तमव्य॰ D मुंथमव्यं॰ [13] D तिस्त्वे [14] D संविदणो

णा दिग्रुद्रास्ते देवा अधिपतय इन्द्रो हेतीनां प्रतिधर्ता पञ्चदशस्त्वा स्तोमः पृथिव्यां श्रयतु प्रउगमुक्थमव्यथाय[1] स्तभ्नातु बृहत्साम प्रतिष्ठित्या अन्तरिक्षमृषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिस्ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु सम्राडसि प्रतीची दिगादित्यास्ते 5
देवा अधिपतयस्सोमो हेतीनां प्रतिधर्ता सप्तदशस्त्वा स्तोमः पृथिव्यां श्रयतु मरुत्वतीयमुक्थमव्यथाय[2] स्तभ्नातु वैरूपं साम प्रतिष्ठित्या अन्तरिक्षमृषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिस्ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु स्वराडस्युदीची दिङ् मरुतस्ते देवा अ- 10
धिपतयो वरुणो हेतीनां प्रतिधर्तैकविंशस्त्वा स्तोमः पृथिव्यां श्रयतु निष्केवल्यमुक्थमव्यथाय[3] स्तभ्नातु वैराजं साम प्रतिष्ठित्या अन्तरिक्षमृषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिस्ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्त्वधिपत्न्यसि[4] बृहती दिग्विश्वे ते देवा अधिपतयो 15
बृहस्पतिर्हेतीनां प्रतिधर्ता त्रिणवत्रयस्त्रिंशौ त्वा स्तोमौ पृथिव्यां श्रयतां वैश्वदेवाग्निमारुते[5] उक्थे अव्यथाय स्तभ्नीतां[6] शाक्वररैवते सामनी प्रतिष्ठित्या अन्तरिक्षमृषयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु विधर्ता चायमधिपतिस्ते त्वा सर्वे संविदाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥ ८ ॥ 20

cf. Mâitr. S. 2, 8, 9; Kap. S. 26, 7.

अयं पुरो हरिकेशस्सूर्यरश्मिस्तस्य रथकृत्सश्च[7] रथौजाश्च सेनानीग्रामण्यौ पुञ्जिगस्थला[8] च कृतस्थला चाप्सरसौ यातुधाना हेती रक्षांसि प्रहेतिस्ते नः पान्तु ते नो ऽवन्तु ते यं द्विष्मो यश्च नो द्वेष्टि

---

[1] So corr. Ch प्रतगमुक्तमवस्थाय; D प्रउगमुंथमन्यथाय [2] So corr. Ch यमुक्तमव्यथाय; D यमुंथमव्य° [3] So corr. Ch मुक्तमव्य° D मुंथमव्य° [4] Ch त्वाधि° [5] D मरुते [6] Ch स्तभ्नेतां [7] Ch रत्तक° [8] So Ch; D घञ्जिगस्थला

तमेषां जम्भे दधाम्ययं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानीग्रामण्यौ मेनका च सहजन्या चाप्सरसौ दङ्क्ष्णवः[1] पशवो हेतिः पौरुषेयो[2] वधः प्रहेतिस्ते नः पान्तु ते नो ऽवन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधाम्ययं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चा-
5 समरथश्च सेनानीग्रामण्यौ प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ व्याघ्रा हेतिस्सर्पाः प्रहेतिस्ते नः पान्तु ते नो ऽवन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधाम्ययमुत्तरात्संयद्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्यौ विश्वाची च घृताची चाप्सरसा[3] आपो हेतिर्वातः प्रहेतिस्ते नः पान्तु ते नो ऽवन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां
10 जम्भे दधाम्ययमुपर्यर्वाग्वसुस्तस्य सेनजिच्च[4] सुषेणश्च सेनानीग्राम-ण्या उर्वशी च पूर्वचित्तिश्चाप्सरसा अवस्फूर्जन्हेतिर्विद्युत्प्रहेतिस्ते नः पान्तु ते नो ऽवन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि॥ ९॥
cf. Mâitr. S. 2, 8, 10; Kap. S. 26, 8.

आयोस्त्वा सदने सादयाम्यवतश्छायायां नमस्समुद्राय नमस्समु-द्रस्य चक्षसे[5] ॥

15 प्रोथदश्वो न यवसे ऽविष्यन्यदा महस्संवरणे[6] व्यस्थात्[7]।
आदस्य वातो अनुवाति शोचिरध स्म ते व्रजनमस्तु कृष्णम्॥

प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीं विश्वस्मै प्रा-णाय व्यानायापानाय विश्वं ज्योतिर्यच्छाग्निष्टे ऽधिपतिर्विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणाय व्यानाया-
20 पानाय विश्वं ज्योतिर्यच्छ वायुष्टे ऽधिपतिः परमेष्ठी त्वा सादयतु दिवः पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणाय व्यानायापानाय विश्वं ज्योतिर्यच्छ सूर्यस्ते ऽधिपतिर्मधुश्च माधवश्च वासन्तिका ऋतू अग्ने-रन्तश्श्लेषो[8] ऽसि ॥

---

[1] Ch दत्त्णवः [2] Ch परुषेयो [3] Ch रसौ [4] Ch जिच्च [5] Ch नमस्समुद्राय नमस्समुद्राय त्व नमस्समुद्रस्य चक्षसे [6] D सहः [7] Ch विष्यन्यदा महस्संवरणे अस्यात्
[8] Ch श्म्लेष्यो

कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः ।
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः ॥
ये ऽग्नयस्समनसो ऽन्तरा द्यावापृथिवी ।
इमे वासन्तिका ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसं-
विशन्तु ॥ 5

शुक्रश्च शुचिश्च ग्रैष्मा ऋतू नभश्च नभस्यश्च वार्षिका ऋतू इष-श्चोर्जश्च शारदा ऋतू सहश्च सहस्यश्च हैमन्तिका ऋतू तपश्च तपस्यश्च शैशिरा ऋतू अग्नेरन्तश्श्लेषो ऽसि ॥
कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः ।
कल्पन्तामग्नयः पृथङ् मम ज्यैष्ठ्याय सव्रताः ॥ 10
ये ऽग्नयस्समनसो ऽन्तरा द्यावापृथिवी ।
इमे शैशिरा ऋतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु॥

सहस्रस्य प्रमासि सहस्रस्य प्रतिमासि सहस्रस्योन्मासि साहस्रो ऽसि सहस्राय त्वेमा मे[1] अग्न इष्टका धेनवस्सन्त्वेका च दश च दश च शतं च शतं च सहस्रं च सहस्रं चायुतं चायुतं च प्रयुतं च प्रयुतं च नियुतं 15 च नियुतं चार्बुदं चार्बुदं च न्यर्बुदं[2] च समुद्रश्च मध्यं चान्तश्च परार्धश्च[3] ता मे अग्न इष्टका धेनवस्सन्त्वृतवस्स्थर्तावृध ऋतुष्ठास्स्थर्तुस्पृशो घृतश्चुतो[4] मधुश्चुत[5] ऊर्जस्वतीस्स्वधायिनीर्विराजो नाम कामदुघास्ता मे अग्न इष्टका धेनवस्सन्तु ॥ १० ॥ cf. Mâitr. S. 2, 8, 12; Kap. S. 26, 9.

तत्पुरुषाय[6] विद्महे[7] महादेवाय धीमहि । 20
तन्नो रुद्रः प्रचोदयात्[8] ॥

---

[1] Ch त्वेमामामे [2] Ch चार्बुधं चार्बुधं च न्यर्बुधं [3] Ch धांश्च [4] So Ch; D घतच्युतो [5] So corr. Ch मधुश्च्युत; D मधुच्युत [6] Dies Kap. collat. auch mit T 5, T 1, Brl; nach diesen Mss. accentuirt. [7] Brl विद्महे [8] Dieser Vers ist verdächtig. Er findet sich zwar in Ch, fehlt aber in D. In T 5 wird derselbe 3 Mal nach einander gegeben, dann folgt eine halbe Seite anderer Text, ohne Accente, dann erst heisst es नमस्ते रुद्र; Brl stimmt wesentlich zu T 5, nur ist der Vers nicht 3 Mal gegeben, sondern es steht darnach eine ३, was wohl dasselbe bedeuten soll. In T 1 ist das Kap. nur fragmentarisch; der Anfang fehlt.

नमस्ते रुद्र मन्यवे बाहुभ्यामुत ते नमः ।
उतो[1] त इषवे नमः ॥
या ते रुद्र शिवा तनूरघोरापापकाशिनी[2] ।
तया नस्तन्वा शंतमया गिरिशन्ताभिचाकशीहि ॥
यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र[3] तां कुरु मा हिंसीः पुरुषं जगत् ॥
शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।
यथा नस्सर्वमिज्जगदयक्ष्मं सुमना असत् ॥
अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।
अहींश्च सर्वाञ्जम्भय सर्वाश्च यातुधान्यो ऽधराचीः परासुव ॥
असौ यस्ताम्रो अरुण उत बभ्रुस्सुमङ्गलः ।
ये चेमे रुद्रा अभितो दिक्षु श्रितास्सहस्रशो ऽवैषां हेड ईमहे ॥
असौ यो[4] ऽवसर्पति नीलग्रीवो विलोहितः ।
उतैनं गोपा अदृश्रन्नुतैनमुदहार्यः[5] ।
उतैनं विश्वा भूतानि स दृष्टो[6] मृडयाति नः ॥
नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।
अथो ये अस्य सत्वानो ऽहं तेभ्यो ऽकरं नमः ॥
प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ।
याश्च ते हस्त इषवः परा ता भगवो वप ॥
विज्यं धनुः कपर्दिनो विशल्यो बाणवानुत ।
अनेशन्नस्येषव आभूरस्य[7] निषङ्गथिः[8] ॥
या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ।
तयास्मान्विश्वतस्त्वमयक्ष्मेण परिभुज ॥

---

[1] Ch und W 1 उत [2] D und T 5 काशनी [3] T 5 गिरित [4] In den Mss. यो ohne Accent. [5] Ch und W 1 अदृश्रच॰ [6] Ch स घष्टो; T 6 wohl सं घष्टो [7] D आभुरस्य [8] T 6 रस्यं निषङ्गथिः

परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः ।
अथो य इषुधिस्तवारे अस्मन्निधेहि तम् ॥
नमाँसि त आयुधायानातताय धृष्णवे ।
उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ॥
अवतत्य धनुस्त्वं सहस्राक्ष शतेषुधे । 5
निशीर्य शल्यानां मुखं शिवो नस्सुमना भव ॥
या त इषुश्शिवतमा शिवं बभूव ते धनुः ।
शिवा शरव्या या तव तया नो मृड जीवसे ॥ ॥ ११ ॥

cf. Mâitr. S. 2, 9, 1. 2; Kap. S. 27, 1.

नमो[1] हिरण्यबाहवे सेनान्ये दिशां च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नमश्शष्पिञ्जराय त्विषीमते पथीनां 10 पतये नमो नमो बभ्लुशाय[2] व्याधिनेऽन्नानां पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो नमो भवस्य हेत्यै जगतस्पतये नमो नमो रुद्रायाततायिने क्षेत्राणां पतये नमो नमस्सूतायाहन्त्वाय[3] वनानां पतये नमो नमो रोहिताय स्थपतये वृक्षाणां पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो नमो भुवन्तये वारि- 15 वस्कृतायौषधीनां पतये नमो नम आक्रन्दयत[4] उच्चैर्घोषाय सत्वानां[5] पतये नमो नमः कृत्संवीताय[6] धावते पत्तीनां पतये नमो नमस्सहमानाय निव्याधिन आव्याधिनीनां पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानां पतये नमो नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निचराय परिचरायारण्यानां पतये नमो नमो निषङ्गिण 20 इषुधिमते तस्कराणां पतये नमो नमस्सृकायिभ्यो जिघांसद्भ्यो मु-

---

[1] Dies Kap. collat. auch mit T 5, T 1, Brl, W 1; nach T 5, T 1, Brl accentuirt. [2] D भभ्लुषाय [3] Ch und D सूतायहन्त्वाय; Kap. S. 27, 2 सूतायाहंत्वाय [4] T 5 wohl आक्रन्दायत; so Ch, ohne Accent; Kap. S. 27, 2 आक्रंदयते [5] Brl सत्वानां; T 5 सत्वाना; cf. Mâitr. S. 2, 9, 3; das Richtige wohl TS 4, 5, 2 सत्वनां; Kap. S. 27, 2 liest सत्वनानां [6] Kap. S. कक्षविताय; Mâitr. S. und TS कृत्स्न-वीताय

मुष्णतां पतये नमो नमो ऽसिमद्भ्यो[1] नक्तं चरद्भ्यः प्रकृन्तानां पतये नमो नम उष्णीषिणे गिरिचराय कुलुञ्चानां[2] पतये नमः ॥ १२ ॥

cf. Mâitr. S. 2, 9, 3; Kap. S. 27, 3.

नम[3] इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्यो[4] ऽस्यद्भ्यश्च वो नमो नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो नमस्स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमश्शयानेभ्य आसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नमस्सभाभ्यस्सभापतिभ्यश्च वो नमो नमो ऽश्वेभ्यो ऽश्वपतिभ्यश्च[5] वो नमो नम आव्याधिनीभ्यो[6] विविध्यद्भ्यश्च वो नमो नम उगणाभ्यस्तृंहतीभ्यश्च[7] वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमः कृच्छ्रेभ्यः कृच्छ्रपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमस्सेनाभ्यस्सेनानीभ्यश्च वो नमो नमो रथिभ्यो वरूथिभ्यश्च[8] वो नमो नमो महद्भ्यो[9] ऽर्भकेभ्यश्च वो नमो नमो युवभ्य आशिनेभ्यश्च[10] वो नमो नमः क्षत्तृभ्यस्संग्रहीतृभ्यश्च वो नमो नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः[11] कर्मारेभ्यश्च वो नमो नमः पुञ्जिष्ठेभ्यो निषादेभ्यश्च वो नमो नमश्श्वनिभ्यो मृगयुभ्यश्च वो नमो नमश्श्वभ्यश्श्वपतिभ्यश्च वो नमो नमो भवाय च रुद्राय च नमश्शर्वाय च पशुपतये च नमो नीलग्रीवाय च शितिकण्ठाय च नमो व्युप्तकेशाय च कपर्दिने च नमस्सहस्राक्षाय च[12] शतधन्वने च ॥ १३ ॥

cf. Mâitr. S. 2, 9, 4. 5; Kap. S. 27, 3.

---

[1] Brl नमस्सिमद्भ्यो [2] Ch कुलं° [3] Dies Kap. collat. mit T 5, T 1, Brl fol. 100, W 1; accentuirt nach T 5, T 1, Brl. [4] Von hier an bis धावद्भ्यश्च Lücke in T 5. [5] T 1 und Brl नमो श्वेभ्यो श्वपतिभ्यश्च [6] Ch धिनेभ्यो [7] So Ch (ohne Accent); T 1, T 5, Brl स्त्रिंहती°; desgl. D und W 1, ohne Accent. [8] Brl रथेभ्यो वरूथेभ्यश्च; Kap. S. 27, 3 रथिभ्यो विरूथिभ्यश्च [9] Von hier wieder Lücke in T 5; bei कर्मारेभ्यश्च beginnt der Text wieder. [10] So T 1 und Brl, desgl. D, ohne Accent; Ch आसिने°; W 1 आशीने° [11] Ch कुरारेभ्यः [12] Dies च fehlt in Ch und D.

नमो[1] गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च सवृध्वने[2] च नमो ऽग्र्याय च प्रथमाय च नम आशवे चाजिराय च नमश्शीभ्याय च शीघ्र्याय च नम ऊर्म्याय चावस्वन्याय[3] च नमो नाद्याय च द्वीप्याय च नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो बुध्न्याय च जघन्याय च नमस्सोभ्याय च प्रतिसर्याय च नम आशुषेणाय चाशुरथाय च नमो बिल्मिने च कवचिने च नमो वर्मिणे च वरूथिने च नमश्शूराय चावभेदिने च नमश्श्रुताय च श्रुतसेनाय च नमो याम्याय च क्षेम्याय च नम उर्वर्याय च खल्याय च नमश्श्लोक्याय चावसान्याय[4] च नमश्श्रवाय च प्रतिश्रवाय च नमो वन्याय च कक्ष्याय च नमो दुन्दुभ्याय चाहनन्याय[5] च नमो धृष्णवे च प्रमृशाय[6] च नमो निषङ्गिणे चेषुधिमते च नमस्तीक्ष्णेषवे चायुधिने च नमस्स्वायुधाय च सुधन्वने च ॥ १४ ॥ cf. Mâitr. S. 2, 9, 5—7; Kap. S. 27, 4.

नमस्सृत्याय[7] च पथ्याय[8] च नमः काट्याय च नीप्याय च नमो नाद्याय च वैशन्ताय च नमः कुल्याय च सरस्याय च नमः कूप्याय चावट्याय च नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च विद्युत्याय च नमो वीध्र्याय चातप्याय च नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च नमस्सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमश्शंगवे च पशुपतये च नम उग्राय च भीमाय च नमो हन्त्रे च हनीयसे च नमो ऽग्रेवधाय च दूरेवधाय च

[1] Dies Kap. collat. mit T 5, T 1, Brl fol. 100, W 1; nach T 5, T 1, Brl accentuirt. [2] Mss. सवृध्वने; D सवध्वेन; Kap. S. 27, 4 सुवृध्वने [3] Brl चावसन्याय; Kap. S. 27, 4 चावस्विन्याय [4] Brl und W 1 चावसन्याय; Kap. S. 27, 4 चावसान्याय [5] Ch und W 1 चहनन्याय; Kap. S. 27, 4 चाहनन्याय [6] T 1 und Brl प्रमशाय; Kap. S. 27, 4 प्रमशाय [7] Dies Kap. collat. auch mit T 1, T 5, St, Brl fol. 100, W 1; accentuirt nach T 1, T 5, Brl, St; die meisten Zeichen des echten Svarita auch in D und Ch vorhanden. [8] Von hier bis शंभवे Lücke in T 5.

नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्तारायं नमश्शंभवे च मयोभवे च नमश्शंकराय च मयस्करांय च नमश्शिवाय च शिवतराय च नमः किंशिलाय च क्षयणाय च नम इरिण्याय च प्रपथ्याय च नमः पुलस्तिने च कपर्दिने च नमो गोष्ठ्याय च गृह्याय च नमस्तल्प्याय
5 च गेह्याय[1] च नमः पार्याय चावार्याय[2] च नमः प्रतरणाय चोत्तरणाय च नमस्तीर्थ्याय[3] च कूल्याय च नमः फेन्याय च शष्प्याय च नमस्सिकत्याय[4] च प्रवाह्याय च नमो हृदय्याय च निवेष्याय[5] च नमः काट्याय च गह्वरेष्ठाय च नमश्शुष्क्याय च हरित्याय[6] च नमो लोप्याय चोलप्याय च नमः पांसव्याय च रजस्याय च नमस्सूर्म्याय
10 चोर्म्याय च नमः पर्ण्याय च पर्णशदाय च नम आखिदते च प्रखिदते च नमोऽभिघ्नते चापगुरमाणाय च नम आखिदाय च विखिदाय च ॥ १५ ॥ cf. Mâitr. S. 2, 9, 6—8; Kap. S. 27, 5.

नमो[7] वः किरिकेभ्यो देवानां हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षीणकेभ्यो नम आनिर्हतेभ्यः ॥

15 द्रापे अन्धसस्पते दरिद्र नीललोहित ।
आसां प्रजानामेषां पुरुषाणामेषां पशूनाम् ।
मा भेर्मा रोङ्[8] मा नः किञ्चनाममत् ॥
इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः ।
यथा नश्शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥
20 या ते रुद्र शिवा तनूश्शिवा विश्वाह भेषजी ।
शिवा रुतस्य भेषजी तया नो मृड जीवसे ॥
परि णो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड ॥

---

[1] T1 गेह्याय [2] Ch चावर्याय [3] So acc. in T1, Brl, St; dagegen T5 तीर्थ्याय [4] Brl सिकत्याय [5] W1 निविष्याय; D निवेष्याय [6] D हरेत्याय [7] Dies Kap. collat. auch mit T1, T5, Brl fol. 101. 102, St, W1; accentuirt nach T1, T5, Brl, St. [8] Brl रायमा

मीढुष्टम शिवतम[1] शिवो नस्सुमना भव ।
परमे वृक्ष आयुधं निधाय कृत्तिं वसान उच्चर पिनाकं बिभ्रदुच्चर ॥
विकिरिड विलोहित नमस्ते अस्तु भगवः ।
यास्ते सहस्रं हेतयो ऽन्ये ऽस्मन्निवपन्तु ताः ॥
सहस्रधा सहस्राणि हेतयस्तव बाह्वोः ।
तासामीशानो भगवः पराचीना मुखा कुरु ॥
असंख्याता सहस्राणि ये रुद्रा अधि भूम्याम् ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये ऽस्मिन्महत्यर्णवे ऽन्तरिक्षे भवा अधि ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये नीलग्रीवाश्शितिकण्ठा दिवं[2] रुद्रा उपश्रिताः ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये नीलग्रीवाश्शितिकण्ठाश्शर्वा अधः क्षमाचराः[3] ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये वनेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये ऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये भूतानामधिपतयो विशिखासः[4] कपर्दिनः ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
ये पथीनां पथिरक्षय ऐडमृदा[5] यव्युधः[6] ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥

---

[1] St मीढुष्टमश्शिवतमश्शिवो; T5 शिवतमश्शिवो; desgl. W1 und D, ohne Acc.; Kap. S. 27, 6 मीढुष्टम शिवतम शिवो; cf. Mâitr. S. 2, 9, 9; TS 4, 5, 10, 4. [2] T1 दिवे [3] St क्षमाचरः [4] Ch खासाः [5] St एडमृदा [6] So T1, T5, Brl, St, Ch; W1 यव्यूधः; D wohl यव्युधुः; Kap. S. 27, 6 ईलमृडा यवंधः

ये तीर्थानि[1] प्रचरन्ति सृकावन्तो निषङ्गिणः ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥
य एतावन्तो वा भूयांसो वा दिशो रुद्रा वितस्थिरे ।
तेषां सहस्रयोजने ऽव धन्वानि तन्मसि ॥

नमो अस्तु[2] रुद्रेभ्यो ये दिवि येषां वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि । नमो अस्तु रुद्रेभ्यो ये ऽन्तरिक्षे येषां वात इषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि । नमो अस्तु रुद्रेभ्यो ये पृथिव्यां[3] येषामन्नमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमो अस्तु ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥ १६ ॥

cf. Mâitr. S. 2, 9, 9; Kap. S. 27, 9.

अश्मन्नूर्जं[4] पर्वते[5] शिश्रियाणामद्भ्य ओषधीभ्यो वनस्पतिभ्यो ऽधि संभृताम् ।
तां न ऊर्जं धत्त मरुतस्संरराणा[6] अश्मन्ते क्षुद्यं द्विष्मस्तं ते शुगृच्छतु ॥
समुद्रस्य त्वावकयाग्ने परिव्ययामसि ।
अन्यांस्ते असंतपन्तु[7] हेतयः पावको[8] अस्मभ्यं शिवो भव ॥
हिमस्य त्वा जरायुणाग्ने परिव्ययामसि ।
अन्यांस्ते असंतपन्तु हेतयः पावको अस्मभ्यं शिवो भव ॥

---

[1] W 1 तीतानि [2] St lässt das अस्तु aus. [3] Ch व्यां [4] Dies Kap. collat. mit Brl fol. 187 und W 1; accentuirt nach Brl. [5] Acc. corr.; in Brl पर्वते [6] Acc. ergänzt; Brl संरराणा ohne Accent; Ch सैर° [7] Acc. ergänzt; Brl असमत° ohne Acc. [8] Acc. corr.; Brl पावको (aber पावको im folg. Verse).

उप ज्मन्नुप[1] वेतसे[2] ऽवतर नदीष्वा।
अग्ने पित्तमपामसि मण्डूकि ताभिरागहि।
सेमं नो यज्ञं[3] पावकवर्णं शिवं कृधि॥
अपामिदं न्ययनं समुद्रस्य विमोचनम्।
अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भव॥ 5
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया।
आ देवान्वक्षि यक्षि च॥
पावकया यश्चितयन्त्या[4] कृपा क्षामा रुरुच उषसो न केतुना[5]।
तुरो न यामन्नेतशस्य नू रण[6] आ यो[7] घृणे[8] न ततृषाणो अजरः॥
नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे। 10
अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भव॥
नृषदे वेड्ढनृषदे[9] वेडप्सुषदे वेड् बर्हिषदे वेट् स्वर्विदे वेट्॥
ये देवा देवानां यज्ञिया यज्ञियानां संवत्सरीणमुप[10] भागमासते।
अहुतादो[11] हविषो यज्ञे अस्मिन्स्वयं पिबन्तु मधुनो घृतस्य॥
ये देवा देवेभ्यो अधि देवत्वमायन्ये ब्रह्मणः पुरएतारो अस्य। 15
येभ्यो नर्ते पवते धाम किंचन न ते दिवो न पृथिव्या अधि स्नुषु॥
प्राणदा व्यानदा अपानदा वर्चोदा वरिवोदाः।
अन्यांस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यं शिवो भव॥ ॥१७॥
cf. Mâitr. S. 2, 9, 9; Kap. S. 28, 1.

स आ नो योनिं सदतु प्रेष्ठो बृहस्पतिर्विश्ववारो यो अस्ति।
कामो रायस्सुवीर्यस्य तं दात्पर्षन्नो[12] अति सश्चतो अरिष्टान्॥ 20

---

[1] Brl ज्मंन्नुप; desgl. D, ohne Accent; Kap. S. 28, 1 ज्मन्नुप [2] Brl वतेसे [3] Die Mss. machen hier die Versabtheilung. [4] Ch यच्चेत° [5] Acc. corr.; Brl केतुना [6] Ch रणे [7] Acc. ergänzt; यो in Brl ohne Acc. [8] Kap. S. 28, 1 liest गृणे, wie die Samhitâ-Mss. der Mâitr. S. [9] So Ch und W 1, ohne Acc.; Brl वेत्स्वनृषदे, desgl. D, ohne Acc. [10] Brl संवत्सरीणमप [11] Von hier an bis zum Schluss des Kap. in Brl keine Accente. [12] So corr. Ch दात्पर्षन्नो; D दात्पर्षंतो; cf. RV 7, 97, 4.

तं शग्मासो अरुषासो अश्वा बृहस्पतिं सहवाहो वहन्ति ।
सहश्चिद्यस्य नीलवत्सधस्थं नभो न रूपमरुषं वसानाः ॥
बृहस्पतिः प्रथमं जायमानः ॥
तमा नो अर्कममृताय जुष्टमिमे धासुरमृतासः[1] पुराजाः ।
5 शुचिक्रन्दं यजतं पस्त्यानां बृहस्पतिमनर्वाणं हुवेम ॥
स हि शुचिश्शतपत्रस्स शुन्ध्युर्हिरण्यवाशीरिषिरस्स्वर्षाः ।
बृहस्पतिस्स स्वावेश ऋष्वः[2] पुरू सखिभ्य आसुतिं करिष्ठः ॥
एवा पित्रे विश्वदेवाय[3] वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।
बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ॥
10 प्र वां दंसांस्यश्विना अवोचमस्य पतिस्स्यां सुगवस्सुवीरः ।
उत पश्यन्नश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणं जगम्याम् ॥
अतारिष्म तमसस्पारमस्य प्रति स्तोमं देवयन्तो दधानाः ।
पुरुदंसा पुरुतमा पुराजामर्त्या हवते अश्विना गीः ॥
यो ह स्य वां रथिरा वस्त उस्रा रथो युजानः परियाति वर्तिः ।
15 तेन नश्शं योरुषसो व्युष्टौ न्यश्विना वहतं यज्ञे अस्मिन् ॥
त्रिबन्धुरेण त्रिवृता रथेन त्रिचक्रेण सुवृता यातमर्वाक् ।
पिन्वतं गा जिन्वतमर्वतो नो वर्धयतमश्विना वीरमस्मे ॥
सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे[4] तायमाने ।
सरस्वतीं सुकृतो अह्वयन्त सरस्वती दाशुषे वार्यं दात् ॥
20 सरस्वत्यभि नो नेषि वस्यो मापस्फरीः पयसा मा न आधक् ।
जुषस्व नस्सख्या वेश्या च मा त्वत्क्षेत्राण्यरणानि गन्म[5] ॥
इमा जुह्वाना ॥
पावीरवी कन्या चित्रायुस्सरस्वती वीरपत्नी[6] धियं धात् ।
माभिरच्छिद्रं[7] शरणं सजोषा दुराधर्षं गृणते शर्म यंसत् ॥

---

[1] Ch धासु° [2] D वेस दष्वः [3] Ch विश्वे देवाय [4] Ch मधुरे [5] So W 1; Ch गमं; D घमं [6] D स्वतं वीरपत्नं [7] Ch श्छिद्रो

इन्द्रस्सुत्रामा । तस्य वयम् ॥
त्रातारमिन्द्रमवितारमिन्द्रँ हवे हवे सुहवँ शूरमिन्द्रम् ।
ह्वयामि शक्रं पुरुहूतमिन्द्रँ स्वस्ति नो मघवा धात्विन्द्रः ॥
उग्रो जज्ञे वीर्याय स्वधावाञ्चक्रिरपो नर्यो यत्करिष्यन् ।
जग्मिर्युवा नृषदनमवोभिस्त्राता न इन्द्र एनसो महश्चित् ॥ 5
अध स्मा ते चर्षणयो यदेजानिन्द्र त्रातोत भवा वरूता ।
अस्माकासो ये नृतमासो अर्य इन्द्र सूरयो दधिरे पुरो नः ॥
स्वस्तये वाजिभिश्च प्रणेतः ॥ १८ ॥
युवँ सुराममश्विना नमुचा आसुरे सचा ।
विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् ॥ 10
होता यक्षदश्विना सरस्वतीमिन्द्रँ सुत्रामाणँ सोमानँ सुराम्णां
जुषन्तां व्यन्तु पिबन्तु सोमान्सुराम्णो होतर्यज ॥
पुत्रमिव पितरा अश्विनोभेन्द्रावतं काव्यैर्दँसनाभिः ।
यत्सुरामं व्यपिबश्शचीभिस्सरस्वती त्वा मघवन्नभिष्णक् ॥
आ देवो यातु सविता सुरत्नो ऽन्तरिक्षप्रा वहमानो अश्वैः । 15
हस्ते दधानो नर्या पुरूणि निवेशयञ्च प्रसुवञ्च भूम ॥
अस्मभ्यं तद्दिवो अद्भ्यः पृथिव्यास्त्वया दत्तं काम्यं राध आगात् ।
शं यत्स्तोतृभ्य आपये भवात्युरुशँसाय सवितर्जरित्रे ॥
एवा वन्दस्व वरुणं बृहन्तं नमस्या[1] धीरममृतस्य गोपाम् ।
स नश्शर्म त्रिवरूथं वियँसत्पातं नो द्यावापृथिवी उपस्थे ॥ 20
तत्त्वायामि ॥
यदत्र शिष्टं रसिनस्सुतस्य यस्येन्द्रो अपिबच्छचीभिः ।
तेनाहमद्य मनसा सुतस्य सोमं राजानमिह भक्षयामि ॥
इषिरेण[2] ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः ।
अहानीव सूर्यो वासराणि प्रा ण आयुर्जीवसे सोम तारीः ॥ 25

---

[1] Ch बृहंतमस्या [2] D इर्षो°

नाना हि देवैश्चकृषे सदो वां मा संसृक्षाथां परमे व्योमन् ।
सुरा त्वमसि शुष्मिणी सोम एष मा मा हिंसिष्टं यत्स्वं
योनिमाविशाथः ॥

त्वं सोम सुरया संविदानः प्रजामन्यः क्षत्रमन्यः पिपर्तु ।
5 युवं नो अद्य वरिवः कृणुतं[1] वयं स्याम पतयो रयीणाम् ॥
इन्द्राग्नी मैतं निर्ह्वेयां[2] यं सोमं पपिमा वयम् ।
इहैषो[3] अस्तु भक्षितश्शिवश्शिवाभिरूतिभिः ॥
द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वं भुवनं समेति यदन्तरा पितरं मातरं च ॥
10 यस्ते[4] राजन्वरुण द्रुहः पाशो गायत्रच्छन्दाः[5] पृथिवीमन्वाविवेश ब्रह्मणि प्रतिष्ठितस्तं त एतदवयजे तस्मै स्वाहा यस्ते राजन्वरुण द्रुहः पाशस्त्रिष्टुप्छन्दा अन्तरिक्षमन्वाविवेश क्षत्रे प्रतिष्ठितस्तं त एतदवयजे तस्मै स्वाहा यस्ते राजन्वरुण द्रुहः पाशो जगच्छन्दा दिवमन्वाविवेश विशि प्रतिष्ठितस्तं त एतदवयजे तस्मै स्वाहा यस्ते राजन्व-
15 रुण द्रुहः पाशो ऽनुष्टुप्छन्दा दिशो ऽन्वाविवेश पशुषु प्रतिष्ठितस्तं त एतदवयजे तस्मै स्वाहा ॥ १९ ॥

इति श्रीमद्यजुषि काठके चरकशाखायामिठिमिकायां ध्रुवक्षितिर्नाम सप्तादशं स्थानकं संपूर्णम्[6] ॥

---

[1] D कृणोतो [2] Ch मैतचिर्ह्वेयां; D मैतन्विर्ह्वेयां [3] D इहैषां [4] Von यस्ते bis स्वाहा in Ch 2 Mal, offenbar irrig. [5] So corr. Ch गायत्रश्छंदाः; D गायत्रं छन्द [6] So die Unterschrift dieses Kapitels in Ch; in D lautet dieselbe इति ध्रुवक्षितिस्थानकं सप्तादशम् ॥

अग्निस्तिग्मेन[1] शोचिषा यंसद्विश्वं न्यत्रिणम् ।
अग्निर्नो वंसते रयिम् ॥
य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः ।
स आशिषा द्रविणमिच्छमानः परमच्छदवरां आविवेश[2] ॥
विश्वकर्मा विमना[3] यो व्योमा[4] धाता विधाता परमो न संवृक्[5] ।
स नो महानि समिषो महन्ता यत्र सप्तर्षीन्पर एकमाहुः[6] ॥
त आयजन्त द्रविणा समस्मा ऋषयः पूर्वे जनिमानि भूना ।
असूर्ता सूर्ते[7] रजसि[8] न सत्ता[9] ये भूतानि समकृण्वन्नि-
मानि ॥
यो नः पिता जनिता यो विधाता यो नस्सतो अभ्या सज्जि-
नाय ।
यो देवानां नामधा एको अस्ति तं संप्रश्नं भुवना यन्त्यन्या ॥
न तं विदाथ य इदं जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप[10] उक्थशासश्चरन्ति ॥
विश्वकर्मा चेदजनिष्ट देव[11] आदिद्गन्धर्वो अभवद्द्वितीयः ।
तृतीयः पिता जनितौषधीनामपां[12] गर्भं व्यदधात्पुरुत्रा ॥
परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति ।
कं[13] स्विद्गर्भं प्रथमं दध्र आपो यत्र देवास्समपश्यन्त विश्वे ॥
तमिद्गर्भं प्रथमं दध्र आपो यत्र देवास्समपश्यन्त विश्वे ।
अजस्य नाभा अध्येकमर्पितं तचेद[14] विश्वं भुवनमधि श्रितम् ॥ ॥१॥

cf. Mâitr. S. 2, 10, 2; Kap. S. 28, 2.

---

[1] Dies Kap. collat. mit T 1 und W 1; accentuirt nach T 1. [2] Ch वेशा [3] Ch विमाना [4] Acc. ergänzt; in T 1 व्योमा ohne Accent. Kap. S. 28, 2 auch विमना यो व्योमा [5] So die Mss. Kap. S. 28, 2 परमोत संदृक् [6] Ch एकमाहुः [7] Ch अमूर्ता मूर्ते; Kap. S. 28, 2 असूर्ताःसूर्ते [8] D राजसि [9] D सत्त; T 1 bloss स [10] Ch तृप्यत [11] T 1 देवो [12] Ch मापां [13] T 1 viell. किं? [14] Ch und W 1 कमार्पि उक्ततेदं

चक्षुषः[1] पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने[2] ।
यदिद्[3] द्यावापृथिवी अप्रथेतामादिदन्ता[4] अदृहन्त पूर्वे ॥
किं स्विद्वनं क उ स[5] वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि[6] धारयन् ॥
5 किं स्विदासीदारम्भणमधिष्ठानं कतमत्स्वित्कथासीत् ।
यदिद्भूमिं जनयन्विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः ॥
यो विश्वचक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् ।
सं बाहुभ्यां नमते सं यजत्रैर्द्यावापृथिवी जनयन्देव एकः ॥
या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा ।
10 शिक्षा[7] सखिभ्यो हविषा स्वधावस्स्वयं यजस्व तन्वं जुषाणः ॥
विश्वकर्मन्हविषा वावृधानस्स्वयं यजस्व तन्वं स्वाहिते[8] ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥
विश्वकर्मन्हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम्[9] ।
तस्मै विशस्समनमन्त पूर्वीरयमुग्रो विहव्यो[10] यथासत् ॥
15 वाचस्पतिं विश्वकर्माणमूतये मनोयुजं वाजे[11] अद्याहुवेम ।
स नो नेदिष्ठा हवनान्यागमद्विश्वशंभूरवसे साधुकर्मा ॥ ॥ २ ॥

cf. Mâitr. S. 2, 10, 2. 3; Kap. S. 28, 2.

उदेनमुत्तरां[12] नयाग्ने घृतेनाहुतः ।
रायस्पोषेण संसृज प्रजया च बहुं कृधि ॥
इन्द्रेमं प्रतरं कृधि[13] सजातानामसद्वशी ।
20 समेनं वर्चसा सृज देवेभ्यो भागदा असत् ॥

---

[1] Dies Kap. collat. auch mit T1 und W1; accentuirt nach T1. [2] T1 अजनन्नचमाने; desgl. W1, ohne Accent; in Ch fehlen diese Worte. [3] Ch यदि [4] Ch मादैदंता [5] Ch स्विद्धनं कतम वृच [6] D एकतेदु तं यद°; Ch एकतेदुदध्यतिष्ट° [7] D शिखा [8] Acc. corr.; T1 स्वाहिते; Kap. S. 28, 2 तन्वां स्वाहिते [9] Ch रवध्यम; D रवद्यम् [10] W1 व्ययहव्यो [11] D वाज [12] Dies Kap. collat. auch mit T1 und W1; accent. nach T1; Mss. रांचयाग्ने, resp. so ohne Acc. [13] Von hier bis सृज Lücke in T1; Accent ergänzt.

यस्य कुर्मो गृहे हविरग्ने तं[1] वर्धया त्वम् ।
तस्मै देवा अधिब्रुवन्नयं च ब्रह्मणस्पतिः ॥
उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः ।
स नो भव शिवस्त्वं सुप्रतीको विभावसुः ॥
पञ्च दिशो दैवीर्यज्ञमवन्तु[2] देवीरपामतिं दुर्मतिं बाधमानाः ।
रायस्पोषे यज्ञपतिमाभजन्ती रायस्पोषे अधि यज्ञो अस्थात् ॥
समिद्धे[3] अग्ना अधि मामहान उक्थपत्र[4] ईड्यो गृभीतः ।
तप्तं घर्मं परिगृह्यायजन्तोर्जा यद्यज्ञमशमन्त देवाः ॥
दैव्याय धर्त्रे[5] जोष्ट्रे देवश्रीश्श्रीमनाश्शतपात्परिगृह्य यज्ञमयान् ॥
हरिकेशस्सूर्यरश्मिः पुरस्तात्सविता ज्योतिरुदयानजस्रम् ।
तस्य पूषा प्रसवे याति देवस्संपश्यन्विश्वा भुवनानि गोपाः ॥
देवा देवेभ्यो अध्वरीयन्तो अस्थुर्वीतं शमितं शमिता यजध्यै ।
तुरीयो यज्ञो यत्र हव्यमेति ततो वाका आशिषो नो जुषन्ताम् ॥
विमान एष दिवो मध्य आस्त आपप्रिवान्रोदसी[6] अन्तरिक्षम् ।
स विश्वाची अभिचष्टे घृताची अन्तरा पूर्वमपरं च केतुम् ॥
उक्षा समुद्रे[7] अरुणस्सुपर्णः पूर्वस्य योनिं पितुराविवेश ।
मध्ये दिवो निहितः पृश्निरश्मा विचक्रमे रजसः पात्यन्तौ ॥
इन्द्रं विश्वा अवीवृधन्समुद्रव्यचसं गिरः ।
रथीतमं[8] रथीनां वाजानां सत्पतिं पतिम् ॥
सुम्नहूर्यज्ञ[9] आ च वक्षत् । यक्षदग्निर्देवो देवाँ आ च वक्षत् ॥
वाजस्य मा प्रसवेनोद्ग्राभेणोदजीगृभम् ।
अथा सपत्नाँ[10] इन्द्रो मे निग्राभेणाधराँ[11] अकः ॥

---

[1] So corr.; die Mss. त्वं, resp. so ohne Accent. Kap. S. 28, 3 रग्ने वर्धया त्वं तस्मै । [2] D देवीर्यज्ञपतिमाभजन्तीः रा° (also Lücke). [3] W 1 समिद्धो [4] Ch उक्तपत्र; D उक्तपत्र [5] D देव्याय धंत्रो [6] Von दिवो bis रोदसी Lücke in T 1; daher der Accent ergänzt. [7] W 1 समुद्र; Kap. S. 28, 3 समुद्रो [8] Ch und W 1 तमे [9] So T 1; desgl. D und W 1, ohne Accent; Ch सुम्नहूर्यज्ञ; Kap. S. 28, 3 सुम्नहूर्यज्ञा [10] D सपर्य [11] D भेणादर्यां

उद्ग्राभंश्च निग्राभंश्च ब्रह्म देवा अवीवृधत् ।
अथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् ॥ ॥ ३ ॥

cf. Mâitr. S. 2, 10, 4. 5; Kap. S. 28, 3.

क्रमध्वमग्निना[1] नाकमुख्यं हस्तेषु बिभ्रतः ।
दिवः पृष्ठं स्वर्गत्वा मिश्रा देवेभिराध्वम् ॥
प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्ने भवेह ।
विश्वा आशा दीद्यद्विभाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ॥
पृथिव्या अहमुदन्तरिक्षमारुहमन्तरिक्षाद्दिवमारुहम्[2] ।
दिवो नाकस्य पृष्ठात्स्वर्ज्योतिरगामहम् ॥
स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी ।
10 यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे ॥
अग्ने प्रेहि प्रथमो देवायतां[3] चक्षुर्देवानामुत मर्त्यानाम् ।
इयक्षमाणा भृगुभिस्सजोषास्स्वर्यन्तु[4] यजमानास्स्वस्ति[5] ॥
नक्तोषासा समनसा विरूपे धापयेते शिशुमेकं समीची ।
द्यावाक्षामा रुक्मो अन्तर्विभाति देवा अग्निं धारयन्द्रविणोदाः ॥
15 अग्ने सहस्राक्ष शतमूर्धञ्छततेजश्शतं[6] ते प्राणास्सहस्रं व्यानाः ।
त्वं साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय स्वाहा । सुपर्णो[7]ऽसि गरुत्मान् । पृष्ठे पृथिव्यास्सीद भासान्तरिक्षमापृण ज्योतिषा दिवमुत्तभान[8] । तेजसा दिश उद्दृंह[9] ॥
आजुह्वानस्सुप्रतीकः पुरस्तादग्ने स्वं योनिमासीद साध्या ।
20 अस्मिन्सधस्थे अध्युत्तरस्मिन्विश्वे[10] देवा यजमानश्च सीदत ॥

---

[1] Dies Kap. collat. auch mit T 1 und W 1. accentuirt nach T 1. [2] Von दिवमारुहम् bis रोहन्ति im folg. Verse in T 1 abgebrochen; Accent ergänzt. [3] W 1 देवयताञ्च°; Kap. S. 28, 4 auch देवयतां; cf. oben 2, 9 देवायतें; 3, 5 देवयते; unten 18, 20 दवयंन्तो und ईमहे देवयन्तः ॥ [4] T 1 स्वयन्तो [5] T 1 यजमानस्स्व°; so auch Ch und W 1, ohne Accent. [6] Ch शततेज [7] Accent corr. T 1 सुपर्णो [8] D मुत्स्तभान [9] Ch दिशा तदृंह [10] Ch अध्यत्त°

तां सवितुर्वरेण्यस्य चित्रामाहं[1] वृणे सुमतिं विश्वजन्याम् ।
यामस्य[2] कण्वो[3] अदुहत्प्रपीनां सहस्रधारां पयसा महीं गाम् ॥
अग्ने विधेम ते परमे जन्मन्विधेम स्तोमैरवरे सधस्थे ।
यस्माद्योनेरुदारिथ यजा तं[4] प्र त्वे हवींषि जुहुमस्समिद्धे[5] [6] ॥
प्रेद्धो अग्ने दीदिहि पुरो[7] नो[8] ऽजस्रया सूर्म्या यविष्ठ । 5
त्वां शश्वन्त उपयन्ति वाजाः ॥
सप्त ते अग्ने समिधस्सप्त जिह्वास्सप्तर्षयस्सप्त धाम प्रियाणि ।
सप्त होत्रा अनुविद्वान्सप्त योनीरापृणस्वा[9] घृतेन ॥ ॥ ४ ॥

cf. Mâitr. S. 2, 10, 6; Kap. S. 28, 4.

आशुश्शिशानो[10] वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रन्दनो ऽनिमिष एकवीरश्शतं सेना अजयत्साकमिन्द्रः ॥ 10
संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन[11] धृष्णुना ।
तदिन्द्रेण जयत तत्सहध्वं[12] युधो नर इषुहस्तेन वृष्णा ॥
स इषुहस्तैस्स निषङ्गिभिर्वशी संस्रष्टा स युध इन्द्रो गणेन ।
संसृष्टजित्सोमपा बाहुशर्ध्यूर्ध्वधन्वा[13] प्रतिहिताभिरस्ता ॥
बृहस्पते परिदीया रथेन रक्षोहामित्राँ अपबाधमानः । 15
प्रभञ्जन्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥
बलविज्ञायस्स्थविरः प्रवीरस्सहस्वान्वाजी सहमान उग्रः ।
अभिवीरो अभिषत्वा सहोजिज्जैत्रायणो[14] रथमातिष्ठ गोवित् ॥
गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्मा प्रमृणन्तमोजसा ।
इमं सजाता अनुवीरयध्वमिन्द्रं[15] सखायमनु संव्ययध्वम् ॥ 20

---

[1] Ch माह; W 1 मोहं [2] D यमस्य [3] Ch कयवे [4] W 1 त्वम्म [5] Acc. corr. T 1 जुहुम [6] Kap. S. 28, 4 यस्माद्योनेरुदाहृता यजे तं प्र त्वे हवींषि जुहुमत्स-मिध्वे ॥ [7] D पुरा [8] Ch णो [9] T 1 योनीर°; desgl. Ch und W 1, ohne Accent. [10] Dies Kap. collat. auch mit St, T 1, Brl fol. 105, W 1; accentuirt nach St, T 1, Brl. [11] D युत्करेण दुःश्यवनेन [12] Ch उत्सहध्वं [13] Ch शर्ध्यूर्ध्व° [14] T 1 und Brl जैत्रायनो; desgl. D, ohne Accent; Kap. S. 28, 5 जैत्रमिंद्र रथमा° [15] St मिन्द्र; desgl. W 1 und Ch, ohne Accent.

अभि गोत्राणि[1] सहसा गाहमानोऽदयो वीरश्शतमन्युरिन्द्रः ।
दुश्च्यवनः[2] पृतनाषाडयुध्यो[3]ऽस्माकं सेना अवतु प्र युत्सु ॥
इन्द्र एषां नेता बृहस्पतिर्दक्षिणा[4] यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्तु मध्ये ॥
5 इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां[5] शर्ध उग्रम् ।
महामनसां भुवनच्यवानां[6] घोषो[7] देवानां जयतामुदस्थात् ॥
अस्माकमिन्द्रस्समृतेषु[8] ध्वजेष्वस्माकं या इषवस्ता जयन्तु ।
अस्माकं वीरा उत्तरे भवन्त्वस्मानु[9] देवा अवता भरेष्वा ॥ ॥ ५ ॥
cf. Mâitr. S. 2, 10, 4; Kap. S. 28, 5.

शुक्रज्योतिश्च[10] चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च सत्यश्च-
10 तपाश्चात्यंहा[11] ईदृङ् चान्यादृङ् च सदृङ् च प्रतिसदृङ् च मितश्च
संमितश्च सभरा[12] ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्ता च विधर्ता च
विधारयं ऋतजिच्च[13] सत्यजिच्च सेनजिच्च[14] सुषेणश्चान्तिमित्रश्च दूरे-
अमित्रश्च गण ईदृक्षास एतादृक्षास ऊ षु णस्सदृक्षासः प्रतिसदृक्षास
एतन मितासश्च संमितासो नो अद्य सभरसो मरुतो यज्ञे अस्मि-
15 न्निन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानो यथेन्द्रं दैवीर्विशो मरुतोऽनु-
वर्त्मानोऽभवन्नेवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो
भवन्तु ॥ ६ ॥ cf. Mâitr. S. 2, 11, 1; Kap. S. 28, 6.

वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसृतिश्च मे धीतिश्च मे क्रतुश्च

---

[1] St गोत्राणि [2] St दुश्च्यवनाः; desgl. W 1, ohne Accent; D दुःश्चयवनः [3] Ch योध्यो; cf. Mâitr. S. 2, 10, 4. [4] St, T 1, Brl दक्षिणो; desgl. D und wohl auch Ch, ohne Accent; nur W 1 दक्षिणा; cf. aber RV 10, 103, 8. [5] Ch मरुतो [6] St भुवनस्यमानां; Ch भुवनस्यवानां [7] Ch गोषु [8] Kap. S. 28, 5 समिथेषु [9] D त्वास्मानु; W 1 त्वस्माकं नु [10] Dies Kap. und folgende coll. auch mit St, T 1, Brl fol. 106, W 1; accentuirt nach St, T 1, Brl. [11] Ch श्चात्तपाश्चात्यंहा; D श्चतपाश्चात्यंहा; W 1 श्चतपश्चत्यंहा; Brl चातपाश्चान्यंहा [12] Ch सभारा; Kap. S. 28, 6 संभाराः [13] Ch und D जिश्च [14] Ch und D beide Mal जिश्च

मे स्वरश्च मे श्लोकश्च[1] मे श्रावश्च[2] मे श्रुतिश्च मे ज्योतिश्च मे स्वश्च
मे प्राणश्च मे व्यानश्च मेऽपानश्च मेऽसुश्च[3] मे चित्तं च म आधीतं
च मे वाक् च मे मनश्च मे चक्षुश्च[4] मे श्रोत्रं च मे दक्षश्च[5] मे बलं[6] च
म ओजश्च मे सहश्च म आत्मा च मे तनूश्च मे शर्म च मे वर्म च मे
ऽङ्गानि च मेऽस्थानि च मे परूंषि च मे शरीराणि च म आयुश्च मे 5
जरा च मे ज्यैष्ठ्यं[7] च म आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च[8]
मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे
वर्ष्मा च मे द्राघ्वा[9] च मे वृद्धं च मे वृद्धिश्च मे ॥ ७ ॥
cf. Mâitr. S. 2, 11, 2; Kap. S. 28, 7.

सत्यं च मे श्रद्धा च मे जगच्च मे धनं[10] च मे क्रीडा च मे मोदश्च
मे वशश्च मे त्विषिश्च[11] मे सूक्तं च मे सुकृतं च मे जातं च मे जनि- 10
ष्यमाणं च मे वित्तं च मे वेद्यं[12] च मे भूतं च मे भविष्यच्च[13] मे सुगं
च मे सुपथं च म ऋद्धं[14] च म[15] ऋद्धिश्च मे कॢप्तं च मे कॢप्तिश्च मे
मतिश्च मे सुमतिश्च मे शं च मे मयश्च मे प्रियं च मेऽनुकामश्च मे
कामश्च मे सौमनसश्च मे भगश्च मे द्रविणं च मे भद्रं च मे श्रेयश्च मे
वस्यश्च मे यशश्च मे यन्ता च मे धर्ता च मे क्षेमश्च[16] मे धृतिश्च मे 15
संविच्च[17] मे ज्ञात्रं[18] च मे विश्वं च मे महश्च मे सूश्च मे प्रसूश्च मे
सीरं[19] च मे लायश्च[20] मे ॥ ८ ॥ cf. Mâitr. S. 2, 11, 3; Kap. S. 28, 8.

ऋतं च मेऽमृतं च मेऽयक्ष्मं च मेऽनामयच्च[21] मे जीवातुश्च मे
दीर्घायुत्वं च मेऽनमित्रं च मेऽभयं च मे सुगं च मे शयनं च[22] मे

---

[1] W 1 श्लोकाश्च [2] W 1 श्रवश्च [3] St मे स्वश्च; desgl. D und W 1, ohne Accent. [4] W 1 चक्षञ्च [5] W 1 चक्षुश्च [6] Ch बलश्च [7] Ch und W 1 ज्येष्टञ्च [8] Ch समश्च [9] So T 1, Brl und St; desgl. D und wohl auch W 1 (undeutlich); Ch द्रघ्वा; Kap. S. 28, 7 द्राघीमा [10] Ch धनश्च [11] T 1 und Brl त्विंषश्च [12] Brl विंद्यञ्च [13] Ch und D भ्यश्च; W 1 भ्यञ्च [14] St वृद्धंञ्च [15] Ch beide Mal vor dem ऋ मे für म [16] W 1 क्षेमाश्च [17] Ch und D संविश्च [18] St ज्ञांतञ्च [19] Ch सीरश्च [20] Kap. S. 28, 8 ललायश्च [21] D und Ch नामयश्च [22] Ch सुगश्च मे शयनश्च

सूषाश्च[1] मे सुदिनं च म ऊर्क्[2] च मे सूनृता[3] च मे पयश्च मे रसश्च
मे घृतं च मे मधु[4] च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टिश्च
मे जैत्रं च म[5] औद्भिदं च मे रयिश्च मे रायश्च मे पुष्टं च मे पुष्टिश्च
मे ॥ विभु च मे प्रभु[6] च मे पूर्णं च मे पूर्णतरं च मे कुयवं च मे
5 ऽक्षितिश्च मे ऽन्नं च मे ऽक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे
तिलाश्च मे नीवाराश्च मे श्यामाकाश्च मे ऽणवश्च मे प्रियङ्गवश्च मे
गोधूमाश्च मे मसूराश्च[7] मे मुद्गाश्च मे खल्वाश्च मे ॥ ९ ॥
cf. Mâitr. S. 2, 11, 4; Kap. S. 28, 9.

अश्मा[8] च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च
मे वनस्पतयश्च मे हिरण्यं च मे ऽयश्च मे सीसं[9] च मे त्रपु च मे
10 श्यामं च मे लोहितायसं[10] च मे ऽग्निश्च म आपश्च मे वीरुधश्च म
ओषधयश्च मे कृष्टपच्यं च मे ऽकृष्टपच्यं च मे ग्राम्याश्च मे पशव आर-
ण्याश्च मे वित्तं च मे वित्तिश्च मे भूतं च मे भूतिश्च मे वसु[11] च मे
वसतिश्च मे कर्म च मे शक्तिश्च मे ऽर्थश्च[12] म एमश्च[13] म इत्या च मे
गतिश्च मे ऽग्निश्च[14] म इन्द्रश्च मे सोमश्च म इन्द्रश्च मे सविता च म
15 इन्द्रश्च मे सरस्वती च म इन्द्रश्च मे पूषा च म इन्द्रश्च मे बृहस्पतिश्च
म इन्द्रश्च मे मित्रश्च म इन्द्रश्च मे वरुणश्च म इन्द्रश्च मे धाता च म
इन्द्रश्च मे त्वष्टा च म इन्द्रश्च मे मरुतश्च म इन्द्रश्च मे विश्वे च मे देवा
इन्द्रश्च[15] मे पृथिवी च म इन्द्रश्च मे ऽन्तरिक्षं च म इन्द्रश्च[15] मे द्यौश्च
म इन्द्रश्च[15] मे समाश्च[16] म इन्द्रश्च[17] मे नक्षत्राणि च म इन्द्रश्च मे दिशश्च
20 म इन्द्रश्च[17] मे ॥ १० ॥ cf. Mâitr. S. 2, 11, 5; Kap. S. 28, 10.

---

[1] So St, T1, Brl; D und Ch सुषाश्च; W1 सूषश्च; Kap. S. 28, 9 सूषा च
[2] D ऋक्
[3] W1 सूनृताश्च
[4] St मधुश्च; desgl. W1, ohne Accent.
[5] D मे
[6] W1 विभुश्च मे प्रभुश्च
[7] Ch मुसूराश्च
[8] Dies Kap. collat. auch mit T1, St, Brl fol. 107, W1; accentuirt nach T1, St, Brl.
[9] Ch सीसश्च
[10] W1 लोहितायश्च; Ch तायसश्च
[11] Ch und W1 वसुश्च
[12] Ch ऊश्च
[13] St एमाश्च
[14] St अग्निंश्च
[15] Ch इंद्राश्च
[16] So T1, St und Brl; desgl. D, ohne Acc.; W1 सोमश्च; Ch समा च (wie in Mâitr. S.); Kap. S. 28, 10 auch समाश्च
[17] Ch इंद्राश्च

अंशुश्च मे रश्मिश्च मेऽदाभ्यश्च मेऽधिपतिश्च म[1] उपांशुश्च मे
ऽन्तर्यामश्च म[1] ऐन्द्रवायवश्च मे मैत्रावरुणश्च म आश्विनश्च मे प्रति-
प्रस्थानश्च[2] मे शुक्रश्च मे मन्थी च म[3] आग्रयणश्च मे क्षुल्लकवैश्वदे-
वश्च[4] मे ध्रुवश्च मे वैश्वानरश्च म ऐन्द्राग्नश्च मे वैश्वदेवश्च मे मरुत्वती-
यश्च मे महेन्द्रीयश्च[5] मे सावित्रश्च मे सारस्वतश्च मे पात्नीवतश्च मे
हारियोजनश्च मे स्रुचश्च मे चमसाश्च[6] मे वायव्यानि च मे द्रोणकल-
शश्च[7] मे पूतभृच्च मेऽपूतभृच्च[8] मे ग्रावाणश्च मेऽधिषवणे च मेऽव-
भृथश्च मे स्वगाकारश्च[9] मेऽग्निश्च[10] मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे
प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च
मे शक्करीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्तां व्रतं चर्तुश्च[11] संवत्सरश्च
तपश्चाहोरात्रे ऊर्वष्ठीवे बृहद्रथन्तरे[12] च मे यज्ञेन कल्पेताम्[13] ॥ ११ ॥

cf. Mâitr. S. 2, 11, 5. 6; Kap. S. 28, 11.

त्र्यविश्च[14] मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे
पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा[15] च मे तुर्यवाट्
च मे तुर्यौही च मे पष्ठवाट् च मे पष्ठौही च म[16] उक्षा च मे वशा
च मेऽनड्वांश्च[17] मे धेनुश्च म[18] ऋषभश्च मे वेहच्च[19] म एका च मे
तिस्रश्च[20] मे तिस्रश्च मे त्रयस्त्रिंशच्च मे चतस्रश्च मेऽष्टौ च मेऽष्टौ च
मेऽष्टाचत्वारिंशच्च[21] मे ॥ वाजश्च प्रसवश्चापिजश्च क्रतुश्च वाकपतिश्च
वसुश्च स्वर्मौर्ध्नौ[22] मूर्धा[23] वैयशनौ व्यश्वौ[24] आन्त्यौ ऽन्त्यो[25] भौवनौ भु-

---

[1] Ch मे [2] St प्रतिप्रस्थानाश्च [3] D und St मे [4] D देवाश्च [5] St und Brl माहेन्द्रीयश्च [6] Brl चमसश्च; desgl. W 1, ohne Accent; D चमसा च [7] St कलशाश्च [8] D und Ch beide Mal भृश्च [9] St स्वगाकारश्च [10] W 1 ॥ अग्निश्च [11] St चतोश्च [12] Ch थंतरं [13] W 1 कल्पताम् [14] Dies Kap. collat. auch mit St, T 1, Brl fol. 107. 108, W 1; accentuirt nach St, T 1, Brl. [15] St त्रिवत्साश्च मे त्रिवत्सा [16] Brl und D मे [17] D नड्वी च; Ch नड्वांश्च; W 1 नड्वोश्च [18] D मे [19] Ch und D वेहश्च [20] तिस्रश्च मे zwei Mal nach einander in St, T 1, Brl; desgl. W 1, ohne Accent; auch Kap. S. 29, 1 die Wiederholung; in Ch u. D nur ein Mal. [21] Ch und D रिंशश्च [22] Ch स्वामौर्ध्नो; D स्वर्मौर्ध्नो [23] St मूर्ध्नो [24] Accent ergänzt; in den Mss. व्यश्वौ ohne Accent; cf. aber oben 14, 1. Auch Kap. S. 29, 1 findet sich व्यश्वां [25] St आन्त्यौ न्त्यौ

वनस्य पतिः[1] प्रजापतिरियं ते[2] राण्मित्रो यन्तासि यमन ऊर्जे[3] त्वा
वृष्ट्यै त्वा प्रजानां त्वाधिपत्यायायुर्यज्ञेन कल्पतां मनो यज्ञेन कल्पतां
प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पतां श्रोत्रं यज्ञेन कल्पतां वाग्य-
ज्ञेन कल्पतामात्मा यज्ञेन कल्पतां ब्रह्मा[4] यज्ञेन कल्पतां पृष्ठं यज्ञेन
5 कल्पतां यज्ञो यज्ञेन कल्पतामृक् च साम च स्तोमश्च यजुश्च बृहच्च[5]
रथन्तरं च स्वर्देवा[6] अगन्म प्रजापतेः[7] प्रजा अभूवन्नमृता अभूम वेट्
स्वाहा ॥ १२ ॥ cf. Mâitr. S. 2, 11, 6; Kap. S. 29, 1.

वाजस्य[8] नु प्रसव इति षट् ॥
विश्वे अद्य मरुतो विश्व ऊती[9] विश्वे भवन्त्वग्नयस्समिद्धाः ।
10 विश्वे मा देवा अवसागमन्निह विश्वमस्तु द्रविणं वाजे अस्मिन् ॥
आ मा वाजस्य वाजस्य नु ॥
वाजो मा सप्त प्रदिशश्चतस्रो वा परावतः ।
वाजो[10] मा विश्वैर्देवैर्धनसाता[11] इहावतु ॥
वाजो मे अद्य प्रसुवाति दानं वाजो देवान्हविषा वर्धयाति ।
15 वाजस्य हि प्रसवे नन्नमीति विश्वा आशा वाजपतिर्जयेयम् ॥
वाजः पुरस्तादुत मध्यतो नो वाजो देवानृतुभिः कल्पयाति ।
वाजस्य हि प्रसवे नन्नमीति सर्वा आशा वाजपतिर्भवेयम् ॥
सं मा सृजामि पयसा पृथिव्यास्सं मा सृजाम्यद्भिरोषधीभिः ।
सो ऽहं वाजं सनाम्यग्ने ॥
20 पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे[12] पयो धाः ।
पयस्वतीः प्रदिशस्सन्तु मह्यम् ॥ ॥ १३ ॥
cf. Mâitr. S. 2, 12, 1; Kap. S. 29, 2.

---

[1] D भुवनस्पतिः; Kap. S. 29, 1 भुवनस्पति [2] T 1, St, Brl तिरियन्ते; desgl. W 1, ohne Accent; D तिरियं ते; nur Ch तिरयं ते; Kap. 29, 1 प्रजापतिरधिपतिर्यं ते राड्; VS 18, 28 इयं ते राण् [3] Ch यमनूर्जे [4] W 1 ब्रह्म [5] Ch und D बृहच्च [6] T 1 und Brl स्वर्देवा [7] St प्रजापतिः [8] Dies Kap. collat. auch mit T 1, Brl fol. 108, W 1; accentuirt nach T 1 und Brl. [9] T 1 und Brl ऊतीर्विश्वे [10] D वातो [11] Ch वैभनसा° [12] W 1 रिक्षं

ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयो[1] ऽप्सरसो मुदा[2] नाम स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट् ताभ्यस्स्वाहा वट् सुषुम्णस्सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयो नाम स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट् ताभ्यस्स्वाहा वट् संहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयो ऽप्सरस आयुवो नाम स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट् ताभ्यस्स्वाहा वड् भुज्युस्सुपर्णो[3] यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्स्तवा[4] नाम स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट् ताभ्यस्स्वाहा वट् प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यर्क्सामान्यप्सरस एष्टयो[5] नाम स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट् ताभ्यस्स्वाहा वडिषिरो[6] विश्वव्यचा वातो गन्धर्वस्तस्यापो ऽप्सरस ऊर्जो नाम स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वट् ताभ्यस्स्वाहा वट् ॥ स नो भुवनस्य पते यस्य त उपरि गृहा विराट्पते ॥ अस्मै ब्रह्मणे ऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा[7] ॥ समुद्रो ऽसि नभस्वानार्द्रदानुश्शंभुर्मयोभूरभि[8] मा वाहि स्वाहा मारुतो ऽसि मरुतां गणश्शंभुर्मयोभूरभि मा वाहि स्वाहावस्युरसि दुवस्वाञ्छंभुर्मयोभूरभि[9] मा वाहि स्वाहा ॥ १४ ॥ cf. Mâitr. S. 2, 12, 2. 3; Kap. S. 29, 3.

अग्निं युनज्मि शवसा घृतेन दिव्यं सुपर्णं वयसा बृहन्तम् ।
तेन वयं पतेम ब्रध्नस्य विष्टपं स्वो रुहाणा अधि नाक उत्तमे ॥
इमौ ते पक्षा अजरौ पतत्रिणो याभ्यां[10] रक्षांस्यपहंस्यग्ने ।
ताभ्यां वयं पतेम सुकृतामु लोकं यत्रर्षयो जग्मुः प्रथमाः पुराणाः ॥

---

1 Dies Kap. collationirt mit und accentuirt nach T 1, T 7 und Brl; doch weicht in diesen Ṛcaka-Mss. die Reihenfolge der Mantras von dem vorliegenden Texte ab (vgl. meine Abhandlung „Die Tübinger Katha-Handschriften" etc. in den Sitz.-Ber. der kais. Akad. d. Wiss. in Wien, Bd. CXXXVII (1898) p. 28).
2 D मुद; Kap. S. 29, 3 मुदो
3 D स्वपर्णो
4 T 7 fol. 10 und Brl fol. 23 अप्सरसस्तवा; desgl. D, ohne Accent.
5 T 1, T 7, Brl इष्टयो; Kap. S. 29, 3 एष्टयो
6 Brl वट् ॥ इषिरो; Ch वडिशिरो
7 Hier brechen die Ṛcaka-Mss. ab, daher das Weitere ohne Accente.
8 D शंभूः; weiter aber, wie in Ch durchweg, शंभु
9 Ch दुवस्वंछ°; D दुवस्वाञ्छंभु°
10 Ch याभ्यौ

इन्दुर्दक्षश्श्येन ऋतावा हिरण्यपक्षश्शकुनो भुरण्युः[1] ।
महान्सधस्थे ध्रुव आ निषत्तो नमस्ते अस्तु मा मा हिंसीः ॥
दिवो मूर्धासि पृथिव्या नाभिरूर्गपामोषधीनाम् ।
विश्वायुश्शर्म सप्रथा नमस्पथे[2] विश्वस्य मूर्धन्नधितिष्ठसि श्रितः ॥
5 समुद्रे ते हृदयमन्तरायुरद्भो देह्युदधिं भिन्धि ।
दिवः पर्जन्यादन्तरिक्षात्पृथिव्यास्ततो मा वृष्ट्यावा ॥ ॥ १५ ॥

cf. Mâitr. S. 2, 12, 3; Kap. S. 29, 4.

समास्त्वाग्न ऋतवो वर्धयन्तु संवत्सरा ऋषयो यानि सत्या ।
सं दिव्येन दीदिहि रोचनेन विश्वा आभाहि प्रदिशः पृथिव्याः ॥
सं चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय ।
10 मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशसस्सन्तु[3] मान्ये ॥
त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने संवरणे भवा नः ।
सपत्नहाग्ने अभिमातिजित्स्वे गये[4] जागृह्यप्रयुच्छन् ॥
इहैवाग्ने अधिधारया रयिं मा त्वा निक्रन्पूर्वचितो निकारिणः ।
क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः[5] ॥
15 क्षत्रेणाग्ने स्वेन संरभस्व मित्रेणाग्ने मित्रधेये यतस्व ।
सजातानां मध्यमेष्ठेयाय राज्ञामग्ने विहव्यो दीदिहीह ॥
अति निहो अति स्रिधो अत्यचित्तिमति निर्ऋतिमद्य ।
विश्वा ह्यग्ने दुरिता तर त्वमथास्मभ्यं सहवीरं रयिं दाः ॥
अनाधृष्यो जातवेदा अनिष्टृतो[6] विराडग्ने क्षत्रभृद्दीदिहीह ।
20 विश्वा अमीवाः प्रमुञ्चन्मानुषेभ्यश्शिवेभिरद्य परिपाहि नो वृधे ॥
अमुत्रभूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः ।
प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥

---

[1] Ch शक्तुनो भुरण्यः [2] Ch नामः पथे [3] Ch यशस्संतु [4] D स्वे रये [5] So corr. Ch अनिष्टुतः; D अनिष्ट्यतः [6] So Ch; D अनिष्ट्यतः

उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥
बृहस्पते सवितर्बोधयैनं संशितं चित्संतरां संशिशाधि ।
वर्धयैनं महते सौभगाय विश्व एनमनुमदन्तु देवाः ॥
क्षत्रभृदग्निरनिभृष्टतेजास्सहस्रियो द्योततामिध्यमानः । 5
वर्ष्मन्पृथिव्या अधि जातवेदा उदन्तरिक्षमारुहद्गन्द्याम् ॥ ॥ १६ ॥

cf. Mâitr. S. 2, 12, 5; Kap. S. 29, 4.

ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचींष्यग्नेः ।
द्युमत्तमा सुप्रतीकस्य सूनोः ॥
तनूनपादसुरो विश्ववेदा देवो देवेषु देवः ।
पथो अनक्ति मध्वा घृतेन मध्वा यज्ञं नक्षति[1] प्रीणानः[2] ॥ 10
नराशंसो अग्ने सुकृद्देवस्सविता विश्ववारः ।
अच्छायं यन्ति शवसा घृताचीः ॥
ईडाना[3] वह्निं नमसाग्निं स्रुचो[4] अध्वरेषु[5] प्रयत्सु ।
स यक्षदस्य महिमानमग्नेः ॥
स्तनी मन्द्रस्सुप्रयस्तुः[6] । 15
वसुश्चेतिष्ठो वसुधातमश्च ॥
द्वारो देवीरन्वस्य विश्वा व्रता ददन्ते अग्नेः ।
उरुव्यचसो धाम्ना पत्यमानाः ॥
ते अस्य योषणे दिव्यो न योनिरुषासानक्तामग्नेः ।
इमं यज्ञमवतामध्वरं नः ॥ 20
दैव्या होतारोर्ध्वमिममध्वरं नोऽग्नेर्जिह्वयाभिगृणीतम्[7] ।
कृणुतं नस्स्विष्टम् ॥

---

[1] Ch यज्ञञ्चक्षति; Kap. S. 29, 5 यज्ञं नक्षति; D यज्ञं रक्षति [2] D प्रचीणानः [3] Ch ईडना [4] Ch स्रुचो [5] Von ध्वरेषु bis मन्द्र Lücke in Ch. [6] Kap. S. 29, 5 स यंन्मन्द्रा सुप्रयसः [7] D ग्निर्जिह्वया°; so auch Kap. S. 29, 5.

तिस्रो देवीर्बर्हिरेदं सदन्त्विडा सरस्वती भारती महीर्गृणाना:[1] ॥
तन्नस्तुरीपमद्भुतं पुरुक्षु ।
त्वष्टः पोषाय[2] विष्य नाभिमस्मे ॥
वनस्पतेऽवसृज रराणस्त्मना देवेषु ।
5 अग्निर्हविश्शमिता सूदयाति ॥
अग्ने स्वाहा कृणुहि जातवेद इन्द्राय हव्यम् ।
विश्वे देवा हविरिदं जुषन्ताम् ॥ ॥ १७ ॥

cf. Mâitr. S. 2, 12, 6; Kap. S. 29, 5.

येनर्षयस्तपसा सत्रमासतेन्धाना अग्निं स्वराभरन्तः ।
तस्मिन्नहं निदधे नाके अग्निं यमाहुर्मनवस्तीर्णबर्हिषम्[3] ॥
10 तं पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः ।
नाकं गृह्णानास्सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥
आ वाचो मध्यमरुहद्भुरण्युरयमग्निस्सत्पतिश्चेकितानः[4] ।
पृष्ठे पृथिव्या निहितो[5] दविद्युतदधस्पदं कृणुतां ये पृतन्यवः ॥
अयमग्निर्वीरतमो वयोधास्सहस्रियो द्योततामप्रयुच्छन् ।
15 विभ्राजमानस्सरिरस्य मध्य उपप्रयाहि दिव्यानि धामन्[6] ॥
संप्रच्यवध्वमुप संप्रयाताग्ने पथो देवयानान्कृणुध्वम् ।
पुनः कृण्वन्ता पितरा युवानान्वातांसीत्त्वयि तन्तुमेतम् ॥
उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते संसृजेथामयं[7] च ।
अस्मिन्सधस्थे अध्युत्तरस्मिन्विश्वे देवा यजमानश्च सीदत ॥
20 येन सहस्रं वहसि येनाग्ने सर्ववेदसम् ।
तेनेमं[8] यज्ञं नो वह स्वर्देवेषु गन्तवे[9] ॥

---

[1] Ch गृणानः [2] Ch पूषाय [3] Ch स्तीर्णं [4] Ch ण्यरयत्पतिस्सत्य° [5] Ch निहिते [6] So die Mss.! so auch Mâitr. S.; aber Kap. S. 29, 6 धाम [7] Ch संसृजेसंसृजेथामयं [8] Ch तेनेमं [9] Ch गन्तवे

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥
इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्वा[1] अथर्वभिः ।
इष्टो अग्निराहुतस्स्वाहाकृतः पिपर्तु नः ।
इष्टं हविस्स्वगेदं देवेभ्यो[2] नमः ॥ ॥ १८ ॥ 5

cf. Mâitr. S. 2, 12, 4; Kap. S. 29, 6.

जुह्वं संमार्ष्टि यज्ञमुखं वै जुहूर्यज्ञमुखमेवालभते जुह्वा वै देवा विराजमह्वयंस्तज्जुह्वा जुहूत्वमग्निर्वै विराडग्निमेवैतद्विराजं ह्वयति छन्दांसि वै देवेभ्यो ऽपाक्रामन्यज्ञे भागधेयमिच्छमानानि न वो भागधेयानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुर्गृहीतं[3] प्रायच्छन्ननुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुर्गृहीतेन[4] जुहोति छन्दांस्येव भाग- 10 धेयवन्ति करोति सावित्राणि जुहोति प्रसूत्या एति वा एतद्यज्ञमुखाद्यदनाग्नेयमग्रे यज्ञस्य क्रियते यदष्टौ[5] कृत्वो गृहीत्वाष्टा एतानि जुहोत्यष्टाक्षरा गायत्री गायत्रो ऽग्निस्तेन यज्ञमुखान्नैति प्रसूत्यै सावित्राणि युञ्जते मन इति मनस्वन्ति मनो ह्यग्रे युज्यते मनसा यज्ञस्तायते ऽग्निर्ज्योतिरिति ज्योतिष्मत्सविता वा एतत्पृथिव्या ज्योतिस्सम- 15 भरद्यद्देवास्याच न्यक्तं तदेतेन संभरति षड्ऋचो भवन्ति षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति[6] द्वे यजुषी द्विपाद्यजमानः प्रतिष्ठित्यै यदि कामयेत देवतां यज्ञयशसेनाहुत्यार्पयेयमित्यृचमन्ततः कुर्याद्देवतामेव यज्ञयशसेनाहुत्यार्पयति यदि कामयेत यजमानं यज्ञयशसेनाहुत्यार्पयेयमिति यजुरन्ततः कुर्याद्यजमानमेव यज्ञयशसेनाहुत्यार्पयत्यृचा[7] स्तोमं 20 समर्धयेति समृद्ध्यै गायत्रेण रथन्तरं बृहद्गायत्रवर्तनीतीयं वै रथन्तर-

---

[1] So corr.; die Mss. यतिभिः आशीर्वा; cf. aber oben 5, 4. [2] Ch स्वगेदन्दे°
[3] So corr. Mss. एतच्च° [4] So corr. Mss. यच्च° [5] Ch यदिष्टौ [6] Ch तिष्ठंति
[7] So corr. Ch त्यृच; D भ्यृचा

मसौ बृहद्भस्या[1] आहुत्या वा अभिक्रममन्वभिक्रम्य[2] यजमानो वसी-
यान्भवत्याहुत्या अपक्रममन्वपक्रम्य पापीयान्भवति सकृत्सर्वाण्यनुद्रु-
त्योत्तमेन[3] जुहुयादाहुत्या एवाभिक्रममन्वभिक्रामति वसीयान्भव-
त्येकैकेन जुहुयाद्यदि कामयेत सदृङ् यजमानस्स्यादिति यजूंष्येव ना-
5 ना वीर्याणि करोत्यष्टा एतानि भवन्त्याहुतिर्नवमी त्रिवृतमेव यज्ञ-
मुखं संपादयति त्रिवृद्धि यज्ञमुखमूर्ध्वस्तिष्ठञ्जुहोत्यूर्ध्वो हि तिष्ठन्वीर्या-
वत्तरः पूर्णया स्रुचा जुहोति पूर्णः प्रजापतिः प्रजापतिमेवाप्नो-
ति ॥ १९ ॥ cf. Mâitr. S. 3, 1, 1; Kap. S. 29, 7.

त्वं[4] ह्यग्ने[5] प्रथमो मनोतास्या धियो अभवो दस्म[6] होता ।
10 त्वं सीं वृषन्नकृणोर्दुष्टरीतु[7] सहो विश्वस्मै सहसे सहध्यै ॥
अधा होता न्यसीदो यजीयानिडस्पद[8] इषयन्नीड्यस्सन्[9] ।
तं त्वा नरः प्रथमं देवयन्तो महो[10] राये[11] चितयन्तो अनुग्मन् ॥
वृतेव यन्तं बहुभिर्वसव्यैस्त्वे रयिं जागृवांसो अनुग्मन्[12] ।
रुशन्तमग्निं दर्शतं बृहन्तं वपावन्तं विश्वहा दीदिवांसम् ॥
15 पदं[13] देवस्य नमसा व्यन्तश्श्रवस्यवश्श्रव आपन्नमृक्तम् ।
नामानि चिद्दधिरे[14] यज्ञियानि भद्रायां ते रणयन्त संदृष्टौ[15] ॥
त्वां[16] वर्धन्ति क्षितयः पृथिव्यां त्वां[17] राय उभयासो जनानाम् ।
त्वं त्राता तरणे चेत्यो भूः पिता माता सदमिन्मानुषाणाम्[18] ॥
सपर्येण्यस्स प्रियो विक्ष्वग्निर्होता मन्द्रो निषसादा यजीयान् ।
20 तं त्वा वयं दम आ दीदिवांसमुप ज्ञुबाधो[19] नमसा सदेम[20] ॥

---

[1] So Ch; D बृहद्दृष्ट्या; desgl. Kap. S. 29, 7. [2] Ch वाभिक्र [3] So corr. D नुहुत्यो° Ch नुहुत्यु°; ebenso nah, vielleicht noch näher läge die Corr. in नूहुत्यो°; beachte aber Mâitr. S. 3, 1, 1 शयनुद्रुत्य [4] Dies Kap. collat. mit Brl fol. 165 und darnach accentuirt. [5] Accent ergänzt; in Brl ह्यग्ने ohne Accent. [6] So corr. Ch अभवदस्म; D अभवो दस्र [7] Ch न्युष्टरो [8] Brl निडस्पदं; D चिरस्पद [9] D ज्यस्सन् [10] D सहो [11] Brl रायो; D रये [12] D अन्वगमन् [13] Ch मदन्देवस्य [14] Ch चेद्द° [15] Ch सन्मष्टो [16] Ch त्वां; D त्वा [17] Ch त्वां [18] So Brl; desgl. Ch, ohne Accent; D मनुष्याणाम् [19] So corr. Ch ज्ञुर्बाधो; D ज्ञोबाधो; Brl ज्ञुबांधे [20] Ch मदेम

तं त्वा वयं सुध्यो नव्यमग्ने सुम्नायव ईमहे देवयन्तः ।
त्वं विशो अनयो दीद्यानो दिवो अग्ने बृहता रोचनेन ॥
विशां कविं विश्पतिं शश्वतीनां नितोशनं वृषभं चर्षणीनाम् ।
प्रेतीषणिमिषयन्तं पावकं राजन्तमग्निं यजतं[1] रयीणाम् ॥
सो अग्न ईजे शशमे च मर्तो यस्त आनट् समिधा हव्यदातिम् । 5
य आहुतिं परि वेदा नमोभिर्विश्वेत्स वामा[2] दधते त्वोतः ॥
अस्मा उ ते महि महे विधेम नमोभिरग्ने समिधोत हव्यैः ।
वेदी सूनो सहसो गीर्भिरुक्थैरा[3] ते भद्रायां सुमतौ यतेम ॥
आ यस्ततन्थ[4] रोदसी वि भासा श्रवोभिश्च श्रवस्यस्तरुत्रः[5] ।
बृहद्भिर्वाजैस्स्थविरेभिरस्मे रेवद्भिरग्ने वितरं विभाहि ॥ 10
नृवद्वसो सदमिद्धेह्यस्मे भूरि तोकाय तनयाय पश्वः ।
पूर्वीरिषो बृहतीरारेअघा अस्मे[6] भद्रा सौश्रवसानि सन्तु ॥
पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन्वसुता ते अश्याम् ।
पुरूणि हि त्वे पुरुवार सन्त्यग्ने वसु विधते राजनि त्वे ॥ ॥ २० ॥

cf. RV. 6, 1; Mâitr. S. 4, 13, 6.

होता यक्षद्बृहस्पतिं छागस्य हविष आवयदद्य मध्यतो मेद उद्भृतं 15
पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घसन्नूनं घासेअज्राणां यवसप्रथ-
मानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां[7]
पार्श्वतश्श्रोणितश्शितामत उत्सादतो ऽङ्गादङ्गादवत्तानां करदेवं बृह-
स्पतिर्जुषतां हविर्होतर्यज होता यक्षदश्विना छागस्य हविष आत्तां
घस्तां करत एवमश्विना जुषेतां हविर्होतर्यज होता यक्षत्सरस्वतीं 20
मेष्या हविष[8] आवयद्वसत्करदेवं सरस्वती जुषतां हविर्होतर्यज होता
यक्षदिन्द्रं मेषस्य हविष आवयद्वसत्करदेवमिन्द्रो जुषतां हविर्होतर्यज ॥

---

[1] Ch und D यजतिं [2] Ch वम [3] Ch कैरा [4] Ch यस्ततनू [5] Ch श्रवस्य॰ [6] Brl अस्मिं [7] Ch णाम्पीवोपाव॰ [8] D हविषा

देवेभ्यो वनस्पते हवीँषि हिरण्यपर्ण प्रदिवस्ते अर्थम् ।
प्रदक्षिणिद्रशनया नियूयर्तस्य[1] वक्षि पथिभी रजिष्ठैः ॥

होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्ठया रशनयाधित
यत्र बृहस्पतेश्छागस्य हविषः प्रिया धामानि यत्राश्विनोश्छागस्य
5 हविषः प्रिया धामानि यत्र सरस्वत्या मेष्या हविषः प्रिया धामानि
यत्रेन्द्रस्य मेषस्य हविषः प्रिया धामानि यत्र वनस्पतेः प्रिया पा-
थाँसि यत्र देवानामाज्यपानां प्रिया धामानि यत्राग्नेर्होतुः प्रिया धा-
मानि तत्रैतान्प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयस इव कृत्वी करदेवं
देवो वनस्पतिर्जुषतां हविर्होतर्यज ॥

10 वनस्पते रशनयाभिधाय[2] पिष्टतमया वयुनानि विद्वान् ।
वहा[3] देवत्रा दिधिषो हवीँषि प्र च[4] दातारममृतेषु वोचः ॥
पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँ ऋतुपते[5] यजेह[6] ।
ये दैव्या ऋत्विजस्तेभिरग्ने त्वँ होतॄणामस्यायजिष्ठः ॥

होता यक्षदग्निँ स्विष्टकृतमयाडग्निरग्नेः प्रिया धामान्ययाट् सो-
15 मस्य प्रिया धामान्ययाड्बृहस्पतेश्छागस्य हविषः प्रिया धामान्यया-
डश्विनोश्छागस्य हविषः प्रिया धामान्ययाट् सरस्वत्या मेष्या हविषः
प्रिया धामान्ययाडिन्द्रस्य मेषस्य हविषः प्रिया धामान्ययाड्वनस्पतेः
प्रिया पाथाँस्ययाड् देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः[7]
प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या[8] इषः कृणोतु सो
20 अध्वरा जातवेदा जुषतां हविर्होतर्यज ॥ आ देवानामिडामग्ने[9] ॥

---

[1] Ch नियूयं तस्य [2] D रथन॰ [3] Ch वहन्दे॰ [4] Ch प्रह् दा॰ [5] So D; Ch ऋतून्तत्तमते [6] Ch यजेहि [7] So Ch; D ग्निर्होतुः [8] Ch माय-जतामेज्य; D सायुज्यमेत्या; cf. Mâitr. S. 4, 13, 7 a. E. [9] So Ch; D आ देवानां इडामग्ने

अग्निं सुदीतिं[1] सुदृशं गृणन्तो[2] नमस्यामस्त्वेड्य जातवेदः ।
त्वां दूतमरतिं हव्यवाहं देवा अकृण्वन्नमृतस्य नाभिम् ॥ ॥ २१ ॥
cf. Mâitr. S. 4, 13, 7.

इति श्रीयजुषि काठके चरकशाखायामिठिमिकायां चमा नामा-
ष्टादशं स्थानकं संपूर्णम्[3] ॥

॥ संपूर्णा च इठिमिका[4] ॥ 5

---

[1] D स्वंदीतिं [2] So corr. Ch गणांतो; D घणन्तो [3] So die Unterschrift des Kapitels in Ch; in D lautet dieselbe इति चमस्थानकमष्टादशम् ॥ [4] So Ch; in D dieses nicht vorhanden.

## CORRIGENDA.

| | | | | |
|---|---|---|---|---|
| p. 8, Z. 11 | lies | मचिरा पूत | statt | मचिरापूत |
| p. 16, Z. 12 | „ | सम्रांडसि | „ | सम्रांडमि |
| p. 52, Z. 7 | „ | निनयेदापो | „ | निनयेदापा |
| p. 54, Z. 20 | „ | प्रजापतये | „ | पजापतये |
| p. 81, Z. 18 | „ | वृष्णो | „ | वृष्णो |
| p. 100, Z. 11 | „ | यत्समरन्त | „ | सत्समरन्त |
| p. 116, Z. 14 | „ | यादृक्तन्यजते | „ | यादृङ्मिन्यजते |
| p. 133, Z. 4 | „ | तं | „ | त |
| p. 137, Z. 16 | „ | गृहीतो | „ | गृहीतो |
| p. 139, Z. 10 | „ | निर्वपेद्यः | „ | विपेद्यः |
| p. 146, letzte Anm. | „ | 18 | „ | 17 |
| p. 153, Z. 19 | „ | 13 | „ | 43 |

Helioplandruck (ges. gesch.) von F. A. Brockhaus, Leipzig.

॥ काठकम् ॥

# KÂṬHAKAM

## DIE SAṂHITÂ DER KAṬHA-ÇÂKHÂ

HERAUSGEGEBEN

VON


**LEOPOLD VON SCHROEDER**

PROFESSOR AN DER K. K. UNIVERSITÄT ZU WIEN

WIRKL. MITGLIED DER KAIS. AKADEMIE DER WISSENSCHAFTEN


ZWEITES BUCH


GEDRUCKT AUF KOSTEN DER DEUTSCHEN MORGENLÄNDISCHEN GESELLSCHAFT





LEIPZIG

IN COMMISSION BEI F. A. BROCKHAUS

1909

ओम् ॥ सावित्रैरभ्रिमादत्ते प्रसूत्या इयं वै गायत्र्यन्तरिक्षं त्रिष्टु-
ब्द्यौर्जगती दिशो ऽनुष्टुप्छन्दोभिरेवैनामेभ्यो लोकेभ्य आवर्तयत्युभय-
तःक्ष्णुर्भवत्यन्यतःक्ष्णुतेन्वै[1] फालेनेयदन्नं क्रियते ऽन्नमर्को[2] ऽर्को ऽग्निरन्न-
स्यार्कस्यावरुद्ध्या अरत्निमात्री कुर्यात्पुरुषेण वै यज्ञस्संमितो यज्ञपु-
रुषासंमितां व्याममात्रीं कुर्यादेतावद्वै पुरुषे वीर्यं वीर्येण संमिताम- 5
परिमितां[3] कुर्यादपरिमितस्यावरुद्ध्यै यो वृक्षः[4] फलग्रहिस्तस्य कुर्या-
देष वै वनस्पतीनां वीर्यावत्तमस्सवीर्यत्वाय[5] कल्माषी वैणवी[6] सु-
षिरां कुर्यादग्निर्वै देवेभ्यो ऽपाक्रामत्स वेणुं प्राविशत्स एतानि वर्मा-
ण्यनह्यत यानि पर्हिष्येतं[7] लोकमन्वचरद्यत्सुषिरस्स[8] यत्र यत्रावसत्त-
न्निरदहत्तत्कल्मषमभवद्यत्कल्माषी वैणवी सुषिरा[9] भवति सा ह्याग्ने- 10
यीतमा[10] समृद्ध्या अथो यदेवास्यात्र न्यक्तं तस्यावरुद्ध्यै[11] ॥ १ ॥
cf. Mâitr. S. 3, 1, 2; Kap. S. 29, 8.

अग्निर्वै देवेभ्यो ऽपाक्रामत्स[12] यत्र यत्रागच्छत्तं प्रजापतिरन्वपश्य-
त्प्राजापत्यो ऽश्वो यदश्वेन यन्त्यग्नेरेवानुकशात्या[13] एतेन वै देवा असु-
रानुत्तममभ्यभवन्यदश्वेन यन्ति भ्रातृव्यस्याभिभूत्या एतं वै रक्षांसि

---

[1] cf. Kap. S. 29, 8 त्रतक्ष्णुतेन्वै फालेनेयदन्न; क्ष्णुन्वै steht für क्ष्णुत्वै [2] So corr. Ch न्नमन्को; Kap. S. 29, 8 = Corr. [3] So corr. Ch संमिसपरि°; Kap. S. 29, 8 = Corr. [4] So corr. Ch या यक्षः; Kap. S. 29, 8 = Corr. [5] Kap. S. 29, 8 वीर्यवत्तमः [6] So corr. Ch वैणावी [7] So corr. Ch पत्तिष्येतै; Kap. S. 29, 8 undeutlich. [8] Ch सुषिस्सा; Kap. S. 29, 8 सुषिः स [9] So corr. Ch सुशिरा [10] So auch Kap. S. 29, 8. [11] So corr. Ch न्यक्तस्याव°; Kap. S. 29, 8 नक्तं तस्यावरुध्या [12] So corr. Ch क्रमत्स [13] Kap. S. 29, 8 नयंत्यग्नेरेवानुख्यात्या

नातरन्यदश्वेन यन्ति रक्षसामतीत्या अश्वं पूर्वं नयन्ति गर्दभमपरं पा-
पवसीयसस्य व्यावृत्त्यै तस्मात्पुण्यं पूर्वं यन्तं पापीयान्पश्चादन्वेति
गर्दभेन संभरति तस्मादेष समावत्पशूनां रेतो दधानानां कनिष्ठो
ऽग्निर्ह्यस्य रेतो निरदहद्यदेतेनास्यामूर्जमर्कं[1] संभरति तस्मादेषो ऽस्यां
5 जीविततमः[2] ॥ प्रतूर्तं वाजिन्नाद्रव युञ्जाथां रासभं युवमित्यश्वगर्दभ-
योरेवैष योगे योगे तवस्तरं वाजे वाजे हवामहे सखाय इन्द्रमूतय
इत्यूत्यै हि वाजायाग्निश्चीयते प्रतूर्वन्नेह्यवक्रामन्नशस्तीरिति[3] बह्वै भ-
वतो भ्रातृव्यो[4] भवत्येष यो ऽग्निं चिनुते वज्र्यश्वः पाप्माशस्तिर्भ्रातृव्यो
वज्रेणैव पाप्मानं भ्रातृव्यमवक्रामति रुद्रस्य गाणपत्ये मयोभूरेहीति
10 रौद्रा वै पशवो रुद्रमेव[5] पशूनिर्याच्यात्मने[6] कर्म कुरुत[7] उर्वन्तरिक्षं
वीहीत्यन्तरिक्षदेवत्यो[8] ह्येष एतर्हि पूष्णा[9] सयुजा सहेति पूषा वा
अध्वनां संनेता[10] समष्ट्यै ॥ पृथिव्यास्सधस्थादग्निं पुरीष्यमङ्गिरस्वदा-
भरेति पुरीषायतनो वा अग्निरङ्गिरस एतमग्रे देवताभिस्समभरन्साय-
तनमेवैनं देवताभिस्संभरत्यग्निं पुरीष्यमङ्गिरस्वदच्छेम[11] इति ब्रूयाद्येन
15 संगच्छेत सर्वो वै पुरुषो ऽग्निमान्वाजमेवास्य वृङ्क्ते प्रजापतये प्रो-
च्याग्निश्चेतव्यो राज्ञे प्रोच्य स हि[12] प्राजापत्यतम इयं वाव प्रजापति-
स्तस्या एष कर्णो यद्वल्मीको यद्वल्मीकवपामुद्धत्याभिमन्त्रयते प्रजा-
पतय एव प्रोच्याग्निं चिनुते शृण्वन्त्येनमग्निं चिक्यानमसा अग्निमचे-
ष्टेति कर्णो हि कर्णायाह ॥ २ ॥ cf. Mâitr. S. 3, 1, 3; Kap. S. 29, 8.

20 अन्वग्निरुषसामग्रमख्यदित्यनुकशात्या आगत्य वाज्यध्वानं सर्वा
मृधो विधूनुत इति मृध एवैतयापहत आक्रम्य वाजिन्पृथिवीमग्नि-
मिच्छ रुचा त्वमित्यैच्छद्वा एतं पूर्वया प्रजापतिरविन्ददुत्तरयेच्छत्येव

---

[1] So corr. Ch स्यापूर्जम°; Kap. S. 29, 8 यदेतेवास्यामूर्जमर्कं [2] So Ch; Kap. S. 29, 8 जीवितृतमः [3] So corr. Ch प्रकुर्वन्ने° [4] So corr. Ch भ्रातृभ्यो; Kap. S. 29, 8 = Corr. [5] So auch Kap. S. 29, 8. [6] So corr. Ch र्याश्या°; Kap. S. 29, 8 र्यात्व्या [7] So corr. Ch कुरु उर्व-; Kap. S. 29, 8 कुरुते उर्वां [8] So corr. Ch वीहि° und देवभ्यो [9] So corr. Ch पुष्णा [10] So corr. Ch अध्वना सचेता [11] So corr. Ch स्वदश्वेम [12] So corr. Ch प्राच्य महि; Kap. S. 29, 8 = Corr.

पूर्वया विन्दत्युत्तरया द्यौस्ते पृष्ठं पृथिवी सधस्थमिति वज्री वा
अश्वः प्राजापत्यो लोमभिरुभयादतः पशूनत्ति[1] दद्भिरन्यतोदतो वज्रे-
णैव[2] भ्रातृव्यमवगृह्णाति यत्र वै यज्ञस्यानुरूपं क्रियते तत्पशवो ऽनु-
रूपा जायन्ते ॥ उत्क्रामोदक्रमीदित्यनुरूपाभ्यामुत्क्रमयति[3] तस्मात्पश-
वो ऽनुरूपा जायन्ते द्वाभ्यां द्विपाद्यजमानः प्रतिष्ठित्यै यां वा अन- 5
ग्ना अध्वर्युराहुतिं जुहोत्यन्धो ऽध्वर्युर्भवति[4] रक्षांसि यज्ञं घ्नन्त्यग्निर्वै
वरुणानीरभ्यकामयत तस्य तेजः परापतत्तद्धिरण्यमभवद्यद्धिरण्यमु-
पास्य जुहोत्यग्निमत्येव जुहोति समृद्ध्यै नान्धो ऽध्वर्युर्भवति रक्षांसि
यज्ञं घ्नन्ति जिघर्म्यग्निं[5] मनसा घृतेनेति मनो वै वाचः क्षेपीयो[6] म-
नसैवाहुतिमाप्नोति प्रतिक्षियन्तं भुवनानि विश्वेति तस्मादेष सर्वाः 10
प्रजाः प्रत्यङ्[7] क्षियते[8] व्यचिष्ठमन्नं रभसं[9] विदानमित्यन्नमेवास्मै स्व-
दयत्या त्वा जिघर्मि वचसा घृतेनेति पूर्वमेवोदितमनुवदत्यरक्षसा म-
नसा तज्जुषेथा इति रक्षसामपहत्यै मर्यश्रीस्स्पृहयद्वर्णो अग्निरित्यप-
चितिमेवास्मिन्दधाति द्वाभ्यां जुहोति द्विपाद्यजमानः प्रतिष्ठित्यै ॥
यज्ञमुखे यज्ञमुखे वै यज्ञं[10] रक्षांसि जिघांसन्ति यत्परिलिखति रक्ष- 15
सामपहत्यै तिसृभिः परिलिखति त्रय इमे लोका एभ्य एव लोकेभ्यो
रक्षांस्यपहन्ति परि वाजपतिः कविरिति गायत्र्या परिलिखति ब्रह्म
वै गायत्री ब्रह्मणैवेनं परिगृह्णाति परि त्वाग्ने पुरं वयमित्यनुष्टुभा
वाग्वा[11] अनुष्टुप्सर्वाणि छन्दांसि परिभूर्वाचैव सर्वाणि छन्दांसि
परिगृह्णाति त्वमग्ने द्युभिरिति त्रिष्टुभा वीर्यं वै[12] त्रिष्टुब्वीर्येणैवेनं प- 20
रिगृह्णात्यनुष्टुभा मध्यतः परिलिखति वाग्वा अनुष्टुब्वाचमेव मध्य-
तो दधाति तस्मान्मध्यतो वाग्वदति[13] तेजो वै गायत्री यज्ञो ऽनुष्टु-

[1] So auch Kap. S. 30, 1. [2] So corr. Ch वाज्रे° [3] So corr. Ch क्रमेदि° [4] So corr. Ch ध्वर्यौर्भ° [5] So corr. Ch ग्निर्मनसा [6] So corr. Ch क्षेपेयो; Kap. S. 30, 1 पेक्षीयो [7] Ch प्रत्यं; desgl. Kap. S. 30, 1. [8] So Ch; Kap. S. 30, 1 क्षियंति; TS 5, 1, 3, 2 क्षेति [9] Ch मन्न रभसै [10] Ch यज्ञे [11] So corr. Ch वाग्ना [12] So corr. Ch वौ-वै [13] So corr. Ch वाग्वति; Kap. S. 30, 1 = Corr.

विन्द्रियं त्रिष्टुप्तेजसा चैवेन्द्रियेण च यज्ञमुभयत आत्मन्परिगृह्णा-
ति ॥ ३ ॥ cf. Mâitr. S. 3, 1, 4; Kap. S. 30, 1.

सावित्राभ्यां खनति प्रसूत्यै धूममेव पूर्वेण विन्दति ज्योतिरुत्तरेण
द्वाभ्यां द्विपाद्यजमानः प्रतिष्ठित्या अपां पृष्ठमसि योनिरग्नेरिति पु-
5 ष्करपर्णमादत्ते ऽपां ह्येतत्पृष्ठं योनिरग्नेः पुष्करपर्णेन संभरति स्वेनैवैनं
योनिना संभरति शान्त्या अनुद्दाहाय कृष्णाजिनेन संभरति यज्ञो वै
कृष्णाजिनं यज्ञेनैव यज्ञं संभरत्यस्कन्दाय न हि यज्ञे यज्ञस्स्कन्दत्येतद्वै
ब्रह्मणो रूपं यत्कृष्णाजिनं ब्रह्मणा चैवैनमृक्सामाभ्यां च संभरति
शर्म च स्थो वर्म च स्थ इति संस्तृणातीयं वै पुष्करपर्णमसौ कृष्णा-
10 जिनमिमे एवैतत्संस्तृणात्यच्छिद्रे बहुले उभे इत्यच्छिद्रे हीमे बहुले
उभे व्यचस्वती इति तस्मादिमे व्यचस्वती भर्तमग्निं पुरीष्यमिति पु-
रीष्यो ह्येष संवसाथां स्वर्विदौ समीची उरसा[1] त्मनेति तस्मादिमे
नाना सती समीची अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमिदिति
ज्योतिरेवास्मिन्नजस्रं दधाति पुरीष्यो ऽसि विश्वभरा इति पुरीष्यो ह्येष
15 विश्वभरा अथर्वा त्वा प्रथमो निरमन्थदग्न[2] इति प्रजापतिर्वा अथर्वा
प्रजापतिरेतमग्रे ऽमन्थत्प्रजापतिरेवैनं जनयति तमु त्वा दध्यङ्ङृषिरिति
दध्यङ् वा आथर्वणस्तेजस्व्यासीत्तेनैवैनं संभरति तमु त्वा पाथ्यो वृ-
षेति पूर्वमेवोदितमनुवदति चतसृभिस्संवपति चत्वारि वै छन्दांसि
छन्दोभिरेवैनं संवपति गायत्रीभिर्ब्राह्मणस्य संवपेद्गायत्रो[3] हि ब्राह्म-
20 णस्त्रिष्टुब्भी राजन्यस्य त्रैष्टुभो हि राजन्यो जगतीभिर्वैश्यस्य[4] जागतो
हि वैश्यो यथाछन्दसमेवोभयीभिस्संवपेद्य कामयेत वसीयान्स्यादिति
तेजो वै गायत्रीन्द्रियं त्रिष्टुप्तेजश्चैवास्मिन्निन्द्रियं च समीची दधात्य-
ष्टाभिस्संवपत्यष्टाक्षरा गायत्री गायत्रो ऽग्निर्यावानेवाग्निस्तं संभरति
सीद होतरिति देवता एवास्मिन्संसादयति नि होतेति मनुष्यानेव

[1] So corr. Ch समीचौं तिरसा; cf. oben 16, 3 Ch तरसा; Kap. S. 30, 2 = Corr.
[2] So corr. Ch निर्मंथद॰ [3] So corr. Ch संवपे गा॰ [4] So corr. Ch वैश्वस्य

सँसीदस्वेति[1] वयाँस्येव जनिष्ट हि जेन्यो अग्रे[2] अह्नामिति[3] देवमनुष्यानेवास्मिन्त्सँसन्नान्प्रजनयति ॥ ४ ॥ cf. Mâitr. S. 3, 1, 5; Kap. S. 30, 2.

अपो देवीरुप सृज मधुमतीरित्योषधीनां[4] प्रतिष्ठित्यै तासामास्थानादुज्जिहतामोषधयस्सुपिप्पला[5] इति तस्मादोषधयः फलं गृह्णन्ति सं ते वायुर्मातरिश्वा दधात्विति तस्माद्वायुर्वृष्टिं वहति प्राणो वै वायुः प्राणमेवास्मिन्दधाति तस्मै देव वषडस्तु तुभ्यमिति षड्वा ऋतव ऋतुष्वेव वृष्टिं दधाति तस्मादृतुमृतुं[6] वर्षति यत्प्रत्यक्षं वषट् कुर्याद्यातयामा वषट्कारस्स्याद्यन्न[7] वषट् कुर्याद्रक्षाँसि यज्ञँ हन्युस्तस्मै देव वषडस्तु तुभ्यमिति परोक्षं न यातयामा वषट्कारो भवति न रक्षाँसि यज्ञं घ्नन्ति ॥ यदाज्येन जुहुयाच्छुचा पृथिवीमर्पयेदपो निनयति[8] शान्त्या अनुद्दाहाय सुजातो ज्योतिषेत्येतर्हि[9] वा एष जायते यर्हि संभ्रियते जात एवास्मिञ्ज्योतिर्दधाति शर्म वरूथमासदत्स्वरिति ब्रह्म वै शर्म वरूथं ब्रह्मण्येवैनं प्रतिष्ठापयति वासो अग्ने विश्वरूपँ संव्ययस्व विभावस इति छन्दाँसि वा अग्नेर्वासश्छन्दोभिरेवैनं परिदधात्यनुष्टुब्वा[10] अग्नेः प्रिया तनूः प्रिययैवैनं तन्वा परिदधाति[11] वेदुको वासो भवति य एवं वेद ॥ वरुणमेनिर्वा एष उपनद्ध उदुतिष्ठ स्वध्वरोर्ध्व ऊ षु[12] ण ऊतय इत्यूर्ध्वामेव वरुणमेनिमुत्सुवति द्वाभ्यां द्विपाद्यजमानः प्रतिष्ठित्यै स जातो गर्भो असि रोदस्योरितीमे वै रोदसी अनयोरेष गर्भो ऽनयोरेवैनं प्रतिष्ठापयत्यग्ने चारुर्विभृत[13] ओषधीष्विति तस्मादग्निस्सर्वा अन्वोषधीः प्र मातृभ्यो अधि कनिक्रदद्गा इत्योषधयो[14] वा एतस्य मातरस्ताभ्य[15] एवैनमधिप्रणयति स्थिरो भव वीड्वङ्ग

---

[1] So corr. Ch स्वीति [2] So corr. ज्योन्यो अग्रो [3] So corr. Ch ह्वा° [4] So corr. Ch त्यौष° [5] So corr. Ch तासासास्था° [6] So corr. Ch त्तमत्तं [7] So corr. Ch वषट्कारा° [8] So corr. Ch नियति; Kap. S. 30, 3 = Corr. [9] So corr. Ch ष्येत्ये° [10] Kap. S. 30, 3 ददाति; desgl. Mâitr. S. 3, 1, 5; s. unten. [11] So corr. Ch ददाति; cf. oben! TS 5, 1, 5, 3 = Corr.; Kap. S. 30, 3 ददाति [12] So corr. Ch उपतिष्ठ स्वध्व रोध्व ऊ ष [13] So corr. Ch विंभृत [14] So corr. Ch इत्यौष° [15] So corr. Ch ताभ्या

इति गर्दभ एव स्थेमानं दधाति तस्मादेष पशूनां भारभारितमश्शिवो
भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिर इत्यभि वा एष एतर्हि प्रजाश्शोच-
यति[1] शान्त्यै ॥ मा द्यावापृथिवी अभि शुचो मान्तरिक्षं मा वनस्प-
तीनित्येभ्य एवैनं लोकेभ्यश्शमयति प्रैतु वाजी कनिक्रददिति समष्ट्यै
मा पाद्यायुषः पुरेत्यायुरेवास्मिन्दधाति तस्माद्गर्दभस्सर्वमायुरेति त-
स्माद्गर्दभे प्रमीते बिभ्यति वृषाग्निं वृषणं[2] भरन्निति वृषा ह्येष वृषाणं
भरत्यपां गर्भं समुद्रियमित्यपां ह्येष गर्भस्समुद्रियो ऽग्न आयाहि वी-
तय इत्यग्निना वै देवा इदमग्रे व्यायन्वीत्यै प्रच्युतो वा एष एतर्ह्याय-
तनादगतः प्रतिष्ठां[3] स यजमानं चैवाध्वर्युं च ध्यायत्यृतं सत्यमृतं स-
त्यमितीयं वा ऋतमसौ सत्यमनयोरेवैनं प्रतिष्ठापयत्योषधयः प्रति-
गृह्णीताग्निमेतं शिवमायन्तमभ्यत्र युष्मानित्योषधयो वा एतस्य भा-
गधेयं ताभिरेवैनं सम्यञ्चं दधात्यथो याभ्य एनं[4] प्रच्यावयति तास्वेनं
प्रतिष्ठापयति ॥ पुष्पवतीस्सुपिप्पला[5] इति तस्मादोषधयः फलं गृ-
ह्णन्ति द्वाभ्यामुपावहरति द्विपाद्यजमानः प्रतिष्ठित्यै वि पाजसेति
वि सꣳसयति[6] वरुणमेनिमेव विषत्यापो[7] हि ष्ठा मयोभुव इत्यप उ-
पसृजत्यापश्शान्ताश्शान्ताभिरेवास्य शुचं शमयति तिसृभिस्त्रिवृद्वा
अग्निर्यावानेवाग्निस्तस्य शुचं शमयत्यजलोमैस्सꣳसृजत्येषा वा अग्नेः
प्रिया तनूर्यदजा प्रिययैवैनं तन्वा सꣳसृजति शर्कराभिर्धृत्या[8] अर्म्यैः[9]
कपालैस्सꣳसृजत्यारण्यानेव पशूञ्छुचार्पयति यद्ग्राम्यैस्सꣳसृजेद्ग्राम्यान्प-

---

[1] Kap. S. 30, 3 शोचिति [2] So corr. Ch ग्नि वृषाणं; cf. oben 16, 4 (I, p. 224, Z. 17). [3] So corr. Ch प्रतिष्ठा; Kap. 30, 3 दगतः प्रतिष्ठां; cf. auch TS 5, 1, 5, 8 = Corr. [4] So corr. Ch एनः [5] So corr. Ch सुपिला [6] So corr. Ch वि ꣳसयति [7] So corr. Ch विषत्यापा [8] So corr. Ch राभिवृत्या; Kap. S. 30, 3 und TS 5, 1, 6, 2 = Corr. [9] So meine Vermuthung; Ch अंद्यैः; cf. TS 5, 1, 6, 2 अर्मकपालैः; Kap. S. 30, 3 धृत्यार्मैः कपालैः; ich vermuthe ein von अर्म abgeleitetes Adj. अर्म्य „aus einer Trümmerstätte stammend“; अंद्यैः kann leicht für अर्म्यैः verlesen sein, da das r der Çâradâ-Schrift oft für Nasal genommen wird und म्य in Çâradâ leicht für द्य angesehen werden kann. Vgl. darüber WZKM, Bd. XIV, p. 275.

शृङ्गमुचार्पयेत्तस्मादेते[1] समावत्पश्मूनां प्रजायमानानां कनिष्ठाश्मुचा ह्येत ऋताः ॥ ५ ॥ cf. Mâitr. S. 3, 1, 5. 6; Kap. S. 30, 3.

मित्रस्संसृज्य[2] पृथिवीमिति वरुणमेनिर्वा एषा मित्रेणैव वरुणमेनिमुपैति रुद्रस्संसृज्य पृथिवीं संसृष्टां वसुभी रुद्रैरित्येताभिर्वा एतां[3] देवताभिः प्रजापतिस्समसृजत्ताभिरेवैनां संसृजति प्रान्यैर्यच्छत्यन्वन्यैर्मन्त्रयते मिथुनमेव करोत्यथो मध्यत एव यज्ञस्याशिषमवरुन्द्धे मखस्य शिरो ऽसीति यज्ञो वै मखो यज्ञस्यैव शिरः करोति वसवस्त्वा कुर्वन्तु गायत्रेण छन्दसेत्येताभिर्वा एतां[4] देवताभिः प्रजापतिरकरोत्ताभिरेवैनां करोति त्र्युद्धिं[5] करोति त्रय इमे लोका इमानेव लोकानाप्नोति पञ्चोद्धिं करोति पाङ्क्तो यज्ञो यज्ञमेवावरुन्द्धे ॥ धारया मयि प्रजामित्याशीरेवैषा छन्दसां दोहो ऽरत्निमात्रीं कुर्यात्पुरुषेण वै यज्ञस्संमितो यज्ञपुरुषासंमितां यावद्बाहुभ्यां पर्याप्नुयात्तावतीं[6] कुर्यादेतावद्वै पुरुषे वीर्यं वीर्येण संमितां प्रादेशमात्रीं कुर्यादेतावद्वै मुखं मुखं देवानामग्निर्मुखेन संमितामपरिमितां कुर्यादपरिमितस्यावरुद्ध्यै चतुस्स्तनां कुर्याददित्या दोहाय[7] षट्स्तनामृतूनां दोहायाष्टास्तनां गायत्र्या दोहाय द्विस्तनां द्यावापृथिव्योर्दोहाय नवाश्रिमभिचरणीयां[8] कुर्यात्त्रिवृद्वज्रो वज्रमेव भ्रातृव्याय प्रहरत्यदित्या रास्नास्यदितिस्ते बिलं गृह्णात्विति यजुषा[9] बिलं करोत्ययजुषा हि मनुष्याः कुर्वन्ति मानुषेणैवैनां पात्रेण व्यावर्तयन्ति यद्वा एषा पुरा पक्तोर्भिद्येतार्तिं[10] यजमान आर्छेद्भिन्येतास्य यज्ञः कृत्वाय सा महीमुखामिति देवताभ्य एवैनां संप्रयच्छति वसवस्त्वा धूपयन्तु गायत्रेण छन्दसेत्येताभिर्वा एतां[11] देवताभिः प्रजापतिरधूपयत्ताभिरेवैनां धूपयत्यश्वश-

---

[1] So corr. Ch तस्मादिति [2] So corr. Ch मित्रै॰ [3] So corr. Ch एतान्दे॰ [4] So corr. Ch एतान्दे॰ [5] So corr. Ch त्र्युद्धितक॰; Kap. S. 30, 4 त्रियुधं [6] So corr. Ch प्तुयाप्तवतों [7] So corr. Ch दौ॰ [8] So corr. Ch नवास्रिम॰; Kap. S. 30, 4 नवाश्रीमभिचरणीयं [9] So corr. Ch गृह्णात्वियजुष [10] So corr. Ch पयोर्भि॰ [11] So corr. Ch एतान्दे॰

केन धूपयति प्राजापत्यो वा अश्वो यज्ञः प्रजापतिस्सयोनित्वाय स-
प्तभिर्धूपयति शिरो वा एतद्यज्ञस्य यदुखा सप्त प्राणाश्शीर्षन्नेव प्रा-
णान्दधाति तस्मात्सप्त शीर्षण्याः प्राणाः ॥ ६ ॥
cf. Mâitr. S. 3, 1, 6. 7; Kap. S. 30, 4.

अदितिस्त्वा देवी विश्वदेव्यावतीतीयं वा अदितिरदित्यैवादित्यां
5 खनत्यस्या अक्रूरंकाराय[1] न हि स्वस्स्वं हिनस्ति देवानां त्वा पत्नीरि-
ति देवानां वा एतां पत्नीरग्रे ऽचादधुस्ताभिरेवैनां दधाति धिषणा-
स्त्वेति विद्या वै धिषणा विद्ययैवैनामभीन्द्धे[2] वरूत्रीस्त्वेति होत्रा वै
वरूत्रीर्होत्राभिरेवैनां[3] श्रपयति ग्नास्त्वेति[4] छन्दांसि वै ग्नाश्छन्दो-
भिरेवैनां पचति जनयस्त्वाच्छिन्नपत्रा इति देवानां वै पत्नीर्जनयस्ता
10 एतामग्रे ऽपचंस्ताभिरेवैनां पचति ॥ द्विष्पचन्त्वित्याह तस्माद्विस्संव-
त्सरस्य सस्यं पच्यते षड्भिः पचति षड्वा ऋतव ऋतुभिरेतां देवानां
पत्नीरपचंस्तैरेवैनां[5] पचति वरुणमेनिर्वा एषाभीद्धा मित्रस्य चर्ष-
णीधृत इति मित्रेणैव वरुणमेनिमुपैति[6] देवस्त्वा सवितोद्वपत्विति
सावित्र्योद्वपति[7] प्रसूत्या अव्यथमाना पृथिव्यामाशा[8] दिश आपृण-
15 ति तस्मादग्निस्सर्वा दिशो विभात्युत्तिष्ठ बृहती भवोर्ध्वा[9] तिष्ठ ध्रुवा
त्वमिति दृंहत्येवैनां यद्वा एषा भिद्येतार्तिं यजमान आर्छेद्धन्येतास्य
यज्ञो मित्रैतां त उखां परिददामीति ब्रह्म वै मित्रो ब्रह्मण एवैनां
परिददाति ॥ यदि भिद्येत तैः कपालैस्संसृज्यान्यां[10] कुर्यात्सैव ततो
यज्ञस्य निष्कृतिर्वसवस्त्वाछृन्दन्तु गायत्रेण छन्दसेति छन्दोभिर्वा
20 एषा क्रियते छन्दोभिर्धूप्यते छन्दोभिः पच्यते ॥ छन्दांस्येव[11] छन्दो-
भिराछृन्दन्ति स्वेनायतनेनासुर्यं वै पात्रमनाछृण्णं यदाछृणत्ति दे-

---

[1] So corr. Ch अक्रूरंकारय; Kap. S. 30, 5 und TS 5, 1, 7, 1 = Corr. [2] So corr. Ch विद्यायै° [3] So corr. Ch वे वरुत्रीहो° [4] So corr. Ch त्वौति [5] So corr. Ch वैनं [6] So corr. Ch मित्रेणैवरुण° [7] So corr. Ch सवित्र्याद्व°; Kap. S. 30, 5 = Corr. [8] So corr. Ch मादा [9] So corr. Ch भवोवा [10] So corr. Ch जान्यं [11] So corr. Ch छंदोस्येव

वत्रैव करोत्यजक्षीरेणाच्छृणत्ति सा ह्याग्नेयीतमा समृद्ध्या अथो पर-
मेणैव पयसा ॥ ७ ॥ cf. Mâitr. S. 3, 1, 8; Kap. S. 30, 5; TS 5, 1, 7.

अथैते ऽग्निभ्यः कामेभ्यः पशव आलभ्यन्ते कामा वा अग्नयस्सर्वा-
नेवैतैः कामानभिजयति सर्वान्कामान्स्पृणोति यत्पशून्नालभेतानवरु-
द्धा[1] अस्य पशवस्स्युर्यत्संस्थापयेद्यातयामानि शीर्षाणि स्युर्यन्न सँ-
स्थापयेद्यज्ञं विच्छिन्द्याद्यत्पशूनालभते तेनैव पशूनवरुन्द्धे यत्पर्यग्नि-
कृतानुत्सृजति शीर्ष्णामयातयामत्वायैकेन सँस्थापयति यज्ञस्य संत-
त्या अविच्छेदाय प्राजापत्येन यज्ञो[2] वै प्रजापतिर्यज्ञ एव यज्ञं प्रति-
ष्ठापयति न यज्ञं विच्छिनत्त्यैन्द्रा वा एते पशवो ये मुष्करा यदैन्द्रा-
स्सन्तो ऽग्निभ्य आलभ्यन्ते देवताभ्यस्समदं करोत्याग्नेयीस्त्रिष्टुभो या-
ज्यानुवाक्याः कुर्यादैन्द्रीर्वै त्रिष्टुभस्तेनैवैन्द्राः क्रियन्ते[3] न देवताभ्य-
स्समदं करोत्यथैष वायव्यश्श्वेतस्तूपरस्सर्वान्वा एष पशूनत्यालभ्यते
यत्तूपरो ऽश्वं तेन पशूनां प्रत्यालभ्यते यच्छ्मश्रुणः पुरुषं तेन यदष्टा-
शफो ऽष्टाशफान्पशूँस्तेन नियुत्वती याज्यानुवाक्ये कुर्याद्यजमानस्य
धृत्या अनुन्मादाय[4] यन्न नियुत्वती स्यातामुद्वा माद्येद्यजमानः प्र वा
पतेद्वायुमती शुक्रवती वायुर्वा अग्नेस्तेजस्तस्माद्यद्र्यङ्वातो[5] वाति तद-
ग्निरन्वेति स्वमेव तत्तेजो ऽन्वेति वायुर्वै पशूनां प्रियं धाम प्राणो
वायुर्यद्वायव्य एतमेवैनमभिसंजानानाः[6] पशव उपतिष्ठन्ते वायव्या[7]
कार्या३ प्राजापत्या३ इति मीमांसन्ते यद्वायव्यां कुर्यात्प्रजापतेरि-
याद्यत्प्राजापत्यां[8] वायोरियाद्य एव कश्चाग्नौ पशुरालभ्यते तस्याग्नये
वैश्वानराय पुरोडाशं कुर्याद्यद्वायव्यः पशुस्तेन वायोर्नैति यत्प्राजापत्यः
पुरोडाशस्तेन प्रजापतेर्नैति यद्द्वादशकपालो द्वादशमासस्संवत्सरस्संव-
त्सरो ऽग्निर्वैश्वानरस्तेन वैश्वानरत्वान्नैति[9] ॥ ८ ॥
cf. Mâitr. S. 3, 1, 10; Kap. S. 30, 6 (Fragment).

---

[1] So corr. Ch नालभेतानावरुद्धा [2] So corr. Ch यज्ञे [3] So corr. Ch तेन वैन्द्राः क्रियते [4] So corr. Ch अनुमादय [5] So corr. Ch द्यद्रङ्व° [6] So corr. Ch जनाना [7] So corr. Ch वायव्याः [8] So corr. Ch प्रजापतिरि° [9] So corr. Ch चेति

आग्नावैष्णवमेकादशकपालं निर्वपत्यग्निर्वै सर्वा देवता विष्णुर्य-
ज्ञो देवताश्चैव यज्ञं चालभते मुखं वै देवानामग्निः परो ऽन्तो विष्णु-
र्यज्ञस्यैवान्तौ[1] समग्रहीदथादित्येभ्यो घृते[2] चरुरादित्या वा इत उत्त-
मा अमुं लोकमायन्नादित्या इमाः प्रजा आदित्यानां नेदिष्ठिनीस्स्वा-
5 मेव[3] देवतामुपैति घृते भवति घृतभागा ह्यादित्या अथाग्नये वैश्वान-
राय द्वादशकपालस्संवत्सरो वा अग्निर्वैश्वानरो द्वादशमासस्संवत्सर-
स्संवत्सरस्याप्त्यै ॥ यो ऽयोनिमग्निं चिनुते यजमानस्य योनिमनु प्र-
विशति स एनं निर्दहति संवत्सरो वा अग्निर्वैश्वानरस्संवत्सरो ऽग्नेर्यो-
निर्यदग्नये[4] वैश्वानराय योनिमन्तमेवैनं चिनुत एषा वा अग्नेः प्रिया
10 तनूर्या वैश्वानरी यदग्नये वैश्वानराय प्रियाया एवास्य तन्वे हविष्कृ-
त्वा प्रियां तन्वमादत्ते कामो वा अग्निर्वैश्वानरो यदग्नये[5] वैश्वानराय
निर्वपत्यश्नुते[6] तं कामं यस्मै कामाय दीयते यद्द्वादशकपालो द्वादश-
मासस्संवत्सरो या वै प्रजा भ्रंशन्ते संवत्सरात्ता भ्रंशन्ते याः प्रतितिष्ठ-
न्ति संवत्सरे ताः प्रतितिष्ठन्ति संवत्सर एव प्रतिष्ठायाग्निं बिभ-
15 र्ति ॥ ९ ॥ cf. Mâitr. S. 3, 1, 10; Kap. S. 30, 7 (Fragment).

षडाधीतयजूंषि जुहोति षड्वा ऋतव ऋतुभिरेवैनं दीक्षयत्यृतुभि-
रस्या वीर्यमुद्यच्छते सप्तैतानि जुहोति सप्त प्राणाः प्राणैरेवैनं दीक्ष-
यति नाना जुहोति तस्मान्नानावीर्याः प्राणाश्चक्षुश्श्रोत्रं वागनुष्टुभो-
त्तमं जुहोति वाग्वा अनुष्टुब्वाचमेवोत्तमां दधाति तस्माद्वाक्प्राणा-
20 नामुत्तमा विहितं वदत्यनुष्टुब्वै सर्वाणि छन्दांसि पशवश्छन्दांस्यन्नं
पशवः पशूनेवान्नाद्यमवरुन्द्धे यज्ज्योतिषि प्रवृणक्ति[7] भूतं तेनावरु-
न्द्धे यदङ्गारेषु भविष्यत्तेनाङ्गारेषु प्रवृज्या[8] भविष्यद्धि भूयो भूतान्मा
सु भित्था मा सु रिष इति दृंहत्येवैनामरिष्टा त्वमुदिहि यज्ञे अस्मि-

---

[1] So corr. Ch वार्तौ [2] So corr. Ch घृतं [3] So corr. Ch नेदिष्टीनोस्स्व°
[4] So corr. Ch ग्निर्योनेर्यं° [5] So corr. Ch ययद° [6] So corr. Ch निवप°
[7] So corr. Ch प्रवृणांति; Kap. S. 30, 8 प्रवृणत्ति [8] So auch Kap. S. 30, 8.

न्निति समष्ट्यै द्वाभ्यां प्रवृणक्ति द्विपाद्यजमानः प्रतिष्ठित्यै ॥ परीध्या[1]
बुभूषतो गर्भो[2] दीक्षितो ऽत इव वा एष भवत्यत एवैनं जनयति म-
थित्वा गतश्रेरवदध्याद्भूतो हि स स्वामेव देवतामुपैत्यन्यत[3] आहृत्या-
वदध्याद्यं कामयेत भ्रातृव्यमस्मै जनयेयमिति भ्रातृव्यमेवास्मै जनयति
भृज्जनादवदध्यादन्नकामस्य भृज्जने वा अन्नं क्रियते सयोन्येवान्नमव- 5
रुन्द्धे[4] यो वृक्ष उपरि दीप्येत तस्यावदध्यात्स्वर्गकामस्यैष वा अग्नीनां
स्वर्ग्यस्स्वर्गस्य लोकस्य समष्ट्यै द्वन्नस्सर्पिरासुतिरिति[5] कृमुकं लि-
खितं[6] घृतेनाक्त्वावदधात्यग्नेर्वै[7] प्रिया तनूस्तया कृमुकं[8] प्राविशत्तेजो
घृतं प्रियामेवास्य तन्वं तेजसा समनक्ति[9] मुञ्जानवदधात्यूर्ग्वै मुञ्जा ऊ-
र्जमेवास्मा अपिदधाति परस्या अधि संवत इत्यौदुम्बरीमूर्ग्वा उदुम्बर 10
ऊर्जमेवास्मा अपिदधाति परमस्याः परावत इति वैकङ्कतीमग्नेर्वै
सृष्टस्य विकङ्कतं भा आर्छत्तदेवावरुन्द्धे यदग्ने कानि कानि चेति न ह
स्म वै पुराग्निरपरशुवृक्णं दहति तदस्मा एताभिः प्रयोग ऋषिरस्व-
दयद्यदेताभिस्समिध आदधातीध्ममेवास्मै स्वदयति स्वदितमस्यान्नं
भवति य एवं वेद छन्दांसि वा अग्नेर्योनिर्यच्छन्दोभिरादधाति[10] 15
स्वेनैवैनं[11] योनिनानुबिभर्ति रात्रीं[12] रात्रीमप्रयावं भरन्त इत्याशिष-
मेवाशास्ते नाभा पृथिव्यास्समिधानो अग्निमिति पृतना एवैतया
जयति ॥ यास्सेना[13] अभीत्वरीरित्यग्निं वै जातं[14] रक्षांस्यजिघांसंस्ते
देवा एता ऋचो ऽपश्यंस्ताभिरस्माद्रक्षांस्यपाघ्नन्यदेताभिस्समिध आ-
दधाति रक्षसामपहत्या अथैतन्मालिम्लवं देवाश्च[15] वा असुराश्चास्प- 20
र्धन्त ते देवा एतन्मालिम्लवमपश्यंस्तेनासुरानभ्यभवन्यदेतेन समिध
आदधाति भ्रातृव्यस्याभिभूत्यै तस्माद्यां समामग्निं चिन्वन्ति ग्राहुका-

---

[1] So auch Kap. S. 30, 8. [2] So corr. Ch गर्भौं [3] So corr. Ch देवतापै-भ्यन्यत; Kap. S. 30, 8 देवतामुपैभ्यन्यत [4] So corr. Ch सयोन्यवा° [5] So corr. Ch सुरिति [6] So corr. Ch क्रमुक ल्लिखितं; Kap. S. 30, 8 क्रमुं लिखितं [7] So corr. Ch ग्नोर्वै [8] Kap. S. 30, 8 क्रमुकं [9] So corr. Ch तेजसामनक्ति [10] So corr. Ch यश्छंदो° [11] So corr. Ch वैनं [12] Ch रात्रीं [13] So corr. Ch स्सेना [14] Ch जातिं [15] So corr. Ch वन्दे°

स्तेनं भवन्ति यास्तेना अभीत्वरीरित्यौदुम्बरीं देवा वै यज्ञोर्जं व्यभ-
जन्त तत उदुम्बरो ऽजायत जातायैवास्मा ऊर्जमपिदधाति दंष्ट्राभ्यां
मलिम्लूनग्न इत्याश्वत्थीमेष वै वनस्पतीनां सपत्नसाहो विजित्यै य-
र्हिं दंष्ट्राभ्यामिति ब्रूयाद्यं द्विष्यात्तं मनसा ध्यायेन्मनो[1] वै वाचः क्षे-
5 पीय[2] आहुतिमेवैनं भूतामग्नये ऽपिदधाति ये जनेषु मलिम्लव इति
वैकङ्कतीमग्नेर्वै सृष्टस्य विकङ्कतं भा आर्छत्तदेवावरुन्द्धे यो अस्मभ्यम-
रातीयादिति शमीमयीं शान्त्यै निन्दाद्यो अस्मान्दिप्साच्चेति[3] तस्माद-
ग्निचितो नाश्लीलं कीर्तयेत्संशितं मे ब्रह्मेति ब्रह्मणैव क्षत्रं संश्यति
क्षत्रेण ब्रह्म तस्माद्ब्रह्मपुरोहितं क्षत्रमत्यन्यानि क्षत्राणि तस्माद्ब्रह्म क्ष-
10 त्रवदत्यन्यान्ब्राह्मणानुदेषां[4] बाहू[5] अतिरमुद्वर्चो अथो बलमित्याशि-
षमेवाशास्ते क्षिणोमि ब्रह्मणामित्रानुन्नयामि[6] स्वाँ अहमिति यथा-
यजुः ॥ १० ॥ cf. Mâitr. S. 3, 1, 9; Kap. S. 30, 8.

दृशानो रुक्म उर्विया व्यद्यौदिति रुक्मं प्रतिमुञ्चेत मृत्युर्वा अ-
ग्निरमृतं हिरण्यममृतेनैव मृत्योरन्तर्धत्त एकविंशतिनिर्बाधो भवति
15 प्रतिष्ठित्या एकविंशतिर्देवलोकास्तेभ्य एव भ्रातृव्यं निर्बाधते बहि-
ष्टान्निर्बाधं कुर्यादस्मादेवैनं लोकान्निर्बाधत[7] उभयतः पर्यस्यति प्र-
तिमुञ्चमान उभाभ्यामेवैनं लोकाभ्यां[8] निर्भजति नक्तोषासेत्यहोरा-
त्राभ्यामेवैनं परिगृह्णाति देवा अग्निं धारयन्द्रविणोदा इति प्राणा वै
देवा द्रविणोदाः प्राणैरेवैनं दाधार षडुद्यामं शिक्यं भवति षड्वा ऋ-
20 तव ऋतुभिरेवैनं परिगृह्णाति द्वादशोद्यामं भवति द्वादश मासास्सं-
वत्सरस्संवत्सरेणैवैनं परिगृह्णाति मौञ्जं भवत्यूर्ग्वै मुञ्जा ऊर्जैनं परि-
गृह्णाति ॥ नाधोनाभि बिभृयादग्निरस्य रेतो निर्दहेदूर्ध्वं नाभ्या बि-
भृयादूर्ध्वं नाभ्यास्तदेवमग्निस्सर्वा देवतास्तदेव एव देवता बिभर्ति

---

[1] So corr. Ch ध्यायन्म° [2] So corr. Ch क्षेपेय [3] So corr. Ch प्साश्चेति
[4] So corr. Ch क्षत्रंवद° [5] So auch oben 16, 7 a. E.; desgl. Kap. S. 30, 8.
[6] So corr. Ch ब्राह्मणा° [7] So corr. Ch धा कु° वैनल्लो° [8] So corr. Ch वैनल्लो°

विश्वा[1] रूपाणीति सावित्र्या प्रतिमुञ्चते प्रसूत्या आसीनः प्रतिमुञ्चते
तस्मादासीनाः प्रजाः प्रजायन्ते सुपर्णो ऽसि गरुत्मानित्यग्नेर्वा एते
संभारा[2] अग्निमेवैतैस्संभरत्येतद्वा अग्नेः प्रियं धाम तदेवावरुन्द्धे दिवं
गच्छ स्वः पतेति स्वर्गस्य लोकस्य समष्ट्या असुराणां वा इमे लोका
आसँस्ते देवा विष्णुमब्रुवन्यावदयं[3] कुमारो विक्रमते तावन्नो दत्तेति 5
स सकृदेवेमां[4] व्यक्रमत गायत्रीं छन्दस्सकृदन्तरिक्षं त्रिष्टुभं छन्दस्सकृ-
द्दिवं जगतीं छन्दस्सकृद्दिशो ऽनुष्टुभं छन्दस्ते देवा इमांल्लोकानसुरा-
णामविन्दन्त ततो देवा अभवन्परासुरा अभवन्य एवं विद्वान्प्रक्रमा-
न्प्रक्रामतीमानेव लोकान्भ्रातृव्यस्य विन्दते भवत्यात्मना परास्य भ्रा-
तृव्यो भवत्यक्रन्ददग्निरित्येतया वै वत्सप्रीर्भालन्दनो ऽग्नेः प्रियं धामा- 10
वारुन्द्धाग्नेरेवैतया[5] प्रियं धामावरुन्द्धे ऽग्ने ऽभ्यावर्तिन्नग्ने अङ्गिरः पु-
नरूर्जा सह रय्येति पुनरेति तस्माद्ग्राम्याः पशवस्सायमरण्याद्ग्राममा-
यान्ति चतसृभिश्चतुष्पादा हि पशवो दक्षिणा पर्यावर्तते तस्माद्द-
क्षिणो ऽर्धं आत्मनो वीर्यावत्तर आ त्वाहार्षमित्या ह्येनँ हरति विश-
स्त्वा सर्वा वाञ्छन्त्वस्मे राष्ट्रमधिश्रयेति यं[6] कामयेत राष्ट्रँ स्यादिति 15
तं मनसा ध्यायेद्राष्ट्रमेव भवत्युदुत्तमं वरुण पाशमस्मदिति शुनश्शेपो
वा एतामाजीगर्तिर्वरुणगृहीतो ऽपश्यत्तया वै स वरुणपाशादमुच्यत
वरुणपाशमेवैतया प्रमुञ्चते ऽग्ने बृहन्नुषसामूर्ध्वो अस्थादिति पाप्मा
वै तमः पाप्मानमेवैतयापहते हँसश्शुचिषदिति साम्नान्येवैतया प्री-
णाति सदित्यभिपूर्वमेवैनँ सति प्रतिष्ठापयत्यासन्द्यां[7] सादयति सूयते[8] 20

---

[1] So corr. Ch विद्वा [2] So corr. Ch संभरा [3] Ch दयै [4] So corr. Ch देवैमां [5] So corr. Ch मावरुन्धा° [6] So corr. Ch स्मै राष्ट्रमधिश्रियेति यः; cf. oben 16, 8. [7] So corr. Ch संध्यीं [8] Hier bin ich so kühn gewesen, eine grössere Einschaltung zu machen, da der Text von Ch eine offenbare Lücke zeigte, die sich nach Kap. S. 31, 1 ergänzen liess. Ch hat सादयति सूस्मादासंध्यीं सादयति etc. Was zwischen den Silben सू und स्मा ausgefallen ist, lehrt Kap. S. 31, 1, wo es heisst आसंद्यां सादयति सूयते वा एषो ऽग्निनां य उखायां भ्रियते तस्मादासंद्यां सादयति etc. Mit den erforderlichen Correcturen habe ich darnach ergänzt. Mâitr. S. 3, 2, 1

वा एषो ऽग्नीनां य उखायां भ्रियते तस्मादासन्द्यां सादयति यदध-
स्तात्सादयेत्स्रपादुका गर्भास्स्युरुपरि सादयति गर्भाणां धृत्या अप्रपादाय[1]
तिसृभिरुपतिष्ठते त्रयः प्राणाः प्राणो व्यानो ऽपानस्तानेव यजमाने
दधाति त्रय इमे लोका एष्वेव लोकेष्वृध्नोति ॥ ११ ॥
cf. Mâitr. S. 3, 2, 1; Kap. S. 32, 1.

5 अथैतद्वात्सप्रमेतेन[2] वै वत्सप्रीर्भालन्दनो[3] ऽग्नेः[4] प्रियं धामावारु-
न्द्धाग्नेरेवैतेन[5] प्रियं धामावरुन्द्ध एतेन वै स ऋषीणामधिवादमपा-
जयत्पाप्मानमेवैतेनाधिवादमपजयत्येतेन[6] वै सो ऽभिशस्तीरजयद-
भिशस्तीरेव जयति य एवं विद्वानेतेनोपतिष्ठते यत्प्रक्रमान्प्रक्रामति
यामं तेन दाधार यदुपतिष्ठते क्षेमं तेन[7] पूर्वेद्युः प्रक्रामत्यपरेद्युरुपतिष्ठते
10 तस्माद्यामे ऽन्यासां प्रजानां मनः क्षेमे ऽन्यासां तस्माद्यायावरः क्षेम-
स्येशे तस्माद्यायावरः क्षेम्यमध्यवस्यत्येकादशं भवत्येकादशाक्षरा त्रि-
ष्टुब्वीर्यं त्रिष्टुब्वीर्यमेवावरुन्द्धे ॥ एकेषं वै पुरान आसीत्तत एतदृषयो
ऽग्नये द्वीषमाधानमपश्यंस्तस्माद्द्वीषमग्नय[8] आधानं कुर्वन्ति तामिद-
मनुकृतिं द्वीषमनः क्रियत[9] उदु त्वा विश्वे देवा इति प्राणा वै विश्वे
15 देवाः प्राणैरेवैनमुद्यच्छते मनुष्या वै विश्वे देवा मनुष्यैरेवैनमुद्यच्छते
ऽग्ने भरन्तु[10] चित्तिभिरिति यस्मा एवैनं चित्तायोद्यच्छते तेनैनं सम-
र्धयति प्रेदग्ने ज्योतिष्मान्याहीत्यभि वा एष एतर्हि प्रजाश्शोचयति
शान्त्या अक्रन्ददग्निरित्यनुमन्त्रयेत यदि स्वेदेत्क्रन्दतव[11] ह्यनसा वह-
न्ति तस्मादनस्वी च रथी चातिथीनामपचिततमा अन्नपते अन्नस्य

---

a. E. hat यश्चीयते für य उखायां भ्रियते, was natürlich auch möglich wäre; doch liegt es hier näher, nach Kap. S. zu ergänzen.

[1] So corr. Ch अप्रपादय [2] So corr. Ch प्रमौतेन [3] So corr. Ch र्बाल°, cf. oben 19, 11. [4] So corr. Ch ग्निः [5] So corr. Ch मावरुन्धा° [6] So corr. Ch वादमजयत्ये° [7] So corr. Ch तिन [8] So corr. Ch ग्नय द्वीषमादधानाम°; in Kap. S. 30, 2 lautet die ganze Stelle एकेषं वै पुरानायासीत्तत एतदृषयो ग्नये द्वैषमाधान पश्यंस्तस्माद्द्वैषमग्नय आधानं कुर्वति तामिदमनुकृतिं द्वैषमनः क्रयत etc. [9] So corr. Ch कृति द्वीषमनविंयत [10] So corr. Ch भरतुं [11] So corr. Ch क्रन्दतीव; Kap. S. 31, 2 = Corr.

नो देहीत्यन्नमेवास्मै स्वदयत्यनमीवस्य शुष्मिण इत्ययक्ष्मस्येत्येवैत-
दाह[1] प्र प्रदातारं तारिष[2] ऊर्जं नो धेहि द्विपदे चतुष्पद[3] इत्याशिष-
मेवाशास्ते समिधाग्निं दुवस्यतेति घृतेनाक्ता समिधमादधाति यथा
ब्राह्मणायातिथये[4] सर्पिष्वन्तं पचत्येवमेव[5] तद्गायत्र्या ब्राह्मणस्याद्-
ध्याद्गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्यो जगत्या 5
वैश्यस्य जागतो हि वैश्यो यथाछन्दसमेवापो[6] देवीः प्रतिगृह्णीत
भस्मैतदित्यप्सु भस्म प्रवपत्यापो वा अग्नेर्योनिस्स्वमेवैनं योनिं गम-
यति तिसृभिस्त्रिवृद्वा[7] अग्निर्यावानेवाग्निस्तं प्रतिष्ठां गमयति परा वा
एषो ऽग्निं वपति यो ऽप्सु भस्म प्रवपति संसृज्य मातृभिष्ट्वं ज्योतिष्मा-
न्पुनरासद इति ज्योतिरेवास्मिन्दधात्यूर्जा वा एष पशुभिर्व्यृध्यते यो 10
ऽप्सु भस्म प्रवपति पुनरूर्जा सह रय्येति पुनरेवोर्जं पशूनवरुन्द्धे बो-
धा मे अस्य वचसो यविष्ठेति तस्मात्प्रजास्सुषुपुषीः प्रबुध्यन्ते स बो-
धि सूरिर्मघवेति तस्मात्पशवः प्रेत्वानश्चरित्वा पुनरेत्य यथालोकं नि-
षीदन्ति[8] द्वाभ्यां द्विपाद्यजमानः प्रतिष्ठित्यै ॥ १२ ॥

cf. Mâitr. S. 3, 2, 2; Kap. S. 32, 2.

देवं बर्हिस्सुदेवं देवैस्स्यात्सुवीरं वीरैर्वस्तोर्वृज्येताक्तोः प्रभ्रियेता- 15
त्यन्यान्राया बर्हिष्मतो मदेम[9] वसुवने वसुधेयस्य वेतु यज देवीर्द्वार-
स्संघाते वीड्वीर्यामञ्छ्रथिरा[10] ध्रुवा देवहूतौ वत्स ईमेनास्तरुण आ-
मिमीयात्कुमारो वा नवजातो मैना[11] अर्वा रेणुककाटः प्रणग्वसु-
वने[12] वसुधेयस्य व्यन्तु यज देवी उषासानक्ताद्यास्मिन्यज्ञे प्रयत्यह्ने-
तामपि नूनं दैवीर्विशः प्रायासिष्टां सुप्रीते सुधिते वसुवने वसुधेयस्य 20

---

1 So corr. Ch स्येतेवै°; Kap. S. 31, 2 = Corr. 2 So corr. Ch प्रपदातारिष; cf. oben 16, 10. 3 So corr. Ch चतुष्पदे 4 So corr. Ch तिथेय 5 Ch erste Hand सर्पिष्वंतम्पचतेवमेव; Kap. S. 31, 2 समर्पिष्मंत पचत्येवमेतत; cf. TS 5, 2, 2, 4 यथातिथय आगताय सर्पिष्वदातिथ्यं क्रियते etc. 6 So corr. Ch यथाछन्दसामे° 7 So corr. Ch वृद्धा 8 So corr. Ch पूत्वानश्चरित्वा पुनरेत्य यथालोकान्निषी° 9 So corr. Ch सदेम; Mâitr. S. 4, 13, 8 a. A. = Corr. 10 Ch यामंछिथिरा 11 So corr. Ch मेना 12 So corr. Ch प्राणग्व°; Mâitr. S. 4, 13, 8 = Corr.

वीतां यज देवी जोष्ट्री वसुधिती ययोरन्याघा द्वेषांसि यूयवदान्या
वक्षद्वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज देवी
ऊर्जाहुती इषमूर्जमन्या वक्षत्सग्धिं सपीतिमन्या नवेन पूर्वं दयमा-
नास्स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां[1] वसु-
5 वने वसुधेयस्य वीतां[2] यज देवा दैव्या होतारा पोतारा नेष्टारा हता-
घशंसा[3] आभरद्वसू[4] वसुवने वसुधेयस्य वीतां[5] यज देवीस्तिस्रस्तिस्रो
देवीरिडा सरस्वती भारती द्यां भारत्यादित्यैरस्पृक्षत्सरस्वतीमं रुद्रैर्य-
ज्ञमावीदिहैवेडया[6] वसुमत्या सधमादं[7] मदेम वसुवने वसुधेयस्य व्य-
न्तु यज देवो नराशंसस्त्रिशीर्षा षडक्षश्शतमिदेनं शितिपृष्ठा आद-
10 धति सहस्रमीं प्रवहन्ति मित्रावरुणेदस्य होत्रमर्हतो बृहस्पतिस्स्तो-
त्रमश्विनाध्वर्यवं वसुवने वसुधेयस्य वेतु[8] यज देवो वनस्पतिर्वर्षप्रा-
वा[9] घृतनिर्णिग्द्यामग्रेणास्पृक्षदान्तरिक्षं[10] मध्येनाप्राः पृथिवीमुपरे-
णादृंहीद्वसुवने वसुधेयस्य वेतु यज देवं बर्हिर्वारितीनां निधेधासि[11]
प्रच्युतीनामप्रच्युतं निकामधरणं पुरुस्पार्हं यशस्वदेना बर्हिषान्या ब-
15 र्हींष्यभिष्याम वसुवने वसुधेयस्य वेतु यज देवो अग्निस्स्विष्टकृत्सु-
द्रविणा मन्द्रः कविस्सत्ययजी[12] होता होतुर्होतुरायजीयानग्ने यान्दे-
वानयाड्याँ अपिप्रेर्ये ते होत्रे अमत्सत तान्समनैषीर्होत्रां[13] देवंगमां
दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होताभूर्वसुवने वसुधेयस्य नमो-
वाके[14] वीहि यजाग्निमद्य[15] होतारमवृणीतायं यजमानः पचन्पक्तीः
20 पचन्पुरोडाशान्बध्नन्बृहस्पतये छागं सूपस्था अद्य देवो वनस्पतिरभ-

---

[1] So corr. Ch अधाता; Mâitr. S. 4, 13, 8 = Corr. [2] So corr. Ch वीता [3] So corr. Ch हुताघशंसा; Mâitr. S. 4, 13, 8 = Corr.; cf. auch VS 28, 17. [4] So corr. Ch आरभद्वसु; Mâitr. S. 4, 13, 8 = Corr.; cf. auch VS 28, 17. [5] So corr. Ch वीता [6] So corr. Ch हैवीडया [7] So corr. Ch सदमादं [8] So corr. Ch वेत्त [9] So corr. Ch वर्षप्रवा [10] So corr. Ch घृतंनिर्णिग्स्यामग्रेणास्पृ° [11] So auch Mâitr. S. 4, 13, 8 a. E.; TBr. 3, 16, 13, 1. [12] So corr. Ch सत्यमयजी; cf. सत्ययज् und यजिन [13] So meine Correctur; Ch तांसिमनोषींर्होत्रां [14] So corr. Ch नामोवाके [15] So corr. Ch ग्निनि सद्य; cf. Mâitr. S. 4, 13, 9.

वद्बृहस्पतये छागेन बभ्नन्नश्विभ्यां छागं सूपस्था अद्य देवो वनस्पति-
रभवत्सरस्वत्यै मेषा बभ्नन्निन्द्राय मेषं सूपस्था अद्य देवो वनस्पतिर-
भवदिन्द्राय मेषेणाक्षंस्तान्मेदस्तः[1] प्रतिपचताग्रभीषतावीवृधन्त पुरो-
डाशैस्त्वामद्यर्षे आर्षेयर्षीणां नपादवृणीतायं यजमानो बहुभ्य आ
संगतेभ्य एष मे देवेषु वसु वार्यायक्ष्यत[2] इति ता या देवा देवदाना- 5
न्यदुस्तान्यस्मा आ च शास्वा च[3] गुरस्वेषितश्च[4] होतरसि भद्रवाच्याय
प्रेषितो मानुषस्सूक्तवाकाय सूक्तं ब्रूहि ॥ १३ ॥ cf. Mâitr. S. 4, 13, 8. 9.

अग्न[5] आयूंष्यग्ने पवस्वाग्ने पावक रोचिषा ॥
स नः पावक दीदिवो ऽग्ने देवाँ इहावह ।
उप यज्ञं हविश्च नः ॥ 10

अग्निश्शुचिव्रततम[6] उदग्ने शुचयस्तव शुचामाणं महीमू षु ॥
तं हि शश्वन्त ईडते स्रुचा देवं घृतश्चुता ।
अग्निं हव्याय वोढवे ॥

अग्निं दूतं पुरो दधे ॥
स हव्यवाडमर्त्य उशिग्दूतश्चनोहितः । 15
अग्निर्धिया समृण्वति ॥
अग्निं स्तोमेन बोधय समिधानो अमर्त्यम् ।
हव्या देवेषु नो दधत् ॥

प्रेद्धो अग्न इमो अग्ने ॥
पीपिवांसं सरस्वतस्स्तनं यो विश्वदर्शतः । 20
धुक्षीमहि प्रजामिषम् ॥
ये ते सरस्वन्नूर्मयो मधुमन्तो घृतश्चुतः ।
तेभिर्नो ऽविता भव ॥

[1] Ch liest मेषेणाक्षंस्तान्मेदस्यः; ich habe das Schlusswort corrigirt, bin aber dem अक्षंस्तान gegenüber im Zweifel; Mâitr. S. 4, 13, 9 a. A. liest छागेनाघस्तां तं मेदस्तः etc. Caland erinnert an अक्षन्नमीमदन्त [2] cf. Mâitr. S. 4, 13, 9. [3] So corr. Ch शास्वा द [4] So corr. Ch गुरःस्वे°; s. Mâitr. S. 4, 13, 9. [5] Zu diesem Capitel ist auch W 1 ζ verglichen. [6] So corr. Ch व्रतमा

दिव्यं सुपर्णं वायसं बृहन्तमपां पतिं वृषभमोषधीनाम्।
अभीपतो वृष्ट्या तर्पयन्तं सरस्वन्तमवसे जोहवीमि ॥
यस्य व्रतमुपतिष्ठन्त आपो यस्य व्रते पशवो यन्ति सर्वे।
यस्य व्रते पुष्टिपतिर्निविष्टस्तं सरस्वन्तमवसे जोहवीमि ॥ ॥ १४ ॥

5 इति श्रीमद्यजुषि काठके चरकशाखायां मध्यमिकायां सावित्रा नामैकोनविंशं स्थानकं संपूर्णम् ॥[1]

---

अपेत वीत वि च सर्पतात इति देवयजनमध्यवस्यति यो वा अस्या अधिपतिं[2] देवयजनमनिर्याच्याग्निं चिनुते यमाय ते ऽग्नयश्चीयन्ते यमो ऽस्या अधिपतिर्यममेवास्या अधिपतिं[3] देवयजनं निर्या-10 च्यात्मने ऽग्निं चिनुत इष्वग्रेण ह वा अस्या अनामृतमिच्छन्तो न विविदुर्यदेतेन[4] देवयजनमध्यवस्यत्यस्या एवानामृते ऽग्निं चिनुत उवाच ह सनाच्छव[5] एतन्मा कतिपयथं यजुरायतनादचुच्यवदिति दिवः प्रिये धामन्नग्निश्चेतव्य ऊषा[6] वै दिवः प्रियं धाम यदूषानुपवपति दिव एव प्रिये धामन्नग्निं चिनुत इष्टका[7] वा एता वैश्वानरीर-15 परिमिता यत्सिकता यत्सिकता उपवपति ता एवावरुन्द्धे ऽग्नेर्वा एषा वैश्वानरस्य प्रिया तनूर्यत्सिकता यत्सिकता उपवपति तामेवा-

---

[1] So die Unterschrift dieses Capitels in Ch. [2] So corr. Ch अधिपतिर्देव°; Kap. S. 31, 3 = Corr. [3] So corr. Ch अधिपतिर्देव°; Kap. S. 31, 3 = Corr. [4] So corr. Ch म्छंतो नावविदु°; Kap. S. 31, 3 = Corr. [5] So Ch (= सनात् श्रव); Kap. S. 31, 3 उवाच ह शहनाम्छिव [6] So corr. Ch ऊषां [7] So corr. Ch सष्टका

वरुन्द्धे ऽयँ सो अग्निरित्येतद्विश्वामित्रस्य सूक्तमेतेन वै विश्वामित्रो
ऽग्नेः[1] प्रियं धामावारुन्द्धाग्नेरेवैतेन[2] प्रियं धामावरुन्द्धे चतस्रः प्राचीरु-
पदधाति चत्वारि वै छन्दाँसि छन्दोभिर्देवास्स्वर्गं लोकमायँस्तेषां[3]
दिशस्समव्लीयन्त त एता दिश्या अपश्यँस्ताभिर्दिशो ऽदृंहन्यद्द्वे पुर-
स्तात्समीची उपदधाति द्वे पश्चाद्दिशां विधृत्या अष्टा एता उपदधात्यष्टा-
क्षरा गायत्री गायत्री स्वर्गं लोकमञ्जसा वेद स्वर्गस्य लोकस्य प्रज्ञा-
त्या अष्टा एता उपदधात्यष्टाक्षरा गायत्री गायत्रो ऽग्निर्यावानेवाग्निस्तं
चिनुते ऽष्टा एता उपधाय त्रयोदश लोकंपृणयोपदधाति ता एक-
विँशतिस्संपद्यन्त[4] एकविँशो वै स्तोमानां प्रतिष्ठा प्रतिष्ठा गार्हपत्य
एकविँशस्यैव प्रतिष्ठामनु गार्हपत्येन प्रतितिष्ठति प्रत्यग्निं चिक्यान-
स्तिष्ठति य एवं वेद पञ्चचितीकं चिन्वीत प्रथमं चिन्वानः पाङ्क्तो वै
यज्ञः पाङ्क्ताः पशवो यज्ञं चैव पशूँश्चावरुन्द्धे त्रिचितीकं चिन्वीत
द्वितीयं चिन्वानस्त्रय इमे लोका एष्वेव लोकेष्वृध्नोत्येकचितीकं चि-
न्वीतोत्तमं[5] चिन्वान एकवृदेव स्वर्गं लोकमेति पञ्च चितयः पञ्च
पुरीषाणि तद्दश दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रतितिष्ठ-
त्यस्थि वा इष्टका माँसं पुरीषं[6] यदिष्टकां पुरीषेणाभ्यूहति तस्माद-
स्थि[7] माँसेन छन्नं न[8] दुश्चर्मा भवति य एवं वेद समितं संकल्पेथा-
मिति संनिवपति क्षत्रं वा एता अग्नीनां यश्चोखायां[9] भ्रियते यश्च[10]
चीयते ब्रह्मणा क्षत्रँ समेति ब्रह्म यजुर्ब्रह्मणैवैनौ[11] संनिवपति चतु-
र्भिस्संनिवपति चत्वारि वै छन्दाँसि छन्दोभिरेवैनौ[11] संनिवपत्येषा
वा अग्नेः प्रिया तनूर्यच्छन्दाँसि प्रिययैवैनौ[11] तन्वा सँशास्ति यत्सं-
न्युप्य[12] विहरति तस्माद्ब्रह्मणा क्षत्रँ समेति ब्रह्मणा व्येति मातेव पुत्रं

---

[1] So corr. Ch ग्निः [2] So corr. Ch धामावरुन्धा° [3] So corr. Ch स्वर्गँ ल्लो° [4] So corr. Ch समपद्यन्त; Kap. S. 31, 3 = Corr. [5] So corr. Ch तोतुमं [6] So corr. Ch पुरीष्यं; Kap. S. 31, 3 = Corr. [7] So corr. Ch दस्ति [8] So corr. Ch नश्छन्नं [9] So corr. Ch यच्चो° [10] So corr. Ch यच्च [11] So corr. Ch वैनो [12] So corr. Ch यत्म°; Kap. S. 31, 3 यःसन्नुप्य

पृथिवी पुरीष्यमित्यृतुभिरेवैनं दीक्षयित्वर्तुभिर्विमुञ्चति[1] प्रजापति-
र्विश्वकर्मा विमुञ्चत्विति प्रजापतिमेवास्या विमोक्तारं करोति ॥ १ ॥
cf. Mâitr. S. 3, 2, 3; Kap. S. 32, 3.

अथैता नैर्ऋतीस्तिस्रः कृष्णास्तुषपक्वा यत्कृष्णा एष हि तं वर्ण-
स्सचते यं[2] निर्ऋतिर्गृह्णात्येतद्वै निर्ऋत्या[3] भागधेयं यत्तुषा रूपेण
5 चैव भागधेयेन च निर्ऋतिं[4] निरवदयते यदस्य पारे रजस इति वै-
श्वानर्यादत्ते स्वदयत्येवेमां दिशं हरन्त्येतां हि तं दिशं हरन्ति यं[5] निर्ऋ-
तिर्गृह्णात्येषा वै निर्ऋत्या दिक्[6] स्वायामेव दिशि निर्ऋतिं निरव-
दयते स्वकृत इरिण उपदधात्येतद्वा अस्या निर्ऋतिगृहीतं यत्रैवास्या
निर्ऋतिगृहीतं निर्ऋतिं निरवदयते ॥ पराचीरुपदधाति पराचीमेव
10 निर्ऋतिं[7] निरवदयते तिस्र उपदधाति त्रेधाविहितो वै पुरुषो या-
वानेवास्यात्मा तस्मान्निर्ऋतिं निरवदयते[8] यं ते देवी निर्ऋतिराबब-
न्धेति शिक्यमधिन्यस्यति नैर्ऋतो वै पाशो निर्ऋतिपाशादेवैनं मुञ्च-
ति पितृलोकं वा एते निगच्छन्ति ये दक्षिणा नैर्ऋतीभिश्चरन्ति[9]
देवलोक आहवनीयो[10] यदाहवनीयमुपतिष्ठते देवलोकमेवोपावर्तते
15 त्रिष्टुभोपतिष्ठते वीर्यं वै त्रिष्टुब्वीर्यमेवास्मिन्दधात्येकयैकधैवास्मिन्वीर्यं
दधाति ॥ २ ॥ cf. Mâitr. S. 3, 2, 4; Kap. S. 32, 4.

यावान्पुरुष ऊर्ध्वबाहुस्तावता वेणुना विमिमीत एतावद्वै पुरुषे
वीर्यं वीर्येणैवैनं विमिमीते त्रीन्पुरुषान्प्राञ्चं मिमीते चतुरस्तिर्यञ्चं
तस्मात्सप्त पुरुषानभ्यग्निचिदन्नमत्ति त्रीन्परस्तात्त्रीनवस्तादात्मा सप्त-
20 मो ऽरत्निमात्रं पक्षयोरुपदधाति[11] प्रादेशमात्रं पुच्छे पुरुषेण वै यज्ञ-
स्संमितो यज्ञपुरुषासंमितं तस्मात्पक्षप्रवयांसि[12] वयांसि षड्वेन कृ-

---

[1] So corr. Ch त्वंतुभि॰ [2] So corr. Ch यन्नि॰ [3] So corr. Ch निनृत्या
[4] So corr. Ch निनृति [5] So corr. Ch यन्नि॰ [6] So corr. Ch दिशि; Kap. S. 31, 4 एषा वै निर्ऋत्या दिशां स्वायामेव दिशि etc.; aber Mâitr. S. 3, 2, 4 a. A. एषा हि निर्ऋत्या दिक् [7] Ch schreibt निर्ऋतिन्निर॰ [8] So corr. Ch निर्ऋतिर्निर॰ [9] So corr. Ch नैर्ऋतिभि॰ [10] So corr. Cal. Ch नीये [11] So corr. Ch मात्रमन्नयो॰
[12] Dasselbe auch Kap. S.32, 5; cf. TS 5, 2, 5, 1.

षति षड्वा ऋतव ऋतुभिरेव तिस्रस्तिस्रस्सीतास्संपादयति[1] त्रिवृद्ध्य-
ग्निस्ता द्वादश संपद्यन्ते ॥ द्वादश मासास्संवत्सरस्संवत्सरस्यैव विधा-
मनुविधीयते ऽथो ऋतुभिरेव कृष्ट्वा संवत्सरे प्रतितिष्ठतीयं वा अग्ने-
रतिदाहादबिभेत्सैतद्द्विगुणं कृष्टं चाकृष्टं चाकुरुत[2] यत्कृष्टं चाकृष्टं च
भवत्यस्या अनतिदाहायाथो द्विगुणेनैवास्या वीर्यमुद्यच्छत एताव-
न्तो वै पशवो द्विपादश्च चतुष्पादश्च तानेतदग्नौ प्रतिदधाति यदुदीच
उत्सृजेद्रुद्राय[3] पशूनपिदध्यादपशुस्स्याद्यद्दक्षिणा पितृभ्यो निधूवेद्य-
त्प्रतीचो रक्षांसि हन्युर्दक्षिणा प्राचस्सूर्यमभ्युत्सृजति सूर्यो वै पशूनां
प्राणः प्राणमेवैनानभ्युत्सृजत्योषधीनामृग्भिरोषधीनां[4] फलानि वपति
रूपेणैवान्नमवरुन्द्धे ऽन्नस्यान्नस्य वपति सर्वमेवान्नमवरुन्द्धे यस्य न
वपति तेन व्यृध्यते यस्य न वपेत्तन्मनसा ध्यायेत्तेनैव तदवरुन्द्धे चतु-
र्दशभिर्वपति सप्त वै ग्राम्या ओषधयस्सप्तारण्यास्ता एवोभयीरवरु-
न्द्धे[5] ऽन्नमर्को ऽर्को ऽग्निरर्क एवैतदर्कश्चीयते कृष्टे[6] वपति कृष्टे ह्याशि-
ष्ठमोषधयः प्रतितिष्ठन्त्यनुसीतं प्रजात्यै द्वादशसु सीतासु वपति[7] द्वादश
मासास्संवत्सरस्संवत्सरेणैवास्मा अन्नं पचति ॥ ३ ॥

cf. Mâitr. S. 3, 2, 4. 5; Kap. S. 32, 5.

दिग्भ्यो लोष्टान्समस्यति दिग्भ्य ऊर्जं संभरत्यूर्ज्येवाग्निं चिनुते यां
जनतां द्विष्यात्तस्या दिश आहरेदिषमूर्जमहमित आदीतीषमेवास्या[8]
ऊर्जमादत्ते क्षोधुका भवत्युत्तरवेदिं निवपत्युत्तरवेद्यां ह्यग्निश्चीयते ऽथो
यज्ञपरुरेव नान्तरेति पशवो वा उत्तरवेदिः पशूनेवावरुन्द्धे ऽग्ने तव
श्रवो वय इति षडृचेन निवपति षड्वा ऋतवस्संवत्सरस्संवत्सरो[9]
ऽग्निर्वैश्वानरो रूपेणैव[10] वैश्वानरमवरुन्द्धे ऽष्टाक्षरा प्रथमाष्टाशफाः
पशवः पशूनेवावरुन्द्ध ऊनातिरिक्ता मिथुनाः प्रजात्यै समुद्रं वै

---

[1] So corr. Ch तिस्रस्सीता° [2] So corr. Ch चाकृष्ट‥कुरुत; Kap. S. 32, 5 = Corr. [3] So corr. Ch उत्म° [4] So corr. Ch त्मजत्योष° [5] So corr. Ch रुंधो [6] So corr. Ch कृष्टिं; cf. TS 5, 2, 5, 5. [7] So corr. Cal. Ch द्वादशस सीतामुपवपति cf. TS 5, 2, 5, 5. [8] Auch Mâitr. S. 3, 2, 5 आदीति; Kap. S. 32, 7 आदमिति [9] So corr. mit Caland; Ch liest षड्वा ऋतव ऋतवस्संव° [10] Ch णेवा वैश्वा°

नामैतत्प्रजापतेश्छन्दस्समुद्रात्पशवः प्रजायन्ते पशूनां प्रजात्या इन्द्रो
वै वृत्राय वज्रं प्राहरत्स त्रेधाभवत्स्फ्यस्तृतीयं यूपस्तृतीयं[1] रथस्तृ-
तीयं यदशीर्यत[2] ताश्शर्कराः पशुर्वा अग्निर्वज्रश्शर्करा यच्छर्कराभिः
परिमिनोति वज्रेणैवास्मै पशून्परिगृह्णाति तस्मात्पशवो वज्रेण
5 विधृतास्तस्मात्स्थेयानस्थेयसो[3] नादत्ते दशभिर्दशभिः परिमिनुयादन्न-
कामस्य दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रतितिष्ठति नवभि-
र्नवभिरभिचरतस्त्रिवृद्वज्रो वज्रमेव भ्रातृव्याय प्रहरति सप्तभिस्सप्तभिः
पशुकामस्य सप्त प्राणाः प्राणेभ्यो ऽधि पशवः प्रजायन्ते पशूनां प्र-
जात्या अपरिमित्य शर्करास्सिकता व्यूहेद्यं कामयेतापशुस्स्यादित्यप-
10 रिगृहीतमेवास्य रेतः परासिञ्चत्यपशुर्भवति परिमित्य शर्करास्सिकता
व्यूहेद्यं कामयेत पशुमान्स्यादिति परिगृहीतमेवास्मै रेतस्सिञ्चति प-
शुमान्भवति छन्दांसि वा अग्नेर्योनिस्सोमो[4] रेतोधा यच्छन्दोभि-
र्न्युप्य सौम्या व्यूहति योना एव रेतो दधाति व्यूहति तस्माद्योनौ[5]
गर्भा वर्धन्ते समानप्रभृतयो भवन्ति नानोदर्कास्तस्मात्समानाद्योने-
15 र्नानारूपाः प्रजायन्ते गायत्र्या ब्राह्मणस्य व्यूहेद्गायत्रो हि ब्राह्मणस्त्रि-
ष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्यो जगत्या वैश्यस्य जागतो हि वैश्यो
यथाछन्दसमेव ॥ ४ ॥ cf. Mâitr. S. 3, 2, 5; Kap. S. 32, 6; TS 5, 2, 5. 6.

उपांश्वन्वाहानिरुक्तो[6] वा एतर्ह्यग्निर्यर्ह्यव्यावृत्तस्तस्मादुपांश्वन्वाह[7][8]
छन्दांस्यन्वाह छन्दोभिर्वा अग्निरुत्तरवेदिमानशे तस्माच्छन्दांस्यन्वाह
20 सूर्यस्य वा एतदध्वानं यन्ति यदश्वं प्राञ्चं[9] च प्रत्यञ्चं चाक्रमयन्ति त-
स्मादसा आदित्यः प्राङ् चैति[10] प्रत्यङ् च प्राजापत्यो ऽश्वो यदश्वमा-
क्रमयति प्रजापतिनैवैनं चिनुते ऽपां पृष्ठमसि योनिरग्नेरिति पुष्कर-

---

[1] Ch तोयं  [2] So corr. Ch प्यदशोयत; TS 5, 2, 6, 2 = Corr.; Kap. S. 32, 6 यदशोयत  [3] So corr. Ch स्थेयानः स्थेयसो; TS 5, 2, 6, 2 = Corr.; desgl. Kap. S. 32, 6.  [4] So corr. Ch अग्रे येनि°; Kap. S. 32, 6 = Corr.  [5] So corr. Ch द्योनो  [6] So corr. Ch श्वव्वाहा°  [7] So corr. यर्ह्यस्यावृत्त°; Kap. S. 32, 7 = Corr.  [8] So corr. Ch श्ववांह  [9] So corr. Ch पाञ्चं  [10] So corr. Ch प्राञ्चेति

पर्णमुपदधाति स्व एवैनं योनौ चिनुते शान्त्या अनुद्दाहाय ॥ वर्धमा-
नो महाँ आ च[1] पुष्कर इति वर्धते ह्येष यो भवति दिवो मात्रया व-
रिणा प्रथस्वेति प्रथयत्येव ब्रह्म जज्ञानं प्रथमं पुरस्तादिति रुक्ममुप-
दधाति ब्रह्ममुखाभिर्वै प्रजापतिः प्रजाभिरार्ध्नोदृद्ध्या[2] एकविंशतिनि-
र्बाधो भवति प्रतिष्ठित्या एकविंशतिर्देवलोकास्तेभ्य एव भ्रातृव्यं नि- 5
र्बाधते ऽधस्तान्निर्बाधान्कुर्याद्भ्रातृव्यस्य निगृहीत्यै न पृथिव्यां नान्त-
रिक्षे न दिव्यग्निश्चेतव्यो यत्पृथिव्यां चिन्वीतौषधीश्शुचा निर्दहेद्यद-
न्तरिक्षे वयाँसि यद्दिवि दिवममृतं हिरण्यं यद्रुक्ममुपदधात्यमृत ए-
वाग्निं चिनुते ॥ हिरण्यगर्भस्समवर्ततताग्र[3] इति पुरुषं हिरण्ययमुपद-
धाति यजमानलोकमेवैतेन दधाराथो मध्येज्योतिषमेवाग्निं चिनुते 10
द्रप्सश्चस्कन्देत्यभिमृशति[4] होत्रास्वेवैनं सत्ये प्रतिष्ठापयति सर्पशीर्षैरु-
पतिष्ठते मृत्यव एवैनं परिदधात्यथो या सर्पे त्विषिस्तामेवावरुन्द्धे
यदुपदध्यात्प्रमायुकस्स्याद्यत्समीचीनमितरैश्शीर्षैरुपदध्याद्ग्राम्यान्पशू-
न्दंशुकास्स्युर्यद्विषूचीनमारण्यान्यजुरेव वदेत्तेनैव तां त्विषिमवरुन्द्धे
तेन शान्तमेतस्माद्ध वै पुराग्निचितमदिदृक्षन्त[5] सर्वा ह्येतास्त्विषीर- 15
वारुद्ध यानौ या सर्पे या सूर्ये ऽथैतद्वामदेवस्य राक्षोघ्नं यज्ञमुखे यज्ञमुखे
वै यज्ञं[6] रक्षाँसि जिघाँसन्ति रक्षसामपहत्यै पञ्चर्चं भवति पाङ्क्तो ऽग्नि-
र्यावानेवाग्निस्तस्माद्रक्षाँस्यपहन्ति[7] सर्वा दिशो ऽनुपरिचारं जुहोति
दिग्भ्य एव रक्षाँसि हन्ति स्रुचा उपदधातीमे एवैतदुपधत्ते तूष्णीमु-
पदधाति न हीमे यजुषाप्तुमर्हत्यात्मा[8] वै पुरुषो बाहू स्रुचौ यत्स्रुचा 20
उपदधाति सात्मत्वाय दक्षिणतो वै देवानां रक्षाँस्याहुतीर्निष्काव-

---

[1] So corr. Ch महाँ शुच; Kap. S. 32, 7 = Corr. [2] So corr. Ch शब्नोद्दृ° [3] So corr. Ch ताग्रे [4] So corr. Ch द्देभ्यभि [5] So meine Correctur; Ch liest मदिदृषत; der Sinn wäre: man begehrte früher den Agnicit zu schauen, weil er so viel Glanz und Kraft in sich vereinigte. Kap. S. 32, 7 stark corrupt एतस्माद्ध वै पुराग्निचितमत्रिद्रिदिद्विमित सर्वा etc. [6] Ch यज्ञे [7] So corr. Ch वाग्नि तस्मा° [8] So corr. Ch यजुषास्तुम°; Kap. S. 32, 7 wohl यजुषाप्तुम°

मादिस्तानि[1] कार्ष्मर्येणान्तरदधत यत्कार्ष्मर्यमयीर्दक्षिणत उपदधाति रक्षसामन्तर्हित्यै ॥ घृतेन पूरयति वज्रो वै कार्ष्मर्यो वज्रो घृतं वज्र एव वज्रं दधाति गायत्र्योपदधाति गायत्रो वा अग्निर्गायत्रश्छन्दा- स्स्वेनैवैनं छन्दसा समर्धयति दध्नौदुम्बरी[2] पूरयत्यन्नं वै दध्यूर्गुदुम्बरो[3]
5 ऽन्न एवोर्जं दधाति त्रिष्टुभोपदधात्यैन्द्री वै त्रिष्टुबन्नमिन्द्रियमिन्द्रिय- मेवान्नाद्यमवरुन्द्ध इयं वै कार्ष्मर्यमय्यसा औदुम्बरी यदौदुम्बरीमुत्तरा- मुपदधाति तस्मादसा अस्या उत्तरा मूर्धन्वती मूर्धैवैताभ्यां क्रियते विराज्यग्निश्चेतव्यस्स्रुग्वै विराड् यत्स्रुचा उपदधाति विराज्येवाग्निं चि- नुते ॥ ५ ॥ cf. Mâitr. S. 3, 2, 6; Kap. S. 32, 7.

10 यां वा अविद्वानध्वर्युरिष्टकां प्रथमामुपदधाति तया यजमानस्य प्राणमपिदधाति प्रजायाश्च[4] पशूनां च स्वयमातृण्णा भवति प्राणा- नामुत्सृष्ट्यै स्वर्गस्य लोकस्यानुकशात्यै[5] प्राजापत्यो ऽश्वो यदश्वमुप- घ्रापयति प्रजापतिनैवैनं चिनुत इयं वै स्वयमातृण्णेमामेवैतदुपधत्ते[6] यदि मन्येत पूर्वो मातिक्रान्तो भ्रातृव्य इति प्राचीमुदूहेद्य एवैनं पूर्वो
15 ऽतिक्रान्तो भ्रातृव्यस्तमनया[7] प्रणुदते यदि मन्येत पश्चान्मे भ्रातृव्य इति प्रतीचीमपोहेद्य[8] एवास्य पश्चाद्भ्रातृव्यस्तमनयापनुदते प्र श्रेयांसं भ्रातृव्यं नुदते प्रति पापीयांसं नुदते ॥ यदि मन्येत सहङ् मयेति वि- चालयेद्या वा इयं प्रजा व्यधूनुत परा ता अभवन्निमेवैनं विधूनुते ऽथैषा दूर्वेष्टका पशुर्वा[9] अग्निर्न पशव आयवसे रमन्ते पशुभ्य एवै-
20 तदायतनं करोति पशूनां धृत्यै काण्डात्काण्डात्प्ररोहन्तीति प्रतिष्ठित्यै सहस्रेण शतेन चेति सहस्रवती प्रजापतिना संमिता गच्छति साह- स्रीं पुष्टिं पशूनां य एवं विद्वानेतामुपधत्ते ऽथैषा वामभृदेतया वै

[1] cf. निष्काव auch Kap. S. 32, 7; TS 6, 2, 1, 5. [2] So corr. Ch दध्नोदु° [3] So corr. Ch दाध्यू° [4] So corr. Ch प्रजाया पशूनां च; erste Hand प्रजया; Kap. S. 32, 8 प्रजायाश्च पशूनां च [5] Kap. S. 32, 8 स्यानुख्यात्यै [6] So corr. Ch मातृण्णी- मा° पाधत्ते [7] So corr. Ch भ्रातृव्यमनया; Kap. S. 32, 8 = Corr.; cf. auch unten. [8] So corr. Ch मपोहेत्या; Kap. S. 32, 8 = Corr. [9] So corr. Ch थैषांपूर्वे°; Kap. S. 32, 8 थैषा दूर्वेष्टका

देवा असुराणां वामं पशूनवृञ्जत वाममेवैतया पशूनभ्रातृव्यस्य वृङ्क्ते द्वियजुर्भवति भ्रातृव्यलोकमेव द्वियजुषा वृङ्क्ते द्वितीये हि लोके भ्रातृव्यो हिरण्यशीर्ष्णी भवति हिरण्यज्योतिरेव स्वर्गं लोकमेति ॥ प्रबाहुक्काचा आहतौ[1] भवतस्तस्मात्प्रबाहुगस्त्या अथैते रेतस्सिचा असौ वै स्वराडियं विराडुत्तानायां स्त्रियां पुमान्रेतस्सिञ्चत्यसा अस्यां रेतस्सिञ्चतीयं प्रजनयत्यग्निरग्नि संरेतसमग्निं चिनुते प्रजायते ऽत्यन्नं[2] य एवं विद्वानेते उपधत्ते[3] स्वराडसीति दक्षिणत उपदधाति तस्माद्दक्षिणतः पुमान्स्त्रियमुपशये यदि पूर्ववयसे चिन्वीतोभे सह प्रथमायां चित्यामुपदध्यात्समीची एवास्मै रेतस्सिञ्चतो ऽन्यतरामुपदध्याद्यं द्विष्यात्तस्य रेतसैवैनं व्यर्धयति यद्युत्तरवयसे चिन्वीत प्रथमायामन्यां चित्यामुपदध्यादुत्तमायामन्यां रेत एव सिक्तमाभ्यां[4] परिगृह्णात्यृतव्ये उपदधात्यृतूनां विधृत्यै द्वे द्वे उपदधाति द्वौ द्वौ ह्यृतवो ऽथैषा त्र्यालिखिता देवाश्च वा असुराश्च समावदेव यज्ञे ऽकुर्वत यदेव देवा अकुर्वत तदसुरा अकुर्वत ते देवा एतां त्र्यालिखितामपश्यंस्तामुत्तरलक्ष्माणमुपादधत[5] तदसुरा नान्ववायंस्ततो देवा अभवन्परासुरा अभवन्य एवं विद्वानेतामुत्तरलक्ष्माणमुपधत्ते भ्रातृव्यस्यानन्ववायाय भवत्यात्मना परास्य भ्रातृव्यो भवत्यधरलक्ष्माणमुपदध्याद्यं द्विष्यात्तस्यासुरयोनिमेवैनमनुपराभावयतीमे वै लोकास्त्र्यालिखितेमानेवैतया[6] लोकानाप्नोति यस्या मृद उखां कुर्वन्ति तस्या एतां कुर्यात्तेनैवास्य सर्वा इष्टका ज्योतिष्मतीर्यजुष्मतीर्भवन्ति ॥ ६ ॥ cf. Mâitr. S. 3, 2, 6. 7; Kap. S. 32, 8.

मेधो वा एष पशूनां यत्कूर्मो[7] यत्कूर्ममुपदधात्येतमेवैनं मेधमभिसंजानानाः पशव उपतिष्ठन्ते जीवन्तमुपदधाति स हि मेध्यश्चतु-

---

[1] So Ch; Kap. S. 32, 8 प्रबाहुःक्काचा आहतौ [2] Ch त्यन्नं [3] So corr. Ch उपादत्ते [4] So corr. Ch सिक्तामाभ्यां [5] So corr. Ch लक्ष्माण॰ [6] So corr. Ch लिखितंमाने॰ [7] So corr. Ch यकूर्मो; cf. TS 5, 2, 8, 5.

ष्याङ्गवति चतस्रो दिशो दिक्ष्वेव प्रतितिष्ठति मही द्यौः पृथिवी च
न इति द्यावापृथिव्योरेवैतया रूपे दाधार दध्ना च मधुना चाभ्यन-
क्त्यपां[1] वा एष ओषधीनां रसो यन्मधु[2] यन्मधुनाभ्यनक्त्यपामेवौष-
धीनां[3] रसमवरुन्द्धे मेधो वा एष पशूनामूर्ग्दधि यद्दध्नाभ्यनक्ति पशू-
5 नामेव मेध ऊर्जं दधातीष्टकचिद्वा अन्यो ऽग्निः पशुचिदन्यो यज्जी-
वन्तं कूर्ममुपदधाति तेनैवैनं पशुचितं करोत्येष वै स्वर्गस्य लोक-
स्योत्तमपदी यथा क्षेत्रवित्प्रजानन्नञ्जसान्यान्नयत्येवमेवैनमेष[4] स्वर्गं
लोकमभिनयति ॥ विष्णोर्नाभा अग्निश्चेतव्यो यो ऽनाभिमग्निं[5] चि-
नुते यजमानस्य नाभिमनुप्रविशति स एनं निर्दहत्येषा वै विष्णोर्ना-
10 भिर्यदुलूखलमुपदधाति विष्णोरेव नाभा अग्निं चिनुत औदुम्बरं भव-
त्यूर्ग्वा उदुम्बर ऊर्जमेव मध्यतो दधाति यजमाने च प्रजासु च तस्मा-
न्मध्यतः प्रजा ऊर्गूर्जयति ॥ प्रादेशमात्रं भवत्येतावती हि विष्णोर्ना-
भिर्वैष्णव्या कर्मण्यभ्योपदधाति[6] कर्म ह्येतत्क्रियते ऽथैषोखौजो वा ए-
तद्वीर्यं संभ्रियते यदुखौज एव वीर्यमवरुन्द्ध एषां वा एतल्लोकानां
15 ज्योतिरवरुन्द्धे ज्योतिर्मध्यतो[7] दधाति मध्येज्योतिषमग्निं[8] चिनुते त-
स्मान्मध्यतो ज्योतिरुपासते सिकताभिः पूरयति स्वेनायतनेनाग्नेर्वा
एतद्वैश्वानरस्य भस्म यत्सिकता रूपेणैव वैश्वानरमवरुन्द्धे यदूनामुप-
दध्यात्क्षोधुको यजमानस्स्यात्पूर्णामुपदधात्यक्षोधुको यजमानो भव-
त्यनुपदस्वदन्नमत्ति[9] घृतेन[10] पूरयत्येतद्वा अग्नेः प्रियं धाम यद्घृतं
20 प्रियेणैवैनं धाम्ना समर्धयति ॥ ७ ॥ cf. Mâitr. S. 3, 2, 7; Kap. S. 32, 9.

---

[1] So corr. Ch चप्य° [2] So corr. Ch ययन्मधु; Kap. S. 32, 9 = Corr. [3] So corr. Ch मेवोष [4] So corr. Ch सायन्यानयत्ये° [5] Kap. S. 32, 9 यो वानाभिमग्निं; vgl. TS 5, 2, 8, 7 यो वा अपनाभिमग्निं चिनुते [6] So Ch कर्मण्यभ्योप°; Kap. S. 32, 9 कर्मण्यत्वाप° [7] So corr. Ch मंच्यतो [8] So corr. Ch मध्येज्योतिषाम°; Kap. S. 32, 9 = Corr.; cf. auch oben 20, 5; Mâitr. S. 3, 2, 7 (p. 26, 12) ist मध्येज्योतिरेवं चीयते mit den Handschriften zu lesen. [9] Kap. S. 32, 9 पदस्यद° [10] So mit Caland corr. Ch घृते तेन

एकविंशतिं माषान्प्रतिन्युप्य पुरुषशीर्षमाहरत्यमेध्या वै माषा
अमेध्यं पुरुषशीर्षममेध्यैनैवामेध्यं क्रीणात्येकविंशतिर्भवन्त्येकविंशो
वै पुरुषो यावानेवास्यात्मा तं क्रीणाति सप्तधातृष्णां वल्मीकवपां
प्रतिनिदधाति व्यृद्धं वा एतत्प्राणैस्सप्त शीर्षण्याः प्राणाः प्राणैरेवैन-
त्समर्धयति यमगाथा गायति यमलोकादेवैनद्वृङ्क्ते तिस्रो गायति त्रय
इमे लोका एभ्य एवैनल्लोकेभ्यो वृङ्क्ते तस्माज्जायते न देयं गाथा ह्येव
तद्वृङ्क्ते ऽप वा एतस्मादिन्द्रियं क्रामति प्राणाश्शीर्षन्वीर्यं[1] चक्षुश्श्रोत्रं
वाग्व्यृद्धेन्द्रियं वा एतदमेध्यं मृतशीर्षमिति वा एतदाहुर्मेध्यं हिरण्यं
यद्धिरण्यशल्कैः प्रत्यस्यति मेध्यमेवैनद्यज्ञियं[2] करोत्युखायामपिधाय प्रत्य-
स्यति प्रतिष्ठामेवैनद्गमयित्वा[3] प्राणैस्समर्धयति सहस्रदा असि सहस्राय 10
त्वेति पुरुषशीर्षमुपदधाति पुरुषो ह त्वै सहस्रं पशून्यच्छति सहस्रमन्ये
पशवो यन्मध्ये पुरुषशीर्षमुपदधाति सयत्वायाथैतानि पशुशीर्षाण्ये-
ता ह वै साहस्रीरिष्टकास्सोमदक्षः कौश्रेयश्श्यामपर्णायोपदधौ[4] ततो
वै साहस्रीं पुष्टिं पशूनां जगाम गच्छति साहस्रीं पुष्टिं पशूनां य
एवं विद्वानेता उपधत्ते पुरस्तात्प्रतीचीनमश्वस्य[5] शिर उपदधाति प- 15
श्चात्प्राचीनमृषभस्य गोअश्वानेवास्मिन्समीचो दधाति समीचीना-
न्युपदध्याद्यं कामयेत पशुमान्स्यादिति समीच एवास्मिन्पशून्दधाति
विषूचीनान्युपदध्याद्यं कामयेतापशुस्स्यादिति विमुखानेवास्मात्पशू-
न्करोति ॥ नान्तरा पशुशीर्षाणि व्यवेयादध्वर्युर्यविष्ठो वै नामैषो
ऽग्निः प्राणानस्य युवेत प्रमीयेतैकमुपधायैतैस्सर्वैरुपतिष्ठेत तद्वा स- 20
र्वतो ऽनुपरिहारं सादयेत्तेनैव सर्वाण्युपधीयन्ते नार्तिमार्छत्यध्वर्युर्न
भ्रेषं न्येत्येतावन्तो[6] वै पशवो द्विपादश्च चतुष्पादश्च तानेतच्छुचार्प-

---

[1] Ch प्राणाशी° [2] So corr. Ch ज्ञियां [3] So corr. Ch प्रतिष्ठमे° [4] So corr. Ch सोमरक्षः कोश्रेय°; vgl. unten 21, 9 und Mâitr. S. 3, 2, 7 (p. 27, Z. 6); Ind. Stud. III, p. 472. 473. [5] So corr. Ch न्वस्य; Kap. S. 32, 10 = Corr. [6] Ch भ्रेषन्येत्येतावन्तौ; Kap. S. 32, 10 भ्रेषन्येत्येतावंतो; cf. TS 7, 3, 1, 1 भ्रेषं न्येति

यत्यमुमारण्यमनु[1] ते दिशामीति ग्राम्येभ्य एव पशुभ्य आरण्यान्प-
शूञ्शुचमनूत्सृजति तस्मादेते समावत्पशूनां प्रजायमानानां कनिष्ठा-
श्शुचा[2] ह्येत कृताः ॥ ८ ॥ cf. Mâitr. S. 3, 2, 7; Kap. S. 32, 10.

पशुर्वा[3] अग्निः पशोरेष[4] योनिर्विक्रियते रेतो ऽपस्याः[5] यदपस्या
5 उपदधाति[6] योना एव रेतो दधाति यदा वै पशुस्संवर्तते ऽथ[7] जायते
पशवश्छन्दस्याः[8] यदपस्या अनु छन्दस्या उपदधाति पशूनां प्रजात्यै
पञ्चोपदधाति पाङ्क्ताः पशवो यावानेव पशुस्तं प्रजनयतीयं वा अ-
ग्नेरतिदाहादबिभेत्सैता[9] अपस्या असृजत[10] ता उपाधत्त[11] यदपस्या
उपधीयन्ते ऽस्या अनतिदाहायोवाच हेयमददित्स[12] ब्रह्मणान्नं[13] य-
10 स्यैता उपधीयन्त[14] इत्यत्ति ब्रह्मणान्नं य एवं विद्वानेता उपधत्ते पञ्च
पुरस्तात्प्रतीचीरुपदधाति तस्मात्पुरस्तात्प्रत्यङ् पशुर्जायते[15] पञ्च द-
क्षिणत उदीचीस्तस्माद्दक्षिणतः[16] पुमान्स्त्रियमुपशये ॥ पञ्च पश्चा-
त्प्राचीस्तस्मात्पश्चात्प्राचीनं रेतो धीयते पञ्चोत्तराच्छन्दस्याः[17] पशवो
वै छन्दस्या उत्तरादायतनाः पशवः पशूनेव प्रजातान्स्वमायतनमभि-
15 पर्यूहति पशूनामहिंसायै नोत्तरादपस्या उपदध्याद्यदुपदध्यादभीप-
तः[18] प्रजा वरुणो गृह्णीयादपस्या अनु प्राणभृत उपदधाति रेतस्येव
सिक्ते प्राणं मनश्चक्षुश्श्रोत्रं वाचं दधाति तस्मात्प्राणान्पश्यञ्शृण्वन्व-
दन्पशुर्जायते ऽयं पुरो भूरिति[19] याः प्राणवतीस्ताः पुरस्तादुपदधाति
प्राणमेव पुरस्ताद्दधाति तस्मात्प्राङ् पशुः प्राणित्ययं दक्षिणा[20] वि-

---

[1] So corr. Ch तक्शुचा [2] So corr. Ch कनिष्ठाशुचा [3] Für dies Cap. auch T1 und Brl fol. 139 collationirt; nach diesen Mss. accentuirt. [4] Ch पशोरिष [5] Ch पस्वा [6] So Ch, ohne Acc.; T1 und Brl उपददाति [7] Ch था [8] Accent corrigirt; T1 und Brl छन्दस्या [9] So Brl; T1 आग्नेरति; Ch अग्निरति (erste Hand अग्निरते) [10] Brl und T1 असृजत, was aber schon zu der Form des vorausgehenden Svarita nicht stimmt. [11] Brl उपादत्त [12] So T1 und Brl; desgl. Ch, ohne Acc. ádad it „er soll essen"; vgl. TS 5, 4, 2, 2; Kap. S. 32, 11 वाच देहमविरिक्ष (!!) [13] So Brl, auch Kap. S. 32, 11; in Ch fehlt die Silbe न्नं; T1 nicht notirt. [14] Brl यन्ता [15] Brl जायते [16] उदीची° ohne Accent in T1 und Brl; ergänzt. [17] Ch राश्छ [18] Ch तपद° und दध्यादभीपतः [19] Ch भूदिति [20] Ch त्ययन्दक्षिणा

श्वकर्मेति या मनस्वतीस्ता दक्षिणतो मन एव दक्षिणतो दधाति
तस्माद्दक्षिणो ऽर्धो मनस्वितरस्तस्माद्दक्षिणतो मन उपचरन्त्ययं प-
श्चाद्विश्वव्यचा इति याश्चक्षुष्मतीस्ताः पश्चाच्चक्षुरेव पश्चाद्दधाति त-
स्मात्प्राङ् पशुः पश्यतीदमुत्तरात्स्वरिति याश्श्रोत्रवतीस्ता उत्तरा-
च्छ्रोत्रमेवोत्तराद्दधाति[1] तस्मादुत्तरात्पशुर्भूयश्शृणोतीयमुपरि मतिरि- 5
ति[2] या वाङ्मतीस्ता मध्ये वाचमेव मध्यतो दधाति तस्मान्मध्यतो
वाग्वदत्यक्ष्णयोपदधाति तस्मादक्ष्णयाङ्गानि पशवो हरन्तो यन्ति
याः[3] पुरस्तादुपादधात्ताभिर्वसिष्ठ आर्ध्नोद्याः[4] दक्षिणतस्ताभिर्भरद्वाजो
याः पश्चात्ताभिर्जमदग्निर्या उत्तरात्ताभिर्विश्वामित्रो[5] या मध्ये ताभि-
र्विश्वकर्मा य एवमेतासामृद्धिं वेदर्ध्नोति[6] य एवमासां कॢप्तिं वेद क- 10
ल्पते ऽस्मै य एवमासां बन्धुतां वेद बन्धुमान्भवति य एवमासां निदानं
वेद निदानवान्भवति य एवमासामायतनं वेदायतनवान्भवति य
एवमासां प्रतिष्ठां वेद गच्छति प्रतिष्ठां निदानवानायतनवान्भवति
य एवं वेद ॥ ९ ॥ cf. Mâitr. S. 3, 2, 8; Kap. S. 32, 11.

अथैता आश्विनीरुत्सन्नयज्ञो वा एष यदग्निः को ह तद्वेद[7] याव- 15
देतस्य[8] न क्रियते यावन्न चीयते तदेताभिः कल्पयति तद्भिषज्यति
पञ्चैता उपदधाति[9] पाङ्क्तो ऽग्निर्यावानेवाग्निस्तस्मै भेषजं करोत्यग्रे-
वैताभिर्दिशः कल्पयत्यदित्यास्त्वा पृष्ठे सादयामीतीमानेवैतया लोका-
न्दाधारतव्या[10] उपदधात्यृतूनां कॢप्त्यै पञ्चोपदधाति पञ्च वा ऋतवो
यावन्त एवर्तवस्तान्कल्पयति[11] समानप्रभृतयो भवन्ति समानोदर्का- 20
स्समानप्रभृतयो ह्यृतवस्समानोदर्का एकया व्याहृत्या व्यावर्तयति त-
स्मादृतवो व्यावर्तन्ते ॥ तस्मात्समानस्य संवत्सरस्य नाना रूपाण्याश्वि-

---

[1] Ch उत्तराच्छ्रो°; Brl ददाति [2] So T1 und Brl; desgl. Kap. S. 32, 11 ohne Acc.; Ch मितिरिति [3] Brl हरन्ति याः [4] Ch आर्ध्नो° [5] Brl उत्तरांस्ताभि° [6] Ch तासां वेद ब्नोति [7] So corr. Ch तद्वैद [8] So corr. Ch तस्या; vgl. Mâitr. S. 3, 2, 9 a. A.; Kap. S. 32, 12 यावदेतस्य क्रीयते यावान्न चीयते [9] So corr. Ch उपाद° [10] So corr. mit Caland; Ch लोके दधा° [11] So corr. Ch एवंतव

नीरन्वृतव्या उपदधाति रेतस्येव हित ऋतूननुपदधाति तस्माद्रेतो हि-
तमृतूननु प्रजायत ऋतव्या अनु वायव्या उपदधात्यृतुष्वेव प्राणं द-
धाति तस्मादेते समानाः परियन्तो न जीर्यन्ति तस्माद्दतूननु वायुरा-
वरीवर्त्ति[1] वायव्या अन्वपस्या उपदधाति तस्माद्वायुर्वृष्टिं वहति वृ-
ष्टिमेवैताभिरवरुन्द्धे यदेकधोपदध्यादेकमृतुं[2] वर्षेदनुपरिहारं सादयति
तस्माद्दतुमृतुं[3] वर्षत्यपस्या अनु वयस्या उपदधाति पशवो वै वयस्या
यदपस्या अनु वयस्या उपदधाति तस्मात्पशवो नानामनसो नाना-
व्रता अप एवाभि[4] समनसो ऽपस्या उपधाय वयस्या उपदध्याद्यं
कामयेत पशुमान्स्यादिति संज्ञानं वा एतत्पशूनां यदापः पशूनामेव
संज्ञाने ऽग्निं चिनुते पशुमान्भवति वयस्या[5] उपधायापस्या उपद-
ध्याद्यं कामयेतापशुस्स्यादिति पशूनामेवासंज्ञाने ऽग्निं चिनुते ऽपशु-
र्भवति ॥ चतस्रः पुरस्तादुपदधाति[6] तस्मात्पुरस्तात्पशुरणीयांस्तस्माच्च-
त्वारि चक्षुषो रूपाणि द्वे शुक्ले द्वे कृष्णे मूर्धन्वतीस्तस्मात्पुरस्तात्पशू-
नां[7] मूर्धा पञ्च पञ्चाभितः पशोस्सयत्वाय तस्मात्प्राङ् पशुः प्रवणो
बस्तो वय इति दक्षिणत उपदधाति वृष्णिर्वय इत्युत्तरादंसा एवा-
स्योपदधाति व्याघ्रो वय इति दक्षिणे पक्षे सिंहो वय इत्युत्तरस्मिन्प-
क्षयोरेव[8] वीर्यं दधाति व्याघ्रो वय इति पूर्वां सिंहो वय इत्यपरां
तस्मात्पुरो व्याघ्रो जायते पश्चात्सिंहः पुरुषो वय इति मध्ये तस्मात्पु-
रुषः पशूनामधिपतिः ॥ १० ॥ cf. Mâitr. S. 3, 2, 9; Kap. S. 32, 12.

इन्द्राग्नी अव्यथमानामिष्टकां दृंहतं युवमित्योजो वै वीर्यमिन्द्राग्नी
अन्तरिक्षमेषा चितिश्शिथिलमिवान्तरिक्षं प्रजा अन्तरिक्षं प्रजा-
स्वेवौजो वीर्यं दधाति स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्यै[9] स्वर्ग-

---

[1] So corr. Ch रवरीवर्ति; Kap. S. 32, 12 = Corr. [2] So corr. Ch कमत्तं [3] So corr. Ch दत्तमत्तं [4] cf. Mâitr. S. 3, 2, 9 (p. 29, 10); TS 5, 3, 1, 3 a. E.; dagegen Kap. S. 32, 12 अप एवाभिः समनसो [5] So corr. Ch वायस्या [6] So corr. Ch ददाति [7] So corr. Ch मून्वतो°; cf. Mâitr. S. 3, 2, 9 (p. 29, 12). [8] So corr. Ch वयत्युत्त° [9] So corr. Ch सृष्ट्वै

स्य लोकस्यानुख्यात्यै प्राजापत्यो ऽश्वो यदश्वमुपघ्रापयति प्रजाप-
तिनैवैनं चिनुते ऽथैता दिश्या देवानां वै स्वर्गं लोकं यतां तेषां दि-
शस्समव्लीयन्त त एता दिश्या अपश्यंस्ताभिर्दिशो ऽदृंहन्यदेता उप-
धीयन्ते दिशां विधृत्यै राड्यसि प्राची दिगिति तस्मादेषा दिशां राज्ञी
विराडसि दक्षिणा दिगिति तस्मादेषा दिशां विराजति सम्राडसि
प्रतीची दिगिति तस्मादत्र साम्राज्यं स्वराडस्युदीची दिगिति तस्मा-
दत्र स्वाराज्यमधिपत्न्यसि बृहती दिगिति तस्मादेषा दिशामधिप-
त्न्येतान्येव[1] सर्वाणि भवति य एवं विद्वानेता उपधत्त आयुर्मे पा-
हीति दश पुरस्तादुपदधाति नव वै पुरुषे प्राणा नाभिर्दशमी प्राणा-
नेवास्मिन्दधाति ज्योतिर्मे यच्छेत्युत्तमां ज्योतिरेवोत्तमं[2] दधाति तस्मा-
द्वाक्प्राणानां ज्योतिरुत्तमं दशैता उपदधाति दशाक्षरा विराड्विराट्
छन्दसां ज्योतिश्चक्षुर्ज्योतिश्चक्षुरेव प्रजानां पुरस्ताद्दधाति मा छन्द
इति दक्षिणत उपदधाति तस्माद्दक्षिणावृतो मासाः पृथिवी छन्द
इति पश्चात्प्रतिष्ठित्या अग्निर्देवतेत्युत्तरादोजो[3] वा अग्निरोज एवोत्त-
राद्दधाति तस्मादुत्तरादभिप्रयायी[4] जयति[5] द्वादश दक्षिणत उपदधा-
ति द्वादश पश्चाद्द्वादशोत्तरात्ताष्षट्त्रिंशत्संपद्यन्ते षट्त्रिंशदक्षरा बृहती
बृहती छन्दसां स्वाराज्यमानशे स्वाराज्यं गच्छति य एवं विद्वानेता
उपधत्ते षट्त्रिंशदेताष्षट्त्रिंशदक्षरा[6] बृहती बार्हताः पशवो ऽन्तरिक्ष-
मेषा चितिः पशवो ऽन्तरिक्षं पशुष्वेव पशून्दधात्यादित्यधामानो वा
अन्ये प्राणा[7] अङ्गिरोधामानो ऽन्ये ये पुरस्तात्त आदित्यधामानो ये
पश्चात्ते ऽङ्गिरोधामानो मूर्धासि राडिति पुरस्तादुपदधाति य आदि-
त्यधामानः प्राणास्तांस्तद्दाधार[8] यन्त्री राडिति पश्चाद्ये ऽङ्गिरोधामानः

---

[1] So corr. Ch पत्न्यै [2] So corr. mit Caland; Ch यच्छेत्यृतुमाञ्ज्योति°; cf. TS 5, 3, 2, 3. [3] So corr. Ch तेत्युरा° [4] So corr. Ch दुत्तराभि°; cf. unten 20, 12, auch TS 5, 3, 2, 4; Kap. S. 32, 13 तस्मादु त्तरादभिप्रयाये [5] Kap. 32, 13 यजति; cf. unten 20, 12. [6] Ch शदेताष° [7] Hier findet sich in Ch noch ein अन्ये, welches von mir getilgt ist. [8] Hier finden sich in Ch

प्राणास्तांस्तद्दाधार सप्त पुरस्तादुपदधाति सप्त पश्चात्तस्मादधरः प्राण[1] उत्तरेषां प्राणानामर्धभाक्प्रजापतिः प्रजास्सृष्ट्वा तासामकामयत मूर्धा स्यामिति स एता मूर्धन्या अपश्यत्ताभिर्निरजिहीत तासां मूर्धाभवत्तन्मूर्धन्यानां[2] मूर्धन्यात्वं मूर्धैव समानानां भवति य एवं विद्वा-
5 नेता उपधत्ते ॥ ११ ॥ cf. Mâitr. S. 3, 2, 9; Kap. S. 32, 13.

आशुस्त्रिवृदिति पुरस्तादुपदधाति यज्ञमुखं वै त्रिवृद्यज्ञमुखमेव पुरस्ताद्वियातयति व्योमा सप्तदश इति दक्षिणतो ऽन्नं वै सप्तदशस्सप्तदशं संवत्सरमन्नमनुप्रजायते ऽन्नमेव दक्षिणतो भवति तस्माद्दक्षिणेन हस्तेन पुरुषो ऽन्नमत्ति यत्सप्तदशवतीर्दक्षिणत उपदधाति तस्मा-
10 द्दक्षिणं पक्षं वयांस्यनुपरिप्लवन्त एकविंशवती पश्चात्प्रतिष्ठित्यै पश्चाद्धि वयांसि प्रतितिष्ठन्ति पञ्चदशवतीमुत्तरादोजो वै पञ्चदश ओज एवोत्तराद्धधाति तस्मादुत्तरादभिप्रयायी जयत्यग्नेर्भागो ऽसि दीक्षाया आधिपत्यमिति पुरस्ताद्द्वौ त्रिवृता अभिपूर्वमेव यज्ञमुखे वियातयति पञ्चदशवतीर्दक्षिणतस्सप्तदशवतीमुत्तरात्पक्षयोस्सयत्वायान्नं
15 वै सप्तदशो[3] यत्सप्तदशवतीमुभयत उपदधात्यन्नमेवोभयतो दधाति तस्मादुभाभ्यां हस्ताभ्यां परिगृह्य पुरुषो ऽन्नमत्त्येकविंशवती भवति प्रतिष्ठित्या अग्नेर्भागो ऽसि दीक्षाया आधिपत्यमित्येतदेतद्वै देवा एताभिरस्पृण्वन्नेतदेतद्वैताभिस्स्पृणोति ता एतास्स्पृतयो नामेष्टका एकयास्तुवत प्रजा अधीयन्तेत्येतदेतद्वै[4] देवा एताभिरसृजन्तैतदेवैता-
20 भिस्सर्वमवरुन्द्धे ऽक्र्यस्य[5] वा एषा विधामनु विधीयते ऽन्नमर्को ऽर्को ऽग्निरत्त्यन्नं यस्यैषैवं विदुषो विधीयते ॥ १२ ॥
cf. Mâitr. S. 3, 2, 10; Kap. S. 32, 14.

---

die Worte सप्त पुरस्तादुपदधाति सप्त पश्चात्तस्मादर (sic); ich habe dieselben getilgt und meine, daß sie durch ein Versehen aus dem gleich Folgenden hierher gerathen sind; Kap. S. 32, 13 = Corr.

[1] So corr. Ch तस्मादधतः प्राणं; Kap. S. 32, 13 = Corr. [2] So corr. Ch मूर्धान्यानां [3] So corr. Ch सप्तदशे [4] So corr. Ch अधीयंत्येत॰; Kap. S. 32, 15 = Corr. [5] cf. unten 21, 1; TS 5, 3, 4, 7.

देवाश्च वा असुराश्च समावदेव यज्ञे ऽकुर्वत यदेव देवा अकुर्वत
तदसुरा अकुर्वत ते देवा एतां चतुर्थीं चितिमपश्यंस्तामन्यथानूच्या-
न्यथोपादधत[1] तदसुरा नान्ववायंस्ततो[2] देवा अभवन्परासुरा अभ-
वन्य एवं विद्वानेतां चतुर्थीं चितिमुपधत्ते भ्रातृव्यस्यानन्ववायाय
भवत्यात्मना परास्य भ्रातृव्यो भवत्याशुस्त्रिवृदिति पुरस्तादुपदधाति
यज्ञमुखं वै त्रिवृद्यज्ञमुखमेव पुरस्ताद्दधाति व्योमा सप्तदश इति[3] द-
क्षिणतो ऽन्नं वै सप्तदशो ऽन्नमेव दक्षिणतो ऽवरुन्द्ध एकविंशवतीं
पश्चात्प्रतिष्ठित्यै पञ्चदशवतीमुत्तरादोजो वै पञ्चदश ओज एवोत्तरा-
द्दधाति तस्मादुत्तरादभिप्रयायी जयति[4] प्रतूर्तिरष्टादश इति पुरस्ताद्वौ
त्रिवृता अभिपूर्वमेव यज्ञमुखे दधात्यभीवर्तस्सविंश[5] इति दक्षिणतो
ऽन्नं वै सविंशो ऽन्नमेव दक्षिणतो ऽवरुन्द्धे वर्चो द्वाविंश इति पश्चा-
द्यद्द्वे द्विपाद्यजमानः प्रतिष्ठित्यै यद्विंशतिर्द्वे विराजा अन्नं विराड् वि-
राज्येवान्नाद्ये प्रतितिष्ठति तपो नवदश इत्युत्तरात्तस्मात्सव्यो हस्तयो-
स्तपस्वितरो बाहुकुचनं[6] निगच्छति योनिश्चतुर्विंश इति पुरस्ताद्य-
ज्ञमुखं वै चतुर्विंशो यज्ञमुखमेव पुरस्ताद्दधाति गर्भाः पञ्चविंश
इति दक्षिणतो ऽन्नं वै पञ्चविंशो ऽन्नमेव दक्षिणतो ऽवरुन्द्धे यद्दश
दशाक्षरा विराडन्नं विराज्येवान्नाद्ये प्रतितिष्ठति ॥ यत्पञ्चदश यज्ञः
पञ्चदशो वज्रमेवोपरिष्टाद्दधाति रक्षसामपहत्या ओजस्त्रिणव इति
पश्चादिमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रतितिष्ठति संभरणस्त्रयो-
विंश इत्युत्तरात्तस्मात्सव्यो हस्तयोस्संभार्यतरः क्रतुरेकत्रिंश इति पुर-
स्ताद्वाग्वा एकत्रिंशो वाचमेव यज्ञमुखे दधाति ब्रध्नस्य विष्टपं चतु-
स्त्रिंश इति दक्षिणतो ऽसौ वा आदित्यो ब्रध्नस्य विष्टपं ब्रह्मवर्चसमसा

---

[1] So corr. Ch चितम॰ [2] So corr. Ch रानन्ववयिं॰ [3] So corr. Ch setzt zwei Mal nach einander इति [4] cf. oben 20, 11 und 12; Kap. S. 32, 15 तस्मादुत्तरादभिप्रयायो यजति [5] Ch भीवर्तस॰ [6] So meine Correctur, — etwa „Armzusammenziehung", „Armkrümmung"; vgl. das spätere कुञ्चन; Ch liest बहुकुचनन्निगच्छति; in Kap. S. nichts Analoges.

आदित्यो ब्रह्मवर्चसमेव दक्षिणतो ऽवरुन्द्धे प्रतिष्ठा त्रयस्त्रिंश इति पश्चात्त्रयस्त्रिंशद्देवता देवतास्वेव प्रतितिष्ठति नाकष्षट्त्रिंश इत्युत्तरात्स्वर्गो वै लोको नाकस्स्वर्ग एव लोके यजमानं प्रतिष्ठापयति ॥ १३ ॥ cf. Mâitr. S. 3, 2, 10; Kap. S. 32, 15.

5 एह्यू षु ब्रवाणि ते ॥

यत्रो[1] क्व च ते मनो दक्षं दधस उत्तरम् ।
तत्रा सदः कृणवसे ॥
नहि ते पूर्तमक्षिपद्भुवन्नेमानां वसो ।
अथा दुवो वनवसे ॥
10 अग्निरगामि भारतो वृत्रहा[2] पुरुचेतनः ।
दिवोदासस्य सत्पतिः ॥
स हि विश्वाति पार्थिवा रयिं दाशन्महित्वना[3] ।
वन्वन्नवातो अस्तृतः ॥
स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता[4] ।
15 बृहत्ततन्थ भानुना ॥
अग्न आयाहि वीतये गृणानो हव्यदातये ।
नि होता सत्सि बर्हिषि[5] ॥
अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।
अस्य यज्ञस्य सुक्रतुम् ॥

20 अग्निर्वृत्राणि जङ्घनदग्निनाग्निस्समिध्यते ऽग्निं स्तोमेन बोधयाग्निर्मूर्धा प्रेद्धो अग्ने ऽग्निं होतारं मन्ये ॥

एभिर्नो अर्कैर्भवा नो अर्वाङ् स्वर्ण ज्योतिः ।
अग्ने विश्वेभिस्सुमना अनीकैः ॥

---

[1] So Ch; cf. RV 6, 16, 17 यत्र [2] So corr. Ch वृत्रभा; cf. RV 6, 16, 19. [3] So corr. Ch दाशर्म॰; cf. RV 6, 16, 20. [4] So corr. Ch संयतः; cf. RV 6, 16, 21 = Corr. [5] So corr. Ch बर्हिषे; cf. RV 6, 16, 10.

अध ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः ।
रथीर्ऋतस्य[1] बृहतो बभूथ ॥
अग्ना यो मर्त्यो दुवो धियं जुजोष धीतिभिः ।
भसन्नु ष प्र पूर्व्य इषं[2] वुरीतावसे ॥
अग्नेस्तोमं मनामहे सिध्रमद्य दिवस्पृशः[3] ।
देवस्य द्रविणस्यवः[4] ॥ ॥ १४ ॥ cf. Mâitr. S. 4, 10, 2.

वैश्वानरो न ऊतये ॥ पृष्टो दिवि ॥
पर्जन्याय प्रगायत दिवस्पुत्राय मीढुषे ।
स नो यवसमिच्छतु ॥
इदं वचः[5] पर्जन्याय स्वराजे हृदो अस्त्वन्तरं तज्जुजोषत् । 10
मयोभुवो वृष्टयस्सन्त्वस्मै सुपिप्पला[6] ओषधीर्देवगोपाः ॥

समिधो अग्न आज्यस्य व्यन्तु[7] तनूनपादग्न आज्यस्य वेत्विडो अग्न आज्यस्य व्यन्तु बर्हिरग्न आज्यस्य वेतु दुरो अग्न आज्यस्य व्यन्तु[8] दुरो अग्न आज्यस्य व्यन्त्विडो[9] अग्न आज्यस्य व्यन्तु बर्हिरग्न आज्यस्य वेतु दुरो अग्न आज्यस्य व्यन्तूषासानक्ताग्न आज्यस्य वीतां दैव्या होताराग्न 15 आज्यस्य वीतां तिस्रो देवीरग्न आज्यस्य व्यन्तु ॥ स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं स्वाहा सोमं[10] स्वाहा सवितारं स्वाहा सरस्वतीं स्वाहा पूषणं स्वाहा मरुतस्स्वतवसस्स्वाहा विश्वान्देवान्स्वाहा द्यावापृथिवी स्वाहाग्निं होतारं स्वाहा देवा आज्यपा जुषाणा आज्यस्य व्यन्तु त्वमग्ने सप्रथा असि त्वं सोम महे भगमग्निर्मूर्धा भुवो यज्ञ- 20 स्य वृषा सोम या ते धामानि तद्विश्वा रूपाणि पावका न आ नो दिवः पूषा गा अन्वेतु नश्शुक्रं ते अन्यत् ॥

---

[1] So corr. Ch रथीर्नृतस्य; cf. RV 4, 10, 2. [2] Ch इषब्वु° [3] So Ch. [4] So corr. Ch प्रविण° [5] So corr. Ch वाचः [6] So corr. Ch सपि° [7] So corr. Ch व्यतुं [8] So corr. Ch वेतु; cf. unten. [9] So corr. Ch वेत्वि°; cf. unten. [10] Von der ersten Hand nur ein Mal स्वाहाग्निं स्वाहा सोमं gesetzt; dann die Repetition eingeschaltet.

इहेह वस्स्वतवसो मरुतस्सूर्यत्वचः ।
शर्म सप्रथा आवृणे ॥
प्र चित्रमर्कं[1] गृणते तुराय मारुताय स्वतवसे भरध्वम् ।
ये सहाँसि सहसा सहन्ते[2] रेजते अग्ने पृथिवी मखेभ्यः[3] ॥

5 विश्वे देवा ये केच ज्मा मही द्यौर्घृतवती पिप्रीहि देवाना[4] देवानां देवं बर्हिर्वसुवने वसुधेयस्य वेतु देवीर्द्वारो वसुवने वसुधेयस्य व्यन्तु देवी उषासानक्ता वसुवने वसुधेयस्य वीतां देवी जोष्ट्री वसुवने वसुधेयस्य वीतां देवी ऊर्जाहुती वसुवने वसुधेयस्य वीतां देवा दैव्या होतारा वसुवने वसुधेयस्य वीतां देवीस्तिस्रस्तिस्रो देवीर्वसुवने 10 वसुधेयस्य व्यन्तु देवो नराशँसो वसुवने वसुधेयस्य वेतु[5] देवो अग्निस्स्विष्टकृच्छं[6] नो भवन्तु वाजे वाजे ॥ १५ ॥ cf. Mâitr. S. 4, 10, 3.

इति श्रीयजुषि काठके चरकशाखायां मध्यमिकायामपेतवीतं[7] नाम विंशं स्थानकं संपूर्णम्[8] ॥

---

अग्नेर्भागो ऽसि दीक्षाया आधिपत्यमिति पुरस्तादुपदधाति यज्ञ15 मुखं वा अग्निर्यज्ञमुखं दीक्षा यज्ञमुखं त्रिवृद्यज्ञमुखमेव पुरस्ताद्दधाति नृचक्षसां भागो ऽसि धातुराधिपत्यमिति दक्षिणतो ये वै विद्वाँसस्ते नृचक्षसो ऽन्नं धाता प्रजननँ सप्तदशः प्रजाभ्य एव प्रजाताभ्यो ऽन्नमपिदधाति तस्माज्जातो ऽन्नमभ्यायच्छति मित्रस्य भागो ऽसि

---

[1] So corr. Ch मर्का [2] So corr. Ch सहन्ति; cf. RV 6, 66, 9. [3] So corr. Ch सखेभ्यः; cf. RV 6, 66, 9. [4] So corr. Ch देवानां; cf. oben 2, 15. [5] So corr. Ch व्यन्तु [6] So corr. Ch कृच्छन्नो [7] Ch मपेतवीतन्नाम [8] So die Unterschrift des Capitels in Ch.

अग्ने जातान्प्रणुदा नस्सपत्नानिति पुरस्तादुपदधाति य एवैनं
पूर्वो ऽतिक्रान्तो भ्रातृव्यस्तं तया प्रणुदते[1] सहसा जातानिति पश्चाद्य
एवास्य पश्चाद्भ्रातृव्यस्तं तयापनुदते प्र श्रेयांसं भ्रातृव्यं नुदते प्रति
पापीयांसं नुदते चतुश्चत्वारिंशस्स्तोम इति दक्षिणतष्षोडशस्स्तोम
5 इत्युत्तराद्वज्रो वै षोडशो वज्रस्त्रिष्टुप् त्रैष्टुभश्चतुश्चत्वारिंशस्सव्यापग्रहणो
वज्रो दक्षिणाविसर्जनो भ्रातृव्यमेव पराणुद्य तस्मै वज्रमनुविसृजति
चतुश्चत्वारिंशस्स्तोम इति दक्षिणत उपदधाति ब्रह्मवर्चसं वै चतुश्च-
त्वारिंशो ब्रह्मवर्चसमेव दक्षिणतो ऽवरुन्द्धे षोडशस्स्तोम इत्युत्तरादोजो
वै षोडश ओज एवोत्तराद्दधाति तस्मादुत्तरादभिप्रयायी[2] जयति[3] ॥
10 पृथिव्याः पुरीषमसीति मध्ये पुरीषं[4] वा आत्मनो मध्यं सात्मानमेवा-
ग्निं चिनुते ता एता अभ्रातृव्या नामेष्टका नास्य भ्रातृव्यो भवति य
एवं विद्वानेता उपधत्ते ऽथैता विराजो विराजमेव पशुषूत्तमां दधाति
तस्मात्पशुमानुत्तमां वाचं वदति दश दशोपदधाति सयत्वाय[5] देवा
वै स्वर्गं लोकं यन्तस्तेषां यानि छन्दांस्यनिरुक्तानि स्वर्ग्याण्यासंस्तै-
15 स्सह[6] स्वर्गं लोकमायंस्तानृषयो ऽनुप्राजिज्ञासन्त तानीष्टकाभिर्नि-
रमिमत तानीमानि छन्दांसि यान्ययज्ञवाहानि यान्येव देवानां छ-
न्दांस्यनिरुक्तानि[7] स्वर्ग्याणि तैस्सह स्वर्गं लोकमेति य एवं विद्वा-
नेता उपधत्ते ॥ अथैते[8] स्तोमभागा बृहस्पतिर्वा एतां यज्ञस्य प्रति-
ष्ठामाहरद्यदेत उपधीयन्ते यज्ञस्य प्रतिष्ठित्यै बृहस्पतिर्वा एतत्तेजो
20 यज्ञस्य समभरद्यदेत उपधीयन्ते सतेजसमेवाग्निं[9] चिनुते प्रजापतिः
प्रजा असृजत तास्स्तोमभागैरेवासृजत यदेत उपधीयन्ते प्रजननाय
दक्षिणतो[10] वै देवानां यज्ञो ऽव्लीयत[11] तं[12] स्तोमभागैः प्रत्युदस्तभ्नु-

---

1 Kap. S. 32, 17 प्रणुदते 2 So corr. Ch प्रियायीं; cf. aber oben. 3 Kap. S. 32, 17 दभिप्रयायै यजति 4 So corr. Ch पुरीषां 5 So corr. Ch त्वायु 6 So corr. Ch ययाश्चिस्तै° 7 So corr. Ch देवानाम्छंदांस्यनिरुक्ता; Kap. S. 32, 17 = Corr. 8 Ch ॥ थैते 9 So corr. Ch सग्नोजसमे°; vgl. auch Mâitr. S. 3, 3, 1 a. A. 10 So corr. Ch दचिणां; Kap. S. 32, 17 = Corr. 11 So corr. Ch व्लोयते; Kap. S. 32, 17 ब्लीयत 12 In Ch तं später eingeschaltet.

वन्यदेते दक्षिणत उदञ्च उपधीयन्ते यज्ञस्य प्रत्युत्तब्ध्यै सप्त सप्तोपद-
धाति सवीर्यत्वाय त्रीन्मध्ये प्रतिष्ठित्या अथैता नाकसदो नाकसद्भिर्वै
देवास्स्वर्गं लोकमायन्यदेता उपधीयन्ते स्वर्गस्य लोकस्याभिजित्यै ॥
न वा अमुं लोकं जग्मुषे किञ्चनाकं[1] तन्नाकसदां नाकसत्त्वं ता एता-
स्सर्वपृष्ठा नामेष्टका यदेव किञ्च पृष्ठा नामेष्टका यदेव किञ्च पृष्ठानां[2]
तेजस्तदवरुन्द्धे य एवं विद्वानेता उपधत्ते ऽथैताः पञ्चचूडा यजमा-
नायतनं वै पत्न्यो यन्नाकसत्सु पञ्चचूडा उपदधाति नाक एव यज-
मानं प्रतिष्ठापयत्यप्सरसो वा एता एतद्रूपं कृत्वा पत्न्यो भूत्वामुष्मिं-
ल्लोके[3] यजमानमुपशेरते पश्चात्प्राचीमेकामुपदधाति तस्मात्पश्चात्प्राची
पत्न्यन्वास्ते[4] तनूपानीर्वा एता यजमानस्य सर्वमायुरेति य एवं विद्वा-
नेता उपधत्ते एता वै देवतास्स्वर्ग्यास्ताभिरेव स्वर्गं लोकमेत्येता[5] वै
देवता अभिचरणीया यं द्विष्यात्तं ब्रूयादमुं वो जम्भे दधामीत्येताभ्य
एवैनं देवताभ्य आवृश्चति ताजक्प्रधन्वति ॥ २ ॥

cf. Mâitr. S. 3, 2, 10; 3, 3, 1; Kap. S. 32, 17.

आयोस्त्वा सदने सादयामीत्यायुरेवोत्तमं दधाति तस्मादायुः प्रा-
णानामुत्तमं स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्यै स्वर्गस्य लोकस्यानु-
कशात्यै प्राजापत्यो ऽश्वो यदश्वमुपघ्रापयति प्रजापतिनैवैनं चिनुते[6]
ऽथैषा विकर्णी देवानां वा एषा विक्रान्तिर्यद्विकर्णी[7] देवानामेवैनं
विक्रान्तिमनु विक्रमयति[8] वायुमती प्राणो वै वायुरायुस्स्वयमातृण्णा-
युश्चैवास्मिन्प्राणं च समीची दधाति सं वा एनमेतदिन्द्धे यच्चिनोति[9]
दीपयति वायुमत्या संवत्सरमुख्यं भृत्वाग्निं चिन्वीत ॥ संवत्सरो वा
अग्निर्वैश्वानरस्तस्याहोरात्राणीष्टका आप्तेष्टकमेवैनं चिनुत ऋध्नोति

---

[1] Vgl. TS 5, 3, 7, 1. In Mâitr. S. 3, 3, 1 (p. 32, Z. 6) ist जग्मुषे ऽकं zu schreiben. [2] So corr. Ch पृष्टनां [3] So corr. Ch ममुष्मिं [4] So corr. Ch पत्न्यान्वास्ते [5] So corr. Ch कमित्ये° [6] So corr. Ch वैनश्चि° [7] Ch विक्रान्ति-यद्वि° [8] So corr. Ch विक्रान्तम°; ebenso Kap. S. 32, 18; aber TS 5, 3, 7, 4 = Corr. [9] So corr. Ch यश्चि°

यन्नैवं चिनुयान्प्रिययैनं तन्वा व्यर्धयेद्यदेवं चिनुते प्रिययैवैनं तन्वा
समर्धयति सतनूरेवैतद्वैश्वानरश्चीयत ऋतव्या उपदधात्यृतूनां विधृत्यै
द्वे द्वे उपदधाति द्वौ द्वौ ह्यृतवश्चतस्रो मध्यमायां चित्यामुपदधात्य-
न्तरिक्षमिव वा एषा या मध्यमा चितिश्शिथिलमिवान्तरिक्षं चत-
स्रो दिशो दिक्ष्वेव प्रतितिष्ठत्यृतुभ्यो वा एता देवा निरमिमत[1] तदृ-
तव्यानामृतव्यात्वमायन्तमायन्तमृतुं[2] प्रतितिष्ठति य एवं विद्वानेता
उपधत्ते ॥ नानाप्रभृतयो भवन्ति समानोदर्कास्तस्मात्समानस्य संव-
त्सरस्य नाना रूपाण्यवकामुपधायेष्टकामुपदधात्यग्नेर्वा[3] एषा वैश्वा-
नरस्य योनिर्यदवका स्व एवैना योना उपदधाति शान्त्या अनुद्दाहा-
यर्ध्नोति[4] य एवं विद्वानेता उपधत्ते ऽथैता विश्वज्योतिषः प्राणभृतो
वा एता यजमानस्य प्राणमेव प्रथमया[5] दाधार व्यानं द्वितीययापानं
तृतीययैता वै देवतास्स्वर्ग्यास्ताभिरेव स्वर्गं लोकमेत्येता वै देवता
ज्योतिष्मतीरग्निरेवास्यास्मिंल्लोके ज्योतिर्भवति वायुरन्तरिक्षे सूर्यो
दिवि सर्वे ऽस्मा इमे लोका ज्योतिष्मन्तो भवन्त्यधिपतिवतीर्भव-
न्त्याधिपत्यमेवैताभिर्गच्छति लोकं पृण च्छिद्रं पृणेति यदेवास्योनं[6]
यच्छिद्रं[7] तदापूरयत्यथो सीद ध्रुवा त्वमिति दृंहत्येवैनामिन्द्राग्नी त्वा
बृहस्पतिरित्योजो वै वीर्यमिन्द्राग्नी ओजसैवैनं वीर्येण चिनुते ता
अस्य सूददोहस इति तस्मात्परुषि परुषि सूदस्सोमं श्रीणन्ति पृश्नय
इत्यन्नं पृश्न्यन्नमेवावरुन्द्धे त्रिष्वारोचने दिव इति त्रीणि सवनानि
सवनेष्वेवैनं चिनुते ऽनुष्टुबनुचरा भवति प्राणो वा अनुष्टुप्तस्मात्प्रा-
णास्सर्वाण्यङ्गान्यनुसंचरति वाग्वा अनुष्टुब्यदेवास्यात्र न क्रियते यन्न
चीयते तद्वाचा कल्पयति तद्भिषज्यति ॥ ३ ॥

cf. Kap. S. 32, 18; TS 5, 3, 7.

---

[1] So corr. Ch सिमत [2] So corr. Ch यंतमत्तम [3] So corr. Ch ग्यावकमु° [4] So corr. Ch यब्नोति [5] So corr. Ch प्रथमाया [6] So corr. Ch येदेवास्योनं [7] So corr. Ch यश्छि

या आग्नेयीर्गायत्रीर्मूर्धन्वतीस्ताभिस्तिसृभिस्तिस्रः पूर्वार्ध उपद-
धात्यथ त्रिष्टुब्भिरथ जगतीभिरथानुष्टुब्भिरथ पङ्क्तिभिरथ यत्किञ्चाग्ने-
यं छन्दस्तिस्र एकेन च्छन्दसा तिस्र एकेन सर्वमग्निमनूपदधात्येतां ह
वै यज्ञसेनश्चैत्रश्चितिं[1] विदांचकार तया ह वै स आनर्ध्नोति[2] य एवं
विद्वानेता उपधत्ते पशवो वै छन्दांसि वामं देवानां पशूनेव वामं[3] 5
भ्रातृव्यस्य वृङ्क्ते ॥ आत्मा वा आहवनीयो भ्रातृव्यो धिष्ण्यो यद्गार्ह-
पत्य उपदध्याद्भ्रातृव्ये वामं[4] पशून्दध्यादाहवनीय उपदधात्यात्मन्नेव
वामं पशून्धत्ते[5] सैषोत्तरवेदिर्नाम चितिस्तस्मादेता उत्तमायां चित्या-
मुपधीयन्त उत्तमस्समानानां भवति य एवं विद्वानेता उपधत्ते पशु-
र्वा अग्निरग्निमुखान्प्रजापतिः[6] पशूनसृजत यत्पञ्च चितयस्तस्मात्पा- 10
ङ्क्ताः पशव उच्यन्ते यत्तिस्रस्त्रिवृद्ध्यग्निर्यद्द्वे द्विपाद्यजमानः प्रतिष्ठित्यै
द्व्यक्षरं लोम द्व्यक्षरं चर्म द्व्यक्षरं मांसं द्व्यक्षरमस्थि द्व्यक्षरो मज्जा तद्दश
दशाक्षरं विराट् तस्माद्वैराजाः पशव उच्यन्ते यो जानुदघ्नस्स गायत्र-
चिद्यो नाभिदघ्नस्स त्रिष्टुप्चिद्यः[7] पुरुषमात्रस्स जगच्चिच्छ्येनचितं[8]
पक्षिणं चिन्वीत स्वर्गकामश्श्येनो वै वयसां[9] क्षेपिष्ठस्स्वर्गस्य लो- 15
कस्य समष्ट्या अलजचितं पक्षिणं चतुस्सीतं[10] चिन्वीत प्रतिष्ठाका-
मश्चतस्रो दिशो दिक्ष्वेव प्रतितिष्ठति ॥ कङ्कचितिं शीर्षण्वन्तं चिन्वीत
यः कामयेत सशीर्षामुष्मिंल्लोके स्यामिति सशीर्षैवामुष्मिंल्लोके भ-
वति ॥ प्रउगचितं[11] चिन्वीत यदि मन्येत पूर्वो मातिक्रान्तो भ्रातृव्य
इति प्रउगचिता[12] वै देवा असुरान्प्राणुदन्त[13] य एनान्पूर्वेऽतिक्रान्ता 20
आसन्य एवैनं पूर्वोऽतिक्रान्तो भ्रातृव्यस्तं तेन प्रणुदत उभयतःप्र-

---

[1] So corr. Ch त्रचितिं; Kap. S 32, 19 = Corr. [2] So corr. Ch आनबब्रोति
[3] So corr. Ch पशुरेव वासं; cf. Mâitr. S. 3, 3, 2 a. A. [4] So corr. Ch वासं
[5] So corr. Ch पशुं धत्ते [6] So corr. Ch पशुर्वा अग्निमुखान्प्र°; Kap. S. 32, 19 पशुर्वा ऽग्निरग्निमुखान् प्रजापतिः पशुनसृजत [7] So corr. Ch त्रिष्टुप्छिद्यः [8] So corr. Ch जगश्चिच्छ्येवचितं [9] So corr. Ch वयसं [10] So corr. Ch चतुस्मीतं [11] So corr. Ch प्रतग° [12] So corr. Ch प्रतग° [13] So corr. Ch प्रणादंत

उगं[1] चिन्वीत यदि मन्येत पश्चान्मे भ्रातृव्य इति य एवास्य पश्चा-
द्भ्रातृव्यस्तं तेनापनुदते प्र श्रेयांसं भ्रातृव्यं नुदते प्रति पापीयांसं नु-
दते[2] ॥ रथचक्रचितं चिन्वीताभिचरन्रथचक्रचितिं ह स्म[3] वै देवा अ-
सुरेभ्यो वज्रमियद्यस्त्वेत्यभ्यवसृजन्ति[4] वज्रमेव भ्रातृव्याय प्रहरति स्तृ-
5 णुत एनं समूह्यं चिन्वीत पशुकामः पशवो वै पुरीषं[5] पशूनेवास्मै
समूहति सर्वत उत्तरवेदिं निर्वपति पशवो वा उत्तरवेदिः पशूनेवा-
वरुन्द्धे ॥ परिचाय्यं चिन्वीत सजातकामः परीव वै सजाता विशन्ति
सजातैरेवैनं परिचिनोति ॥ द्रोणचितं चिन्वीतान्नकामः पात्रेण वा
अन्नमद्यते तेनैव मुखेनान्नमत्ति ॥ श्मशानचितं चिन्वीत[6] यः काम-
10 येत पितृलोक ऋध्नुयामिति श्मशानचिता वै यमो ऽमुष्मिंल्लोक
आर्ध्नोत्पितृलोक एवर्ध्नोति[7] ॥ गायत्रचितं पक्षिणं चिन्वीत स्वर्गकामो
ऽग्निर्वै तत्पक्षी भूत्वा स्वर्गं लोकमपतद्यदाहुर्गायत्री पक्षिणी भूत्वा
स्वर्गं लोकमपतदिति स्वर्गस्य लोकस्य समष्ट्या अन्ये[8] ऽग्नय ऊर्ध्वा-
श्चीयन्ते[9] न्यञ्चो ऽन्ये य ऊर्ध्वाश्चीयन्ते ते ऽमुष्मै लोकाय ये न्यञ्चस्ते
15 ऽस्मै यदूर्ध्वस्तिष्ठन्हिरण्यशल्कैः[10] प्रोक्षति तेनैवैनमूर्ध्वं चिनुते स्वर्गस्य
लोकस्य समष्ट्यै ॥ ४ ॥ cf. Mâitr. S. 3, 3, 2. 3; 3, 4, 7; Kap. S. 32, 19.

दीक्षया[11] विराडाप्तव्या[12] तिस्रो रात्रीर्दीक्षितस्स्यात्त्रिपदा विरा-
ड्विराजमेवाप्नोति षड् रात्रीर्दीक्षितस्स्यात्षड्वा ऋतव[13] ऋतवस्संव-
त्सरस्संवत्सरो विराड्विराजमेवाप्नोति दश रात्रीर्दीक्षितस्स्याद्दशाक्षरा
20 विराड्विराजमेवाप्नोति द्वादश रात्रीर्दीक्षितस्स्याद्द्वादश मासास्संवत्स-
रस्संवत्सरो[14] विराड्विराजमेवाप्नोति त्रयोदश रात्रीर्दीक्षितस्स्यात्त्रयो-

---

1 So corr. Ch प्रतगं 2 So corr. Ch पापीयोसन्नुदते 3 So corr. Ch ह स्स
4 Ebenso Kap. S. 32, 19; इयद्यस्त्वा auch unten 21, 9 a. E. 5 Ch पुरीषि
6 So corr. Ch चिन्वीता 7 So corr. Ch आर्ध्नोत्पितृलोकमेवर्ध्नोति 8 So corr. Ch अन्यो 9 So corr. Ch ग्नयः प्रोयन्ते 10 So corr. Ch यदूर्ध्वास्ति° 11 Collat. mit T 1 und 3, Brl fol. 67, St und W 1 α foll. 29—32; darnach accentuiert.
12 So T 1 und W 1 α; Brl विराडाप्तव्यास्तिस्रो; St विराडप्तव्यास्तिस्रो; Ch विराडप्तव्या तिस्रो 13 In St und W 1 α fehlt dies Wort. 14 Ch मासस्सं°

दश मासास्संवत्सरस्संवत्सरो[1] विराड्विराजमेवाप्नोति[2] पञ्चदश रात्री-
र्दीक्षितस्स्यात्पञ्चदशार्धमासस्य रात्रयो ऽर्धमासशस्संवत्सर आप्यते सं-
वत्सरो विराड्विराजमेवाप्नोति चतुर्विंशतिं रात्रीर्दीक्षितस्स्याच्चतु-
र्विंशतिस्संवत्सरस्यार्धमासा अर्धमासशस्संवत्सर आप्यते संवत्सरो
विराड्विराजमेवाप्नोति मासं[3] दीक्षितस्स्याद्यो वै मासस्स संवत्सरस्सं-
वत्सरो विराड्विराजमेवाप्नोति[4] चतुरो मासो दीक्षितस्स्याच्चतुरो वा
एतं मासो[5] वसवो ऽबिभरुस्ते पृथिवीमाजयन् गायत्रीं छन्दो ऽष्टौ
रुद्रास्ते ऽन्तरिक्षमाजयंस्त्रिष्टुभं छन्दो[6] द्वादशादित्यास्ते दिवमाजय-
ञ्जगतीं छन्दस्ततो वै ते व्यावृतमगच्छञ्छ्रैष्ठ्यं[7] देवानां तस्माद्द्वादश
मासो भृत्वाग्निं[8] चिन्वीत द्वादश मासास्संवत्सरस्संवत्सरो ऽग्निर्वैश्वा-
नरस्तस्याहोरात्राणीष्टका आप्तेष्टकमेवैनं[9] चिनुत ऋध्नोति व्यावृतमेव
गच्छति श्रैष्ठ्यं समानानां गायत्रं पुरस्ताद्गायति शिरो वै देवानां
गायत्रं गायत्रो ऽग्निस्तस्माद्गायत्रं पुरस्ताद्गायत्याग्निपावमान्यामयं[10] वाव
यः पवते स प्राणो मुखं देवानामग्निर्मुखत एव प्राणं दधाति तस्मा-
न्मुखतः प्राणो रथन्तरमुत्तराद्गायति बृहद्दक्षिणतः पक्षा[11] एवास्योप-
दधातीयं वै रथन्तरमसौ बृहदाभ्यामेवैनं परिगृह्णाति यज्ञायज्ञीयं
पुच्छे गायति श्रोण्यां[12] वामदेव्यमात्मा[13] वै यज्ञायज्ञीयं तनूर्वाम-
देव्यं[14] सात्मानमेवैनं सतनूं चिनुते हृदयमपिकक्ष्यं तस्मादपिकक्ष्यं हृद-
यमनृचं भवति तस्मादनस्थिकं[15] हृदयमर्क्यैः परिगायत्यर्को वा अग्नि-
रर्कमेवार्क्यैः परिगायति शान्त्यै ॥ ५ ॥ cf. Mâitr. S. 3, 3, 5; Kap. S. 32, 20.

---

[1] T1 मासस्सं°; desgl. Ch, ohne Acc. [2] Von hier an größere Lücke in Ch; durch die andern Mss. ergänzt. [3] Brl, T3, W1 मासन्दी°; St मासान्दी° [4] Hier endet die Lücke in Ch. [5] So Brl und W1; St एतंमासो; Ch एतमासो [6] Von hier bis zum folgenden छन्द (incl.) Lücke in St. [7] St व्याहृतम°; Ch व्यावृतमाग° [8] Ch भूत्वाग्निं [9] Brl, T1 und 3, W1 und St कामे° [10] Ch त्यग्नि° [11] Ch पक्ष Kap. S. 32, 20 पक्षावेवास्यो°; cf. Mâitr. S. 3, 3, 5 a. E. [12] Ch श्रेण्यां [13] St, T3 und W1 वामदेव्यम° [14] In W1 देव्यं ohne Accent; in den andern Mss. oxytonirt. [15] So der Accent in allen Mss.

संवत्सरो[1] वा अन्तरा तमस्स्वर्गं[2] लोकं ज्योतिष्मतीरेतास्साह-
स्रीरिष्टका यद्धिरण्यशल्कैः प्रोक्षति ज्योतिषैवास्मै संवत्सरं[3] विवा-
सयति सहस्रस्य प्रमासि सहस्रस्य प्रतिमासीति सहस्रसंमिता[4] ह्रीमे
लोका घ्नन्ति वा एतदग्नेर्यदस्यात्र न क्रियते यन्न चीयते ऽमृतं हिरण्यं
यद्धिरण्यशल्कैः प्रोक्षत्यमृतेनैवास्य तन्वं पृणक्तीमा[5] मे अग्न इष्टका
धेनवस्सन्त्विति धेनूरेवैनाः कुरुते ता एनं कामदुघा अमुष्मिंल्लोक
उपतिष्ठन्ते रुद्रं वै देवा यज्ञान्निरभजन्स[6] देवानायतयाभिपर्यावर्तत
ते देवा एतच्छतरुद्रियमपश्यंस्तेनैनमशमयन्यच्छतरुद्रियं[7] जुहोति ते-
नैवैनं[8] शमयति ॥ जानुदघ्ने ऽग्ने जुहोत्यस्या एव रुद्रमवयजते ऽथ ना-
भिदघ्ने ऽन्तरिक्षादेव रुद्रमवयजते ऽथ पुरुषमात्रे[9] ऽमुष्या एव रुद्रम-
वयजत इत एवोर्ध्वं रुद्रमवयजते ऽथ पुरुषमात्रे ऽथ नाभिदघ्ने ऽथ
जानुदघ्ने ऽमुत एवार्वाञ्चं रुद्रमवयजते तत्षट् संपद्यते षड्वा ऋतव
ऋतुभ्य एव रुद्रं निरवयजते[10] गवीधुकासक्तुभिर्वा जर्तिलैर्वा[11] कुस-
यसर्पिषा[12] वा मृगक्षीरेण वा जुहोति यद्ग्राम्येण जुहुयाद्ग्रामावचा-
रिणं रुद्रं कुर्यादारण्येनैवारण्यमभि[13] रुद्रं[14] निरवयजते ऽर्कपर्णेन[15]
जुहोत्यर्को वा अग्निरर्केणैवैनमर्कादधि निरवयजत उत्तरस्य पक्षस्य
या चरमेष्टका तस्यां जुहोत्येषा वै रुद्रस्य दिक्स्वायामेव[16] दिशि रुद्रं
प्रतिहृत्यावयजते[17] पशुर्वा अग्निरेतर्हि वा एष जायते यर्हि चीयते यथा
वत्सो जातस्स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति स यजमानं

[1] Dies Capitel collationirt auch mit T 1, T 3, Brl fol. 67. 68 und St, auch W 1 und W 1 α (theilweise); nach diesen Mss. accentuirt. [2] St अन्तरातम°; Brl, T 1 und T 3 अन्तरन्तम°; cf. Mâitr. S. 3, 3, 4 a. A. [3] St संवत्सरो [4] St सहस्रस्य संमिता [5] So corr. Die Mss. पृणात्तो°; Kap. S. 32, 21 पृणक्ति [6] T 1, T 3, Brl भजन्त्स; W 1 भजत्स [7] Ch तेनैनशमयन्य; St तेनैवैनमशयन्य; Kap. S. 32, 21 तेनैनमश° desgl. Mâitr. S. 3, 3, 4. [8] Ch तेनैनैनि [9] St मात्रे मु° [10] St निरव° [11] So corr.; T 1, T 3, Brl जन्तिलैर्वा; desgl. W1, ohne Acc.; Ch जंतिलैर्वा; Kap. S. 32, 21 जर्त्तिसैर्वा [12] So auch Kap. S. 32, 21. [13] Brl कुर्यादरण्येनैवा°; T 1 und T 3 वारण्यम° [14] Hier beginnt das Stück in W 1 α, fol. 31$^{b}$. [15] Ch यत ॥ त्यर्कप°; St. भिं रन्यं निरवयजते । ~ ~ । र्कपर्णेन; W 1 भिं रुद्रं न्निरवयजते ॥ ॥ र्क-पर्णेन [16] Ch यामिव [17] Brl प्रतिगृह्यवयजते

चैवाध्वर्युं[1] च ध्यायति यच्छतरुद्रियं जुहोति भागधेयेनैवैनं शमय-
त्यङ्गिरसो वै स्वर्गं लोकं यन्तस्ते ऽजायां घर्मं[2] प्रासिञ्चन्सा शोचन्ती
पर्णं परामृशत्सो[3] ऽर्को ऽभवत्तदर्कस्यार्कत्वं यदर्कपर्णेन जुहोति सयो-
नित्वाय यं द्विष्यात्तस्य संचरे पशूनां न्यस्येद्यः प्रथमः पशुराक्रामति
तं[4] आर्तिमार्छन्ति[5] या उत्तमास्ता[6] यजमानं वाचयेदेता वै देवता- 5
स्स्वर्ग्यास्ताभिरेव स्वर्गं लोकमेत्येता[7] वै देवता अभिचरणीया[8] यं
द्विष्यात्तं ब्रूयादमुं वो जम्भे दधामीत्येताभ्य एवैनं देवताभ्य आवृश्चति
ताजक्प्रधन्वति ॥ ६ ॥[9] cf. Mâitr. S. 3, 3, 4; Kap. S. 32, 21.

अश्मन्नूर्जं पर्वते शिश्रियाणामित्यद्भिः[10] परिषिञ्चति प्रजापतेर्वा[11]
एष रसो यदापः प्रजापतेरेवैनं रसेन तर्पयति स एनं तृप्तः प्रीतो 10
ऽक्षुध्यन्नुपतिष्ठते ऽश्मन्ते[12] क्षुद्यं द्विष्मस्तं ते शुगृच्छत्विति यमेव द्वेष्टि
तमस्य क्षुधा च शुचा चार्पयति त्रिः परिषिञ्चति त्रय इमे लोका
एभ्य एवैनं लोकेभ्यश्शमयति त्रिः पुनरपरिषिञ्चन्पर्येति तत्षट् संप-
द्यते षड्वा ऋतव ऋतुभ्य एवैनं शमयति यद्यभिचरेत्त्रिः पुनरपरिषि-
ञ्चन्परीत्य या दक्षिणा श्रोणिस्तस्यां प्रक्षिणीयादिदमहममुमामुष्या- 15
यणममुष्य पुत्रं प्रक्षिणामीति यैवाग्नौ शुक्तामादाय तयैनमर्पयति तं
भिद्यमानमन्वार्तिमार्छति यन्नाम गृह्णाति मूलमेवास्य छिनत्ति ॥
वरुणमेनिर्वा एष संचितो मण्डूकेन विकर्षति मण्डूकस्यायुषा व्येति

---

1 Ch चैवाध्वर्यं; St चैवाधुर्युं 2 Ch गर्मम 3 Ch प्राविशत्सो; am Rande म्परामश, offenbar als Correctur. 4 T3 तां; die andern Mss. तं, resp. so, ohne Acc.; Kap. S. 32, 21 त 5 So St und W1; T1, T3, Brl आर्तिमार्छन्ति; Ch मार्छति; desgl. Kap. S. 32, 21. Mâitr. S. 3, 3, 4 a. E. bietet das zu erwartende, correcte सं आर्तिमार्छति 6 So alle Mss.; die ganze Stelle lautet in Kap. S. 32, 21 यः प्रथमः परात्शुक्रामति (sic) त आर्तिमार्छति या उत्तमास्ता यजमानं वाचयेदेता वै etc. Vgl. TS 5, 4, 3, 5. 7 Ch लोकमित्येता 8 Hier geht das Stück W1α p. 31b zu Ende. 9 Hier beginnt eine große Lücke im Fragment der Kap. S., welches erst in Cap. 34 a. E. wieder einsetzt. Das Folgende also ohne die Beihilfe dieses wichtigen Textes constituirt. 10 So corr. Ch शिश्र° 11 So corr. Ch प्रजापतिर्वा; cf. Mâitr. S. 3, 3, 5 a. A. 12 Ch श्मं ते; cf. oben 17, 17; Mâitr. S. 3, 3, 5 a. A.; TS 5, 4, 4, 1.

न ग्राम्यान्पशून्हिनस्ति नारण्यांस्तस्मादेतं वसन्ता च प्रावृषि चाभि-
गच्छति शुचा ह्येष ऋतो[1] ऽवकया च वेतसशाखया च विकर्षत्यपां
वा एतच्छरो[2] यदवकापामेतत्पुष्पं यद्वेतस आपश्शान्ताश्शान्ताभिरे-
वास्य शुचं शमयति तिसृभिस्त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्य शुचं
5 शमयति प्रजापतिः प्रजा असृजत ता अक्षुध्यंस्ताभ्यो ऽन्नं प्रायच्छन्ता
अब्रुवन्नो ऽभूदित्यन्नं पावकं यत्पावकवतीर्भवन्त्यन्नाद्याय कमस्मा अ-
ग्निश्चिक्यानाय भवति सप्तभिर्विकर्षयति सप्त वै छन्दांसि छन्दोभिरे-
वास्य शुचं शमयत्यष्टाभिर्विकर्षत्यष्टाक्षरा गायत्री गायत्रो ऽग्निर्या-
वानेवाग्निस्तस्य शुचं शमयति ॥ संलुप्योत्करे[3] ऽध्यस्यत्येषा वा अस्यां
10 शुक्छुच्येवास्य शुचं दधाति यं द्विष्यात्तमभ्यस्येच्छुचैवैनमर्पयति[4] प-
ञ्चगृहीत आज्ये पञ्च हिरण्यशल्कानवास्यति तेजो वै हिरण्यमायुर्घृतं
तेजसैवास्यायुर्व्याघारयत्यथो[5] पङ्क्त्यैवाहुत्याग्निमालभते नमस्ते हरसे
शोचिष इत्यधिक्रामति नमस्कृत्य हि श्रेयांसमुपचरन्त्यक्ष्णया व्याघा-
रयत्यजामित्वाय नृषदे वेडिति प्रतिष्ठित्यै हुतादो वा अन्ये देवा अहु-
15 तादो[6] ऽन्ये ऽग्निचिदस्त्वैतानुभयानवरुन्द्धे यज्जुहोति चाव चोक्षति ता-
नेव प्रीणाति तानवरुन्द्धे ते ऽस्योभये प्रीता यज्ञे भवन्ति ॥ गुरुमुष्टि-
नावोक्षति स हि प्राजापत्यतमस्तेनास्य न हुतं भवति नाहुतं कृष्णा-
जिनस्योपानहौ कुरुते ब्रह्मणो[7] वा एतद्रूपं यत्कृष्णाजिनं मृत्युरग्निर्ब्र-
ह्मणैव मृत्योरन्तर्धत्ते ऽन्तर्मृत्योर्धत्ते ऽन्तरन्नाद्यादन्यतरामुपानहं कुर्वी-
20 तान्तर्मृत्योर्धत्ते ऽवान्नाद्यं रुन्द्धे प्राणैर्वा एष पशुभिर्व्यृध्यते[8] यो ऽग्निं
चिनुते तं[9] प्रथमो ऽधिक्रामति प्राणदा व्यानदा इति प्राणैरेवैनं सम-
र्धयति वर्चोदा वरिवोदा इति प्रजा वै वर्चः पशवो वरिवः प्रजया

---

[1] cf. TS 5, 2, 9, 5. [2] So corr. Ch एतक्छरो; cf. TS 5, 4, 4, 2. 3. [3] So corr. Ch संलुप्योकरे [4] So corr. Ch कुचंवैन° [5] So corr. Ch व्यंघार° [6] So corr. Ch आहु°; cf. TS 5, 4, 5, 1. 2. [7] So corr. Caland; Ch ब्राह्मणो [8] So corr. Ch र्वृध्यते [9] So corr. Ch चिनुतम्प्र°

चैवैनं पशुभिश्च समर्धयति प्राणदा अपानदा इत्यवरोहति रूपेणैव
द्वाभ्यां द्विपाद्यजमानः प्रतिष्ठित्यै ॥ ७ ॥ cf. Mâitr. S. 3, 3, 5. 6.

इन्द्रो वै वृत्रमहंस्तं हतष्षोडशभिर्भोगैरसिनात्सो[1] ऽग्निना पाप्मनो
भोगानपिदह्य वैश्वकर्मणाभ्यां पाप्मनो निरमुच्यत यदाग्नेय्या जुहो-
त्यग्निनैव पाप्मनो भोगानपिदह्य वैश्वकर्मणाभ्यां पाप्मनो निर्मुच्यत 5
एकैकया जुहुयाद्यदि कामयेत चिरं पाप्मनो मुच्येतेति चिरमेव पा-
प्मनो मुच्यते सकृत्सर्वाननूद्रुत्योत्तमया[2] जुहुयाद्यदि कामयेताजिरं
पाप्मनो मुच्येतेत्यजिरमेव[3] पाप्मनो मुच्यते ॥ षोडशं भवति षोडश-
कळः[4] पुरुषो यावानेवास्यात्मा तं पाप्मनो मुञ्चत्यथो[5] षोडशभिर्हि
स तं भोगैरसिनान्नाना[6] सूक्ताभ्यां जुहोति सूक्तयोर्नानावीर्यत्वाय स- 10
मिध आदधाति भागधेयमेवास्मा अपिदधाति यथा जनमेष्यते ऽवसं[7]
करोत्येवमेवैतदग्नय आतिथ्यं क्रियते तिस्र आदधाति त्रिवृद्ध्यग्निर्या-
वानेवाग्निस्तस्मा आतिथ्यं करोत्यौदुम्बरीर्भवन्त्यूर्ग्वा उदुम्बर ऊर्जमे-
वास्मा अपिदधाति घृतेनानक्त्येतद्वा अग्नेः प्रियं धाम यद्घृतं प्रियमे-
वास्मै धामातिथ्यं करोत्युदु त्वा विश्वे देवा इति प्राणा वै विश्वे देवाः 15
प्राणैरेवैनमुद्यच्छते मनुष्या वै विश्वे देवा मनुष्यैरेवैनमुद्यच्छते[8] ऽग्ने
भरन्तु चित्तिभिरिति यस्मा एवैनं चित्तायोद्यच्छते तेनैनं समर्धयति ॥
पञ्च दिश इति दिश एवैनमनुप्रणयति द्वे परिगृह्यवती भवतो रक्ष-
सामपहत्यै हरिकेशस्सूर्यरश्मिरिति सावित्री प्रसूत्यै देवा देवेभ्यो अ-
ध्वरीयन्तो अस्थुरित्याशिषामेवैष[9] दोहो विमान एष इति स्वर्गस्यैवैष 20
लोकस्य विमान उक्षा समुद्रो अरुणस्सुपर्ण इत्यश्मानमाग्नीध्रे साद-
यत्यनारम्भणमिव वा एतदनायतनमिव यदन्तरिक्षमन्तरिक्षमाग्नीध्रं
यदाग्नीध्रे सादयत्यायतनमेव करोति मध्ये दिवो निहितः पृश्निरश्मे-

---

[1] So corr. Ch भिर्भोगैर° [2] Ch नुद्द्रु° [3] So corr. Ch मुच्यते° [4] So corr. Ch कलाः [5] So corr. Ch मुच्यत्यथो [6] So corr. Ch न्नाना [7] Vgl. TS 5, 4, 6, 1. [8] So corr. Ch मनुष्यरे° [9] So corr. Ch अस्थरित्या°

त्यन्नं पृश्न्यन्नमेवावरुन्द्धे द्वाभ्यां सादयति द्विपाद्यजमानः प्रतिष्ठित्यै ॥
षड्भिरायीध्राद्यन्ति षड्वा ऋतव ऋतुभिरेव चतसृभिरा पुच्छाच्चत्वारि[1]
वै छन्दांसि छन्दोभिरेवेन्द्रमितीन्द्रियमेवावरुन्द्धे ऽवीवृधन्निति वृद्धि-
मेवोपैति वाजा इत्यन्नं वै वाजा अन्नमेवावरुन्द्धे ऽनुष्टुभा वैश्वदेव्या
5 यन्ति वाग्वा अनुष्टुब्वैश्वदेवी वाक्सर्वाणि वा एषा रूपाणि सर्वाणि
रूपाण्यग्नौ चित्ये क्रियन्ते तस्मादेतया यन्ति सुम्नहूरिति यज्ञो वै सुम्नं
यज्ञमेवावरुन्द्धे वाजस्य मा प्रसवेनोद्ग्राभेनोदजीगृभमिति ब्रह्म वा
उद्ग्राभो ब्रह्म निग्राभो[2] ऽसा आदित्य उद्यन्नुद्ग्राभ[3] एष निम्रोचन्निग्राभो
ब्रह्मणैवात्मानमुद्गृह्णाति ब्रह्मणा भ्रातृव्यमवगृह्णात्यथा सपत्नानि-
10 न्द्राग्नी मे विषूचीनान्व्यस्यतामित्योजो[4] वै वीर्यमिन्द्राग्नी ओजसैव
वीर्येण भ्रातृव्यं विनुदते ॥ ८ ॥ cf. Mâitr. S. 3, 3, 7. 8.

क्रमध्वमग्निना नाकमिति स्वर्गस्य लोकस्याक्रमः प्राचीमनु प्रदिशं
प्रेहि विद्वानिति देवलोकमेवोपावर्तते विश्वा आशा दीद्यद्विभाहीति
तस्मादग्निस्सर्वा दिशो विभाति पृथिव्या अहमुदन्तरिक्षमारुहमन्त-
15 रिक्षाद्दिवमारुहमित्येषामेवैते लोकानां संक्रमास्स्वर्यन्तो नापेक्षन्त
इति स्वर्गस्य लोकस्य समष्ट्या अग्ने प्रेहि प्रथमो देवायतामिति दे-
वेषु चैव मनुष्येषु च चक्षुर्दधातीयक्षमाना भृगुभिस्सजोषा इति स्व-
र्गमेवैनं लोकं[5] गमयति पञ्चभिरधिक्रामति पाङ्क्तो ऽग्निर्यावानेवाग्नि-
स्तस्मै नमस्कृत्याधिक्रामति ॥ नक्तोषासाग्ने सहस्राक्षेति संहिताभ्यां
20 जुहोत्यहोरात्रे एव संदधाति तस्मादहोरात्रे संहिते कृष्णायाश्श्वेतव-
त्साया जुहोत्यह्नैवास्मै रात्रीं प्रदापयति नानारूपा वै पशवो नाना-
व्रतास्त एतदेव प्रत्तिमरूपयत्पयसा[6] जुहोत्येतदेवैनमभिसंजानानाः
पशव उपतिष्ठन्ते दध्ना स्वयमातृण्णायां जुहोत्यसौ वै स्वयमातृण्णो-

---

[1] So corr. Ch पुच्छाश्च°  [2] Ch णिग्राभो  [3] So corr. Ch न्नग्राभ  [4] So corr. Ch मेव विषूचिनान्व्यस्य°  [5] Ch वैनल्लोकं  [6] So corr. Ch प्रतिमरूपयत्प° oder प्रतिमरूपयित्प°; cf. TS 5, 4, 7, 2.

ग्दंध्यमुष्यामेवोर्जं दधाति तस्मादमुतो ऽर्वाचीमूर्जमुपजीवन्ति सुपर्णो ऽसि गरुत्मानिति गायत्र्या सादयत्यस्यामेवैनमाक्रमयति भासान्तरिक्षमापृणेति त्रिष्टुभान्तरिक्षमेवैनमाक्रमयत्याजुह्वानस्सुप्रतीकः[1] पुरस्तादिति जगत्यामुष्यामेवैनमाक्रमयत्येताभिरेवैनं देवताभिस्सयुजं कृत्वा प्रतिष्ठापयति तिसृभिस्त्रिवृद्वा अग्निर्यावानेवाग्निस्तं प्रतिष्ठां गमयति ॥ तां सवितुरिति सावित्र्यादधाति प्रसूत्या औदुम्बरीमूर्ग्वा उदुम्बर ऊर्जमेवास्मा अपिदधात्यग्निं वा ह वा अग्निचिद्दुहे ऽग्निर्वाग्निचितं दुहे कण्वो[2] ह वा एतस्य श्रायसो दोहं विदांचकार[3] यथा गां प्रत्तां[4] दुह एवमेवैतयाग्निमग्निचिद्दुहे ऽग्ने विधेम त इत्यृच्यै वैकङ्कतीमग्नेवै सृष्टस्य विकङ्कतं भा आछत्तदेवावरुन्द्धे[5] प्रेद्धो अग्ने दीदिहि पुरो न इति शमीमयीं[6] शान्त्यै विराजैषा वै सूर्मी कर्णकवत्येतां ह वै सोमदक्षः कौश्रेयस्सन्त्रिणः[7] पप्रच्छ विद यूयं सूर्मी३ङ्कर्णकवती३मिति यैवारण्ये तां विद्मेति पशवो वा एतस्याः कर्णाः पशूनेवावरुन्द्धे॥[8] एतां ह स्म वै देवा असुरेभ्यो वज्रं शतघ्नीमियद्मस्त्वेत्यभ्यवसृजन्ति वज्रमेव भ्रातृव्याय प्रहरति स्तृण्वत एनं सप्त ते अग्ने समिध इति साप्तान्येवैतया[9] प्रीणाति पूर्णया स्रुचा जुहोति यथा वत्साय जाताय स्तनमपिदधात्येवमेवास्मा एतद्भागधेयमपिदधाति दध्ना पुरस्ताज्जुहोत्याज्येनोपरिष्टादूर्ग्वै दधि तेज आज्यमूर्जं चैवास्मिंस्तेजश्च समीची उत्तमे दधात्यथो इमे एवास्मै प्रदापयति ॥ ९ ॥

cf. Mâitr. S. 3, 3, 9; TS 5, 4, 7.

अथैतदप्रतिरथमेतेन वै देवा असुरानप्रत्यभ्यजयंस्तदप्रतिरथस्याप्रतिरथत्वमप्रत्येवैतेन भ्रातृव्यमभिजयत्येषा वै गायत्री ज्योतिष्पक्षा तयैव स्वर्गं लोकमेति दशर्चं भवति दशाक्षरा विराडन्नं विराज्येवा-

---

[1] So corr. Ch तिष्टभा° [2] So corr. Ch कणवा; cf. TS 5, 4, 7, 5; Mâitr. S. 3, 3, 9 (p. 42, Z. 11). [3] So corr. Ch विदांचिकार [4] So corr. Ch प्रत्यान्दुह [5] Ch entweder आकंतु oder आछंतु [6] So corr. Ch मयों; cf. TS 5, 4, 7, 4. [7] So corr. Ch कोश्रेय [8] Die Interpunktion ॥ in Ch nicht vorhanden, von mir gesetzt. [9] So corr. Ch सप्ता°; cf. TS 5, 4, 7, 5.

न्नाद्ये प्रतितिष्ठत्येतेन ह स्म वै भरद्वाजः प्रतर्दनं संनह्यन्नेति ततो[1] वै
स राष्ट्रमभवद्यं कामयेत राष्ट्रं[2] स्यादिति तमेतेन संनह्यन्नियाद्राष्ट्र-
मेव[3] भवति तदेतद्भुवनच्यवं[4] नाम हविरास्थानादास्थानादेवैतेन[5]
भ्रातृव्यं नुदते संग्रामे कुर्यान्नैजनो वा बान्धुकी वेध्मस्स्याद्यद्यङ्गाराः[6]
5 प्रतिवेष्टन्ते प्रत्यभिचारिणीं सेना वेष्टते ऽथाग्नये वैश्वानराय द्वादशक-
पालस्संवत्सरो वा अग्निर्वैश्वानर एषा संवत्सरस्य प्रिया तनूर्या वै-
श्वानरी यदग्नये वैश्वानराय प्रियाया एवास्य तन्व आतिथ्यं करोति ॥
क्षत्रं वैश्वानरो विण्मरुतो यद्वैश्वानरं मारुता[7] अनुहूयन्ते क्षत्रायैव
विशमनुनियुनक्त्युच्चैर्वैश्वानरस्य[8] यजत्युपांशु मारुताञ्जुहोति[9] तस्मा-
10 त्क्षत्रं विशमतिवदति पशुर्वा अग्निरग्निमुखान्प्रजापतिः पशूनसृजत
पशवो मरुतो यद्वैश्वानरं मारुता अनुहूयन्ते पशूनां प्रजात्यै यत्प्राङ्
पर्यावर्तेत देवविशा मुह्येद्यद्दक्षिणा पितृदेवत्यस्स्याद्यत्प्रत्यङ् रक्षसां
स्याद्यदुदङ् मानुषस्स्यादृजुः प्रतिष्ठितो होतव्यो यजमानस्य प्रतिष्ठि-
त्या अथैते मारुतास्सप्त सप्तकपालास्सप्त सप्त हि मरुतो सप्तधा गणा
15 गणेन गणमनूहृत्य जुहोति गणश एव मरुतस्तर्पयति ॥ यो ऽरण्ये
ऽनुवाक्यो गणस्तेन मध्ये जुहोति क्षत्रं वा एष मरुतां विडितरे क्षत्र-
मेव विशो मध्यमेष्ठं[10] करोति यदि कामयेत विशा क्षत्रं हन्यामिति
यो ऽरण्ये ऽनुवाक्यो गणस्तमितरैर्गणैर्मोहयेद्विशैव क्षत्रं हन्ति यदि
कामयेत क्षत्रेण विशं हन्यामिति त्रिष्टुभौ याज्यानुवाक्ये कुर्यादोजो
20 वै वीर्यं त्रिष्टुबोज[11] एव वीर्यं विश आदाय तां[12] क्षत्रायापिदधाति
यं कामयेत क्षत्रानुदेयेति[13] यो ऽरण्ये ऽनुवाक्यो गणस्तेनाग्निष्ठं रथ-

---

[1] So Calands Vermuthung; Ch सन्नाद्येन्वेतितो; cf. unten. [2] So corr. Ch राष्ट्र [3] So Calands Vermuthung; Ch संनह्यत्वियाद्राष्टमेव [4] Ch च्यवन्नाम [5] So corr. Ch दस्याना° [6] So corr. Ch विध्म° und द्यंकाराः; cf. TS 3, 4, 8, 4. [7] So corr. Ch मरुता; cf. unten. [8] So corr. Ch नुनियुत्तु [9] So corr. Ch मारुतां [10] Ch मेष्टां, erste Hand मेष्टं; cf. Mâitr. S. 3, 3, 10 (p. 44, Z. 4). [11] So corr. Ch भोज [12] So corr. Ch ता; in Mâitr. S. 3, 3, 10 fehlt dies Wort. [13] So corr. Ch छत्रानुदेयेति

वाहनं विचालयेदेतद्वै राजन्यस्य क्षत्रं बिभर्ति क्षत्रमेव मरुतां क्षत्रे-
णैवैनं[1] क्षत्रानुदत इन्द्रं दैवीर्विशो मरुतो ऽनुवर्त्मान इत्येतद्वै देवाना-
मनुवर्त्म देवानामेवानुवर्त्मना यजमानायानुवर्त्म करोति सं वा एन-
मेतदिन्द्धे यच्चिनोति[2] दीपयति मरुन्नामैः ॥ १० ॥

cf. Mâitr. S. 3. 3, 7. 10; TS 5. 4. 6. 7.

वसोर्धारां[3] जुहोति वसोर्मे धारासदिति वा एषा हूयते घृतस्य
वा एषा धारामुष्मिंल्लोके यजमानमुपतिष्ठते संततं जुहोत्यन्नाद्यस्य
संतत्या अविच्छेदाय यं द्विष्यात्तस्य विच्छिन्द्यादन्नाद्यमेवास्य वि-
च्छिनत्ति घृतेन जुहोति तेजो वै घृतं तेजो वसोर्धारा तेजस्येव तेजो
दधात्यकॢप्तस्य वा एषा कॢप्त्यै हूयते ऽनवरुद्धस्यावरुद्ध्या अनभिजि-
तस्याभिजित्यै प्राणश्चापानश्चेति प्राणापाना एव यजमाने दधात्यन्नं
च[4] चक्षुश्चेत्येतद्वा अन्नस्य रूपं रूपेणैवान्नमवरुन्द्धे द्वादशैतानि द्वाद-
शानि जुहोति द्वादश मासास्संवत्सरस्संवत्सरेणैवान्नाद्यमवरुन्द्धे॥ अग्नि-
श्चापश्चेत्येषा वा अन्नस्य योनिस्सयोन्येवान्नमवरुन्द्धे ऽर्धेन्द्राणि[5] जुहोति
देवतानामवरुद्ध्यै यदर्धेन्द्राणि जुहोति तस्मादिन्द्रो देवतानां भूयिष्ठ-
भागिन्द्रमुत्तरं करोतीन्द्रिय एव यजमानं प्रतिष्ठापयत्यंशुश्च रश्मिश्चेति
यज्ञमुखं वा अंशुश्च रश्मिश्च यज्ञमुखमेवावरुन्द्धे स्रुचश्च चमसाश्चेत्ये-
तानि वै यज्ञस्य रूपाणि रूपैरेव यज्ञमवरुन्द्धे ऽवभृथश्च स्वगाकार-
श्चेति[6] प्रतिष्ठित्या अग्निश्च घर्मश्चेत्येतद्वा अग्नेर्ब्रह्मवर्चसं तदेवावरुन्द्धे
त्रियविश्च त्रियवी चेत्येतावन्ति वै पशूनां वयांसि सवयस[7] एव प-
शूनवरुन्द्ध एका च तिस्रश्चेति मनुष्यच्छन्दसं[8] वा एका च तिस्रश्च
मनुष्यच्छन्दसमेवावरुन्द्धे[9] चतस्रश्चाष्टौ चेति देवच्छन्दसं[10] वै चतस्र-

[1] So corr. Ch त्त्रेनैवेनं [2] So corr. Ch यश्चि°; Mâitr. S. 3, 3, 10 a. E. = Corr. [3] So corr. Ch वसधेरां [4] Dies च von mir hinzugesetzt; fehlt in Ch. [5] So corr. Ch वरुन्धे ॥ वेंद्राणि [6] So corr. Ch सुगाकार°; TS 5, 4, 8, 4 = Corr.; vgl. auch Kâṭh. 36, 7 स्वगाकृतिं [7] So meine Vermuthung; Ch वयश्च एव, was schon der mangelnde Saṃdhi als falsch erweist; cf. Mâitr. S. 3, 4, 2 (p. 46 Z. 17 पशव एव) [8] So corr. Ch मनुष्यश्छन्दसां [9] So corr. Ch मनुष्यश्छन्दसमे° [10] So corr. Ch देवश्छन्दसं

श्चाष्टौ च देवच्छन्दसमेवावरुन्द्धे[1] ॥ युग्मदयुजौ स्तोमौ[2] मिथुनौ प्र-
जात्यै मिथुनमेव द्युत्तरेण करोति प्र चतुरुत्तरेण[3] जनयत्येका च ति-
स्रश्चेत्या त्रयस्त्रिंशतो[4] जुहोति त्रयस्त्रिंशद्देवता देवता एवावरुन्द्धे[5] च-
तस्रश्चाष्टौ चेत्यष्टाचत्वारिंशतो ऽष्टाचत्वारिंशदक्षरा जगती जागताः
5 पशवः पशूनेवावरुन्द्धे ऽस्मिन्नेव लोके मनुष्यच्छन्दसेनर्ध्नोत्यमुष्मि-
न्देवच्छन्दसेनोभौ[6] लोका आजयति वाजश्च प्रसवश्चेति त्रयोदशैता
व्याहृतयस्त्रयोदशमासस्संवत्सरो ऽन्तत एव संवत्सरं रोहत्यायुर्यज्ञेन
कल्पतामिति यज्ञस्यैवैषा कॢप्तिर्ऋक्च साम चेत्यन्नाद्यं वै वसोर्धारा-
न्नाद्यमेव वसोर्धारयावरुध्यान्नादो[7] भूत्वा स्तोमश्च यजुश्चेति देवक्षत्रं
10 वै स्तोमश्च यजुश्चान्तत[8] एव देवक्षत्रं प्रावस्यति ॥ ११ ॥

cf. Mâitr. S. 3, 4, 1. 2; TS 5, 4, 8.

देवा[9] वै वाजप्रसव्य आजिमयुस्तदग्निरुदजयद्वाजप्रसव्यं[10] जुहो-
त्यन्नाद्यस्योज्जित्या अन्नस्यान्नस्य जुहोति[11] सर्वमेवान्नमवरुन्द्धे यस्य
न जुहोति तेन व्यृध्यते[12] यस्य न जुहुयात्तदिध्मे ऽपि प्रोक्षेत्तेनैव[13] त-
दवरुन्द्ध औदुम्बरेण स्रुवेण जुहोत्यूर्ग्वा[14] उदुम्बर ऊर्जैवान्नाद्यमवरुन्द्धे
15 ऽग्नेर्वा एषो ऽभिषेकस्तस्मादग्निचिद्वर्षति न धावेद्यद्धावत्यन्नाद्याद्धाव-
त्यथैते राष्ट्रभृतः क्षत्रं वा एषो ऽग्नीनां यच्चीयत एते वा एतस्य राष्ट्रं
बिभ्रति तद्राष्ट्रभृतां राष्ट्रभृत्त्वं तैरेवास्मै[15] राष्ट्रं संप्रयच्छति षडेते षड्वा
ऋतव ऋतुभिरेवास्मै राष्ट्रं संप्रयच्छत्यथो ऋतुष्वेव प्रतितिष्ठति ॥
मिथुना आहुतयः प्रजात्यै द्वादश द्वादश मासास्संवत्सरस्संवत्सरेणै-

---

[1] Ch देवश्छं° [2] So corr. Ch स्तोमो [3] So corr. Ch चतुरुत्तरे; vgl. Mâitr. S. 3, 4, 2 (p. 46, Z. 13) = Corr. [4] So corr. Ch शते; cf. Mâitr. S. 3, 4, 2; TS 5, 4, 8, 6. [5] So corr. Ch यवाव° [6] So corr. Ch मनुष्यश्छंदसेनव्रोत्यमुष्मि-न्देवश्छंद° [7] So corr. Ch रुध्यान्नादौ [8] So corr. Ch तता [9] Dies Cap. collationirt mit und accentuirt nach T1 und Brl fol. 143. 144. [10] Ch आजिमायुस्तदग्निरुदजयद्वाज° [11] Ch जुहोत्यन्नान्नस्यो जुहोति; also Lücke in Ch; T1 und Brl = Corr. Vgl. Mâitr. S. 4, 3, 3 a. A. [12] Ch व्यृध्यते [13] Ch प्रोक्षते° [14] Brl जुहोत्यू° [15] Von hier bis zum folgenden राष्ट्रं in Ch ausgefallen, Lücke.

वास्मै राष्ट्रं संप्रयच्छत्यथो संवत्सर एव प्रतितिष्ठति रथमुखे त्रयोदश
जुहोति[1] वज्रो वै रथो वज्रेणैव दिशो ऽभिजयति ता दिशो ऽभि-
जिता रथेनेयते वातहोमाञ्जुहोति वातमेवावरुन्द्धे ऽग्निचितं ह त्वा
एषो[2] ऽमुष्मिंल्लोके ऽभिपवते[3] त्रिर्जुहोति त्रय इमे लोका एभ्य एव
लोकेभ्यो वातमवरुन्द्ध इमे[4] ऽस्मै लोका वातं धुन्वन्त्यञ्जलिना[5] जु-
होति हस्तावदानो वै वायुर्न वै वायुमवदानैराप्नुमर्हत्येकधैवैनमाप्नो-
ति समुद्रो ऽसि नभस्वानित्येतानि वै वातस्य रूपाणि रूपैरेव वा-
तमवरुन्द्धे ॥ प्राणो वै गायत्री गायत्रं हविर्धानं व्यानस्त्रिष्टुप् त्रैष्टुभ-
माग्नीध्रमपानो[6] जगती जागतं सदो मध्ये दिवो निहितः पृश्निरश्मे-
त्यसुर्वाव[7] स पृश्निरश्मासुमेव[8] प्राणापानयोर्व्यवदधाति प्राणापान-
योर्विधृत्या[9] एकविंशतिं होत्रीय[10] उपदधात्येकविंशो वै स्तोमानां
प्रतिष्ठा प्रतिष्ठित्या एकादश ब्राह्मणाच्छंस्ये[11] एकादशाक्षरा त्रिष्टु-
ब्वीर्यं त्रिष्टुब्वीर्यमेवावरुन्द्धे ऽष्टा अष्टा इतरेष्वष्टाक्षरा गायत्री गा-
यत्र्यामेव प्रतितिष्ठति षण्मार्जालीये षड्वा ऋतव ऋतव एतं दक्षि-
णा पर्यहरन्पितर[12] ऋतवस्तस्मात्त्र षडुपधीयन्ते[13] ॥ १२ ॥

cf. Mâitr. S. 3, 4, 3. 4; TS 5, 4, 9.

इयं वामस्य मन्मनश्शुचिं नु स्तोमं मरुतो यद्व वो दिवो या व-
श्शर्मेमं मे वरुण तत्त्वायामि कया नश्चित्रः ॥
कया तच्छृण्वे शच्या शचिष्ठो यया कृणोति मुहु काचिदृष्वः[14] ।
पुरु दाशुषे विचयिष्ठो अंहो ऽथा दधाति द्रविणं जरित्रे ॥
उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत[15] ।
अवाधमानि[16] जीवसे ॥

---

[1] Statt जुहोति hat Brl हु--ति [2] Ch एषो [3] So T 1 und Brl; Ch पवति [4] So betonen sowohl T 1 als auch Brl इमे स्मै [5] Ch धू° [6] Ch धूमपानो [7] T 1 पृश्निराश्मेत्य°; Brl पृश्निराश्मात्य° [8] Ch रस्मा° [9] Brl विवृत्या [10] Ch होत्रेय [11] Ch ब्रह्मणाश्छंस्य [12] Brl पर्यहन्पि° [13] T 1 und Brl दीयन्ते [14] So corr. Ch दृष्टः; vgl. RV 4, 20, 9. [15] So corr. Ch मध्यमं मृत [16] So corr. Ch अबाधमानि

उदुत्तमं वरुण पाशमस्मत्त्वं नो अग्ने स त्वं नो अग्ने ॥
अनेकवन्तमूतये ऽग्निं धीभिर्हवामहे ।
स नः पर्षदति द्विषः ॥
सैनानीकेन सुविदत्रो[1] अस्मे यष्टा देवाँ[2] आयजिष्ठस्स्वस्ति ।
5 अदब्धो गोपा उत[3] नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि ॥
सांतपना इदं हविर्मरुतस्तज्जुजुष्टन[4] ।
युष्माकोती रिशादसः ॥
यो नो मर्तो मरुतो दुर्हणायुस्तिरश्चित्तानि वसवो जिघांसति[5] ।
द्रुहः[6] पाशं प्रति षू मुचीष्ट[7] तपिष्ठेन तपसा हन्तना तम् ॥
10 गृहमेधा रिशादसो मरुतो मापभूतन[8] ।
प्रमुञ्चन्तो नो अंहसः ॥
प्र बुध्न्या व ईरते महांसि प्र नामानि प्रयज्यवस्तिरध्वम्[9] ।
सहस्रियं दम्यं[10] भागमेतं गृहमेधीयं मरुतो जुषध्वम् ॥
क्रीडं वश्शर्धो मारुतमनर्वाणं[11] रथेशुभम् ।
15 कण्वा अभिप्रगायत ॥
अत्यासो न ये मरुतस्स्वञ्चो यक्षदृशो न शुभयन्त मर्याः ।
ते हर्म्येष्ठाश्शिशवो न शुभ्रा वत्सासो न[12] प्रक्रीडिनः पयोधाः ॥
इन्द्राग्नी अवथवृत्रमा तू न इन्द्र त्वं महाँ इन्द्र ॥
विश्वकर्मन्हविषा वावृधानस्स्वयं यजस्व पृथिवीमुत द्याम् ।
20 मुह्यन्त्वन्ये[13] अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥

---

[1] So corr. Ch दात्रो; cf. RV 2, 9, 6. [2] So corr. Ch देवा; cf. RV 2, 9, 6. [3] So corr. Ch उता [4] So corr. Ch तं जुजुष्टान; cf. RV 7, 59, 9. [5] So corr. Ch श्चित्ता वोसवो जिघांसत; RV 7, 59, 8. [6] So corr. Ch द्रुहस; cf. RV 7, 59, 8. [7] So corr. Ch मुचित; cf. RV 7, 59, 8; Mâitr. S. 4, 10, 5. [8] So corr. Ch मामभू°; cf. RV 7, 59, 10. [9] So corr. Ch प्रयुज्य°; cf. RV 7, 56, 14. [10] So corr. Ch दस्यम्भा°; cf. RV 7, 56, 14. [11] So corr. Ch मरुतम°; cf. RV 1, 37, 1. [12] So corr. Ch नः; cf. RV 7, 56, 16. [13] So corr. Ch मुह्यांत्व°; cf. RV 10, 81, 6.

वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजे अद्याहुवेम ।
स नो नेदिष्ठं हवनानि जोषद्विश्वशंभूरवसे[1] साधुकर्मा ॥ ॥ १३ ॥
उशन्तस्त्वा[2] हवामह उशन्तस्समिधीमहि ।
उशन्नुशत आवह पितॄन्हविषे अत्तवे ॥
त्वं सोम प्रचिकितो मनीषा त्वं रजिष्ठमनुनेषि पन्थाम् ।
तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥
त्वया हि नः पितरस्सोम पूर्वे कर्माणि चक्रुः पवमान धीराः ।
वन्वन्नवातः परिधीरंपोर्णु[3] वीरेभिरश्वैर्मघवा भवा नः ॥
त्वं सोम पितृभिस्संविदानो ऽनु द्यावापृथिवी आततन्थ[4] ।
तस्मै त इन्दो हविषा विधेम[5] वयं स्याम पतयो रयीणाम् ॥
बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आ गतावसा शंतमेनाथा नश्शं योररपो[6] दधात ॥
आहं पितॄन्सुविदत्राँ अवित्सि[7] नपातं च विक्रमणं[8] च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः ॥
उपहूताः[9] पितरस्सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आगमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु ते ऽवन्त्वस्मान् ॥
अग्निष्वात्ताः पितर एह[10] गच्छत सदस्सदस्सदत[11] सुप्रणीतयः ।
अत्ता[12] हवींषि प्रयतानि बर्हिष्यथा रयिं सर्ववीरं दधातन ॥
अग्निष्वात्ता ऋतावृधः[13] पितरो मृडता सु नः ॥
प्रमुञ्चन्तु नो अंहसः ॥

---

[1] So corr. Ch हवनाणाणोषद्विश्वशंभूवसे; cf. RV 10, 81, 7; Mâitr. S. 2, 10, 2; in Çâradâ ist das Zeichen für ज demjenigen für ण sehr ähnlich. [2] Dies Capitel collationirt mit und accentuirt nach T 1 und Brl (Papierblatt, nach fol. 86 eingeschaltet). [3] So T 1 परिधींर॰; auch Brl परिधीर॰; desgl. Ch und W 1, ohne Accent; aber cf. RV 9, 96, 11. [4] Ch ततंतू; cf. RV 8, 48, 13. [5] Brl विविधेम [6] W 1 य्योररापो; cf. RV 10, 15, 4. [7] Ch आवित्सि; cf. RV 10, 15, 3. [8] W 1 विक्रमाणञ्च [9] So T 1; in Brl उपहूतः; desgl. Ch und W 1, ohne Acc.; cf. RV 10, 15, 5. [10] Ch इह; Brl इहं [11] So T 1; Ch सदस्मदतस्मदत; Brl संदास्सदस्सदत; cf. RV 10, 15, 11. [12] Ch अर्ता [13] Ch ऋतावृधा; cf. Mâitr. S. 4, 10, 6.

अग्निष्वात्तानृतुमतो[1] हवामहे नराशंसे[2] सोमपीथं य आनशुः ।
त आगमन्तु त इह श्रुवन्त्वधि[3] ब्रुवन्तु तेऽवन्त्वस्मान् ॥
स पूर्वया निविदा कव्यतायोरिमाः प्रजा अजनयन्मनूनाम्[4] ।
विवस्वता चक्षसा द्यामपश्च देवा अग्निं धारयन्द्रविणोदाः[5] ॥
5 यो अग्निः कव्यवाहनः पितॄन्यक्षदृतावृधः ।
प्रेदु हव्यानि वोचति[6] देवेभ्यश्च पितृभ्य आ ॥
त्वदग्ने काव्या त्वन्मनीषास्त्वदुक्था जायन्ते राध्यानि ।
त्वदेति[7] द्रविणं वीरपेशा इत्थाधिये दाशुषे मर्त्याय ॥
वायुरग्रेगाः प्र याभिर्यासि[8] ॥
10 सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् ।
धीरा इन्द्राय[9] सुम्नया ॥
शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥
उदु त्यं चित्रं देवानाम् ॥
15 इन्द्रं वयं शुनासीरमस्मिन्यज्ञे हवामहे ।
इह देवं सुराधसम्[10] ॥
इन्द्रं वयं धनपतिं सूनुमन्वारभामहे[11] ।
स नः पितेव पुत्रेभ्य ईशानश्शर्म यच्छतु[12] ॥ ॥ १४ ॥

इति श्रीमद्यजुर्वेदकाठके चरकशाखायां मध्यमिकायां पञ्चचूडं
20 नाम एकविंशं स्थानकं संपूर्णम्[13] ॥

---

[1] Ch नृत्तमतो [2] So T 1 und W 1; Brl नंराशंसो; Ch नराशीसो; W 2 नंराशंसं; cf. Mâitr. 4, 10, 6. [3] Ch इह ब्रुव°; W 2 इहं श्रव° [4] Brl अजयन्मं° [5] cf. RV 1, 96, 2; Mâitr. S. 4, 10, 6. [6] Brl वोचते; cf. RV 10, 16, 11. [7] Ch त्वदिति; cf. RV 4, 11, 3. [8] Ch प्रियाभिर्यासि [9] cf. RV 10, 101, 4 देवेषु [10] cf. Mâitr. S. 4, 10, 6. [11] So die Mss.; nur W 1 सूनम°; die Correctur in शुनम° liegt nahe. [12] Ch यच्छत [13] So die Unterschrift des Capitels in Ch.

स्वर्गाय वै लोकाय देवरथो युज्यते कामाय मनुष्यरथो ऽग्निं युनज्मि शवसा घृतेनेति देवरथमेव युनक्ति स एनं युक्तस्स्वर्गं लोकमभिवहति यत्सर्वाभिर्युञ्ज्याद्युक्तो ऽस्याग्निस्स्यादप्रतिष्ठिता आहुतयस्तिसृभिर्युनक्ति त्रिवृद्वा अग्निर्यावानेवाग्निस्तं युनक्ति तस्मिन्युक्ते यज्ञस्समाधीयते द्वाभ्यां नापियुनक्त्याहुतीनां प्रतिष्ठित्यै द्वाभ्यां यज्ञायज्ञीयस्य स्तोत्रे ऽभिमृशत्येतावान्वै यज्ञो यावानेवाग्निष्टोमो भूमा[1] त्वा अस्यात ऊर्ध्वं क्रियते यावानेव यज्ञो यावानग्निष्टोमस्तमन्ततस्स्वर्गं लोकमनुसमारोहति ॥ सं वा एतमेता अग्नी तपतो यश्चाग्निष्टोमो यश्च वैश्वानरो ऽपस्वतीभ्यामभिमृशति शान्त्यै द्वाभ्यां द्विपाद्यजमानः प्रतिष्ठित्यै समास्त्वाग्न ऋतवो वर्धयन्त्विति समाभिरेवर्तून्वर्धयत्यृतुभिस्संवत्सरं सं दिव्येन दीदिहि रोचनेनेति तस्मादग्निस्सर्वा दिशो विभाति प्रत्यौहतामश्विना मृत्युमस्मादित्यामयाविन एतान्कुर्यान्मृत्युमेवास्मात्प्रतिनुदत्युद्वयं[2] तमसस्परीति पाप्मा वै तमः पाप्मानमेवैतयापहते ज्योतिष्पश्यन्त उत्तरमित्यसौ वा आदित्यो ज्योतिरुत्तममुष्यैवादित्यस्य सायुज्यं गच्छति ॥ या अपस्वतीस्ताः कुर्याच्छान्त्यै चतुर्विंशतिं चतुर्विंशतिस्संवत्सरस्यार्धमासा न वै संवत्सरस्तिष्ठते नास्य श्रीस्तिष्ठते यस्यैताः क्रियन्ते ऽथैता आप्रियः प्रजापतिः प्रजास्सृष्ट्वा स रिरिचान इवामन्यत स एता आप्रीरपश्यत्ताभिरात्मानमाप्रीणीत[3] यज्ञः प्रजापतिर्यदाप्रियो भवन्ति यज्ञमेवाप्रीणात्यूनातिरिक्ता मिथुनाः प्रजात्यै लोमशं वै नामैतत्प्रजापतेश्छन्दो लोमशाः[4] पशवः प्रजायन्ते पशूनां प्रजात्यै सर्वाणि वा एता रूपाणि सर्वाणि रूपाण्यग्नौ चित्ये क्रियन्ते तस्मादेता अग्नेश्चित्यस्य भवन्ति ॥ १ ॥

cf. Mâitr. S. 3, 4, 4 und 6; TS 5, 4, 10.

यथा वै पुनराधेय एवं पुनश्चितिर्यो वा अग्न्याधेयेन[5] नर्ध्नो-

---

[1] Vgl. Mâitr. S. 3, 4, 4 a. E. TS 5, 4, 10, 2.
[2] So corr. Ch एतां कु°
[3] So corr. Ch आप्रेरिय°
[4] So corr. Ch लोमशः
[5] So corr. Ch अग्नाधेयेन

ति[1] पुनराधेयं स आधत्ते यद्यग्निना चित्येन नर्ध्नुयात्पुनश्चितिं[2] चि-
न्वीतर्ध्नोत्येवात्मा[3] वै प्रथमा चितिः प्रजा द्वितीया नपात्तृतीया[4] तृ-
तीयमग्निं चिन्वानो मध्यमायामेताश्चित्यामुपदध्यादनुसंतत्यै नपात्को
वै नामैषो ऽग्निरत्त्यन्नं य एवं विद्वानेता उपधत्ते ऽष्टा एता उपदधा-
त्यष्टाक्षरा गायत्री गायत्र्यामेव प्रतितिष्ठति यां वा अनिष्टके ऽग्नि-
चिदाहुतिं जुहोति स्रवति सा तां स्रवन्तीं यज्ञो ऽनु परास्रवति यज्ञं
यजमानो यदेता उपधीयन्त आहुतीनां प्रतिष्ठित्यै ॥ ताः प्रतितिष्ठ-
न्तीर्यज्ञो[5] ऽनु प्रतितिष्ठति यज्ञं यजमानो ऽष्टा उ ता उपदधात्यष्टाक्षरा
गायत्री गायत्रो ऽग्निर्यावानेवाग्निस्तं चिनुते ऽष्टा एता उपधाय पुरी-
षेणाभ्यूहत्यष्टाक्षरा गायत्री ब्रह्म गायत्री ब्रह्मणैवैनं चिनुते गायत्र्या
छन्दसैकादश लोकंपृणयोपधाय[6] पुरीषेणाभ्यूहत्येकादशाक्षरा त्रिष्टु-
ब्वीर्यं त्रिष्टुब्वीर्येणैवैनं चिनुते त्रिष्टुभा छन्दसा द्वादश लोकंपृणयो-
पधाय पुरीषेणाभ्यूहति द्वादशाक्षरा जगती जागताः पशवः पशु-
भिरेवैनं चिनुते ॥ जगत्या छन्दसा तिस्रश्चितयस्त्रीणि पुरीषाणि त-
त्षट् संपद्यते षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति तदाहुरुत्तरवेदिर्वा-
वैषा यो ऽस्य पूर्वो ऽग्निश्चितस्तस्यात्तमन्ववसाय यजेतेति यथा दीप्य-
माने भूयो ऽभ्यादधात्येवमेवास्मिंस्तदधि पूर्वं तेजो दधाति तदाहुः
कश्श्रेयांसं विषुप्तं बोधयितुमर्हतीति यद्यजत आहुत्यैवैनं वर्धयति गृ-
हान्वा एतत्कुरुते यदग्निं चिनुते यद्वा अन्यतो विन्दते गृहांस्तदाहरति
यदीष्ट्या यजेत यदि पशुना यदि सोमेन यो ऽस्य पूर्वो ऽग्निश्चित-
स्तस्यात्तमन्ववसाय यजेत यथान्यतो वित्त्वा[7] गृहानाहरत्येवमेव तत् ॥ २॥

cf. Mâitr. S. 3, 4, 5; TS 5, 4, 10.

संवत्सरमुख्यं भृत्वा द्वितीये संवत्सरे पर्येते आग्नेयमष्टाकपालं नि-
र्वपेदैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुं वैष्णवं

---

[1] So corr. Ch नब्नोति [2] So corr. Ch नब्नुयात [3] So corr. Ch चिन्वीत्य-ब्नोत्ये° [4] So corr. Ch नपातृ° [5] So corr. Ch प्रतिष्ठंतो° [6] So corr. Ch लोकस्पृणा° [7] So corr. mit Caland; Ch विड्वा; vgl. Mâitr. S. III, p. 51, Z. 10.

त्रिकपालं तृतीये संवत्सरे पर्यंते ऽभिजिता यजेत यदष्टाकपालो ऽष्टाक्षरा गायत्र्याग्नेयं गायत्रं प्रातस्सवनं प्रातस्सवनमेव तेन दाधार[1] गायत्रीं छन्दो यदेकादशकपाल एकादशाक्षरा त्रिष्टुबैन्द्रं त्रैष्टुभं[2] माध्यन्दिनं सवनं माध्यन्दिनमेव तेन सवनं दाधार त्रिष्टुभं छन्दो यद्वादशकपालो द्वादशाक्षरा जगती वैश्वदेवं जागतं तृतीयसवनं तृतीयसवनमेव तेन दाधार जगतीं[3] छन्दो यद्बार्हस्पत्यो ब्रह्म वै बृहस्पतिर्ब्रह्म वै तेन दाधार यद्वैष्णवो यज्ञो वै विष्णुर्यज्ञमेव तेन दाधार यदभिजिता यजते ऽभिजित्यै यत्संवत्सरमुख्यं बिभर्तीमं तेन लोकं स्पृणोति यद्द्वितीयं चिनुते ऽन्तरिक्षं तेन स्पृणोति यद्यजते ऽमुं तेन लोकं स्पृणोत्येतं वै पर[4] आह्णारः[5] कक्षीवाँ औशिजस्त्रसदस्युः[6] पौरुकुत्सः प्रजाकामा अचिन्वत ततो वै ते सहस्रं सहस्रं पुत्रानविन्दन्त[7] प्रथत एव तं भूमानं गच्छति यं ते ऽगच्छन्य एवं विद्वानेतं चिनुते ॥ ३ ॥ cf. TS 5, 6, 5.

प्रजापतिर्वा एतमग्रे ऽग्निमचिनुतर्तुभिस्संवत्सरं[8] वसन्तेन पूर्वार्धं ग्रीष्मेन दक्षिणं पक्षं वर्षाभिरुत्तरं शरदा पुच्छं हेमन्तेन मध्यं ब्रह्मणा वावास्य तत्पूर्वार्धमचिनुत क्षत्रेण दक्षिणं पक्षं विशोत्तरं पशुभिः पुच्छमाशया मध्यमेतावद्वावास्ति यावदेवास्ति तत्स्पृणोति शृण्वन्त्येनमग्निं चिक्यानमत्त्यन्नं रोचते का प्रथमा चितिः किं पुरीषमित्याहुर्ब्रह्मवादिन इयं वाव प्रथमा चितिरोषधयः पुरीषमन्तरिक्षं द्वितीया वयांसि पुरीषं द्यौस्तृतीया नक्षत्राणि पुरीषं यज्ञश्चतुर्थी दक्षिणा पुरीषमात्मा पञ्चमी प्रजा पुरीषं यत्त्रिचितीकं चिन्वीत यज्ञं दक्षिणामात्मानं प्रजामन्तरियात्तस्मात्पञ्चचितीकश्चेतव्यो यत्तिस्रश्चितयस्त्रिवृद्ध्यग्निर्यद्द्वे द्विपाद्यजमानस्त्रय इमे लोका एष्वेव लोकेष्वृध्नोति॥ ४॥ cf. Mâitr. S. 3, 4, 8; TS 5, 6, 10.

---

[1] So corr. Ch दधार; cf. weiter unten. [2] So corr. Ch त्रिष्टुभं [3] So corr. Ch जगतो [4] So corr. Ch परा; cf. TS 5, 6, 5, 3. [5] So Ch; cf. TS 5, 6, 5, 3. [6] So corr. Ch दस्युः [7] So corr. Ch विंदत [8] So corr. Ch चिनुतंतुभि°

सजूरब्द आयवोभिस्सजूरुषा अरुणीभिस्सजूस्सूर एतशेन सजोषा
अश्विना दंसोभिस्सजूर्वैश्वानर इडया घृतेन स्वाहा ॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥
युक्ष्वा[1] हि देवहूतमाँ अश्वाँ अग्ने रथीरिव ।
नि होता पूर्व्यस्सदः ॥
अग्ने युक्ष्वा[2] हि ये तवाश्वासो देव साधवः ।
अरं वहन्त्याशवः ॥

अग्नेर्यान्यस्यग्नेरग्नियान्यसि वायोर्यान्यसि वायोर्वायुयान्यसि[3] दे-
वानां यान्यसि देवानां देवयान्यस्यन्तरिक्षस्य यान्यस्यन्तरिक्षस्यान्त-
रिक्षयान्यस्यन्तरिक्षसदस्यन्तरिक्षे सीद ॥ यवा आयवा ऊमा एवा
अब्दस्सगरस्सुमेकस्सलिलाय त्वा मृदीकाय[4] त्वा सतीकाय त्वा केताय
त्वा प्रचेतसे त्वा दिवे त्वा[5] ज्योतिषे त्वा विवस्वते त्वादित्येभ्यस्त्वर्चे
त्वा रुचे त्वा भासे त्वा ज्योतिषे त्वा सूर्याय त्वा पुरोवातसनिरस्यभ्रस-
निरसि विद्युत्सनिरसि स्तनयित्नुसनिरसि वृष्टिसनिरसि प्राच्या त्वा
दिशाग्निना देवतया गायत्रेण छन्दसाग्नेश्शिर उपदधामि गायत्रेण
छन्दसा छन्दसाग्नेश्शीर्ष्णाग्नेश्शिर[6] उपदधामि ॥ दक्षिणया त्वा दि-
शेन्द्रेण देवतया त्रैष्टुभेन छन्दसाग्नेः पार्श्वमुपदधामि त्रैष्टुभेन छन्दसा
छन्दसाग्नेः पार्श्वेनाग्नेः पार्श्वमुपदधामि प्रतीच्या त्वा दिशा सवित्रा
देवतया जागतेन छन्दसाग्नेः पुच्छमुपदधामि जागतेन छन्दसा छ-
न्दसाग्नेः पुच्छेनाग्नेः पुच्छमुपदधाम्युदीच्या त्वा दिशा मित्रावरुणाभ्यां
देवतयानुष्टुभेन छन्दसाग्नेः पार्श्वमुपदधाम्यानुष्टुभेन छन्दसा छन्दसाग्नेः
पार्श्वेनाग्नेः पार्श्वमुपदधाम्यूर्ध्वया त्वा दिशा बृहस्पतिना देवतया पा-

---

[1] Co corr. Ch यक्ष्वा [2] So corr. Ch यक्ष्वा [3] So corr. Ch वयोर्वायुर्या॰
[4] So Ch; vgl. स्मतीकम Nâigh. 1, 12; Nir. 14, 11. [5] Dies त्वा von mir ergänzt; fehlt in Ch. [6] So corr. Çh शीर्षाग्नेशिर

ङ्क्तेन च्छन्दसाग्नेः पृष्ठमुपदधामि पाङ्क्तेन च्छन्दसा छन्दसाग्नेः पृष्ठेनाग्नेः पृष्ठमुपदधामि ॥ संयच्च प्रचेताश्चाग्नेस्सोमस्य सूर्यस्य ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधाम्युग्रा च भीमा च पितॄणां यमस्येन्द्रस्य ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ध्रुवा च पृथिवी च सवितुर्मरुतां वरुणस्य ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि यन्त्री च यमनी च मित्रावरुणयोर्मित्रस्य धातुस्ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि प्राची च प्रतीची च वसूनां रुद्राणामादित्यानां ते ते ऽधिपतयस्ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दधामि ॥ ५ ॥

cf. Mâitr. S. 2, 12, 3; 2, 13, 12; 3, 4, 4 u. a. m.; TS 4, 4, 6.

सजूरब्द आयवोभिरिति संवत्सरो वा अब्दो मासा आयवा उषा अरुणीस्सूर एतश इमे अश्विना[1] संवत्सरो ऽग्निर्वैश्वानरः पशव इडा पशवो घृतं संवत्सरं पशवो ऽनु प्रजायन्ते[2] संवत्सरादेवास्मै पशून्प्रजनयति दर्भस्तम्बे[3] जुहोति यद्वा अस्या अनामृतं यद्वीर्यं तदेतदुत्सर्पति यदेवास्या अनामृतं यद्वीर्यं तस्मिञ्जुहोति नाग्निं चिक्यानः प्रमीयते यस्यैवं जुह्वति चित्रं देवानामुदगादनीकमिति पुरुषशीर्षे[4] जुहोत्यहर्वै मित्रो रात्री वरुण एतावद्वावास्ति यावदेवास्ति तत्स्पृणोति सौर्यर्चा जुहोति तस्मात्पुरुष एवं सूर्यं प्रत्यङ् पशूनां न्यञ्चो ऽन्ये यत्समान्यर्चा द्विर्जुहोति[5] तस्मात्समानस्य पुरुषस्य द्वौ पादौ ॥ यो ह वा अग्निं योग आगते न युनक्ति न युञ्जानेषु युङ्क्ते युक्ष्वा हि देवहूतमाँ अग्ने युक्ष्वा हि ये तवेत्यग्निमेवैतद्योग आगते युनक्ति युङ्क्ते युञ्जानेषु य एवं वेद द्वाभ्यां युनक्त्यस्थूरि इयं[6] यो ह वा अग्निं विमोक[7] आगते न विमु-

---

[1] Kap. S. 34 a. E. इमे अग्निना; cf. aber oben Cap. 5 a. A., TS 5, 6, 4, 1.
[2] So corr. Ch जायंत [3] So corr. Ch स्तम्भे; Kap. S. 34 a. E. = Corr. [4] So corr. Ch पुरुशीर्षे; Kap. S. 34 a. E. = Corr. [5] So corr. Ch द्वि जु° [6] So corr. Ch द्वय [7] So corr. Ch विमोका

न्त्वति न विमुञ्चमानेषु विमुञ्चते मातेव पुत्रं पृथिवी पुरीष्यमित्य-
ग्निमेवैतद्विमोक आगते विमुञ्चति वि विमुञ्चमानेषु मुञ्चते य एवं
वेदाथैतास्संयानीरेता[1] वै देवतास्स्वर्ग्यास्ताभिरेव[2] स्वर्गं लोकमेत्येषा
वै गायत्री ज्योतिष्पक्षा तयैव स्वर्गं लोकमेति ॥ यथा नावोदकादुद-
5 कमभिसंयात्येवं वा एताभिरग्निचिदमुत्र यथालोकं संयाति तत्संया-
नीनां संयानीत्वमथैतान्यृतुनामान्यृतूनेवावरुन्द्धे[3] सुमेक इति संवत्सरो
वै सुमेकस्संवत्सरमेवावरुन्द्धे ऽथैता आदित्येष्टका आदित्या वा एतस्य
तेज आददते यो ऽग्निं चिक्यानो नेव रोचते यदेता उपधीयन्ते यथा
दीप्यमाने भूयो[4] ऽभ्यादधात्येवमेवास्मिंस्तदधि पूर्वं तेजो दधाति ना-
10 स्यादित्यास्तेज आददते यथासौ[5] देवेष्वेवं[6] मनुष्येषु भवत्यथैता घृते-
ष्टकास्तेजो वा अग्निस्तेजो घृतं तेजस्येव तेजो दधात्यथैता वृष्टिसनयो
वृष्टिमेवैताभिरवरुन्द्ध एताभिर्वा अग्निचिते ऽमुत्र यथाकामं वर्षति
तद्वृष्टिसनीनां वृष्टिसनित्वमथैता आत्मैतद्[7] वा उवाच शङ्खः कौष्यः[8]
पुत्रमग्निं चिकिवांसमचैरग्नी३मित्यचैषं ही३त्यथ कथा न सर्वात्मागा
15 इति तद्वि नूनं[9] न विदांचकृमेति यदेता उपधीयन्ते सात्मानमेवाग्निं
चिनुते पुनर्निर्तुन्ना भवन्ति प्राणा एव प्राणमुपसंदधात्यथैषा षष्ठी
चितिर्यो ऽग्निं चिक्यानो नेव प्रतितिष्ठेत्स एतां षष्ठीं चितिमुपदधीत
षड्वा ऋतवस्संवत्सर[10] ऋतुष्वेव संवत्सरे प्रतितिष्ठत्येता वै देवता-
स्स्वर्ग्यास्ताभिरेव[11] स्वर्गं लोकमेत्येता वै देवता अभिचरणीया यं
20 द्विष्यात्तं ब्रूयादमुं वै जम्भे दधामीत्येताभ्य एवैनं देवताभ्य आवृश्चति
ताजक्प्रधन्वति ॥ ६ ॥ cf. Kap. S. 34 a. E.[12]; TS 5, 6, 4.

---

[1] So corr. Ch थैतासय्यानी° [2] So corr. Ch स्वर्ग्यस्ता° [3] So corr. Ch न्यृतुनेवा° [4] So corr. Ch भूया; Kap. S. 34 a. E. = Corr. [5] So corr. Ch यथासो; Kap. 34 a. E. यथासा [6] Kap. 34 a. E. देवेष्वेव [7] So corr. Ch आत्मेत; [8] So corr. Ch शंखः कोष्यः; cf. Weber, Ind. Stud. 3, 472. Kap. S. 34 a. E. ganz corrupt शंखस्यग्रय पुत्रम°; cf. das folgende Capitel. [9] Ch नूनन्न [10] Ch 2 Mal ऋतव; eines del. mit Caland. [11] So corr. Ch स्वर्ग्यस्ता° [12] Hier beginnt wieder der Text der Kap. S. und zwar mit einem größeren Fragment vom Ende des Capitel 34, welches Kâth. 22, 6 ziemlich genau entspricht.

अग्निना वै देवास्स्वर्गं लोकमायंस्तान्पराच[1] आवृत्तान्पश्चादन्व-
वेत्य रक्षांस्यजिघांसंस्ते देवा[2] एता वितृण्णीरपश्यंस्ताभी[3] रक्षांस्यपा-
घ्नत यद्द्वे पुरस्तादुपदधाति द्वे पश्चाच्चक्षुरेवोभयतो दधाति रक्षसामप-
हत्यै स्वयमातृण्णा भवन्ति प्राणानामुत्सृष्ट्यै स्वर्गस्य लोकस्यानु-
कशात्यै[4] चतस्रस्तस्माच्चत्वारि चक्षुषो रूपाणि द्वे शुक्ले द्वे कृष्णे स्व- 5
र्गाय वै लोकायाग्निश्चीयते यदेकादशिनीं कुर्याद्वज्रेण पुरस्तादवगृ-
ह्णीयादस्वर्ग्यस्स्याद्यदनेकादशिनीमनवरुद्धा अस्य पशवस्स्युरेकयूप
एकादश पशूनालभेत तेनैव स्वर्ग्यस्तेन पशूनवरुन्द्धे ॥ न पक्षसंमितां
मिनुयाद्यत्पक्षसंमितां मिनुयात्कनीयांसं यज्ञक्रतुमुपेयात्पापीयस्यस्या-
त्मनः[5] प्रजा स्यादेतद्ध वा उवाच जातश्शाकायन्यश्शङ्खं कौथं पक्ष- 10
संमितामेकादशिनीममेष्टेति श्रुत्वा कनीयांसं यज्ञक्रतुमुपागात्पापी-
यस्यस्यात्मनः[6] प्रजा भविष्यतीति ततो वै तं पराभूतं मन्यन्ते वेदि-
संमितां मिनुयाज्ज्यायांसमेव यज्ञक्रतुमुपैति नास्यात्मनः प्रजा पापी-
यसी भवति कस्मै कमग्निश्चीयत इत्याहुर्देवा मा वेदन्निति वा अग्नि-
श्चीयते य एवं विद्वानग्निं चिनुते विदुरेनं देवाः[7] कस्मै कमग्निश्चीयत 15
इत्याहुर्गृहा मे ऽसन्निति वा अग्निश्चीयते य एवं विद्वानग्निं चिनुते
गृहवान्भवति कस्मै कमग्निश्चीयत[8] इत्याहुरन्नमदानीति वा अग्निश्ची-
यते य एवं विद्वानग्निं[9] चिनुते ऽत्त्यन्नं व्रतं चरेदग्निं चित्वा प्रथमं
चित्वा न रामामुपेयाद्द्वितीयं चित्वा नान्येषां स्त्रियस्तृतीयं चित्वा न
कांचन रेतो वा एतन्निधत्ते यदग्निं चिनुते यदुपेयाद्रेतसा व्यृध्येत[10] 20
तदाहुर्ये एवामू रेतस्सिचा इष्टके ते अग्निचितो रेतो बिभृतस्तस्मा-
दुपेत्येति सहस्रेष्टकं चिन्वीत[11] प्रथमं चिन्वानस्सहस्रसंमितो ह्ययं[12]

---

[1] So corr. Ch मायंस्त॰ [2] So corr. Ch देवा देवा [3] So Ch वितृ-क्ष्णीर॰; cf. unten 22, 8; Kap. S. 35, 1 ते देवा एता विक्ष्णीरपशुस्ताभिरस्माद्रक्षांस्यपाघ्नंत [4] So Ch; Kap. S. 35, 1 लोकस्यानुत्कात्यै [5] So corr. Ch यज्ञक्रतुपेयात्यापीयस्यस्वात्मनः; cf. unten. [6] So corr. Ch पगा॰ [7] So corr. Ch देवः [8] So corr. Ch यतेः; cf. oben. [9] So corr. Ch ग्निम्श्चिनुते [10] So corr. Ch वृध्येत [11] So corr. Ch चिन्वेत [12] So corr. ह्येयं

लोको द्वे सहस्रे द्वितीयं चिन्वानो ऽन्तरिक्षेण संमितं त्रीणि सहस्राणि तृतीयं चिन्वानस्त्रय इमे लोका एभिर्लोकैस्संमितं प्रजापतिर्वा उख्यमग्निमबिभस्तेन[1] प्रजा असृजत ता अनुप्राविशत्सो ऽब्रवीत्स एव मे प्रजानामृध्नवद्यो मेतस्संचिनवदित्यग्निः[2] प्रजापतिर्यदग्निं चिनुते प्रजापतिमेव संचिनोत्यृध्नोति तच्चित्यस्य चित्यत्वं तं वसुभ्यः प्रायच्छत्तेन वसवस्त्रीणि च शतानि त्रयस्त्रिंशतं चासृजन्त ते वसवो रुद्रेभ्यः प्रायच्छंस्तेन रुद्रास्त्रीणि च शतानि त्रयस्त्रिंशतं चासृजन्त तं[3] रुद्रा आदित्येभ्यः प्रायच्छंस्तेनादित्यास्त्रीणि च शतानि त्रयस्त्रिंशतं चासृजन्तोखा सहस्रतमी य एवमुखां सहस्रतमीं वेद[4] गच्छति साहस्रीं पुष्टिं पशूनाम् ॥ ७ ॥

cf. Kap. S. 35, 1; Mâitr. S. 3, 4, 8; TS 5, 5, 7.

यथारूपमग्निश्चेतव्यो यो वै यथारूपमग्निं चिनुते नास्यापरूपं जायते गायत्र्या प्रथमां चितिं संचितामभिमृशेत्त्रिष्टुभा द्वितीयां जगत्या तृतीयामनुष्टुभा चतुर्थीं पङ्क्त्या पञ्चमीं यथारूपमेवाग्निं चिनुते नास्यापरूपं जायते प्राणो वै प्रथमा चितिर्व्यानो द्वितीयापानस्तृतीया प्राणापानैरेवैनं समिन्द्ध इडाया वा एषा विभक्तिः पशव इडा पशुभिरेवैनं चिनुते प्रजापतये प्रोच्याग्निश्चेतव्यो यो वै प्रजापतये ऽप्रोच्याग्निं चिनुत आर्तिमार्छत्यश्वा अभितस्तिष्ठेतां श्याव उत्तराच्छ्वेतो दक्षिणतस्ता आलब्धमिष्टकामिष्टकामुपदध्यादेतद्वै प्रजापते रूपं प्राजापत्यो ऽश्वः प्रजापतय एवं प्रोच्याग्निं चिनुते नार्तिमार्छति ॥ हिरण्यपात्रं मधोः[5] पूर्णं ब्रह्मणे ददाति मधव्यो भवति शतमानं शतायुर्वै पुरुषश्शतवीर्य आयुरेव वीर्यमवरुन्द्धे चित्रं देवानामुदगादनीकमिति चित्रवत्यावेक्षते[6] चित्रमेव भवति मध्यन्दिने ऽश्वमवघ्रापयत्यसौ वा आदित्य इन्द्र एष प्रजापतिः प्राजापत्यो ऽश्वः प्रत्यक्षमेवैनमृध्नोति यो

---

[1] So corr. Ch भस्तेस्तेन [2] So corr. Ch मेतस्सिंचनवदि° [3] So corr. Ch जन्तं ते [4] So corr. Ch वेदि [5] So corr. Ch हिरण्यपात्रमपोः पूर्णं; Kap. S. 35, 2 हिरण्यपात्रं मधो पूर्वं [6] So corr. Ch चित्रवृत्या°

ऽग्नेराग्निं वेदाप्नोति[1] तं कामं यस्मै कामायाग्निश्चीयते प्रयास्यन्नग्निं चितमुपतिष्ठेत दीक्षया[2] त्वापं तपसा त्वापं सुत्यया त्वापमवभृथेन त्वापं वशया त्वापमिति तत्पञ्च संपद्यते पञ्च वा ऋतव ऋतवस्संवत्सरस्संवत्सरो ऽग्निर्वैश्वानर आप्नोति तं कामं यस्मै कामायाग्निश्चीयते ॥ एकेष्टकेत्याहुर्ब्रह्मवादिनो वागेवैकेष्टकेति ब्राह्मण एवैकेष्टकेतीम[3] एव लोका एतद्ध स्म वा आहुश्शर्कराख्यास्तिस्र एव वयमिष्टका अग्निं चित्यं विद्मेमानेव लोकानिति ससत्यो ऽग्निश्चेतव्यो भूरिति प्रथमां वितृणीमभिमृशेद्भुवरिति[4] द्वितीयां स्वरिति तृतीयामेतद्वै वाचस्सत्यं ससत्यमेवाग्निं चिनुते ससत्यमग्निमचेष्टा३मुपसत्या३मित्याहुर्ब्रह्मवादिनस्स ह त्वै ससत्यं चिनुते य एवं चिनुते कस्यै देवताया[5] अग्निश्चीयत इत्याहुर्ब्रह्मवादिनः प्रजापतय एव तस्य किं हविरित्यात्मैव ॥ ८ ॥ cf. Kap. S. 35, 2; TS 5, 5, 7 a. E.

आपो वा इदमासन्त्सलिलमेव स प्रजापतिः पुष्करपर्णे वातो भूतो ऽलेलीयत स प्रतिष्ठां[6] नाविन्दत स एतमपां कुलायमपश्यत्स एतं प्रजापतिरपां मध्ये ऽग्निमचिनुत सेयमभवत्ततः[7] प्रत्यतिष्ठदियं वावाग्निस्तस्माद्यदस्यां खनन्त्यभीष्टकां तृन्दन्त्यभि[8] शर्करां यां पुरस्तादुपादधात्तच्छिरो[9] ऽभवत्सा प्राची दिग्यां दक्षिणत उपादधात्स[10] दक्षिणः पक्षो ऽभवत्सा दक्षिणा दिग्यां पश्चादुपादधात्तत्पुच्छमभवत्सा[11] प्रतीची दिग्यामुत्तरादुपादधात्स उत्तरः पक्षो ऽभवत्सोदीची

---

[1] So corr. Ch योग्निराप्निं वै ऋध्नोति Kap. S. 35, 2 यो ध्मेराप्निं वेदाप्नोति [2] So corr. Ch दोन्नाया [3] So corr. mit Caland; Ch ॥ केष्टकेत्या° वागेव केष्टकेति ब्राह्मण एव केष्टके° [4] So corr. Ch वितृणी°; Kap. S. 35, 2 चितणीसुपदध्याद्°; cf. oben 22, 7. [5] So corr. Ch देवतया [6] So corr. Ch लेलीयतमप्रतिष्ठान्ना°; Kap. S. 35, 3 लेलीयत स प्रतिष्ठान्ना°; cf. TS 5, 6, 4, 2. 3. [7] So corr. Ch सेयमाभव°; cf. unten; Kap. S. 35, 3 = Corr. [8] So corr. Ch तृदत्य°; erste Hand तृर्दत्य°; cf. TS 5, 6, 4, 4. [9] So corr. Ch दुपदधात्त°; so auch Kap. S. 35, 3; aber cf. unten und TS 5, 6, 4, 3. [10] So corr. Ch उपदधात; so auch Kap. S. 35, 3; aber cf. unten und TS 5, 6, 4, 3. [11] So corr. Ch दुपदधा; so auch Kap. S. 35, 3; aber cf. unten und TS 5, 6, 4, 3.

दिग्यां मध्य उपादधात्तत्पृष्ठमभवत्सोर्ध्वा दिगियं वावाग्निः पञ्चेष्टको
य एवं वेद प्रजायते गच्छति प्रतिष्ठामाग्नेयो वै ब्राह्मणस्तस्माद्ब्रा-
ह्मणाय सर्वासु दिक्ष्वर्धुकं[1] स्वां ह्येव दिशमन्वेति सर्वा ह वा इयं
वयोभ्यो नक्तं दृशे दीप्यते तस्मादिमां वयांसि नक्तं नाध्यासते ऽपां
5 वा एष कुलायस्तस्मादेतमापः प्रहारुका अपां ह्येष कुलायः ॥ ९ ॥
cf. Kap. S. 35, 3; TS 5, 6, 4.

यदि मन्येत पूर्वो मातिक्रान्तो भ्रातृव्य इति बहिष्पवमानस्य पु-
रस्तादष्टौ लोकंपृणयोपदध्यान्माध्यन्दिनस्य[2] पवमानस्य पुरस्तादेका-
दशार्भवस्य[3] पवमानस्य पुरस्ताद्द्वादशायं वाव यः पवते स पवमानो
वायुरग्नेस्तेजो य एवैनं पूर्वो ऽतिक्रान्तो भ्रातृव्यस्तं तेजसा प्रणुदते
10 यदि मन्येत पश्चान्मे भ्रातृव्य इति पश्चादेतेषां पवमानानामुपदध्या-
दयं वाव यः पवते स पवमानो वायुरग्नेस्तेजो य एवास्य पश्चाद्भ्रा-
तृव्यस्तं तेजसापनुदते[4] प्र श्रेयांसं भ्रातृव्यं नुदते प्रति पापीयांसं नु-
दते ॥ स एष सवनचित्प्रजापतिर्वा उख्यमग्निमबिभस्तस्य शिरः प्रा-
वर्तत तेन देवा अश्राम्यंस्तस्यैतच्छिरः प्रत्यदधुर्यदुखा तत्संवत्सरमरो-
15 हदग्निः[5] प्रजापतिर्यत्संवत्सरमुख्यं[6] बिभर्ति प्रजापतेरेव शिरः प्रतिद-
धाति तस्मात्संवत्सरमुख्यो[7] भर्तव्यो यदर्वाक्संवत्सरादरुश्चिदेव[8] सः ॥
येन देवा ज्योतिषोर्ध्वा उदायन्येनादित्या वसवो येन रुद्राः ।
येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानस्स्वस्ति ॥
इति घृतेनाक्ता समिधमादधाति समिद्भिरेवैषाथो[9] यजमानायैवै-
20 तत्स्वस्त्ययनं क्रियते ॥

---

[1] So corr. nach Anleitung von TS 5, 6, 4, 5; Ch दिक्षु वुकं; die Correctur steht um so sicherer fest, als in Ch ja oftmals व für र्ध geschrieben ist, durch Mißverständniß des resp. Zeichens der Çâradâ-Schrift. Kap. S. 35, 3 सर्वासु दिक्षु हृकस्त्वां ह्येव etc. [2] So corr. Ch लोकस्पृण° [3] So corr. Ch शान्भवस्य [4] So corr. Ch तेजसामपनुदते; Kap. S. 35, 4 = Corr. [5] So corr. Ch संव्वरमरो° [6] So corr. Ch संव्वरमु° [7] So corr. Ch संव्वरमु° [8] So corr. Ch यदर्वाक्सर्वाक्संवत्सरादरुश्चिदेव oder दहश्चिदेव; Kap. S. 35, 4 deutlich संवत्सरादरुश्चिदेव; vielleicht अरु = Sonne. [9] So corr. Ch समिद्धिरेवैपाथो

ये ऽग्नयः पुरीषिण आविष्टाः पृथिवीमनु ।
तेषामसि त्वमुत्तमः प्र नो जीवातवे सुव ॥

इति स्वमग्निं चितमुपतिष्ठेत सर्वमायुरेत्युप त्वाग्ने दिवे दिव इ-
त्येतेन चित्यृचेनान्येषामाशीरेव सा ॥ १० ॥ cf. Kap. S. 35, 4.

यर्हि धिष्ण्या उपधीयन्ते तर्हि बार्हस्पत्याभिस्तिसृभिस्तिस्रो दक्षि-
णत उपदधात्यथ यामीभिस्तिसृभिस्तिस्रः पूर्वा अथ रौद्रीभिस्तिसृ-
भिस्तिस्र उत्तराद्दक्षिणतः पशुश्रपणस्याथ वारुणीभिस्तिसृभिस्तिस्रो
ऽवभृथे दक्षिणतो वै देवानां यज्ञं रक्षांस्यजिघांसंस्तानि ब्रह्मणापाघ्नत
ब्रह्म बृहस्पतिर्यद्बार्हस्पत्या दक्षिणत उपधीयन्ते रक्षसामपहत्या[1] अथ
यामीरेताभिर्वा असिताय देवलायेमे लोका अर्वाञ्चश्च पराञ्चश्च
प्राभुर्यस्यैता उपधीयन्ते समस्मा इमे लोका अर्वाञ्चश्च पराञ्चश्च भा-
न्त्यथ रौद्रीरेष वै रुद्रः पशुश्रपण एवेश्वरो वा एष एतमतो ऽनूत्थाय[2]
हन्तोर्यद्रौद्रीरुपदधाति तेनैव रुद्रं शमयत्यथ वारुणीरापो वै वरुण
ईश्वरो वा एष एतमवभृथादनूदेत्य वरुणो ग्रहीतोर्यद्वारुणीरुपद-
धाति[3] निर्वरुणत्वाय ॥ ११ ॥ cf. Kap. S. 35, 5.

यद्युख्ये भ्रियमाणे[4] ऽयं देवः[5] प्रजा अभिमन्येत या आग्नेयीर्भिष-
ग्वतीस्ताभिस्तिसृभिस्तिस्रस्समिध आदध्यादेष[6] वावैतत्प्रजा अभिम-
न्यते यद्भिषग्वतीभिरादधाति भेषजमेव करोति शान्तिरेव सा यद्युख्ये
भ्रियमाणे कामयेत वर्षेदिति यास्सौरी रश्मिवतीस्ताभिस्तिसृभिस्ति-
स्रस्समिध आदध्यादेष वावैतत्प्रजाऽभ्युचार्पयति यर्हि पर्जन्यो न वर्ष-
ति यद्रश्मिवतीभिरादधाति वृष्टिमेव निनयति ताजक्प्रवर्षति ॥[7]

[1] Ch हत्या ॥ [2] So corr. Ch नूप्त्याय; Kap. S. 35, 5 एतमतो न्नत्याय [3] So corr. mit Cal. Ch वरुणोग्रहीतो [4] So corr. Ch hier und im Folgenden भ्रियमाने [5] So corr. Ch यन्देवाः; Kap. S. 35, 6 यं देव [6] So corr. Ch अदध्या° [7] Hier steht in Ch noch der Satz यद्युख्ये भ्रियमाने कामयेत वर्षेदिति यास्सौरी रश्मिवतीस्ताभिस्तिसृभि-स्तिस्रस्समिध आदध्यात ॥ Ich habe denselben als irrthümliche Wiederholung gestrichen und habe dazu wohl um so eher ein Recht gehabt, als dies Capitel in Ch überhaupt in Confusion gerathen ist. Es stand an dieser Stelle in Ch noch bedeutend

यद्युख्ये भ्रियमाणे कामयेत न वर्षेदिति यास्सौरीर्भ्राजस्वतीस्ताभि-
स्तिसृभिस्तिस्रस्समिध आदध्याद्भ्राज एव करोति न तां समां वर्षति
यद्युख्ये भ्रियमाणे नश्येदेताभिश्चतसृभिरुपतिष्ठेताग्ने ऽभ्यावर्तिन्नग्ने
अङ्गिरः पुनरूर्जा सह रय्येति विन्दत्येव ॥ १२ ॥ cf. Kap. S. 35, 6.

5 प्राचीनवंशं[1] कुर्वन्ति प्राची वै देवानां दिग्देवलोकमेवोपावर्तते
पुर आदित्यो ऽसा अमुमेवादित्यमुपोत्क्रामति परिश्रिते याजयन्ति
देवलोकमेव परिगृह्य[2] तस्मिन्नेनं दीक्षयन्त्येति वा एषो ऽस्माल्लोका-
द्यो ऽमुं लोकं गच्छत्यन्तर्हित[3] इव वा इतो ऽसौ लोकस्स्रक्तिष्वतीरो-
कान्कुर्यात्तेनास्माल्लोकान्नैत्याग्नावैष्णवमेकादशकपालं[4] निर्वपत्यग्निर्वै
10 सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चालभ्य दीक्षामुपैति पवित्रं
वा अग्निर्यज्ञो[5] विष्णुः पवित्रपूत[6] एव यज्ञमालभते यदष्टाकपाल-
स्तेनाग्नेयो यत्त्रिकपालस्तेन वैष्णवस्तेनोभयस्मान्नैत्याग्नावैष्णवमेकाद-
शकपालं निर्वपत्यग्निर्वै[7] देवानामवमो विष्णुः परमो[8] यथा तेजन्या
अन्तौ संगृह्णात्येवमेवैतदुभयतस्संगृह्य मध्यतो[9] देवता आवपते पुरो-
15 डाशस्स्याद्ब्रह्मवर्चसकामस्य शिरो वा एतद्यज्ञस्य यत्पुरोडाशो ब्रह्म-
वर्चसं पुरोडाशो ब्रह्मवर्चसी भवति चरुर्घृते स्यात्प्रजाकामस्य वा
पशुकामस्य वा मिथुनं वा एतद्यद्घृतं च तण्डुलाश्च धेन्वा घृतं पयो
ऽनडुहस्तण्डुला मिथुनमेव यज्ञमुखे दधाति प्रजननाय यतो वा एत-

---

mehr, was aber später getilgt ist, — nämlich das Folgende: यद्युख्ये भ्रियमाणे कामयेत न वर्षेदिति यास्सौरीर्भ्राजस्वतीस्ताभिस्तिसृभिस्तिस्रस्समिध आदध्याद्भ्राज एव करोति न तां समां वर्षति यद्युख्ये भ्रियमाने नश्येदेताभिश्चतसृभिरुपतिष्ठेत्वाग्ने भ्यावर्तिन्नग्ने अं देष वावैतत्प्रजा अभिमन्येत यद्विषण्वतीभिरादधाति भेषजमेव करोति शांतिरेव सा यत्युख्ये भ्रियमाणे कामयेत वर्षेदिति यास्सौरी रश्मिवतीस्ताभिस्तिसृभिस्तिस्रस्समिध आदध्यादेष वावैतत्प्रजाषेम्युचार्पयति यर्हि पर्जन्यो न वर्षति यद्रश्मिवतीभिरादधाति वृष्टिमेव निनयति ताजक्प्रवर्षति ॥

[1] Dies Capitel collationirt mit und accentuirt nach T1. [2] Ch गृह्य [3] T1 न्तर्हिता [4] Ch ष्वतीरोकान्; T1 ष्वतीलोकान् [5] Ch यज्ञे [6] T1 पवित्रपूतं; Accent corrigirt. [7] In Ch Lücke; es fehlt dort त्याग्नावैष्णवमेकादशकपालं निर्वप; in T1 dies vorhanden. [8] So T1; Ch परमं [9] So T1; Ch मध्यमो

रूपं यच्चरुरेजतेव[1] ह्येति दीक्षितो ऽमुं लोकममुं ह्येष लोकमभिदीक्षते[2] यच्चरुर्भवति समृद्ध्या आङ्क्ते ऽभ्यङ्क्ते ऽश्नाति वासः परिधत्त[3] एता वै पुरुषस्य तन्वस्सर्वतनूरेव[4] भूत्वा दीक्षामुपैति च्छिद्रो वै पुरुषो ऽन्तरादमेध्यो यदश्नाति मेध्यत्वायैवाच्छिद्रत्वायैवमिव वा अमुष्मिंल्लोके यथा दीक्षमाणो यथा मन्येतेत्थं मे नोपतप्स्यतीति[5] तथा व्रतयेदथो यतः कनीयो दीक्षितस्सन्व्रतयिष्यन्स्यात्तथा प्राश्नीयात्केशश्मश्रु[6] वपते नखान्निकृन्तते दतो धावते ऽमृतं वा एतत्पुरुषस्यामेध्यममेध्यमेवापहत्य मेधमुपैति स्नात्यङ्गिरसो वा अप्सु दीक्षां निधाय स्वर्गं लोकमायन्यत्स्नाति तामेव दीक्षामालभते ग्रीवादघ्ने स्नेयं[7] ग्रीवादघ्ने हि ते तां निधायायन्यावत्येव[8] कियति चाङ्गिश्वेत्स्नाति तेनैव तां दीक्षामालभते न वहन्तीभिस्स्नायाद्यद्वहन्तीभिस्स्नायात्क्षत्रं यश ऋच्छेन्न कूप्याभिस्स्नायाद्यत्कूप्याभिस्स्नायाद्विशं यश ऋच्छेत्स्थावराभिस्स्नेयमेता वा अपां दीक्षिताः[9] पशुमतीर्यास्स्थावरा लोमशास्संतता लोमशाः पशवो यजमानमेव यशसार्पयति तीर्थे स्नेयं तीर्थमेव समानानां भवति ॥ १३ ॥

cf. Kap. S. 35. 6 a. E. (Fragm.); Mâitr. S. 3, 6. 1; Tâitt. S. 6. 1. 1. 2 (stückw.).

समिद्दिशामाशया नस्स्वर्विन्मधुरतो[10] माधवः पात्वस्मान् ।
अग्निर्देवो दुष्टरीतुरदब्ध इदं ब्रह्म जिन्वतु पात्वस्मान् ॥
रथंतरं सामभिः पात्वस्मान्गायत्री छन्दसां विश्वरूपा ।
त्रिवृद्विष्टया स्तोमो अह्नां समुद्रो वात इदमोजः पिपर्तु ॥
उग्रा दिशामभिभूतिर्वयोधाश्शुचिश्शुक्रो अहन्योजस्ये ।
इन्द्राधिपत्यैः पिपृतादतो नो महि क्षत्रं विश्वतो धारयेदम् ॥

---

[1] So Ch; ohne Accent; T 1 रेजतीव [2] So corr. Ch दीचिते; T 1 wohl auch दीचिते [3] So T 1; Ch परिधत्ते [4] So T 1; Ch तन्वास्स° [5] So T 1; Ch नोपतत्स्यतीति [6] T 1 श्मश्रं [7] So T 1; Ch श्रेयं [8] So corr. Ch धायायान्यान°; T 1 धायंन्यांव [9] Ch दीचितः [10] Ch माशय नस्सुर्विन्मधुरतो; cf. Mâitr. S. 3, 16, 4 und TS 4, 4, 12 a. A.

बृहत्साम क्षत्रभृद्वृद्धवृष्ण्यं त्रिष्टुभौजश्शुभितमुग्रवीरम्[1] ।
इन्द्र स्तोमेन पञ्चदशेनौज इदं वातेन सगरेण रक्ष ॥
प्राची दिशां सहाशया[2] नो विश्वे देवाः प्रावृषाह्नां स्वर्वित् ।
इदं क्षत्रं दुष्टरमस्त्वोजो ऽनाधृष्टं सहस्रियं सहस्वत् ॥
5 वैरूपेण साम्ना तच्छकेयं जगत्यैनं विक्ष्वावेशयामि ।
विश्वे देवास्सप्तदशेन मध्यमिदं क्षत्रं सलिलं वातमुग्रम् ॥
यन्त्री दिशां क्षत्रमिदं दाधारोपस्थाशा मित्रवतीदमोजः ।
मित्रावरुणा शरदाह्नां जिगत्नू अदब्धक्षत्रमिदमस्त्वोजः ॥
वैराजे सामन्नधि मे मनीषानुष्टुभा संभृतं दुष्टरं सहः[3] ।
10 इदं क्षत्रं मित्रवदार्द्रदान्वोजो[4] मित्रावरुणा रक्षतमाधिपत्यैः ॥
सम्राड् दिशां सहसाम्नी सहस्वत्यृतुर्हेमन्तो विष्टया पिपर्तु नः ।
अवस्युवाता बृहती न शक्करीमं यज्ञमवतु[5] या घृताची ॥
स्वर्वती सुदुघा या पयस्वतीमं[6] यज्ञमवतु[7] या घृताची ।
त्वं नो गोपा अवितोत यन्ता बृहस्पते याम्यां[8] युङ्ग्ध[9] वाचम् ॥
15 ऊर्ध्वा दिशां रन्तिराशौषधीनां संवत्सरेण सविता नो अह्नाम् ।
रेवत्सामातिच्छन्दा उ च्छन्दो ऽजातशत्रुस्सुहवो न एधि ॥
स्तोम त्रयस्त्रिंशे भुवनस्य पत्नि विवस्वद्वाते अभि नो गृणीहि ।
घृतवती सवितुराधिपत्ये पयस्वती रन्तिराशा नो अस्तु ॥
हिरण्यगर्भो यः प्राणतः ॥
20 विराड् दिशां विष्णुपत्न्यघोरास्येशाना सहसो या मनोता ।
विश्वव्यचा इषयन्ती सुभूता शिवा नो अस्त्वदितिरुपस्थे ॥

---

[1] So corr. Ch त्रिष्टुभो° [2] So Ch; in Mâitr. S. 3, 16, 4 und TS 4, 4, 12, 2 सहयशा [3] Ch महः; doch deutet das vorausgehende ँ darauf hin, daß म für स verschrieben ist. [4] So corr. Ch दान्वौजा [5] So corr. Ch मवर्त [6] So corr. Ch पवस्वतौ [7] So corr. Ch मवर्त [8] So corr. Ch याम्या; MS 3, 16, 4 und TS 4, 4, 12, 4 = Corr. [9] So corr. Ch etwa युट्टि; cf. Mâitr. S. 3, 16, 4.

विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना सहसो विष्णुपत्नी ।
बृहस्पतिर्मातरिश्वोत वायुस्संध्वाना वाता अभि नो गृणन्तु ॥
वैश्वानरो न ऊतये पृष्टो दिव्यन्विदनुमते त्वं यत्ते नाम ॥ १४ ॥
cf. Mâitr. S. 3, 16. 4; TS 4, 4, 12.

अग्नेर्मन्वे प्रथमस्य प्रचेतसो यं पाञ्चजन्यं बहवस्समिन्धते ।
विश्वस्यां विशि प्रविविशानमीमहे स नो मुञ्चत्वंहसः ॥ 5
यस्येदं प्राणन्निमिषद्यदेजति यस्य जातं जनमानं च केवलम् ।
स्तौम्यग्निं नाथितो जोहवीमि स नो मुञ्चत्वंहसः ॥
इन्द्रस्य मन्वे प्रथमस्य प्रचेतसो वृत्रघ्नस्स्तोमा[1] उप मामिहागुः ।
यो[2] दाशुषस्सुकृतो हवमुप गन्ता स नो मुञ्चत्वंहसः ॥
यस्संग्रामं जयति सं[3] वशी युधा यः पुष्टानि संसृजति त्रयाणि । 10
स्तौमीन्द्रं नाथितो जोहवीमि स नो मुञ्चत्वंहसः ॥
वायोस्सवितुर्विदथानि मन्महे या आत्मन्वद्बिभृथो यौ च रक्षथः ।
यौ विश्वस्याधिपा बभूवथुस्तौ नो मुञ्चतमागसः ॥
उप श्रेष्ठा न आशिषो देवयोर्धर्मे अस्थिरन् ।
स्तौमि वायुं सवितारं नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥ 15
मन्वे वां मित्रावरुणा तस्य वित्तं सत्यौजसा दृहणा यं नुदेथे[4] ।
या राजाना सरथं याथ उग्रा तौ नो मुञ्चतमागसः ॥
यो वां[5] रथ ऋजुरश्मिस्सत्यधर्मा मिथूचरन्तमुपयाति दूषयन् ।
स्तौमि मित्रावरुणा नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥
रथीतमौ रथीनां हुव ऊतये शुभं गमिष्ठा सुयमेभिराशुभिः । 20
ययोर्वां[6] देवौ देवेष्वनिषितमोजस्तौ[7] नो मुञ्चतमागसः ॥

---

[1] So corr. Ch सोम; cf. Mâitr. S. 3, 16, 5; TS 4, 7, 15, 1; auch AV 4, 24, 1. [2] So corr. Ch ये [3] So corr. Ch मं [4] So corr. Ch नुदेथ; cf. TS 4, 7, 15, 2; MS 3, 16, 5 (p. 190, Z. 14). [5] Ch वाँ [6] So corr. Ch ययो वान् [7] So corr. Ch मौज°

यद्यातं वहतुं सूर्यायास्त्रिचक्रेण संसदमिच्छमानौ ।
स्तौमि देवा अश्विना नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥
मरुतां मन्वे अधि नो ब्रुवन्तु प्रेमां[1] वाचं[2] विश्वामवन्तु विश्वे ।
आशून्हुवे सुयमानूतये[3] ते नो मुञ्चन्त्वेनसः ॥
5 तिग्ममायुधमीडितं सहस्वद्दिव्यं शर्धः पृतनासु जिष्णु ।
स्तौमि देवान्मरुतो नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः ॥
विश्वेषां देवानां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे ।
आशून्हुवे सुयमानूतये[4] ते नो मुञ्चन्त्वेनसः ॥
यदिदमभिदासति पौरुषेयाद्दैव्यादेवेष्टिरस्तु द्विपदश्चतुष्पदः ।
10 स्तौमि विश्वान्देवान्नाथितो जोहवीमि ते नो मुञ्चन्त्वेनसः ॥
अन्विदनुमते त्वं यत्ते नाम वैश्वानरो न ऊतये पृष्टो दिवि ॥
ये अप्रथेताममितेभिरोजोभिर्ये प्रतिष्ठे अभवतां वसूनाम्[5] ।
ते नो मुञ्चतमंहसः ॥
उर्वी रोदसी वरिवः कृणुतं क्षेत्रस्य पत्नी अधिवोचतं नः ।
15 स्तौमि द्यावापृथिवी नाथितो जोहवीमि ते नो मुञ्चतमंहसः ॥ १५ ॥
cf. Mâitr. S. 3, 16, 5; TS 4, 7, 15.

इति श्रीमद्यजुषि काठके चरकशाखायामिठिमिकायां स्वर्गं नाम द्वाविंशं स्थानकं संपूर्णम् ॥[6]

---

[1] So corr. Ch प्रमां [2] Ch वाचैं [3] Hier ist in der Hdschr. Ch von der ersten Hand noch ein च geschrieben, welches aber später mit gelber Farbe getilgt ist. [4] Hier in Ch noch ein च, welches ich getilgt habe; cf. oben und Mâitr. S. 3, 16, 5; TS 4, 7, 15, 4. 5. [5] So corr. Ch प्रतिष्ठा भवत व्यंसूनाम; cf. Mâitr. S. 3, 16, 5; TS 4, 7, 15, 6. [6] So die Unterschrift dieses Capitels in Ch.

हविर्वै[1] दीक्षितो न हविरनभिघृतं मेधमश्नुते यदभ्यनक्त्यभ्यैवैनं[2] घारयति मेध्यत्वाय घृतं देवानां निष्पक्वं मनुष्याणामायुतं गन्धर्वाणां स्वयंविलीनमादित्यस्य नैतद्देवत्रा न मनुष्यत्रा[3] यन्नवनीतं नैष देवत्रा न मनुष्यत्रा यो दीक्षितः प्रच्युतो ऽस्माल्लोकादप्राप्तो ऽमुं यन्नवनीतेनाभ्यङ्क्ते समृद्ध्यै वासः परिधत्ते ऽग्नेस्तूषः[4] पितॄणां नीविरोषधीनां प्रघातो वायोर्वातपा[5] विश्वेषां देवानामोतवश्च[6] तन्तवश्च नक्षत्राणामतीरोकास्सर्वदेवत्यं वासस्सर्वदेवत्यो दीक्षितस्सर्वाभिरेवैनं देवताभिस्समर्धयत्याङ्क्त इन्द्रो वै वृत्रं जघ्निवांसं रक्षांस्यसचन्त तान्यञ्जनगिरिणान्तरधत्त[7] रक्षांस्येतं सचन्ते यो दीक्षते भवति हि यदाङ्क्ते रक्षसामन्तर्हित्या इन्द्रो वै वृत्रमहंस्तस्य चक्षुः परापतत्त्रिककुभं[8] प्राविशद्यदाङ्क्ते तस्यैव चक्षुषो[9] ऽवरुद्ध्यै द्विर्दक्षिणमाङ्क्ते सकृत्सव्यं त्रिवृद्वै यज्ञो मुखत एव यज्ञमालभते त्रिर्दक्षिणमाङ्क्ते द्विस्सव्यं पाङ्क्तो यज्ञो यज्ञमेवावरुन्द्धे दक्षिणं पूर्वमाङ्क्ते[10] सव्यं हि पूर्वं मनुष्या आञ्जते व्यावृत्त्यै यजुषाङ्क्ते ऽयजुषा हि मनुष्या आञ्जते व्यावृत्त्यै पराचीनमानक्ति न निधावत्याचपराचं[11] हि मनुष्या आञ्जते व्यावृत्त्या इषीकयाङ्क्ते[12] शलल्या हि मनुष्या आञ्जते व्यावृत्त्यै[13] ॥ संतूला भवति मैत्री वै संतूला वारुणी[14] परिशीर्णा मैत्रो दीक्षितस्समृद्ध्या ऊनमिव वा एतच्छिद्रमिव यच्चक्षुर्यदाङ्क्ते[15] तदेवापूरयत्यच्छिद्रत्वाय पावयतीन्द्रो वै वृत्रमहंस्तमप्स्वृवाध्यहंस्तासां या यज्ञिया मेध्या आसंस्ता उदक्रामंस्ता ओषधयो ऽभवन्यत्तेजस्ते दर्भास्तस्मात्ते पवित्रं तस्माद्दर्भैरपः पुनन्ति यद्दर्भपिञ्जूलैः पावयत्यपामेवैनमोषधीनां तेजसा पावयति द्वा-

[1] Dies Capitel collationirt mit und accentuirt nach T1. [2] Ch भ्युनक्त्युभ्यवैनं [3] in T1 fehlt न मनुष्यत्रा; Accent ergänzt. [4] T1 ग्नेस्तुषः [5] So corr. Ch प्रघातोर्वायोर्वातपा; T1 प्रघातौ वायुर्वातपा; zu वातपा cf. TS 6, 1, 1, 3 वातपानम [6] So T1; Ch देवानामानवश्च; cf. TS 6, 1, 1, 4. [7] So T1; Ch तान्यांजनगि° [8] So T1; Ch परापतत्त्रिककुभं [9] T1 चंक्षुषां [10] So T1; Ch दक्षिणमाङ्क्ते (fehlt also पूर्वं). [11] So T1; Ch त्याचपराच; cf. gaṇa मयूरव्यंसकादि zu Pâ. 2, 1, 72. [12] Ch यंक्ते [13] T1 व्यंत्त्यै [14] Ch वरुणी [15] Ch यश्चक्षयं°

भ्यां पावयति द्वे सत्यं चानृतं च सत्येनैवास्यानृतं पावयति द्वौ प्रा-
णश्चापानश्च त्रिभिः पावयति त्रिषत्या हि देवा अथो त्रयो हि प्रा-
णाः[1] प्राणो व्यानो ऽपानस्तानेव यजमाने दधाति पञ्चभिः पावयति
पाङ्क्तः पुरुषो यावानेवास्यात्मा तं पावयति सप्तभिः पावयति सप्त
5 वै छन्दांसि छन्दोभिरेवैनं पावयति नवभिः पावयति नव प्राणाः
प्राणैरेवैनं पावयत्येकविंशत्या पावयत्येकविंशो वै पुरुषो[2] दश हस्त्या
अङ्गुलयो दश पद्या आत्मैकविंशो यावानेवास्यात्मा[3] तं पावयति
चित्पतिस्त्वा पुनात्विति ब्रह्म वै चित्पतिर्ब्रह्मणैवैनं पावयति वाक्प-
तिस्त्वा पुनात्विति स हि पावयिता देवस्त्वा सविता पुनात्विति स-
10 वितृप्रसूत एवैनं देवताभिः पावयत्यच्छिद्रेण पवित्रेणेत्यच्छम्बट्कार-
मेवैनं[4] पावयति सूर्यस्य रश्मिभिरित्यादित्यस्यैवैनं तन्वा पावयति
तस्य ते पवित्रपते पवित्रेणेति यज्ञो वै पवित्रपतिर्यज्ञायैवैतत्पुनीते
यस्मै कं पुने तच्छकेयमिति[5] यज्ञं शकेयमित्येवैतदाहान्वञ्चं[6] पावय-
त्यन्वङ् पुरुषं प्राणो यदा वै प्राणस्तिर्यङ् भवत्यथ प्रमीयते यत्तिर्यञ्चं
15 पावयेत्तिर्यञ्चमस्य प्राणं कुर्यात्प्रमीयेतान्वात्ममेवास्य प्राणं करोति
बहिष्पावयति मनुष्यलोक एवैनं पावयित्वा पूतं देवलोकं प्रणय-
ति ॥ १ ॥ cf. Kap. S. 35, 7; Mâitr. S. 3, 6, 2. 3; TS 6, 1, 1.

गर्भो[7] दीक्षितो योनिर्दीक्षितविमितमुल्बं दीक्षितवसनं[8] जरायु
कृष्णाजिनमेतस्माद्वै योनेरिन्द्रो ऽजायत कुलायमेवैतदासीवनं कृ-
20 त्वोपचरति तस्माद्दीक्षितं नान्यत्र[9] दीक्षितविमितात्सूर्यो ऽभिनिम्रो-
चेन्नान्यत्राभ्युदियात्स्वादेव योनेः प्रजायत आकूत्यै प्रयुजे ऽग्नये स्वा-
हेत्याकूय वै यज्ञः प्रयुज्यते यत्रैव यज्ञमाकुर्वते[10] तदेनमालभते मेधायै

---

[1] Ch प्राणः [2] Dies Wort in T 1 ohne Accent; von mir ergänzt. [3] या-वाने° in T 1 ohne Accent; von mir ergänzt. [4] So T 1; in Ch पवित्रेनैत्य° [5] So T 1; in Ch तच्छक्नोयमिति [6] So corr. Ch मित्यवैत; T 1? [7] Dies Capitel collationirt mit und accentuirt nach T 1. [8] Ch वमनं [9] So corr. Ch तत्रा-न्यत्रन्दी°; T 1 नान्यंतप दी° oder नान्यं उपदी° [10] So T 1, oder कुयंते; Ch कुवते oder कूवते, vielleicht die erste Hand कुर्वते; Kap. S. 35, 8 यज्ञमाकुर्वते

पूर्णास्य[1] कुरुते[2] यमेव कामं कामयते तमवरुन्द्धे ॥ स्वे छन्दसि यज्ञः
प्रतिष्ठाप्यो[3] ऽनुष्टुब्वै प्रजापतेस्स्वं[4] छन्दो यज्ञः प्रजापतिर्यदनुष्टुभौद्ग्र-
भणं जुहोति स्व एव छन्दसि यज्ञं प्रतिष्ठापयति छन्दःप्रतिष्ठानो वै
यज्ञस्स यथाछन्दसं छन्दस्सु प्रतिष्ठाप्यस्सैषानुष्टुप्सप्तस्यास्सप्ताक्षरमेकं प-
5 दमष्टाक्षराणि त्रीणि तेषां सप्तानां यानि त्रीणि तान्यष्टा उपयन्ति
तान्येकादश सा त्रिष्टुब्यानि चत्वारि तान्यष्टा उपयन्ति तानि द्वादश
सा जगती यान्यष्टौ सा गायत्र्यविभक्तानुष्टुप्स्वाहाकारेण[5] पङ्क्तिरेता-
वन्ति वै छन्दांसि यज्ञमेव यथाछन्दसं छन्दस्सु प्रतिष्ठापयति ॥ यज्ञ-
स्सृष्टो[6] देवताभिरालभ्यो विश्वो देवस्य नेतुरिति यन्नेतृमती तेन सा-
10 वित्री मर्त इति पितृदेवत्या विश्व इति वैश्वदेवी द्युम्नमिति[7] बार्ह-
स्पत्या[8] पुष्यत्विति पौष्णी सारस्वतस्स्वाहाकार एतावतीर्वै देवता
यज्ञमेव सृष्टं देवताभिरालभते यज्ञस्सृष्टस्त्रेधा प्राविशदृचं तृतीयेन
साम तृतीयेन यजुस्तृतीयेन तस्य या प्रिया तनूरासीत्तया यजुः प्रा-
विशत्तस्माद्यजुषो नोच्चैः कीर्तयितव्यं[9] यज्ञस्य प्रियां[10] तन्वमुदूर्णोत्य-
15 ब्रह्मवर्चसी भवति नग्नंभावुकः ॥ २ ॥

cf. Kap. S. 35, 8; Mâitr. S. 3, 6, 4. 5; TS 6, 1, 2.

यज्ञो[11] वै देवेभ्यो ऽपाक्रामत्कृष्णो भूत्वा तस्मात्पुनरुपावर्तमाना-
वृक्सामे अपाक्रामतां ते कृष्णं प्राविशतां[12] यज्ञं मन्यमाने शुक्लं साम
कृष्णमृग्यत्कृष्णाजिनेन[13] दीक्षत[14] ऋक्सामे एवालभते ऽहोरात्रे वै
मिथुनं समभवतां तयोरोजो[15] वीर्यमपाक्रामत्तत्कृष्णं प्राविशद्यत्कृ-
20 ष्णाजिनेन दीक्षते ऽहोरात्रयोरेवौजो वीर्यमालभते द्यावापृथिवी वै
मिथुनं समभवतां तयोस्तेजो यज्ञियमपाक्रामत्तत्कृष्णं प्राविशद्यत्कृ-

[1] So die Mss. पूर्णास्य, resp. so ohne Acc.; Kap. S. 35, 8 पूर्णाश्च अरुते [2] T1 कुरुते [3] Ch प्रतिष्ठाप्य नु° [4] T1 प्रजापति°; Ch स्व [5] Ch गायत्र्याविभक्ता [6] Ch सृष्टे [7] So Ch, ohne Acc.; T1 द्युम्नमेति [8] Ch स्पत्य [9] Ch कीर्तयितव्य; T1 कीर्तितव्यं [10] So corr. Ch प्रियास्तन्वमु°; T1 प्रियां तन्वमु° [11] Dies Capitel collationirt mit und accentuirt nach T1. [12] So corr. T1 प्राविशतां [13] Ch कृष्णां ऋग्य° [14] So T1; Ch दीक्षित [15] Ch तरयोरोजो

ष्णाजिनेन दीक्षते द्यावापृथिव्योरेव[1] तेजो यज्ञियमालभत ऋक्सा-
मयोश्शिल्पे[2] स्थ इत्यृक्सामे एवालभते यथा नावौ[3] तरिष्यंस्ते एनं
संपारयत ओंहचश्शर्मासि[4] शर्म मे यच्छेति देवताश्च वा एष यज्ञं[5]
चाभ्यारोहति यत्कृष्णाजिनमारोहति यदा वै श्रेयान्कामयते ऽथ पा-
पीयांसं प्रतिनुदते देवताभ्यश्चैव यज्ञाय च नमस्करोत्यप्रतिनोदाया- 5
भुमवन्ति वा अन्यानि छन्दांस्यासन्ननाभुमवन्त्यन्यानि[6] तान्याजि-
मयुर्यान्याभुमवन्त्यासंस्तानि प्रधक्ष्यामह इति भीषा कृष्णं प्राविशं-
स्तानीमानि यज्ञं वहन्ति यान्यनाभुमवन्त्यासंस्तानिमान्वक्ष्यामह[7]
इति भीषा कृष्णं प्राविशंस्तानीमानि छन्दांसि यान्ययज्ञवाहानि[8]
तानि स्वाराज्यमगच्छन्स्वाराज्यं गच्छति य एवं वेद यत्कृष्णाजिनेन 10
दीक्षत आभुमवन्ति[9] चैवानाभुमवन्ति चोभयानि छन्दांस्यवरुन्द्धे ॥
होत्रा वै देवेभ्यो ऽपाक्रामंस्तद्वषट्कारो[10] ऽप्यचरत्कृष्णो[11] भूत्वास्कन्नं वै
वषट्काराद्धविस्तस्मात्कृष्णाजिने हविष्पिंषन्ति[12] हविर्वै दीक्षितस्त-
स्मात्कृष्णाजिनमध्यास्ते तस्मान्न निष्ठीवति[13] हविषो ऽस्कन्दाय बहि-
ष्टाद्वै पशूनां यज्ञश्च देवताश्चान्तरान्मेदो यद्बहिर्लोमं कृष्णाजिनं कु- 15
र्यादन्तर्हितो यजमानो यज्ञाच्च[14] देवताभ्यश्च स्याद्यदन्तर्लोममन्तर्हितो
यज्ञो देवताभ्यो द्वे समस्येदन्तर्मांसे[15] बहिर्लोम्नी यद्येकं स्यात्पादं प्र-
तिषीव्येदनन्तर्हितो[16] यजमानो यज्ञाच्च[17] देवताभ्यश्च भवत्यनन्तर्हितो
यज्ञो देवताभ्यो विष्णोश्शर्मासि शर्म यजमानस्येति विष्णुर्वै[18] यज्ञो
वैष्णवो यजमानो विष्णुनैव यज्ञेनात्मानमुभयतस्सयुजं कुरुते यज्ञो 20
यदसृज्यत तस्योल्बमन्ववेष्टत[19] तद्दीक्षितवसनमभवद्गर्भो दीक्षितो य-

---

[1] Ch थिव्यरेव [2] T1 शिल्प [3] T1 नवौ [4] So T1; Ch तेद्वच° [5] So T1; Ch यज्ञश्चा° [6] Ch सन्नानाभु° [7] So Ch, ohne Accent; T1 न्त्यासंस्तानि-नान्व° [8] T1 वहानि [9] Ch मवत्ते [10] Ch पाक्रमं° [11] So T1; Ch प्यनचर° [12] So T1; Ch हविष्पिंशहविर्वै etc. [13] So corr. T1 नेष्टीवति; desgl. Ch, ohne Accent. [14] Ch यज्ञाश्च [15] Ch समस्यद° [16] So T1; Ch दन्तर्हितो [17] Ch यज्ञाश्च [18] T1 विष्णोर्वै [19] Ch ल्वम°

दीक्षितवसनं परिधत्ते स्वेनैव योनिनात्मानमोर्णुते तस्मान्महत्कार्यं मेवमिव ह्युल्बेन[1] गर्भ आवृत इव छन्न इव न प्रत्यक्षं वदेद्वाचो ऽयातयामत्वाय ॥ ३ ॥

cf. Kap. S. 35, 9 (Fragment); Mâitr. S. 3, 6, 6. 7; TS 6, 1, 3.

अङ्गिरसो[2] वै स्वर्गं लोकं यन्तस्ते मेखलास्संन्यृकिरंस्ततश्शर[3] उदतिष्ठद्यच्छरमयी मेखला भवति तामेव मेखलामालभते देवा वै यज्ञोर्जं व्यभजन्त ततश्शर उदतिष्ठद्यच्छरमयी मेखला भवति तामेवोर्जमालभत ऊर्ग्वै मेखला मध्यं प्रति परिव्ययत्यूर्जमेव मध्यतो दधाति[4] यजमाने च प्रजासु च तस्मान्मध्यतः प्रजा ऊर्गूर्जयति नाभिं प्रति परिव्ययत्यूर्ध्वं वै पुरुषस्य नाभ्या मेध्यमवाचीनममेध्यं मेध्यस्य चामेध्यस्य च व्यावृत्त्यै त्रिवृद्भवति त्रिवृता वै स्तोमेन प्रजापतिः प्रजा असृजत त्रिवृद्वज्रो वज्रमेव भ्रातृव्याय प्रहरतीन्द्रो वै वृत्राय वज्रं प्राहरत्तस्य यत्प्राशीर्यत स शरो ऽभवत्तच्छरस्य शरत्वं[5] वज्रो वै शरो यच्छरमयी मेखला भवति वज्रमेव भ्रातृव्याय प्रहरति स्तृणुत एनं यं द्विष्यात्तं परिव्ययन्ध्यायेद्वज्रेणैवैनं समर्पयति मेखला पुंसो भवति योक्त्रं स्त्रियास्स्त्री वै मेखला पुमान्योक्त्रं मिथुनमेव यज्ञमुखे विपर्यूहते प्रजननाय वज्रो वै मेखला क्षुदुदारं पाप्मा भ्रातृव्यो यन्मेखलां परिव्ययते[6] वज्रेणैव पाप्मानं भ्रातृव्यमपहते ॥ यज्ञो वै देवेष्वासीद्दक्षिणा पितृषु स यज्ञो दक्षिणामभ्यकामयत तं पितरो ऽब्रुवन्देवेषु नो भागधेयमिच्छेति ते ऽब्रुवंस्तृतीयसवनभागा आसन्निति तस्मात्पितृभ्यस्तृतीयसवनं क्रियते तमह्वयन्तीं[7] हूतो ऽधावत्तस्मात्पुमान्स्त्रिया हूतो धावति तस्माच्छ्रोत्रियस्स्त्रीकामतमस्स हि यज्ञस्य नेदिष्ठी[8] तां[9] सम्भवत्तदिन्द्रो ऽचायत्सो ऽमन्यत[10] यो वा इतो जनि-

[1] Ch ल्वेन  [2] Dies Capitel collationirt mit und accentuirt nach T 1.  [3] Ch सन्य°  [4] T 1 ददाति  [5] Ch शरत्वे  [6] So Ch, ohne Accent; auch Kap. S. 36, 1 परिव्ययते; T 1 व्ययति  [7] So Ch (ohne Accent); T 1 सवने क्रियते तामह्वयन्तीं  [8] Ch नेदिष्ठो; T 1 नेदेष्ठन्; Kap. S. 36, 1 नेदिष्ठो  [9] T 1 तां, also ohne Accent.  [10] So T 1; Ch सो मन्येत

ष्यते स एवेदं[1] भविष्यतीति तं योनिं प्राविशत्तस्मादजायत स पुनः
प्रत्यवैक्षत सो ऽमन्यत यो वा इतो ऽपरो जनिष्यते स मे सपत्नो भ-
विष्यतीति तमनुहाय निर्वेष्ट्याच्छिनत्सा विषाणाभवद्यद्विषाणा भ-
वति यद्वस्यैव रेत इन्द्रस्य योनिं दक्षिणाया योनिमालभते पञ्चावृ-
द्भवति पञ्चभिर्हि स तां निर्वेष्ट्याच्छिनदिन्द्रस्य योनिरसीतीन्द्रस्य[2] 5
ह्येषा योनिः कृष्यै[3] त्वा सुमनस्याया[4] इति तस्मात्कृष्टं पच्यत[5] उत्कृ-
धीति तस्मादूर्ध्वा ओषधय उत्पच्यन्ते[6] यजुषा कण्डूयते ऽयजुषा हि
मनुष्याः कण्डूयन्ते व्यावृत्त्यै[7] यदयजुषा कण्डूयेत वरुणवत्कण्डूयेता-
पि[8] गर्भाः पामना जायेरन्वाग्वै देवान्मनुष्यान्प्रविशन्त्यैत्तस्या[9] यद-
त्यरिच्यत तद्वनस्पतीन्प्राविशत्सैषा वनस्पतिषु वाग्वदति या दुन्दुभौ 10
या नाड्यां या तूणवे यद्दण्डो[10] भवति वाच एवातिरिक्तमवरुन्द्धे तं
मैत्रावरुणाय प्रयच्छति वाचमेवास्मै तत्प्रयच्छति तां शम्बहर्त्विग्भ्यो
विभजति तस्मादस्य वाङ् नोपदस्यत्यास्यदघ्नः[11] कार्यूस्तावती हीयं
वाग्वदत्यथो एतावति हि वाचा वीर्यं क्रियते यो वृक्षः फलग्रहि-
स्तस्य कुर्यात्फलग्रहिरसानीति ॥ ४ ॥ 15

cf. Kap. S. 36, 1; Mâitr. S. 3, 6, 7. 8; TS 6, 1, 3, 3 flg.

स्वाहा यज्ञं मनस इति मनसा वै यज्ञ आलभ्यते वातयोनिर्यज्ञो
दिवि यज्ञो ऽन्तरिक्षे पृथिव्यामत्रात्र वै यज्ञो यत्र यत्रैव यज्ञस्तत एनं
मनसालभते तं यत्वास्ते यज्ञमेव तद्यत्वास्ते यद्विसृजेद्यज्ञं विसृजेद्यदि
विसृजेत्पुनर्दीक्षयेद्यत्पुनर्दीक्षयेदाहुतीरभिरेचयेद्गायत्रीं वैष्णवीमनुब्रू-
याद्वाग्वै गायत्री यज्ञो विष्णुर्वाचैव यज्ञं संतनोति बार्हस्पत्यामुत्तरा- 20

---

[1] Ch एवैदं [2] Ch द्रस्या [3] So corr. Ch कृष्ट्यै; T 1 कृष्ट्यां; cf. TS 6, 1, 3, 7 und oben Kâth. 2, 3. [4] So (ohne Acc.) Ch सुमनस्याया; T 1 सुमस्यांया; cf. oben Kâth. 2, 3; TS 6, 1, 3, 7; Mâitr. S. 1, 2, 2; 3, 6, 8; VS 4, 10; cf. Kap. S. 36, 1 कृष्यै त्वा सुसष्याया इति [5] So T 1 und Kap. S. 36, 1; Ch पश्यत [6] So T 1; Ch पश्यन्ते; Kap. S. 36, 1 उत्पद्यंते [7] So T 1; Ch व्यावृते [8] Ch यतापि [9] So corr. mit Caland; Ch विशंत्यैत°; T 1 विशन्त्यैत°; Kap. S. 36, 1 प्रविशतोतस्या [10] Ch यदण्डो [11] Accent corrigirt; T 1 त्यास्यंदघ्नः

मनुब्रूयाद्ब्रह्म वै बृहस्पतिर्ब्रह्मणा यज्ञस्यार्तं निष्क्रियते ब्रह्मणैव यज्ञस्यार्तं निष्करोति[1] त्वमग्ने व्रतपा असीत्यग्नये व्रतपतये ऽनुब्रूयाद्व्रतपतिं वा एतस्य व्रतं गच्छति यो दीक्षितस्सन्न व्रतं चरत्यग्निर्देवानां व्रतपतिर्व्रतपतेरेवाधि व्रतमालभते ऽदीक्षिष्टायमसा[2] आमुष्यायण इति चि-
5 रूपांश्वाह चिरुच्चैर्देवेभ्यश्चैव मनुष्येभ्यश्च यज्ञं प्राह नक्षत्रं दृष्ट्वा वाचं विसृजते दिवा वै मनुष्या यज्ञेन चरन्ति नक्तं देवा अहैव रात्रीमभिसंतत्य देवेभ्यो यज्ञं[3] संप्रयच्छति गोपीथाय व्रतं कृणुतेति यज्ञं कुरुतेत्येवैतदाह पाङ्क्त्येषा[4] व्याहृतिः पाङ्क्तो यज्ञो वाच एवैतत्सम्यगुह्यते नोत्तानो दीक्षितश्शयीत यदुत्तानश्शयीत देवलोकमुपावर्तेत न न्यङ्
10 शयीत यन्न्यङ् शयीत पितृलोकमुपावर्तेत ॥ जनो वा इतः पितरो दूरे जनादागच्छति प्रमायुकस्स्यात्तिर्यङ्ङेव शयीतान्तरिक्षदेवत्यो वै दीक्षितस्स्वमेव लोकं स्वमायतनमुपावृत्य शये नाग्नेः पराङ् शयीताग्निस्सर्वा देवता देवताभ्य आवृश्च्येताग्निमेवाभ्यावृत्य शयीताग्निस्सर्वा देवता देवता एवाभ्यावृत्य शये दैवीं धियं मनामह इति मा-
15 र्जयते ब्रह्मणा सतेजस्त्वायाथो आपो मे नेद्दीक्षामवमुष्णानित्यन्नं[5] वै मनुष्येभ्य उदक्रीभत्सत तद्देवा अयियंसिस्ता आपो ऽब्रुवन्नुपावर्तस्व वयं[6] त एतान्स्वदयिष्याम इति तदुपावर्तत यद्दीक्षितो मार्जयते ऽन्नाद्यस्यावरुद्ध्यै ॥ तस्माद्ब्राह्मण आहार्य आहृते हस्ता अवनेनिजीतान्नाद्यस्यावरुद्ध्यै[7] न वा एतेन हुतं[8] व्रतयितव्यं नाहुतं यो दीक्षितो
20 ये देवा मनुजाता इति व्रतयति प्राणा वै देवा मनुजातास्त्वायामेव देवतायां[9] हुतं व्रतयति तेनास्य न हुतं भवति नाहुतमग्ने त्वं सु[10] जागृहीति स्वप्स्यन्नग्निमभिमन्त्रयेत[11] बहु[12] वा एष सुप्तो व्रत्यं निगच्छ-

---

[1] So corr. mit Caland; Ch यज्ञस्यान्तर्निष्क्रियते॰ स्यान्तर्निष्करोति [2] So corr. mit Caland; Ch व्रतमादीक्षिष्टा॰ [3] So corr. Ch यज्ञो [4] So corr. Ch पाङ्क्येषा [5] So corr. Ch ष्णान्नि॰; cf. Mâitr. S. 3, 6, 9 (p. 72, Z. 9). [6] So corr. Ch यवं [7] So corr. Ch नेनिजेता॰ [8] So corr. Ch हुते [9] So corr. Ch देवताया [10] So corr. Ch स्व [11] So corr. Ch स्वप्स्यन्न॰ [12] So corr. Ch वहु

त्यग्निर्देवानां व्रतपतिर्व्रतपतय एव व्रतं[1] संप्रदाय काममृधते[2] त्वमग्ने
व्रतपा असीति प्रबुध्याग्निमभिमन्त्रयेत व्रतपतये वा एष व्रतं संप्र-
यच्छत्यग्निर्देवानां व्रतपतिर्व्रतपतेरेवाधि[3] व्रतमालभते ॥ ५ ॥
cf. Kap. S. 36, 2; Mâitr. S. 3, 6, 8. 9; TS 6, 1, 4.

न दीक्षितेन होतव्यं हविर्वै दीक्षितो रुद्रो[4] ऽग्निर्यज्जुहुयाद्धविर्भूत-
मात्मानं रुद्रायापिदध्याद्यन्न जुहुयाद्यज्ञं विच्छिन्द्यात्तदेतद्व्रतमपरस्मि- 5
न्नग्ना अधिश्रित्य पूर्वमग्निमभिसंचरति तेनैव यज्ञं संतनोति यथा वि
गौरूधः कुरुत एवमेष देवेभ्यो यज्ञं संभरति यो दीक्षते[5] यज्जुहुयाद्यज्ञं
विदुह्यात्स्रवयेद्यथोपधीते सूत एवं तद्यदुपरि जुहोति सकृदेव याम
आगते देवेभ्यो यज्ञं दुहे सर्वं वा एतस्य हविर्भूतं यो दीक्षितो निरा-
दिश्य हि दीक्षते[6] तस्य यो ऽन्नमत्ति यज्ञं गिरति तस्य यज्ञेनैव प्राय- 10
श्चित्तिः ॥ पाशेन वा एषो ऽभिहितो यो दीक्षितो वरुण्यः पाशस्तस्य
यो ऽन्नमत्ति वरुण एनं ग्राहुको भवति तस्माद्बद्धस्य निगस्य[7] चान्नं
नाद्याद्देवानां वा एतत्परिषूतं यो दीक्षितो मनुष्याणामिन्द्वै परिषूतं
सुरभ्यवायं[8] तस्माद्दीक्षितस्यान्नं नाद्यात्त्रेधा वा एतस्य पाप्मानं वि-
भजन्ते यो दीक्षितो यो ऽन्नमत्ति स तृतीयं यो ऽश्लीलं कीर्तयति स 15
तृतीयं यो नाम गृह्णाति स तृतीयं तस्माद्दीक्षितस्य नान्नमद्यान्ना-
श्लीलं कीर्तयेन्न नाम गृह्णीयाद्दानाय वा एष दीक्षते[9] ऽथैतदनृतं क-
रोति यत्प्रतिगृह्णाति गर्भो दीक्षितो हिनस्ति[10] गर्भं प्रतिगृहीतं[11] पू-
षा सनीनां सोमो राधसामिति पूषा हि सनीनामीशे सोमो राधसां
रास्वेयत्सोमेति सोमो वा एतदेतस्मै रासते यद्वनुत आ भूयो भरेत्या- 20
गमे ह्येनं भूयो देवस्सविता वसोर्वसुदावेति सवितृप्रसूत एव प्रतिगृ-
ह्णात्यात्मनो ऽहिंसायै देवेभ्यो वै यज्ञो न प्राभवत्तं दक्षिणाभिस्सम-

---

[1] So corr. Ch व्रते [2] So corr. mit Caland; Ch कामं मर्दते [3] So corr. Ch पतेरिवाधि [4] So corr. Ch रुद्रु [5] So corr. Ch दौच्चिते [6] So corr. Ch दौच्चिते [7] Vgl. PW s. v. निगड a. E. [8] So Ch; darunter steht klein geschrieben न्हुरत्य [9] So corr. Ch दौच्चिते [10] So corr. Ch हिनास्ति [11] So corr. Ch ग्रहीतं

भावयन्त्यदीक्षितो भृतिं वनुते यज्ञमेव संभावयति तस्माद्द्वादश रात्री-
र्दीक्षितो भृतिं वन्वीत यावानेव यज्ञस्तं संभावयति ॥ देवेभ्यो वा
अन्या दक्षिणा नीयन्ते मनुष्येभ्यो ऽन्यास्ता एता अनुदिशति वायवे
त्वेति या नश्यति निर्ऋत्यै[1] त्वेति यावसीदति रुद्राय त्वेति यां रुद्रो
5 हन्ति या संशीर्यते वरुणाय त्वेति याप्सु या श्लेष्केण यमाय त्वेति
यान्येन मृत्युनैता वै देवेभ्यो नीयन्ते मनुष्येभ्य इतरास्ता एताः पुण्य-
ब्राह्मण एताभिर्भूय उपर्भ्रोत्यृध्नोति[2] य एवं वेद देवीरापो अपां
नपादित्यपो ऽतिगाहते यदेवासां यज्ञियं यज्ञविधं तत्परिवृणक्त्य-
नवक्लेशायाग्निर्वै दीक्षितश्शमयन्त्यग्निमापो यजुषातिगाहते शान्त्यै
10 शान्तिर्ह्यापो ऽथो तेज एवात्मन्भूयस्समाधत्ते यदयजुषातिगाहेत वि-
ह्रदिनीरापस्स्युर्यजुषातिगाहते ॥ तस्मादापस्संतता अविच्छिन्ना धा-
वन्ति यदि नाव्यां तरेदरणी च रथं चाधाय तरेदग्निर्वै सर्वा देवता
यज्ञो रथो देवताभिश्चैव यज्ञेन च सह[3] तरत्या पाराद्गन्तोर्लोष्टं[4] विमृ-
णन्नासीत[5] तेनास्या नैते[6] सख्येह्ययं[7] ते योनिर्ऋत्विय इति यथाय-
15 जुरेदमगन्म देवयजनं पृथिव्या इति देवयजनमध्यवस्यत्यृक्सामाभ्यां
संतरन्तो यजुर्भिरित्यृक्सामाभ्यां[8] चैव देवताभिश्च देवयजनमभिसंत-
रति ॥ ६ ॥ cf. Kap. S. 36, 3; Mâitr. S. 3, 6, 9. 10; TS 6, 1, 4; 3, 1, 1, 4.

देवाश्च वा असुराश्च समावदेव यज्ञे ऽकुर्वत यदेव देवा अकुर्वत
तदसुरा अकुर्वताग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्येष वाव तर्हि
20 यज्ञ आसीत्ते देवा एतं सौम्यमध्वरमपश्यंस्तमाहरंस्ते ऽदीक्षयंस्ते[9] ऽग्नि-
होत्रं व्रतमकुर्वताग्निहोत्रं वाव व्रतं तस्माद्यदाग्निहोत्रस्य स्कन्नस्य प्रा-
यश्चित्तिस्सा व्रतस्य स्कन्नस्य प्रायश्चित्तिस्तस्माद्द्विव्रतो दीक्षितस्स्या-

[1] So corr. Ch निन्नृत्यै [2] Ch उपाध्रोत्यृ° [3] So corr. Ch मह; Kap. S. 36, 3 सह [4] Ch तरत्या पारादृर्तोर्लोष्टं; n und r in Çâradâ oft verwechselt; Kap. S. 36, 3 a. E. तरत्या पराङ्गांता लोष्टं [5] Kap. S. 36, 3 वितृणांनामीत; cf. Mâitr. S. 3, 6, 9 a. E. [6] So Ch; Kap. S. 36, 3 तेनस्यां नेते; mir undeutlich. [7] So corr. Ch सखेहयं; Kap. S. 36, 3 a. E. = Corr. सख्येह्ययं [8] So corr. Ch यजुर्भीरि° [9] So corr. Ch दीक्षैस्ते; Kap. 36, 4 दीक्षयंते

द्विर्ह्यग्निहोत्रं जुह्वति तेषां यत्पौर्णमासमासीत्तमग्नीषोमीयं पशुमकु-
र्वत यः[1] पूर्वेद्युरालभ्यते यद्दार्शं तमाग्नेयं यो ऽनुसवनमालभ्यते वैश्व-
देवं प्रातस्सवनमकुर्वत वरुणप्रघासान्माध्यन्दिनं सवनं साकमेधांस्तृ-
तीयसवनं तृतीयसवने पितृयज्ञमवाकल्पयंस्तृतीयसवने त्र्यम्बकांस्ते[2]
ऽसुरा अपक्रामन्तो ऽब्रुवन्न[3] वा इमे ध्वर्तवा[4] अभूवन्निति तदध्वर- 5
स्याध्वरत्वं ततो देवा अभवन्परासुरा अभवन्य एवं विद्वान्दीक्षते य-
मेवं विद्वान्दीक्षयति भवत्यात्मना परास्य भ्रातृव्यो भवति ॥ ७ ॥
cf. Kap. S. 36, 4; Mâitr. S. 3, 6, 10.

स्वर्गं वा एतेन लोकं प्रयन्ति यत्प्रायणीयं तत्प्रायणीयस्य प्राय-
णीयत्वं[5] छिद्यते वा एषो ऽस्माल्लोकाद्यो ऽमुं लोकं गच्छति यदादि-
त्यमुदयनीयं भवत्यस्मिन्नेव लोके प्रतितिष्ठति देवा वा असुरान्हत्वा 10
वैरदेयादीषमाणास्ते दिशो ऽमोहयन्नेन्न[6] इदमन्यो[7] ऽनु प्रजानादिति
तदाहुस्साध्या वै नाम देवा आसन्पूर्वे देवेभ्यस्ते दिशो मोहयित्वा
स्वर्गं लोकमायन्नेन्न इमं लोकमन्यो ऽनु प्रजानादिति ता इमे ऽवरे
देवा अनु प्राजिज्ञासन्त ता न प्राजानन्सादितिरब्रवीद्वार्यं वृणा अहं
व इमा दिशः प्रवक्ष्यामि मत्प्रायणा एव यज्ञो ऽसन्मदुदयन इति त- 15
स्मादादित्यं प्रायणीयं[8] भवत्यादित्यमुदयनीयं वार्यवृतं ह्यस्याः पथ्यां[9]
स्वस्तिं यजतेत्यब्रवीत्तया प्राचीं दिशं[10] प्रज्ञास्यथेत्यग्निं यजतेत्यब्रवी-
त्तेन दक्षिणां सोमं यजतेत्यब्रवीत्तेन प्रतीचीं सवितारं यजतेत्यब्रवी-
त्तेनोदीचीमहमेवेमा उभौ लोकौ वेदेत्यब्रवीदियमदितिस्तस्या इय-
मूर्ध्वा दिगूर्ध्वा एव तेन स्वर्गं लोकमायंस्ता एता एवं देवता इज्यन्ते 20
दिशां कॢप्त्यै स्वर्गस्य लोकस्य प्रज्ञात्यै पथ्यया[11] वै स्वस्त्या देवाः

---

[1] So corr. Ch याः; Kap. S. 36, 4 यः [2] So corr. Ch त्र्यम्बकंस्ते; Kap. S. 36, 4 त्र्यंवकां ते [3] So Ch; Kap. S. 36, 4 ध्रुवन्न [4] So corr. Ch ध्वंतवा; Kap. S. 36, 4 इमे भ्यर्द्धर्चेवान्भवन्निति [5] So corr. प्रयणी° [6] So corr. Ch यन्नेन; cf. unten. [7] So corr. Ch इदमन्या; Kap. S. 36, 5 ते दिशो मोहयुंस्तिन्न इदमंलोकमन्योन्यं न विजानीयादिति [8] So corr. Ch प्रयणीयं [9] So corr. Ch ह्यस्या पथ्यं; vgl. 23, 9 a. A. [10] So corr. Ch प्राचीर्दिशं [11] So corr. Ch प्रथ्यया

प्राचीं दिशं प्राजानन्नग्नीषोमा[1] अनुसमपश्यतां सविता प्रासुवदि-
यमदितिरस्यामधि यज्ञं प्राञ्चमतन्वत ॥ यज्ञमुखं वा एतत्संभ्रियते
यत्प्रायणीयं वाक्पथ्या स्वस्तिर्यत्पथ्यां[2] स्वस्तिं यजति वाचमेव त-
त्संभरयति प्राणापाना एवाग्नीषोमाभ्यां संभरति प्रसवायैव सविते-
5 यमदितिरस्यामधि यज्ञमुखं संभरयति क्लृप्त्यै वा एतन्निरूप्यते यत्प्राय-
णीयं मरुतां देवविशा देवविशां[3] वै कल्पमानां मनुष्यविशानुकल्पते
यन्मरुत्वद्याज्यायाः पदं भवति स्वस्ति राये मरुतो दधातनेति देववि-
शामेव कल्पयति तां कल्पमानां[4] मनुष्यविशानुकल्पते पथ्यां स्वस्तिं
यजति तस्मादसा आदित्यो ऽच्छिन्नं[5] पुर उदेति पश्चान्निम्रोचति पथ्यां
10 ह्येष स्वस्तिमनुसंचरत्यग्निं यजति तस्माद्दक्षिणतो ऽग्र ओषधयः प-
च्यमाना आयन्त्याग्नेया[6] ह्योषधयस्सोमं यजति तस्मादापः[7] प्रतीची-
र्भूयिष्ठा धावन्ति सौमीर्ह्यापस्सवितारं[8] यजति तस्मादयमुत्तराद्भूयिष्ठं
पवते[9] सवितृप्रसूतो[10] ह्येष पवते ऽदितिं[11] यजति तस्मादियमुपरिष्टा-
त्प्रजाभ्यो वर्षति पञ्चैता देवता यजति पाङ्क्तो यज्ञो यज्ञमेवावरुन्द्धे
15 ऽग्नये षष्ठमवद्यति षडृतव ऋतुष्वेव प्रतितिष्ठति दश याज्यानुवाक्या
भवन्ति दशाक्षरा विराडन्नं विराड्विराज्येवान्नाद्ये प्रतितिष्ठति स्विष्ट-
कृते द्वादशी भवतो द्वादश मासास्संवत्सरस्संवत्सरस्याप्त्यै सप्तदश सा-
मिधेन्यो भवन्ति सप्तदशो वै संवत्सरः पञ्चर्तवो द्वादश मासा एष
वाव स संवत्सरस्संवत्सरादेवाधि यज्ञमुखं प्रतनुते ॥ ८ ॥
cf. Kap. S. 36, 5; Mâitr. S. 3, 7, 1; TS 6, 1, 5.

20 पथ्यां स्वस्तिं यजति वाग्वै पथ्या स्वस्तिर्वाचमेव तदात्मनस्स्पृ-
णोत्यग्निं यजति यदेवास्य शुष्कमग्निदाह्यं तत्तेन स्पृणोति सोमं यजति
यदेवास्यार्द्रमात्मनो[12] ऽनग्निदाह्यं तत्तेन स्पृणोति प्रसवायैव सविता

---

[1] So corr. Ch प्रजनन्न° [2] So corr. Ch वाक्यथ्या स्वस्तिं यत्पथ्या [3] So corr. Ch विशा [4] So corr. Ch माना मनु° [5] So corr. Ch आदित्यो श्छेन्नम्पुर [6] So corr. Ch ग्नेयो ह्योष° [7] So corr. Ch दपः [8] So corr. Ch सोमों [9] So corr. Ch पवति [10] So corr. Ch सूते [11] So corr. Ch पावते दिति [12] So corr. Ch स्यांद्रमा°

समिष्ट्यै प्रतिष्ठित्या अदितिः पथ्यया स्वस्त्या प्रयन्ति पथ्यया स्व-
स्त्योद्यन्ति वाग्वै पथ्या स्वस्तिर्वाचैव प्रयन्ति वाचोद्यन्त्यादित्यं[1] प्रा-
यणीयं भवत्यादित्यमुदयनीयमस्मिँश्चैव लोके[2] ऽमुष्मिँश्च यज्ञमुखेन
प्रतितिष्ठति दिशो वै स्वर्गो लोक एतद्देवत्या दिशो यत्प्रायणीयेन
यजते दिश एव स्वर्गँ लोकमभ्यातिष्ठति यथा वै तेजन्यूयत एवं यज्ञ 5
ऊयते यदादित्यं प्रायणीयं भवत्यादित्यमुदयनीयं वर्सा एवैता अन्त-
तो नह्यति दृढिम्ने[3] ऽप्रस्रँसाय याः प्रायणीयस्यानुवाक्यास्ता उदय-
नीयस्य याज्या या याज्यास्ता अनुवाक्या येनैव[4] प्रयन्ति तेनोद्यन्ति
प्रतिपदत्वाय प्रतिप्रज्ञात्यै व्यतिषजेद्याज्यानुवाक्या यं द्विष्यात्तस्य प्रै-
नमस्माल्लोकाच्च्यावयति[5] नामुं प्रापयति यथा पथ[6] उदेत्येवं तदुभयत 10
एवैनं छिनत्त्यननुयाजं प्रायणीयँ स्यादप्रयाजमुदयनीयँ समानं वा
एतद्धविस्संतत्या आत्मा वै प्रयाजाः प्रजानुयाजा यदेवं कुर्यादात्मानं
च प्रजां चान्तरियादप्रजाः[7] प्रमीयेत प्रयाजवती एवानुयाजवती स्या-
ताँ समानं वा एतद्धविस्समानी देवता समानं मेक्षणं तेनैव यज्ञँ
संतनोति नात्मानं[8] न प्रजामन्तरेति ॥ सँस्थाप्या३न्न सँस्थाप्या३मिति 15
मीमाँसन्ते स्रवति वै यज्ञो ऽसँस्थितस्तँ[9] स्रवन्तं यजमानो ऽनु परास्र-
वति प्रजया च पशुभिश्च सँस्थाप्यमेव पत्नीं तु न संयाजयेदमेध्या
वा एषापूता नेश्वरा स्वर्गँ लोकं गन्तोस्तामुदयनीये संयाजयति यथा
प्रवासी स्वमायतनमागच्छत्येवमेवैतत्पत्नीं यजमानो ऽस्मिंल्लोके ऽभि
प्रतितिष्ठति दीक्षितान्नँ हि वा ईजाना अदन्त्यथ न वसीयाँसो भव- 20
न्ति दीक्षितो वै तर्हि यर्हि प्रायणीयेन यजते दीक्षितस्तर्हि[10] यर्ह्येव-

---

[1] So corr. Ch द्यंतादित्यं [2] So corr. Ch लोको [3] So corr. Ch दृढिस्ने [4] So corr. Ch यैनैव [5] So corr. Ch ल्लोकाश्श्याव° [6] So corr. Ch यथा पथ पथ; Kap. S. 36, 6 यथा पथ उदेत्येवं [7] So corr. mit Caland; Ch प्रजाम्त्वा° दप्राजा; Kap. S. 36, 6 दप्रजाः [8] So corr. Ch त्मानन्न प्र° [9] So corr. Ch यज्ञो पस्थितस्ते; Kap. S. 36, 6 यज्ञो असंस्थितं स्रवंतं [10] So corr. Ch दीक्षितर्हिँ

भृयादुदेति[1] प्रायणीयस्य निष्काष उदयनीयमभिनिर्वपत्युदयनीय-
स्यैव नाश्नीयाद्दीक्षितान्नमेव परिवृणक्ति वसीयान्भवति ॥ ९ ॥
cf. Kap. S. 36, 6; Mâitr. S. 3, 7, 2; TS 6, 1, 5.

कद्रूश्च वै सुपर्णी चात्मरूपयोरस्पर्धेतां सा कद्रूस्सुपर्णीमात्मरूपम-
जयदियं वै कद्रूर्द्यौस्सुपर्णी छन्दांसि वै सौपर्णानि सा कद्रूस्सुपर्णी-
मब्रवीत्तृतीयस्यामितो दिवि सोमस्तमाहर[2] तेनात्मानं निष्क्रीणीष्वे-
ति[3] सा सुपर्णी छन्दांस्यब्रवीदेतस्मै वै पितरौ पुत्रान्बिभृत ईदृशान्मा
स्पृणवानितो मा निष्क्रीणीतेति सा जगत्युदपतच्चतुर्दशाक्षरा सती
सा प्राप्य न्यवर्तत तस्या द्वे अक्षरे अहीयेतां सा पशूंश्च दीक्षां चादा-
यापतत्तस्मात्पशुमन्तं दीक्षोपनमति तस्मादाहुर्जगती छन्दसां पशव्य-
तमेति सा त्रिष्टुबुदपतत्त्रयोदशाक्षरा सती साप्राप्य न्यवर्तत तस्या
द्वे अक्षरे अहीयेतां सा दक्षिणां च तपश्चादायापतत्तस्मात्त्रिष्टुभो
लोके दक्षिणा नीयन्त[4] एतद्वाव तपो यत्स्वं ददाति तस्मादाहुर्माध्य-
न्दिनं सवनानां तपस्वितममिति सा गायत्र्युदपतच्चतुरक्षरा सती
साजया कर्णगृह्योदपतत्तमस्या अजाभ्यारुणत्तदजाया[5] अजात्वं सा
तानि च चत्वार्यक्षराणि सोमं चादायापतत्साष्टाक्षराभवद्ब्रह्मवादिनो
वदन्ति कस्माद्गायत्री कनिष्ठा छन्दसां सती यज्ञमुखं परीयाय कस्मा-
त्तेजस्विनितमेति[6] यदेवादस्सोममाहरत्तस्माद्गायत्री यज्ञमुखं तस्मा-
त्तेजस्विनितमा[7] सा पद्भ्यां द्वे सवने आहरन्मुखेन तृतीयं यन्मुखेनाह-
रत्तदधयत्तस्माद्द्वे सवने शुक्रवती धीतमिव तृतीयसवनं तस्मादृजीषं
तृतीयसवनेऽभिषुण्वन्ति[8] यत्तृतीयसवन आशिरमवनयन्ति[9] तृतीय-
सवनमेव तत्संभरन्तो मन्यन्ते ॥ १० ॥
cf. Kap. S. 37, 1; Mâitr. S. 3, 7, 3; TS 6, 1, 6.

---

[1] So corr. Ch दुदेति [2] So corr. mit Caland; Ch सोमस्तेनाहर [3] So corr. Ch निष्क्रोणीष्विति [4] So corr. Ch नीयन्ते; Kap. S. 37, 1 नीयंत एत° [5] So corr. mit Caland; Ch अजाभ्योरु° [6] So Ch; Kap. S. 37, 1 तेजस्विनितमोति [7] So Ch; desgl. Kap. S. 37, 1. [8] So corr. Ch षणवंति [9] So corr. Ch आशिरसवनयंति; Kap. S. 37, 1 a. E. आसिरमवनयंति

इन्द्राग्नी[1] श्नथद्वृत्रमिन्द्रावरुणयोरहं नू न इन्द्रावरुणा सं वां कर्म-
णोभा[2] जिग्यथुरस्मे इन्द्राबृहस्पती बृहस्पतिं नः ॥
इन्द्रासोमा तपतं[3] रक्ष उब्जतं[4] न्यर्पयतं वृषणा तमोवृधः ।
परा शृणीतमचितो[5] न्योषतं हतं नुदेथां निशिशीतमत्रिणः ॥
इन्द्रासोमा समघशंसमभ्यघं तपुर्ययस्तु[6] चरुरग्निमाँ इव ।
ब्रह्मद्विषे क्रव्यादे घोरचक्षसे द्वेषो धत्तमनवायं किमीदिने ॥
इन्द्रा नु पूषणा वयं सख्याय स्वस्तये ।
हुवेम वाजसातये ॥
यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः ।
तत्र पूषाभवत्सचा[7] ॥ 10
इन्द्रापर्वता बृहता रथेन वामीरिष आवहतं सुवीराः[8] ।
वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिडया[9] मदन्ता ॥
ममत्तु नः परिज्मा[10] वसर्हा ममत्तु[11] वातो अपां वृषण्वान् ।
शिशीतमिन्द्रापर्वता युवं नस्तन्नो विश्वे वरिवस्यन्तु देवाः ॥
ऋभुरृभुभिरभि[12] वस्याम विभ्वो विभुभिश्शवसा शवांसि । 15
वाजो अस्माँ अवतु वाजसाता इन्द्रेण युजा तरुषेम वृत्रम् ॥
शच्याकर्त पितरा[13] युवाना शच्याकर्त चमसं देवपानम् ।
शच्या हरी धनुतरा अतष्टेन्द्रवाहा ऋभवो वाजरत्नाः ॥
वधी[14] वृत्रं भूरि चकर्थ[15] विश्वाहेन्द्र एनाङ्कुषेण ॥ ११ ॥
त्वमग्ने बृहद्वयो ददासि देव दाशुषे । 20
कविर्गृहपतिर्युवा हव्यवाडग्निरजरः ॥

---

[1] Dies Capitel collationirt mit und accentuirt nach Brl fol. 170. [2] Ch णोता [3] Brl तपुत्रं [4] Ch रक्षतब्जतच्य°; cf. RV 7, 104, 1. [5] Accent corr.; Brl तमतो [6] Accent corr. Brl ययस्तु; cf. RV 7, 104, 2. [7] cf. RV 6, 57, 1 und 4. [8] Ch वीरः; cf. RV 3, 53, 1. [9] Brl वरेथाङ्गेर्भि [10] Ch ममतु नः परिङ्मा; cf. RV 1, 122, 3. [11] Ch ममतु [12] So corr. Ch ऋभुर्ऋतुभि°; Brl ऋभ्वभिरभि; cf. RV 7, 48, 2. [13] Ch मितरा; cf. RV 4, 35, 5. [14] Ch वर्धो [15] Brl चक्र

पितरो विभुर्विभावा सुदृशीको अस्मे सुगार्हपत्यास्समिषो दीदि-
ह्यस्मद्र्यक्संमिमीहि श्रवांसि य इमा विश्वा जातानि विश्वा रू-
पाणि ॥
त्वं च सोम नो वशो जीवातुं न[1] मरामहे ।
5 प्रियस्तोत्रो वनस्पतिः ॥
ब्रह्मा[2] देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ।
श्येनो गृध्राणां स्वधितिर्वनानां[3] सोमः पवित्रमत्येति रेभन् ॥
उदप्रुतो न वयो रक्षमाणा वावदतो अभ्रियस्येव[4] घोषाः ।
गिरिभ्रजो नोर्मयो मदन्तो[5] बृहस्पतिमभ्यर्का अनावन् ॥
10 हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन्[6] ।
बृहस्पतिरभिकनिक्रदद्गा उत प्रास्तौदुच्च[7] विद्वाँ अगायत् ॥
त्वं सुतस्य पीतये सद्यो वृद्धो[8] अजायथाः ।
इन्द्र ज्यैष्ठ्याय सुक्रतो ॥
भुवस्त्वमिन्द्र ब्रह्मणा महान्भुवो विश्वेषु सवनेषु[9] यज्ञियः ।
15 भुवो नॄंश्च्यौत्नो[10] विश्वस्मिन्भरे ज्येष्ठश्च मन्त्रो विश्वचर्षणे ॥
मित्रस्य चर्षणीधृतश्श्रवो देवस्य सानसि ।
सत्यं चित्रश्रवस्तमम् ॥
मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् ।
मित्रः कृष्टीरनिमिषाभिचष्टे सत्याय हव्यं घृतवद्विधेम[11] ॥
20 प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षते[12] व्रतेन ।
न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् ॥

---

[1] So corr. Ch जीवातुर्न; cf. RV 1, 91, 6. [2] Dieser Vers auch Brl fol. 10. 11. [3] Ch गृद्धाणां स्वदिति°; cf. RV 9, 96, 6. [4] So corr. Ch स्यव; cf. RV 10, 68, 1. [5] So corr. Ch यो दंतो [6] So corr. Ch व्यसन्; cf. RV 10, 67, 3. [7] So corr. Ch भिकनद्गात उत प्रास्तोदुश्च [8] Ch erste Hand वृद्धो; cf. RV 1, 5, 6. [9] So corr. Ch सैवनेषु [10] So corr. Ch न्यृश्च्योत्नो; cf. RV 10, 50, 4. [11] cf. RV 3, 59, 1. [12] So Ch; cf. RV 3, 59, 2.

यत्किंचेदं वरुण दैव्ये जने ऽभिद्रोहं मनुष्याश्चरामसि ।
अचित्ती यत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः[1] ॥
कितवासो यद्रिरिपुर्न दीवि[2] यद्वा घा सत्यमुत यन्न विद्म ।
सर्वा ता विष्य[3] शिथिरेव देवाधा[4] ते स्याम वरुण प्रियासः ॥
यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे । 5
यथा तोकाय रुद्रियम्[5] ॥
मा[6] नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान्मा नो रुद्र भामितो[7] वधीर्हविष्मन्तो नमसा विधेम[8] ते ॥ १२ ॥

इति श्रीयजुषि काठके चरकशाखायां मध्यमिकायां दीक्षितन्नाम[9] त्रयोविंशं स्थानकं संपूर्णम्[10] ॥ 10

---

या श्येताक्षी कृष्णवाला कृष्णशफा न तया क्रीणीयाद्वतं[11] वा अस्या एतत्परिपिष्टं पितृदेवत्या सा प्रमायुकस्स्याद्या द्विरूपा न तया क्रीणीयाद्वार्त्रघ्नी सा जिनाति वा जीयते वोत तया राजन्यस्य क्रीणीयान्न हि तस्यान्तरास्ति जिनाति वा हि स जीयते वा याधीलोधकर्णी तया षोडशिनं क्रीणीयादतिरिक्तं वा एतद्रूपाणामतिरिक्तष्षोडश्यतिरिक्तेनैवातिरिक्तमाप्नोति या बभ्रुरेकहायनी तया क्रीणी- 15

[1] cf. RV 7, 89, 5. [2] So corr. Ch चोविं; cf. RV 5, 85, 8. [3] So corr. Ch विध्य; cf. RV 5, 85, 8. [4] So corr. Ch देवधा [5] cf. RV 1, 43, 2. [6] Dieser Vers T7 fol. 16a. [7] T7 भामियो; cf. RV 1, 114, 8. [8] So T7; Ch विधोम; cf. RV 1, 114, 8. [9] So Ch; cf. Kap. S. am Schluß von 37, 1 दीच्चितनाम पंच प्रपाठकः ॥ (sic). [10] So die Unterschrift des Capitels in Ch. [11] So corr. Ch छुतं; aber cf. unten. Kap. S. 37, 2 द्रुतं; unten यद्व्रुतं परिपिष्टम॰

याद्वाग्वै सोमक्रयणी पुरुषो वाग्यदेकहायन्या क्रीणाति तस्मादेक-
हायनः पुरुषो वाचं वदति यज्ज्यायस्या क्रीणाति तस्माज्ज्यायान्व-
दति ॥ छन्दांसि वा अमुष्माल्लोकात्सोममाहरन्गायत्री श्येनो भूत्वा
तं गन्धर्वा अन्तरा पर्यमुष्णन्विश्वावसुस्स तिस्रो रात्रीरुपहृतो[1] ऽवस-
5 त्तस्मात्तिस्रो रात्रीस्सोमः[2] क्रीतो वसति तं देवाः पुनरयाचन्त तमेभ्यो
न पुनरददुस्ते ऽब्रुवन्गवा निष्क्रीणामेति ते ऽमन्यन्त यज्ञेन विक्रेष्या-
महे यज्ञवा निष्क्रेष्याम[3] इति ते ऽब्रुवन्स्त्रीकामा वै गन्धर्वा वाचं
स्त्रियं कृत्वा मायामुपावासृजंस्ते ऽमन्यन्त प्रजया व्यक्रेष्महि ये वाचा
व्यक्रेष्महीति ते ऽन्वार्तीयन्तास्माकं[4] सोमो ऽस्माकं सोमक्रयणीति ते
10 गन्धर्वा अब्रुवन्विह्वयामहा इति ते ब्रह्म गन्धर्वा अवदन्नगायन्देवा-
स्सा देवान्गायत उपावर्तत तस्माद्गायन्तं[5] स्त्री कामयते न ब्रह्म वद-
न्तमदुह्यद्धि सा ब्रह्मणे तस्मादाहुरक्रीता[6] सोमेन सोमक्रयण्यस्ति दे-
वान्हि सा पुनरुपावर्ततेति ते ऽब्रुवन्स्त्रीकामा वै गन्धर्वा बहु वै ग-
न्धर्वेषु मिथुनीभवन्ती संभवन्त्यचारीरपः प्रविश्योदेहीति[7] तस्या य-
15 द्धतं[8] परिपिष्टमासीत्तज्जरती कूटा भूत्वोदैत्ते ऽब्रुवन्पितृदेवत्या वा इय-
मिति तस्मात्तां पितृभ्यो घ्नन्ति ते ऽब्रुवन्पुनः प्रविश्योदेहीति[9] सा
पष्ठौही वार्त्रघ्नी द्विरूपा भूत्वोदैत्सा तेन रूपेणापास्पृणुत तस्मात्सा
वरो ऽतिवरेण्यो[10] नैनं वरो हिनस्ति य एवं विद्वान्वरं वृणीते ते ऽब्रु-
वन्पुनः प्रविश्योदेहीति सा बभ्रुरेकहायनी भूत्वोदैत्तयाक्रीणंस्तस्मात्सा
20 सोमक्रयणी तदस्या रूपम् ॥ १ ॥

cf. Kap. S. 37, 2; Mâitr. S. 3, 7, 3. 4; TS 6, 1, 6.

---

[1] Kap. S. 37, 2 ते गंधर्वा अंतरा पर्यमुष्णं विश्वावसुः स तिस्रो रात्रीरुपह्वितेवस- [2] So corr. Ch सोमक्रीतो; ebenso Kap. S. 37, 2; Mâitr. S. 3, 7, 3 (p. 77, Z. 15) bloß क्रीतो [3] So corr. Ch निष्क्रीष्याम [4] So corr. Ch न्वांतीयंतास्माकं; Kap. S. 37, 2 ते चातीयंतास्माकं; cf. Mâitr. S. 3, 7, 3 (p. 78, Z. 1); आर्तीयन्त von ऋतीय् „sie zankten sich". [5] So corr. Ch द्रायन्ते [6] So corr. Ch क्रीतः [7] So corr. Ch प्रविष्यो° [8] So Ch; cf. oben. [9] So corr. Ch प्रविष्यो° [10] So corr. Ch वरो तिवरोन्यो; Kap. S. 37, 2 वरो तिवरोगया

सोमक्रयण्या तृतीयसवनमवरुध्यं[1] पशवो वै तृतीयसवनं यद्गवा
क्रीणाति तेनैव तृतीयं सवनमवरुन्द्धे रोहिते चर्मन्मिमीते तस्माद्रो-
हितरूपं पशवो भूयिष्ठा न विचेतवा अनुमन्येत न विचीयमानस्यो-
पद्रष्टा स्यात्सोम ओषधीनामधिराजो यसितमस्य निष्खिदति[2] क्षो-
धुको भवति तस्मात्सोमविक्रयी क्षोधुको ऽपामन्ते क्रीणाति सरसमे-
वैनं क्रीणाति हिरण्येन क्रीणाति सतेजसमेवैनं[3] क्रीणात्यजया क्री-
णाति सतपसमेवैनं क्रीणाति धेन्वा क्रीणाति साशिरमेवैनं क्रीणा-
त्यनडुहा क्रीणाति वह्वेव यज्ञस्यावरुन्द्धे वत्सतरेण च वत्सतर्या
च क्रीणाति मिथुनमेवास्य क्रीणात्यृषभेण क्रीणाति सेन्द्रमेवैनं क्री-
णाति तदाहुः प्रजापतिना वा एष विक्रीणीते यदृषभेण विक्रीणीत 10
इति य एव कश्च साण्डस्स्यादरेतास्तेन[4] क्रीणीयात्तेनैव सेन्द्रं[5] क्रीणा-
ति न प्रजापतिना विक्रीणीते[6] दशभिः क्रीणाति दशाक्षरा विराडन्नं
विराड्विराज्येवान्नाद्ये प्रतितिष्ठति ॥ २ ॥

cf. Kap. S. 37, 3; Mâitr. S. 3, 7, 4; TS 6, 1, 9. 10.

जूरसीति वाग्वै सोमक्रयणी जवते[7] हि वाचेत्थं चेत्थं च पश्य-
न्सोमक्रयणीं जुहोति वाग्वै सोमक्रयणी पश्यन्नेवैनां यच्छति धृता 15
मनसेति मनसा हि वाग्धृता जुष्टा विष्णव इति यज्ञो वै विष्णुर्य-
ज्ञायैवैनां जुष्टां करोति तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय
स्वाहेति यो वा एतस्यास्तन्वो यन्त्रमश्नुते भवति स सवितृत[8] एवा-
स्यास्तन्वो यन्त्रमश्नुते स्वाहाकारेणैवैनां यच्छत्यमुष्मा आदित्याय
प्रोच्य सोमः क्रेतव्यो देव सूर्य सोमं क्रेष्याम इत्यमुष्मा एवादित्याय 20
प्रोच्य सोमं क्रीणाति ॥ चिदसीति वाग्वै सोमक्रयणी शास्त्येवैनां
तस्माच्छिष्टाः[9] प्रजा जायन्ते मना असीति मनसा हि वाग्धृता धी-

---

[1] Ch वरुध्यम [2] Die Ligatur ख्व in Ch undeutlich. [3] So corr. Ch सतेजमेवैनं oder सतेजसेवैनं [4] Ch स्यादरे ॥ तास्तेन [5] So corr. Ch सेन्द्र [6] So corr. Ch विक्रोणात; Kap. S. 37, 3 = Corr. [7] Erste Hand in Ch जोवते, dann corr. [8] So Ch. [9] So corr. Ch क्विष्टः; Mâitr. S. 3, 7, 5 (p. 81, Z. 13) सृष्ट्वां; aber cf. TS 6, 1, 7, 4.

रसीति ध्यायते हि वाचेत्थं चेत्थं च दक्षिणासीति दक्षिणा ह्येषा
यज्ञियासीति यज्ञिया ह्येषा क्षत्रियासीति क्षत्रिया ह्येषाथो यं[1] ह्येषा
जुषते स क्षत्रियो भवत्यदितिरस्युभयतश्शीर्ष्णीत्यदितिर्ह्येषोभयतश्शी-
र्ष्ण्युभयतो[2] ह्येषा यज्ञं परिभूरादित्यं प्रायणीयं भवत्यादित्यमुदयनीयं[3]
5 सा मा सुप्राची सुप्रतीची भवेति सुप्राचीमेवैनां सुप्रतीचीं कुरुते
मित्रस्त्वा पदि बध्नात्विति यत्पदि बद्धा स्यात्पितृदेवत्या स्याद्वाग्वै
सोमक्रयणी वरुण्यः पाशो वाग्वरुणगृहीता[4] न वदेद्यत्कर्णगृहीता
स्याद्वार्त्रघ्नी स्याद्यदनालब्धायता[5] ॥ मित्रस्त्वा पदि बध्नात्विति ब्रह्म
वै मित्रो ब्रह्मणैवैनं पदि बध्नाति पूषाध्वनस्पात्वितीयं[6] वै पूषास्या
10 एवैनां परिददातीन्द्रायाध्यक्षायेतीन्द्रो वै देवानामोजिष्ठस्तमेवास्या
अध्यक्षं[7] करोत्यनु त्वा माता मन्यतामनु पितेति पिता च ह्येतस्या[8]
माता चानुमन्तारौ सा देवि देवमच्छेहीन्द्राय[9] सोममिति देवी ह्येषा
देवमच्छैतीन्द्राय सोमं[10] रुद्रस्त्वावर्तयत्विति रुद्रो वै देवानां क्षेपिष्ठ-
स्तमेवास्याः परस्तात्करोत्यपरानशाय[11] स्वस्ति सोमसखा पुनरेहीति
15 पुनरेवास्या आवृत्तायै स्वस्ति करोति ॥ ३ ॥

cf. Kap. S. 37, 4; Mâitr. S. 3, 7, 5. 6; TS 6, 1, 7.

दक्षिणेन[12] पदा दक्षिणानि पदान्यनुनिक्रामति तस्माद्दक्षिणोऽर्ध
आत्मनो[13] वीर्यावत्तरष्षट् पदान्यनुनिक्रामति षड्‌ऋतव ऋतुष्वेव प्र-
तितिष्ठति षट् पृष्ठानि तान्येवावरुन्द्धे सप्तमं पदमभिगृह्णाति सप्त
ग्राम्याः पशवस्तानेवावरुन्द्धे सप्तधेयं[14] वाग्वदति तामेवाप्नोति व-

---

[1] So corr. Ch य [2] So corr. Ch त्यादिति- शीर्ष्णोभयतो [3] So corr. Ch मुदनीयि [4] So corr. Ch वाग्वरुणागृहीता [5] Ch nicht ganz deutlich, etwa नाल-बायता; Kap. S. 37, 4 यदनालब्धायत्रा; cf. TS 6, 1, 7, 5; यदबद्धा स्यादयता स्यात्; Mâitr. S. 3, 7, 6 (p. 82, Z. 5). [6] So corr. Ch ध्वनस्पाद्वितीयं [7] So corr. Ch अध्यं; Kap. S. 37, 4 = Corr. [8] So corr. Ch ह्येतास्या [9] So corr. Ch हेंद्राय [10] So corr. Ch सोम [11] So Ch, oder त्यपरातिशाय; Kap. S. 37, 4 deutlich त्यपरानिशाय; darnach wohl Böhtl. Wört. 3. Nachtr. s. v. अपरातंस zu berichtigen. [12] Dies Capitel collationirt mit und accentuirt nach T 1 und Brl (fol. 145. 146). [13] Brl आत्मानि [14] Accent corr. Mss· सप्तधेयं; Kap. S. 37, 5 सप्तपरां

स्यसि रुद्रासीति देवनामानि[1] वा एषैतानि प्रपद्यत इयमसीयम-
सीत्येवैतदाह यद्यज्ञवत्यथो वाच एवैतत्सम्यगुद्यते बृहस्पतिस्त्वा सुम्ने
रम्णातु[2] रुद्रो वसुभिराचक इति ब्रह्म वै बृहस्पती रुद्रो देवानामो-
जिष्ठो या एव देवानामोजिष्ठौ ताभ्यामेनामन्ततो यच्छति ॥ पृथि-
व्यास्त्वा मूर्धन्नाजिघर्मि देवयजन इत्येष हि पृथिव्या मूर्धा यद्देवयज- 5
नमिडायास्पदे घृतवति स्वाहेतीडा[3] वा एषा[4] तस्या एतद्घृतवत्पदं
स्वाहाकारेणैवैनां[5] यच्छतीदमहं रक्षसो ग्रीवा अपिकृन्तामीति भ्रा-
तृव्यो वै रक्षो भ्रातृव्यस्यैव ग्रीवा अपिकृन्तति स्फ्येन पदं परिलि-
खति वज्रो वै[6] स्फ्यः पशवः पदं वज्रेणैवास्मै पशून्परिगृह्णाति या-
वद्घृतं[7] विधावेत्तावदभिपरिलिखेत्पशवो वै घृतं पशूनेवावरुन्द्धे स्था- 10
ल्यां पदं संवपत्यादित्या वै पशवः पृथिव्यदितिः[8] पृथिव्यास्स्थाली
संभृता स्व एवैनान्योनौ दधात्यस्मे रमस्वास्मे ते राय[9] इति यत्त्वे राय
इति ब्रूयादितरस्मै पशून्संप्रयच्छेदध्वर्युरपशुस्स्यान्मे[10] राय इत्यात्मन्नेव
पशून्यच्छते ॥ व्यृद्धा वा एषाहुतिर्यामनग्नौ[11] जुहोति यद्धिरण्यमुपास्य
जुहोत्यग्निमत्येव जुहोति समृद्धा अनग्नौ[12] वा एतामाहुतिं जुहोति 15
तामीश्वराणि रक्षांस्यनूदय्य हन्तोर्यदपो निनयति शान्त्या एव रक्ष-
सामपहत्या अयोनीन्वा एतत्पशूञ्छुचार्पयति[13] यदेषां पदं परिखा-
याहरति यदपो निनयति पशूनेव शुचो मुञ्चति सोमक्रयण्या प-
त्नीं[14] संख्यापयति पत्न्या एवैष यज्ञस्यान्वारम्भो[15] ऽथो मिथुनमेव
यज्ञमुखे दधाति प्रजननाय त्वष्टृमन्तस्त्वा सपेमेत्यतो[16] हीमाः प्रजाः 20
प्रजायन्ते प्रजननाय ॥ ४ ॥ cf. Kap. S. 37, 5; Mâitr. S. 3, 7, 6. 7; TS 6, 1, 8.

---

[1] So corr. Brl देवानामानि; Ch देवानामानि; T1 Lücke; Kap. S. 37, 5 देवनामानि [2] Ch रम्नातु [3] Accent corr. T1 und Brl स्वाहेतीडा [4] Brl एषं [5] Accent corr. T1 und Brl स्वाहाकारेणै° [6] Ch वि [7] Ch यावद्घृतो [8] Ch पृथिवि दितिः [9] So T1 und Brl; Ch स्मै रमस्वास्मि ते राये इति; cf. Kâṭh. 2, 5. [10] cf. oben 2, 5; auch Kap. S. 37, 5 स्यान्मे राय [11] Accent corr. T1 und Brl एषाहुति°; Ch एषाहुतिर्यामनोग्नौ [12] Ch अनग्ना [13] So Ch, ohne Accent; T1 und Brl पशूञ्शुचा° [14] T1 und Brl पत्नीं [15] Ch एवैषान्वारम्भो [16] Ch सपेमोत्पतो

हस्ते[1] हिरण्यं कृत्वा मिमीते[2] सत्यं[3] वै हिरण्यं सत्येनैवैनं मिमीते
ऽमृतं वै हिरण्यममृतेनैवैनं मिमीत आस्माको ऽसीति स्वमेवैनं कुरुते
शुक्रस्ते ग्रह इति शुक्रमेवास्य गृह्णात्यभि त्यं देवं सवितारमिति स-
वितृप्रसूत एवैनं देवताभिर्मिमीते ऽतिच्छन्दसा मिमीते[4] वर्ष्म वा
5 एषा छन्दसां यदतिच्छन्दा वर्ष्मैवैनौ[5] गमयति यज्ञं च यजमानं चै-
कैकया मिमीत आसामेव वीर्याण्याप्नोति तस्मादिमाः कामं[6] न्य-
चामः कामं प्रसारयामो यत्सर्वाभिस्सह मिमीत हस्तमासां वीर्यम-
भिसंमियादङ्गुष्ठेन प्रतिमिमीते[7] तस्मादेष[8] एतासां वीर्याणि[9] प्रत्युदेव
सृजेन्न न्यृचेद्यन्न्यचेत्पाशं[10] कुर्याद्वरुण्यः पाशो वरुण एनं ग्राहुकस्स्या-
10 द्यदुत्सृजति वरुणपाशादेवात्मानं परिवृणक्ति ॥ द्विर्मिमीते द्वे हि शु-
क्रिये सवने दश कृत्वो[11] मिमीते दशाक्षरा विराडन्नं विराड्विराज्येवा-
न्नाद्ये प्रतितिष्ठति यत्परिमितं मिमीत परिमितं जीवनं स्यादपरि-
मितं मिमीते[12] तस्मादिदमपरिमितं जीवनं[13] यत्परिमितं मिमीत
यजमानायैव स्यादपरिमितं मिमीते तेन सदस्येभ्यो ऽपि क्रियते प्र-
15 जाभ्यस्त्वा प्रजास्त्वानुप्राणन्त्विति प्रजा वा अंशवः[14] प्रजास्वेव प्राणं
दधाति चतुर्गृहीतमाज्यं भवति चतुष्पादः पशवः पशूनेवास्मै गृह्णा-
त्येतद्रूपा वै पशवो यद्घृतं सरूपानेव पशूनवरुन्द्धे ॥ इयं ते शुक्र तनू-
रिदं वर्च इति हिरण्यं घृते ऽवदधात्येषा वा अग्नेः प्रिया तनूर्यद्घृतं
तेजो हिरण्यं प्रियामेवास्य[15] तन्वं तेजसा समर्धयति रेतो वै हिरण्यं
20 पशवो घृतं यद्धिरण्यं[16] घृते[17] ऽवदधाति पशुष्वेव रेतो दधाति त-
स्मादनस्थिकाद्रेतसो ऽस्थन्वन्तो गर्भाः प्रजायन्ते बह्वावदधाति[18] गर्भा-

---

[1] Dies Capitel collationirt mit und accentuirt nach T 1. [2] So Ch; T 1 मिमीत [3] T 1 सत्यं [4] So T 1; Ch मिमीति [5] Ch वैनो [6] T 1 काम न्य॰ [7] So T 1; Ch मिमीत [8] Ch देषा [9] Accent corr. T 1 वीर्याणि [10] Ch न्यचोद्य॰; T 1 न्यचे॰; Accent ergänzt. [11] दश कृत्वो in T 1 abgebrochen; Accent ergänzt. [12] So T 1; Ch स्यादपरिमिमीते [13] Ch जीवनं [14] So T 1; Ch अंशवाः [15] T 1 undeutlich, Ch प्रियमे॰ [16] Accent ergänzt; T 1 यद्धिरण्यं [17] Accent corrigirt; T 1 घृते वदधाति [18] T 1 wohl वध्वावदधाति

णां धृत्या अप्रपादाय[1] निष्टर्क्यं बध्नाति तस्माद्योनेर्गर्भा मुच्यन्ते य-
दनिष्टर्क्यं बध्नीयान्न योनेर्गर्भा मुच्येरन्यजुषावदधाति यजुषोद्धरति य-
जुषैव युनक्ति यजुषा विमुञ्चति तस्मात्पराचीः प्रजा रेतो दधते ऽर्वाचीः
प्रजायन्ते ॥ ५ ॥ cf. Kap. S. 37, 6: TS 6, 1, 9.

न पूर्वस्मिन्पदमुपवपेद्देवानां वा एष प्रदग्धाहुतीनां रुद्रो ऽग्निः
पशवः पदं रुद्राय पशूनपिदध्यादपशुस्स्याद्गार्हपत्य उपवपति गार्ह-
पत्यं वै पशवो[2] ऽनूपतिष्ठन्त एष पशूनां योनिस्स्व एवैनान्योनौ द-
धाति यत्र शान्तमिवानङ्गारं स्यात्तदुपवपेच्छान्त्या अनुद्दाहाय सोमं
ते क्रीणामीति सोमस्यैवैतद्राज्ञो वीर्याणि महिमानं व्याचष्टे न क-
लाशः पणेत यत्कलाशः पणते सोमस्य राज्ञो वीर्यमवतिरति यजमा- 10
नस्यावर्तिं व्याचष्टे क्षोधुको भवतीयमिति ब्रूयात्तस्या आत्मा तस्या
रूपं तस्याः प्रजा तस्याः पय[3] इति न सोमस्य राज्ञो[4] वीर्यमवतिरति
न यजमानस्यावर्तिं व्याचष्टे ऽक्षोधुको भवति ॥ शुक्रं ते शुक्रेण[5] क्री-
णामि चन्द्रं चन्द्रेणामतममृतेनेति शुक्रमेवास्य शुक्रेण क्रीणाति चन्द्रं
चन्द्रेणामृतममृतेन शक्म यत्ते गोरस्मे[6] ते चन्द्राणीत्यात्मन्नेवास्य वीर्यं 15
धत्ते तेन निर्वीर्येण भूतेन विक्रीणीते[7] तपसस्तनूरसीति तपसो ह्येषा
तनूः प्रजापतेर्वर्ण इत्यग्निर्वै प्रजापतेरग्निजा अजास्सहस्रपोषं[8] पुष्य-
न्तीत्येषा हि पशूनां सहस्रपोषं पुष्यत्यतो ह्येष वीर्ञ्जनयत्यथो द्वौ प-
रमेण[9] पशुना क्रीयस इति परमो ह्येषा पशूनामस्मे ते बन्धुरित्यात्म-
न्नेवास्या वीर्यं धत्ते तया निर्वीर्यया भूतया विक्रीणीते ॥ छन्दांसि 20
वा अमुष्माल्लोकात्सोममाहरंस्तत्तमो[10] ऽन्तराधीयत सा गायत्र्यजया[11]
ज्योतिषोदपतत्तास्यै प्रारोचयदेतर्हि[12] वा एष एतस्मा आह्रियते यर्हि

---

[1] Ch अप्रपादय [2] In Ch 2 Mal पश्वो [3] Ch पयः [4] So corr. Ch राज्ञे [5] So corr. Ch शुक्रेन [6] So corr. Ch गौर° [7] So corr. Ch तिक्रीणेते [8] So corr. Ch अजास° [9] So corr. Ch परमोन [10] So corr. Ch ल्लोकात्माममा° [11] So corr. Ch गायत्र्याज्ज्या; Kap. S. 37, 7 = Corr. [12] So corr. Ch प्ररोच°

क्रीयते[1] तम इदमन्तरा यदजया क्रीणाति प्रैवास्मै रोचयति मित्रो न
एहि सुमित्रधा इति वरुणो वा एष भूत्वा यजमानमभ्यैति मित्रमेवैनं
कुरुते ऽपोर्णुते[2] यथा श्रेयांसमायान्तं पापीयान्प्रत्यपोर्णुत[3] एवमेव
तदिन्द्रस्योरुमाविश दक्षिणमितीन्द्रो वा एतमग्र ऊरा आधत्तेन्द्रो य-
5 जमानस्स्व एवैनं योनौ दधाति स्वान्नभ्राडिति[4] सोमक्रयणाननुदि-
शत्येते वा एतद्गन्धर्वा अगोपायन्नमुष्मिंल्लोके तं गायत्र्याहरन्नेष्टापो-
त्रोः प्रति गोपीथं तस्मादेते होत्रे व्यृद्धे व्यृद्धसोमपीथे[5] तस्मान्न[6] नेष्टा
न पोत्रा भवितव्यं तस्मादेतौ संसचन्ता इव यजतस्तमेते ऽन्वायन्नेते
वा एतस्य गन्धर्वाः पुष्टिं हरन्ति तस्मात्सोमविक्रयी न पुष्यति यदि
10 कृच्छ्रायेतोपैव हरेत्तेभ्यो[7] ह्येष गन्धर्वेभ्यो ऽधि क्रीयत उदायुषेति[8] य-
थायजुरुर्वन्तरिक्षं वीहीत्यन्तरिक्षदेवत्यो ह्येष एतर्ह्यपि पन्थामगन्म-
हीति रक्षांसि वा एतमेतर्हि सचन्ते प्रच्युतमितो[9] ऽप्राप्नमदो रक्षां-
स्येव वृज्ञान एत्यनसाच्छ[10] यन्ति महिमानमेवास्याच्छ[11] यन्त्यनसा
वहन्ति तस्मादनोवाह्यमोषधयः पच्यन्ते यच्छीर्ष्णा[12] हरेयुश्शीर्षहा-
15 र्यमोषधयः पच्येरन्नदित्यास्त्वगस्यदित्यास्सदने[13] सीदेत्यादित्यो[14] वै
सोमः पृथिव्यदितिः पृथिव्या अनस्संभृतं स्व एवैनं योनौ[15] दधाति
वारुणो वै सोमस्तं देवतया व्यर्धयति यन्मित्रं करोति यद्वारुण्या
सादयति स्वयैवैनं देवतया समर्धयति वनेषु व्यन्तरिक्षं ततानेति
वाससा पर्यानह्यति सर्वदेवत्यं वै वासस्सर्वाभिरेवैनं देवताभि-
20 स्समर्धयति सूर्यस्य चक्षुरारुहमिति कृष्णाजिनं पुरस्तात्प्रत्यानह्यन्ति

---

[1] So corr. Ch क्रियते; Kap. S. 37, 7 = Corr. [2] So corr. Ch पोर्णुते; Kap. S. 37, 7 = Corr. [3] So corr. Ch प्रत्यपोर्णुत; Kap. S. 37, 7 = Corr. [4] Kap. S. 37, 7 स्वाग्नां नभ्राडिति [5] So corr. Ch व्यृद्धै व्यृद्धो सोमपीथे; Kap. S. 37, 7 होत्रै वियृध्ये वियृध्यः सोमपथे; cf. unten 26, 1. [6] So corr. Ch तस्मान्ना [7] So corr. Ch कृच्छ्रायेतोमैव हरेतेभ्यो; Kap. S. 37, 7 यदि कृष्टयैतोपैव हरेतेतेभ्यो [8] So corr. mit Caland; Ch क्रीयत तदा° [9] So corr. Ch मित; Kap. S. 37, 7 प्रच्युतमितो प्राहामदो [10] Ch साग्छ [11] Ch स्याग्छ [12] So corr. Ch यच्छीर्ष्णा [13] So corr. Ch पच्चेर- [14] So त्रादित्या° corr. Ch दित्या; Kap. S. 37, 7 = Corr. [15] So corr. Ch योनो

रक्षांसि वा एतमेतर्हि जिघांसन्ति स्वर्गं लोकमभ्यारोहन्तमसा[1] आदित्यो ऽपरिपरः पन्थास्तमेवैनमभ्यारोहयति स्वर्गस्य लोकस्य समष्ट्यै ॥ ६ ॥ cf. Kap. S. 37, 7; Mâitr. S. 3. 7. 7. 8; TS 6, 1. 10. 11.

प्रच्यवस्व भुवनस्पत[2] इति भूतानां ह्येष पतिर्विश्वान्यभि धामानीति[3] देवता वै विश्वा धामानि देवता एवैनमभि प्रच्यावयति श्येनो भूत्वा परापतेति श्येनो वै वयसां[4] क्षेपिष्ठश्श्येनमेवैनं कृत्वा रक्षांस्यतिसृजति यजमानस्य नो गृहे संस्कृतमिति यजमानायतनमेवैनं करोत्यथो यजमानस्यैव गृहे देवताभिस्संस्कृतं कुरुते नमो मित्रस्य वरुणस्य चक्षस इति वरुणो वा एष[5] भूत्वा यजमानमभ्येति मित्रमेवैनं कुरुत आसन्दीमुदृह्णन्ति यथा मनुष्यराजायावस्थितायासन्दीमुदृह्णन्त्येवमेव तदग्निना प्रतितिष्ठते ऽग्निस्सर्वा देवता देवताभिरेवैनं प्रतितिष्ठते ऽग्नीषोमौ[6] वा एतर्हि यजमानमभि संधत्तो यत्पशुना प्रतितिष्ठते तमेवाभ्यामपिदधात्यग्नीषोमाभ्यां वा एष आत्मानं मेधायालभते यो दीक्षते यत्पशुमालभत आत्मानं तेन निष्क्रीणाति यस्तूपरश्श्मश्रुणो द्विदेवत्यस्य रूपं लोमशः पीवा पुरुषरूपस्तमालभेत तस्य यो ऽश्नाति पुरुषमत्ति तस्मात्तस्य नाशितव्यं क्षुध्यति वै दीक्षितः क्षुध एष निष्क्रयण आलभ्यते तस्य यो ऽश्नाति क्षोधुको भवति तस्मात्तस्य नाशितव्यमग्नीषोमाभ्यां वै वीर्येणेन्द्रो वृत्रमहन्स एष वार्त्रघ्नः पशुर्विजित्या आलभ्यते तस्मादस्याशितव्यं देवता वा एनं पूर्वेद्युरालभ्यमानं नाभिप्राच्यवन्त[7] परस्माद्यज्ञक्रतोर्निररिष्याम इति तमग्नीषोमा एवाभिप्राच्यवेतां पराचीरितरा यज्ञमभ्यत्यसृजन्त तस्मादेषो ऽग्नीषोमीय आलभ्यते तस्मादग्नीषोमाभ्यां ग्रहो न गृह्यते ॥ तौ देवानुपावर्तमानौ तयोर्यत्प्रियं धामासीत्तदपन्यदधातां तद्देवा अन्वे-

---

[1] So corr. mit Caland; Ch लोकमसा आरोह° [2] So corr. Ch प्रच्यवसु भुवस्पत; cf. oben 2, 7. [3] So corr. Ch धामानेति [4] Ch वयसां [5] So corr. Ch एषो; Kap. S. 37, 8 = Corr. [6] So corr. Ch ग्नीषोमो [7] Ch मानन्नाभिप्रा°

ष्टुमध्रियन्त ते प्रबाहुगिच्छन्त आयँस्ते नवं वा इदँ सृप्रमित्यभ्यवाय-
न्यन्नवमित्यब्रुवँस्तन्नवनीतस्य नवनीतत्वं यत्सृप्रमिति तत्सर्पिषस्सर्पि-
ष्ट्वं यदजो ऽविन्दत्तदाज्यस्याज्यत्वं स घृङ्ङकरोत्तद्घृतस्य घृतत्वं तस्मादजो
घृङ्ङिरिक्रच्चरति[1] तत्पशूनन्वाकुर्वँस्तत्पशवस्समभरँस्तेनैतेन पशुभ्यो ऽधि-
5 जायन्ते ता अब्रुवतां वार्यँ वृणावहा अयमेव नौ भागधेयमस्तु यो
नौ प्रियं धामाविन्ददिति तस्मादेषो ऽग्नीषोमीय आलभ्यते तस्माद-
स्याशितव्यं वार्यवृतो हि ॥ ७ ॥
cf. Kap. S. 37, 8; Mâitr. S. 3, 7, 8; TS 6, 1, 11.

विमुक्तो ऽन्यो ऽनड्वान्भवत्यविमुक्तो[2] ऽन्यो ऽथातिथ्यं[3] निरुप्यते
यज्ञस्य संतत्या अविच्छेदाय यदुभौ विमुक्तौ स्यातां पितृदेवत्यँ[4] हवि-
10 स्स्याद्विच्छिन्नो यज्ञो ऽसंततो ऽनवरुद्धो यदुभा अविमुक्तौ वार्त्रघ्नँ
हविस्स्यात्संततो यज्ञो ऽविच्छिन्नो ऽवरुद्धो यद्विमुक्तो ऽन्यो भवत्य-
विमुक्तो ऽन्यो वार्त्रघ्नँ हविर्भवत्यपितृदेवत्यँ संततो यज्ञो ऽविच्छिन्नो
ऽवरुद्धः पत्नीमन्वारम्भयित्वा निर्वपति पत्नी वै पारीणह्यस्येशे ऽनुम-
तमेव प्रसूतं देवेभ्यो हविर्निर्वपति पत्न्या एवैष यज्ञस्यान्वारम्भो
15 ऽथो मिथुनमेव यज्ञमुखे दधाति प्रजननाय ॥ यावन्तो वै पुण्यम-
न्वायन्ति सर्वेभ्यस्तेभ्य आतिथ्यं क्रियते छन्दाँसि सोमं राजानं क्रीत-
मन्वायन्त्यग्नेस्तनूरसि विष्णवे त्वेति गायत्र्यैतन्निर्वपति सोमस्य तनू-
रसि विष्णवे त्वेति त्रिष्टुभैतन्निर्वपत्यतिथेरातिथ्यमसि विष्णवे त्वेति
जगत्यैतन्निर्वपत्यग्नये त्वा रायस्पोषदे विष्णवे त्वेत्यनुष्टुभैतन्निर्वपति
20 श्येनाय त्वा सोमभृते विष्णवे त्वेति गायत्र्यैतन्निर्वपति गायत्री वा
एतमाहरदमुष्माल्लोकात्तस्मात्सा पुनर्याम्णी तस्मात्पुनः प्रयुज्यते य-

---

[1] So corr. Ch क्रश्चरति; da in Ch häufig श्च fälschlich für das च्च der Çâradâ-Schrift gesetzt ist, liegt die Verbesserung auf der Hand und man braucht nicht, wie das Pet. Wört., resp. Weber, thut, einen Stamm घृङ्ङिरिक्र zu construiren.
[2] So corr. Ch नड्वा भ°
[3] So corr. Ch तिथ्याच्चिरु° cf. MS 3, 8, 1 a. A.
[4] So corr. Ch देवत्य्

छन्दोभिर्निर्वपति छन्दांस्येव भागधेयवन्ति करोति पञ्च कृत्वो नि-
र्वपति पाङ्क्तो[1] यज्ञो यज्ञमेवावरुन्द्धे विष्णवे त्वा विष्णवे त्वेति वि-
ष्णुर्वा एतर्हि यज्ञो यर्ह्यनिरुक्तस्तस्माद्वैष्णवः पुरोडाशो भवति त्रिक-
पालः कार्यस्स हि वैष्णवो यन्नवकपालस्तेनैव त्रिकपालस्त्रयो हि ते
त्रिकपाला नवकपालो भवति नव प्राणाः प्राणैरेव यज्ञमुखे प्रैत्यथो
तेज एव त्रिवृतं यज्ञमुखे ऽधिवियातयति यत्त्रिकपालस्तेन वैष्णवो
यत्षट् तेन छन्दसां तेनोभयस्मान्नैति ॥ पशुरालभ्यस्सोमाय राज्ञ
इत्याहुर्मनुष्यराजायेन्न्वै पशुरालभ्यत इत्यग्निं मन्थन्त्याग्नेया वै पशव-
स्तद्देवास्मै पशुमालभते ऽग्निस्सर्वा देवतास्सर्वा एव देवतास्सोमाय च
छन्दोभ्यश्चागतेभ्यो जनयत्याश्ववालः प्रस्तारो भवत्यैक्षवा उद्यावा 1
अश्व इव वै प्रजापतिरासीत्तस्यैते वाला आसन्यदश्ववाला[2] एतौ
बाहू या उद्यावौ तं देवा अन्वारभ्य स्वर्गं लोकमायन्यदाश्ववालः प्र-
स्तारो भवत्यैक्षवा उद्यावौ प्रजापतिमेवान्वारभते स्वर्गस्य लोकस्य
समष्ट्यै प्रजापतेर्वा[3] एतानि पक्ष्माणि ये ऽश्ववाला यदाश्ववालः[4] प्र-
स्तारो भवति प्रजापतेरेवाधि यज्ञमुखं प्रतनुते ॥ रक्षांसि वै देवानां 15
यज्ञमजिघांसंस्तानि कार्ष्मर्येणापाघ्नत[5] यत्कार्ष्मर्यमयाः परिधयो[6] भ-
वन्ति रक्षसामपहत्यै यद्यद्वै देवा एतेनाकुर्वत तेनार्ध्नुवंस्तदस्य[7] कर्म-
ण्यत्वं कर्मण्यो वै नामैष यज्ञमुख एवैतेनर्ध्नोति[8] सप्तदश सामिधेन्यो
भवन्ति सप्तदशो वै संवत्सरः पञ्चर्तवो द्वादश मासा एष वाव स
संवत्सरस्संवत्सरादेवाधि यज्ञमुखं प्रतनुते ॥ शिरो वा एतद्यज्ञस्य य- 20
दातिथ्यं ग्रीवा उपसदो यत्संस्थापयेन्मुखतो यज्ञे संस्थापयेच्छिरो ग्री-
वाभ्यो यज्ञस्यावच्छिन्द्यादिडान्तं[9] भवति शिर एव ग्रीवासु यज्ञस्य
प्रतिदधाति नवकपालो भवति तस्मान्नवधा पुरुषस्य शिरो विषू-

---

[1] So corr. Ch पांक्तो  [2] So corr. Ch आसन्यश्व  [3] So corr. Ch प्रजाप-
तिर्वा  [4] So corr. Ch वालाः  [5] So corr. Ch काश्मर्यिणा°  [6] So corr. Ch
धियो  [7] So corr. Ch नाब्रुवं°  [8] So corr. Ch नब्रोति  [9] So corr. Ch दिडत-
म्भवति oder दिडंतम्भ°; Kap. S. 38, 1 = Corr.

तमुपसदो वा एतस्यानुयाजास्तानूनप्त्रमाशीस्तस्मादननुयाजं भवति ॥ ८ ॥ cf. Kap. S. 38, 1; Mâitr. S. 3, 7, 9; TS 6, 2, 1.

देवा वा अन्यो ऽन्यस्य श्रैष्ठ्याय नातिष्ठन्त ते चतुर्धा व्युदक्रामन्नग्निर्वसुभिस्सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैस्ते देवाः पापीयांसो ऽभवन्वसीयांसो ऽसुरास्ते ऽविदुः पापीयांसो वै[1] त्ये भवन्ति वसीयांसो ऽसुरा इति ते प्रियास्तन्वस्समवाद्यन्त[2] ते ऽब्रुवन्नेषां नस्तन्न[3] पारयाद्यो नो ऽन्यो ऽन्यस्मै द्रुह्यादिति तस्मात्सतानूनप्त्रिणे न द्रोग्धवै यद्द्रुह्यति प्रियायै तन्वै द्रुह्यति यत्तन्वस्समवाद्यन्त तत्तानूनप्त्रस्य तानूनप्त्रत्वं ततो देवा अभवन्परासुरा अभवन्य एवं विद्वांस्तानूनप्त्रमुपैति भवत्यात्मना परास्य भ्रातृव्यो भवत्यसौ वा आदित्य इन्द्रस्तस्य ते श्रैष्ठ्यायातिष्ठन्त तिष्ठन्ते[4] ऽस्य समानाश्श्रैष्ठ्याय य एवं वेदैतस्मिन्वै ते तास्तन्वस्संन्यदधत[5] तस्मादेष तेजिष्ठं[6] तपति तस्मात्सूर्यदेवत्यास्सोमा भूयिष्ठा हूयन्त आज्येन वै वज्रेण देवा वृत्रमघ्नन्स्रुग्भ्यां[7] बाहुभ्यां सोमो वृत्रो घ्नन्ति वा एतत्सोमं यदस्याज्येनान्तिकं[8] जुह्वत्यंशुरंशुस्ते देव सोमाप्यायतामिति यदेवास्य घ्नन्ति यन्मितमयन्ति तदाप्याययन्ति यन्ति वा एते[9] ऽस्माल्लोकाद्ये सोममाप्याययन्त्येष्टा रायः प्रेषे[10] भगायेत्यस्मिन्नेव[11] लोके प्रतितिष्ठन्ति पितरं च वा मातरं च हिनस्ति यो गर्भं हन्त्यनयोर्गर्भस्सोमो[12] राजा नमो दिवे नमः पृथिव्या इत्याभ्यामेव निह्नुते किं दीक्षया[13] स्पृणोतीत्याहुः किमवान्तरदीक्षयेत्यात्मानमेव[14] दीक्षया स्पृणोति प्रजामवान्तरदीक्षया संतरां मे-

---

[1] So corr. Ch वे त्ये; Kap. S. 38, 2 वै त्ये  [2] So corr. Ch प्रिया तन्व°  [3] So corr. mit Caland; Ch न्नेषा नस्तन्न; Kap. S. 38, 2 ते कुर्वन्नेषा नस्तन्वः पारयाद्यो etc.; cf. Mâitr. S. 3, 7, 10 यो नस्तन्नंपाद्यो etc.  [4] So corr. Ch तिष्ठंत Kap. S. 38, 2 = Corr.  [5] So corr. Ch तास्तन्वस्मन्येदधत  [6] So corr. Ch तेजिष्ठां; Kap. S. 38, 2 तेजिष्ठं भवति; Mâitr. S. 3, 7, 10 = Corr.  [7] Co corr. Ch न्द्रुगभ्यां; Kap. S. 38, 2 = Corr.  [8] So corr. Ch ज्येनांतिक; Kap. S. 38, 2 यदस्याज्येनान्विकं  [9] So corr. Ch एतो  [10] So corr. Ch प्रषो; cf. 2, 8; Kap. S. 38, 2 = Corr.  [11] So corr. Ch येत्येस्मि  [12] So corr. Ch नयोगर्भ°  [13] So corr. Ch दीक्षिया  [14] So corr. Ch किमिवा°

खलामायच्छते ॥ कनीयो व्रतमुपैति तस्मादात्मनः प्रजाँहीयसी[1] य
त्परस्सत्यां विसृजते तस्मात्परोवरीयः प्रजया पुत्रेण पौत्रेण प्रथते
ऽग्निर्वै दीक्षितश्शमयन्त्यग्निमापो मदन्तीनां मार्जयते मदन्तीनां व्र-
तयत्यशान्त्यै शान्तिर्ह्यापो ऽथो तेज एवात्मन्भूयस्समाधत्ते न वा एतेन
हुतं व्रतयितव्यं नाहुतं यो दीक्षितो ऽग्निर्वै रुद्रो ऽग्निनैष तन्वं विप-
रिधत्ते या ते अग्ने रुद्रिया तनूरिति व्रतयति स्वायामेव देवतायां हुतं
व्रतयति तेनास्य न हुतं भवति नाहुतम् ॥ ९ ॥
cf. Kap. S. 38, 2; Máitr. S. 3, 7, 10; TS 6, 2, 2.

देवाश्च वा असुराश्च संयत्ता आसंस्तेषामसुराणामिमाः[2] पुर आस-
न्नयस्मयीयं रजतान्तरिक्षं हरिणी द्यौस्ते देवास्संघातं संघातं पराज-
यन्त ते ऽविदुरनायतना हि वै स्मस्तस्मात्पराजयामह इति त एताः
पुरः प्रत्यकुर्वत हविर्धानं दिव आग्नीध्रमन्तरिक्षात्सदः पृथिव्यास्ते ऽब्रु-
वन्नुपसदमुपायामोपसदा वै महापुरं जयन्तीति त उपसदमुपायं-
स्तानुपसद्भिरेवैभ्यो लोकेभ्यो निरघ्नंस्तस्मादाहुरुपसदा वै महापुरं जय-
न्तीति त एभ्यो लोकेभ्यो निर्हता ऋतून्प्राविशंस्ते षडुपायंस्तानु-
पसद्भिरेवर्तुभ्यो[3] निरघ्नन्द्वाभ्याममुष्माल्लोकाद्द्वाभ्यामन्तरिक्षाद्द्वाभ्यां पृ-
थिव्यास्त ऋतुभ्यो निर्हतास्संवत्सरं प्राविशंस्ते द्वादशोपायंस्तानु-
पसद्भिरेव[4] संवत्सरान्निरघ्नंश्चतसृभिरमुष्माल्लोकाच्चतसृभिरन्तरिक्षाच्चत-
सृभिः पृथिव्यास्ते संवत्सरान्निर्हता अहोरात्रे प्राविशंस्ते यत्सायमु-
पायंस्तेनैनानाह्ना अनुदन्त यत्प्रातस्तेनाह्नस्तस्माज्ज्ञौस्सायं प्रातस्तन-
माप्यायते[5] प्रातस्सायन्तनं तानुपसद्भिरेवैभ्यो लोकेभ्यो नुदमाना आ-
यंस्ततो देवा अभवन्परासुरा अभवन्सर्वेभ्य एवैभ्यो[6] लोकेभ्यो भ्रा-
तृव्यं नुदमान एति य एवं विद्वानुपसद उपैति भवत्यात्मना परास्य

---

[1] So corr. Ch प्रजाहीयसी; ebenso Kap. S. 38, 2. [2] So corr. Ch मिमः [3] So corr. Ch पायंस्ता° [4] So corr. Ch पायंस्ता [5] So corr. Ch प्रातस्स्तनमाप्यंयते; Kap. S. 38, 3 = Corr. [6] So corr. Ch एवेभ्यो

भ्रातृव्यो भवति ॥ न द्वादशाग्निष्टोमस्य कुर्यादशान्ता निर्मृज्युर्न[1] तिस्रो ऽहीनस्योपरिष्टाद्यज्ञक्रतुर्गरीयानभिषीदेद्ग्रीवा[2] निश्शृणीयादार्तिमा-र्छेद्द्वादशाहीनस्य कुर्याच्छान्त्या अनिर्मार्गाय तिस्रो ऽग्निष्टोमस्य प्र-त्युत्तब्ध्यै सयत्वाय ते देवा असुर्यानिमांल्लोकान्नान्ववैतुमधृष्णुवंस्तान-ग्निना[3] मुखेनान्ववायन्यदग्निमन्त्युपसदां[4] प्रतीकानि भवन्ति यथा क्षे-त्रपतिः क्षेत्रे ऽन्ववनयत्येवमेवैतदग्निना मुखेनेमांल्लोकानभिजयन्तो यन्ति यो ह वै देवान्साध्यान्वेद सिध्यत्यस्मा इमे वाव लोका देवा-स्साध्यास्सिद्धं ह्यस्यै सिद्धमस्मै सिद्धममुष्मै य एवं वेद सिध्यत्य-स्मै ॥ १० ॥ cf. Kap. S. 38, 3; Mâitr. S. 3, 8, 1 und 2 a. E.; TS 6, 2, 3.

इति श्रीमद्यजुषि काठके चरकशाखायां मध्यमिकायां साक्षीति नाम चतुर्विंशस्थानकं परिपूर्णम्[5] ॥

---

इषुं वा एता[6] देवास्समस्कुर्वन्यदुपसदो ऽग्निं शृङ्गं सोमं शल्यं विष्णुं तेजनं ते ऽब्रुवन्यो न ओजिष्ठस्स[7] इमां विसृजत्विति ते रुद्रम-ब्रुवंस्त्वं वै न ओजिष्ठो ऽसि त्वमिमां विसृजेति सो ऽब्रवीद्वार्यं वृणा अहमेव पशूनामीशा[8] इति ते ऽमन्यन्त यदयं पशूनामीशिष्यते स-र्वान्निर्णोष्यतीति ते ऽब्रुवन्सप्राहानीशासै[9] न पराचीनमिति तस्मा-

---

[1] So corr. Ch निमृज्युर्नू; Kap. S. 38, 3 निर्मथुर्न [2] So corr. Ch स्योपरिपरिष्टा°; Kap. S. 38, 3 स्योपविष्टा° [3] So corr. Ch असुर्यनि°; Kap. S. 38, 3 = Corr. [4] So corr. Ch वायिन्य° und पसदं [5] So die Unterschrift dieses Capitels in Ch. [6] Ch एतान्दे° [7] So corr. Ch ब्रोवन्यो न ओजिष्टुस्स [8] So corr. Ch मोश; aber cf. Schol. zu Pâ. 3, 4, 96, wo offenbar diese Stelle citirt wird; Kap. S. 38, 4 = Ch मोश इति [9] Kap. S. 38, 4 सस्ताहानीशाशो

त्सप्ताहानि रुद्रः पशूनामीशे रक्षांसि पराचीनं[1] घ्नन्ति तां व्यसृजत्तया पुरस्समरुजद्यत्समरुजत्तद्रुद्रस्य रुद्रत्वं विसृष्टिमेव भ्रातृव्याय विसृजति य एवं विद्वानुपसद उपैति न पुनरपक्रामेद्यतरो वै संयत्तयोः पुनरपक्रामति परा स जयति ॥ समेष एतर्हि यतते य उपसद उपैति सकृदेव पराङतिक्रम्याश्रावयति यज्ञस्याभिजित्यै रक्षसामपहत्यै न प्रयाजा भवन्ति नानुयाजाः पुरो[2] वा एते यज्ञस्य यत्प्रयाजानुयाजा यत्प्रयाजानुयाजान्कुर्यात्पुरो[3] यज्ञस्य कुर्याद्धुरतिव्यथी[4] स्यादतीक्ष्णामिषुं[5] कुर्याच्चतुर्व्रतो भवति चत्वारि हीष्वाः पर्णानि त्रिव्रतो भवति त्रिषन्धिर्हीषुश्शृङ्गं शल्यस्तेजनं[6] द्विव्रतो भवति द्विषन्धिर्हीषुश्शल्यश्च तेजनं चैकव्रतो भवत्येका ह्येवेषुरिषुमेवैतां संस्कृत्य तां श्वो[7] भ्रातृव्याय वि- 10
सृजत्यथो व्रतमेवाप्नोति ॥ ग्रीवा वा एता यज्ञस्य यदुपसदो न प्रयाजा भवन्ति नानुयाजास्तस्माद्ग्रीवाः प्रतिपुरुषस्यानिष्ठं तास्सवीर्याः[8] प्रयुज्यन्ते तस्माद्ग्रीवा अनिष्ठास्सतीर्वीर्यावत्तमास्तिस्र[9] उपसदो भवन्ति त्रय इमे लोकास्तस्मात्पुरुषस्य त्रयस्स्कन्दा अतिषक्ताभिर्यजति तस्माद्ग्रीवा अतिषक्ता अथो अयातयाम्न्यायातयाम्न्यैव यजति 15
सच्छन्दसो याज्यानुवाक्याः कुर्याद्यद्विच्छन्दसस्स्युरपरिचितो होतारं हन्युर्भिद्वतीः पुरां भित्त्यै ॥ १ ॥ cf. Kap. S. 38, 4; Mâitr. S. 3, 8, 1. 2; TS 6, 2, 3.

देवाश्च वा असुराश्च यज्ञे संयत्ता आसन्स यज्ञो ऽबिभेद्यतरे ऽभिजेष्यन्ति[10] ते मा विमथिष्यन्त इति स न्यलयत तं देवा अभिजित्यान्वैच्छंस्ते प्रबाहुगिच्छन्त आयंस्तमिन्द्र उपर्युपर्यत्यक्रामत्सो ऽब्रवीत्को 20
मायमुपर्युपर्यत्यक्रमीदित्यहमेष[11] कृच्छ्रे हन्तेत्यथ[12] कस्त्वमित्यहमेष

[1] Ch चीन [2] So corr. Ch पुरी Kap. S. 38, 4 पुरू [3] So corr. Ch प्रयानु° [4] Ch कुर्याम्मुरतिव्यथी; Kap. S. 38, 4 कुर्याद्धुरभिव्यथ्यं [5] Ch स्यादंतो°; Kap. S. 38, 4 सातदंतो° [6] So corr. Ch तेजन [7] Ch श्वे; Kap. S. 38, 4 श्चो [8] Ch सवीर्यं: [9] Ch वर्तमा; die ganze Stelle lautet Kap. S. 38, 4 तस्मात्पुरुषस्य निष्ठं ताः सर्वा या प्रयुष्वंते नस्माद्वीवा अनिष्ठ्या सतीर्वीर्यावत्तमास्तिस्र etc. [10] So corr. Ch भिजेष्य° [11] So corr. Ch को सायमु°; Kap. S. 38, 5 ब्रवील्लोमायमु° [12] So corr. Ch हते°; cf. MS 3, 8, 3; Kap. S. 38, 5 हंते°

कृच्छ्रादाहर्तेत्येमूषो[1] नामायं[2] वराह इत्यब्रवीदेकविंशत्याः पुरामश्ममयीनां पारे यत्किंचासुराणां वामं वसु[3] तेन तिष्ठति तं जहि य एष कृच्छ्रे हन्तावोचथा[4] इति तमिन्द्रो दाल्भूष्याभिविसृज्य पराभिनत्सो ऽब्रवीदेष हतस्तमाहर[5] य एष कृच्छ्रादाहर्तावोचथा इति तं विष्णुर्-
5 पासङ्ग आहरद्यज्ञो वै विष्णुर्यज्ञेनैवैषां तद्यज्ञमवृञ्जत पशुभिः पशून्-
निन्द्रियेणेन्द्रियं[6] ततो देवा अभवन्परासुरा अभवन्यज्ञो वै विष्णुर्य-
ज्ञेनैवैतद्यज्ञं भ्रातृव्यस्य वृङ्क्ते पशुभिः पशूनिन्द्रियेणेन्द्रियं[7] भवत्या-
त्मना परास्य भ्रातृव्यो भवति देवयजनमिच्छन्ति यज्ञमेवेच्छन्ति य-
द्विन्दन्ति[8] यज्ञमेव विन्दन्ति यदुदीचीनं प्राचीनं प्रवणं स्यात्तस्मिन्य-
10 जेत यज्ञकाम एवमेव हि स यज्ञो ऽश्यद्यज्ञस्यानुवित्त्यै यत्समं प्रति-
ष्ठितं तस्मिन्यजेत गतश्रीः प्रतिष्ठा वा एतस्मा एष्टव्या यो गतश्रीरे-
तद्भूम्याः प्रतिष्ठितं यत्समं प्रतिष्ठामेवास्मै विन्दति गच्छति प्रतिष्ठां[9]
त्र्युन्नते यजेत भ्रातृव्यवांस्त्र्युन्नतेन वै विष्णुरिमांल्लोकानुदजयत्स एभ्यो
लोकेभ्यो ऽसुरान्प्राणुदतेमानेव[10] लोकानुज्जयत्येभ्यो लोकेभ्यो भ्रातृव्यं
15 प्रणुदते ॥ यस्यैकधा मध्य उन्नतं[11] स्यात्तस्मिन्यजेत स्वर्गकामो ऽतो
वै देवास्स्वर्गं लोकमायन्स्वर्गस्य लोकस्य समष्ट्यै यत्रौषधयो बह्वी-
रन्या अन्या इव स्युस्तस्मिन्यजेत पशुकाम ओषधयो वै पशवो भूमा-
नमेव पशूनामुपैति यत्रौषधयः कृच्छ्रशः पर्यायशः परीयुस्तस्मिन्य-
जेत पशुकामो ऽतो वै देवाः पशूनुदसृजन्त पशूनेवोत्सृजते यद्दक्षम-
20 लोमकं[12] तस्मिन्याजयेद्यं[13] द्विष्याद्भृद्दं वा एतदोषधिभिर्यद्दक्षमलोम-
कमोषधयः पशवः पशुभिरेवैनं व्यर्धयति ॥ यत्समया देवयजनं पन्था

---

[1] Kap. S. 38, 5 कृच्छ्रादाहंत्यमूषो [2] So corr. Ch नामयं; Kap. S. 38, 5 = Corr. [3] So corr. Ch वमु; Kap. S. 38, 5 = Corr.; desgl. MS 3, 8, 3. [4] So corr. Ch हुत्वावो°; Kap. S. 38, 5 हता°; MS 3, 8, 3 = Corr. [5] So corr. Ch हुंतस्त°; Kap. S. 38, 5 हतस्तस्माहर [6] So corr. Ch पशुनि° [7] So corr. Ch पशनि° [8] So corr. Ch यद्विन्दति [9] So corr. Ch प्रतिष्ठान् [10] So corr. Ch प्रणुद° [11] So corr. Ch मध्य तन्नतो; Kap. S. 38, 5 = Corr. [12] So corr. Ch मालो° [13] So corr. Ch तस्मिन्यायेद्यं

विधावेत्तस्मिन्याजयेद्यं कामयेत व्येनं[1] प्रजया पशुभिश्छिन्द्यामित्येतद्वै विच्छिन्नं नाम देवयजनं व्येनं प्रजया पशुभिश्छिनत्ति यदन्तरापश्च देवयजनं च पन्था विधावेत्तस्मिन्याजयेद्यं कामयेत नैनमपरो[2] यज्ञ उपनमेदित्येतद्वै परिवर्त्म[3] नाम देवयजनं पर्यैणमपरो यज्ञो वृणक्ति यत्रापस्सर्वतस्समवद्रवेयुस्तस्मिन्यजेतान्नकामो दिग्भ्यो वा एतस्मा अन्नं हरन्ति यस्मै हरन्त्यापो ऽन्नं सर्वाभ्य एव दिग्भ्यो ऽन्नाद्यमवरुन्द्धे तदेतत्समापं[4] नाम देवयजनं नीपतममिवर्तसमानानां भवति ॥ २ ॥ 5

cf. Kap. S. 38, 5; Mâitr. S. 3, 8, 3.

यत्रापः प्राचीराहवनीयात्प्रतीचीर्गार्हपत्याद्यवद्रवेयुस्तस्मिन्याजयेद्यमुदके[5] वा पात्रे वा विवाहे वा मीमांसेरन्पाप्मना वा एषो ऽनुषक्तो यमुदके वा पात्रे वा विवाहे वा मीमांसन्ते पाप्मनैवैनं व्यावर्तयति यत्रापो दक्षिणा परिप्लूय पश्चात्प्राची रमेरंस्तस्मिन्यजेत[6] बुभूषन्नापो वै सर्वा देवता एतद्देवताभिर्जुष्टं देवयजनं यद्देवं देवताभिरेव जुष्टे देवयजने यजते भवत्येव यत्रापो दक्षिणत उदीची रमेरंस्तस्मिन्यजेत[7] सजातकाम आपो वै सर्वा देवता देवतास्सजातास्सजातानामेवैनं प्रार्धे[8] करोति कृत्रिमे यजेत बुभूषन्नात्मा वै देवयजनं करोत्येवैनं यत्राग्निं[9] चापश्च पश्यन्प्रातरनुवाकमनुब्रूयात्तस्मिन्यजेत[10] यः कामयेत यज्ञो मापर उपनमेदित्यग्निर्वै[11] सर्वा देवता आपो यज्ञ उपैनमपरो[12] यज्ञो नमति देवताश्च हि यज्ञं च पश्यन्यजते यत्राग्निमपस्सूर्यं पश्यन्प्रातरनुवाकमनुब्रूयात्तस्मिन्यजेत ब्रह्मवर्चसकाम एतद्वै त्रिशुक्रियं 10 15

[1] So corr. Ch न्येनं [2] So corr. Ch निन° [3] So Ch; so auch Kap. S. 38, 5; Böhtlingk vermuthet dafür परिवर्ज्म (Brief vom 18. Dec. 1894). [4] Ch समापन्नाम; cf. Vop. 6, 21; Siddh. K. zu Pâ. 6, 3, 97. [5] So corr. Ch यमुकादे; Kap. S. 38, 6 = Corr. [6] So corr. Ch रमेरस्त° [7] So corr. Ch रमेरे° [8] So Böhtlingks Vermuthung (Brief vom 11. Febr. 1901); Ch etwa प्राच्र्वे, doch ist die letzte Ligatur nicht ganz deutlich; Kap. S. 38, 6 प्रार्थे; प्रार्धे = परिप्रार्धे „er bringt in die Nähe von". [9] So corr. Ch यत्राग्निश्चापश्च; Kap. S. 38, 6 = Corr. [10] So corr. Ch वाकमनुव्रतयात्त°; Kap. S. 38, 6 = Corr. [11] So corr. Ch उपनसेदि° [12] So corr. Ch उपेन°

नाम देवयजनं ब्रह्मवर्चसी भवति यत्पुरस्तादाग्नेः स्याद्देवयजनं तस्मि-
न्यजेत भ्रातृव्यवान्भ्रातृव्याय वा एष लोक उच्छिष्यते यः पुरस्ताद्देव-
यजनस्योच्छिष्यत एतावन्तमेवास्मै लोकमुच्छिंषत्यलोकमेनं करोति
यो ह वै विद्वान्देवयजनं यजत ऋध्नोत्यग्निर्वाव देवयजनमग्नौ हि
5 सर्वा देवता इज्यन्ते यत्रैव क्वचाग्निमाधाय यजेत तेनैवर्ध्नोति[1] ब्राह्म-
णा वाव देवयजनं यत्र ब्राह्मणा बहवस्संराधयेयुस्तस्मिन्यजेत तेनैव-
र्ध्नोति[2] ॥ ३ ॥ cf. Kap. S. 38, 6; Mâitr. S. 3, 8, 4.

वेदिं विमिमीते त्रिंशता पश्चात्प्रक्रमैर्मिमीते षट्त्रिंशता प्राचीं
चतुर्विंशत्या पुरस्ताद्विराजैवैनां पश्चात्परिमिमीते बृहत्या प्राचीं
10 गायत्र्या पुरस्ताच्छन्दोभिरेवैनां सर्वतः परिमिमीते विराज्येव प्रतिति-
ष्ठति यद्विराजमभिसंपादयति[3] स्फ्येन स्तम्बयजुर्हरतीन्द्रो वै वृत्राय व-
ज्रं प्राहरत्स त्रेधाभवत्स्फ्यस्तृतीयं यूपस्तृतीयं रथस्तृतीयं वज्रो वै स्फ्य
एतावती पृथिवी यावती वेदिर्वज्रेणैव पृथिव्या भ्रातृव्यं निर्भजति[4]
त्रिर्हरति त्रय इमे लोका एभ्य एवैनं लोकेभ्यो निर्भजति ॥ तूष्णीं
15 चतुर्थं हरत्यपरिमितादेवैनं निर्भजतीन्द्रो वै वृत्रं हत्वा तमनयाभिन्य-
दधाद्यं तूष्णीं चतुर्थं हरत्यनयैव भ्रातृव्यमभिनिदधाति मूलं छिनत्ति
भ्रातृव्यस्यैव मूलं छिनत्त्युद्धन्ति[5] तस्माच्छिशिर ओषधयः पराभवन्ति
बर्हिस्स्तृणाति तस्माद्वसन्ता पुनराभवन्त्यपाररुमदेवयजनं पृथिव्या
देवयजनाज्जहीति भ्रातृव्यो वा अररुर्भ्रातृव्यमेव पृथिव्या अपहन्ति
20 द्रप्सस्ते द्यां मा[6] स्कानिति यो वा अस्या रसस्स द्रप्सस्तमिमाः प्रजा
उपजीवन्ति तमेवास्यां यच्छति तस्यास्कन्दायाररुर्द्यां मा पप्तदिति[7]
भ्रातृव्यो वा अररुर्भ्रातृव्यमेव स्वर्गाल्लोकात्प्रतिनुदते ॥ विषाद्वै ना-

---

[1] So corr. Ch तेनैवोव्रोति oder वोत्रोति; Kap. S. 38, 6 = Corr. [2] So corr. Ch वब्रोति; Kap. S. 38, 6 वार्ध्नोति [3] So corr. Ch भिमस्पा°; Kap. S. 39, 1 = Corr. [4] So corr. Ch व्यन्नि ऊर्जति: Kap. S. 39, 1 = Corr. [5] So corr. Ch च्छहंति; Kap. S. 39, 1 त्यत्धंति [6] So corr. Ch द्यास्सा [7] So corr. Ch ररुर्म्यामाप्तदिति

मासुर[1] आसीत्स पृथिवीं विषेणालिम्पत्तस्या न कश्चनाश्नाद्य आ-
श्नात्सो ऽरूप्यद्यदुद्घ्नन्ति यदेवास्या अमेध्यमयज्ञियं तदपहन्त्यपि मूल-
मनुखनेदाविद्धस्य निष्कृत्या अधो दूरं खनेदधो वा अस्या वीर्यं वी-
र्यस्याभितृत्त्यै[2] तस्मात्सुकृष्टे व्रीहियवाः[3] पच्यन्ते तदाहुरुत्तरार्धे वा
अस्या वीर्यं तदिमाः प्रजा उपजीवन्ति तस्मान्नातिखेयेत्या प्रतिष्ठा-
याः खनेद्यजमानस्य प्रतिष्ठित्यै दक्षिणात उद्धनां कुर्याद्देवयजनस्य रूपं
रक्षसामपहत्यै पुरीषवतीं पशवो वै पुरीषं पशूनेवावरुन्द्धे ॥ ४ ॥
cf. Kap. S. 39, 1.

स्फ्येन वेदिं परिगृह्णाति वज्रो वै स्फ्य एतावती पृथिवी या-
वती वेदिर्वज्रेणैव पृथिव्या भ्रातृव्यं निर्भज्य छन्दोभिरात्मने परिगृ-
ह्णाति वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसेति दक्षिणतस्तेजो वै
ब्रह्म गायत्री तेजसैवैनं दक्षिणतः परिगृह्णाति रुद्रास्त्वा परिगृह्णन्तु
त्रैष्टुभेन छन्दसेति पश्चादोजो वै वीर्यं त्रिष्टुबोजसैवैनां पश्चात्परिगृ-
ह्णात्यादित्यास्त्वा परिगृह्णन्तु जागतेन छन्दसेत्युत्तराज्जागता वै प-
शव उत्तरादायतनाः पशवः पशुभ्य एवैतदायतनं करोति पशूनां धृ-
त्या अथो तेजसा चोभयतः पशून्परिगृह्णाति पुरा क्रूरस्य विसृपो
विरप्शिन्निति[4] यद्वा अस्यास्तेजो यज्ञियं तददश्चन्द्रमसि[5] तदेवाव-
रुन्द्धे ॥ इध्माबर्हिषी प्रोक्षति शुष्काणि वा एतान्यमेध्यान्यारण्यादा-
हृतान्यापो[6] मेध्या यज्ञिया यदद्भिः प्रोक्षति मेध्ये एवैने[7] यज्ञिये क-
रोति वेदिं प्रोक्षति मेध्यामेवैनां[8] यज्ञियां करोत्यथो यदेवास्या उद्घ्नन्तः[9]
क्रूरं[10] कुर्वन्ति तच्छमयति बर्हिस्स्तृणाति प्रजा वै बर्हिः पृथिवी वेदिः
प्रजा एव पृथिव्यां प्रतिष्ठापयति सर्वां[11] वेदिमनुस्तृणाति तस्मात्पृ-

---

[1] So corr. mit Caland; Ch नामासुरो; cf. TBr 3, 2, 9, 2; Kap. S. 39, 1 नामासुरासीत [2] Ch वीर्यस्याभितृत्यै; Kap. S. 39, 1 वीर्यस्याभिकृप्त्यै [3] So corr. Ch व्रीहि° [4] So corr. Ch विरप्सिन्निति [5] So corr. mit Caland; Ch यज्ञियञ्च ददच्च° cf. TBr 3, 2, 9, 14. [6] So corr. Ch मेध्यागयारगया° [7] So corr. Ch एवैनं [8] So corr. Ch मेवैना [9] So corr. Ch उद्घनन्तः; cf. aber Mâitr. S. 3, 8, 5 p. 100, 7; Kap. S. 39, 2 उद्धंतः [10] So corr. Ch क्रूराः [11] So corr. Ch सर्वां

थिवीँ सर्वामन्वोषधयो बहुलँ स्तृणीयादक्षोधुको यजमानो भवत्यन-
ग्नंभावुको ऽध्वर्युर्बर्हिँषि प्रस्तरँ सादयति यजमानो वै प्रस्तरः प्रजा
बर्हिँर्यजमानमेव प्रजास्वधिसादयत्युत्तरँ[1] सादयत्युत्तरो हि यजमानो
यजमानाद्व्यावृत्तँ सादयति व्यावृत्तो हि यजमानो यजमानेनाक्त्वा[2]
5 प्रस्तरे[3] प्रहरति यजमानो वै प्रस्तरो हविर्भूतमेवैनँ स्वर्गं लोकं गम-
यति नात्यग्रं प्रहरेद्यदत्यग्रं प्रहरेद्वृक्णकेशीर्जनयस्स्युरभ्यासारिणीँर्निम्रुका
अग्रमग्र आदीपयत्यग्रेणैवाग्निँ समर्धयत्यृजुं प्रहरेत्स्वर्गकामस्यर्जुमेवैनँ
स्वर्गं लोकं गमयति यं द्विष्यात्तस्य हूर्छयेत्स्वर्गादेवैनं लोकाद्धूर्छयति[4] ॥
न्यञ्चं प्रहरेद्वृष्टिकामस्य या वा इत आहुतिरुद्यते सामुतो वृष्टिं च्या-
10 वयति[5] स्वयैवाहुत्या दिवो वृष्टिं निनयत्यूर्ध्वं प्रहरेद्यदि कामयेत[6]
पुमानस्य पुत्रो जायेतेत्यूर्ध्व[7] एव हि पुमान्प्रथयित्वा प्रहरेद्यदि काम-
येत स्त्री जायेतेत्येवमेव हि स्त्री प्रथितेव यजमानो वै प्रस्तर एति
वा एतदस्माल्लोकाद्यत्प्रस्तरं प्रहरति यत्तृणमुपगृह्णात्यस्मिन्नेवैनं[8] लोके
यच्छत्यनुप्रहरति यदेवास्यावमृशन्तः[9] क्रूरं[10] कुर्वन्ति यद्विच्छिन्दन्त-
15 स्तच्छमयत्यगा३नग्नी३दित्यगन्नित्यगन्स्वर्गं लोकमित्येवैतदाह श्रावय
श्रौषदिति स्वर्गमेवैनं लोकं गतँ श्रावयति ॥ ५ ॥

cf. Kap. S. 39, 2; Mâitr. S. 3, 8, 5. 6.

देवाश्च वा असुराश्च संयत्ता आसँस्तान्यदस्यास्तेजो यज्ञियमासी-
त्तत्सिँहीरूपमिव महिषीरूपमिव भूत्वान्तरातिष्ठत्ते ऽविदुर्यतरान्वा इ-
यमुपावर्त्स्यति[11] त इदं भविष्यन्तीति तां[12] देवा उपामन्त्रयन्त[13] सा-
20 ब्रवीद्वार्यँ वृणै मामेव पूर्वामग्नेराहुतिरश्नवाता अथ मया यूयँ सर्वा-
न्कामान्व्यश्नवाथेति सा देवानुपावर्तत ततो देवा अभवन्परासुरा अ-

---

[1] So corr. Ch साधय [2] So corr. Ch यजमानोनात्त्वा; Kap. S. 39, 2 यजमानेनाक्त्वा [3] So corr. Ch प्रशुरे; Kap. S. 39, 2 यसारं [4] So corr. Ch छूर्जयति [5] So corr. Ch श्याव° [6] So corr. Ch कामयेत [7] So corr. Ch जायतेत्यूर्ध्वं [8] So corr. Ch यत्तृणमुपरिगृह्णा°; Kap. S. 39, 2 = Corr. [9] Kap. S. 39, 2 यदेवास्या उद्यंतः [10] So corr. Ch क्रूराः; Kap. S. 39, 2 = Corr. [11] So corr. Ch वत्स्यति [12] So corr. Ch तान्देवा [13] So corr. Ch यंत्र

भवन्यस्यैवं विदुष[1] उत्तरवेदिर्न्युप्यते यश्चैवं[2] विद्वान्निवपति भवत्या-
त्मना परास्य भ्रातृव्यो भवति दश पश्चात्तिरश्ची पदानि भवन्ति दशो-
भयतः प्राच्यपरिमिता पुरस्ताद्विराजा संमिता यद्वा असुराणां वित्तमा-
सीत्तद्देवा वेद्याविन्दन्त तद्वेद्या वेदित्वं यद्वेद्यं तदुत्तरवेद्या तदुत्तरवेद्या
उत्तरवेदित्वं यस्यैवं विदुषो वेदिश्च क्रियत उत्तरवेदिश्च न्युप्यते वित्तं[3] चैव 5
वेद्यं च भ्रातृव्यस्य विन्दते प्रजापतेर्वै नासिकाशीर्यत सोत्तरवेदिरभ-
वद्यज्ञः प्रजापतिर्यदुत्तरवेदिं निर्वपति प्रजापतेरेव नासिकां मुखतः
प्रतिदधाति चत्वारि वा एतस्या नामानि नासिका कशारिस्सिंह्युत्त-
रवेदिस्तप्तायन्यसीति[4] तप्ता ह्येनानैद्वित्तायन्यसीति वित्ता ह्येनानैदव-
तान्मा[5] नाथितमिति नाथितान्ह्येनानावदवताद्व्यथितमिति[6] व्यथि- 10
तान्ह्येनानावदग्ने अङ्गिरो यो ऽस्यां पृथिव्यामसि यो द्वितीयस्यां
यस्तृतीयस्यामिति यदेवास्यैषु लोकेषु श्लिष्टं यन्न्यक्तं तदवरुन्द्धे वि-
देदग्निर्नभो नामेति[7] ॥ यद्वा अग्नेर्वामं वसु तन्नभस्तेनेमां पृथिवीं प्रा-
विशज्जानुदघ्नमधस्तस्माज्जानुदघ्नं खेयं तस्यैव वामस्य वसोरनुवित्त्यै
सिंह्यसि महिषसीति सिंहीरूपमिव हि तन्महिषीरूपमिव[8] भूत्वा- 15
न्तरातिष्ठद्देवेभ्यः प्रथस्वेति प्रथयत्येवैनान्देवेभ्यः कल्पस्वेति कल्पयत्ये-
वैनान्देवेभ्यश्शुन्धस्वेति शुन्धत्येवैनान्देवेभ्यश्शुम्भस्वेति शुम्भत्येवैनां[9]
विभ्राड्बृहत्पिबतु[10] सोम्यं मध्वित्यन्तान्कल्पयति देवपात्रं वा उत्तरवेदि-
र्देवपात्रेणैव देवतास्तर्पयत्यथो देवताभ्य एव देवपात्रं निवेदयति ॥
यतीन्वै सालावृकेया आदँस्त आदीयमानास्संमृश्यमाना उत्तरवेदिं 20
समुदक्रामँस्तान्नाभ्यधृष्णुवँस्तेषामेको[11] ऽस्मयत तत[12] एनानभ्यधृष्णुवँ-

---

[1] So corr. Ch विदुषा [2] So corr. mit Caland; Ch यस्यैवं cf. unten p. 113.
[3] So corr. Ch वित्तश्चैव; Kap. S. 39, 3 = Corr. [4] Kap. S. 39, 3 कासारि°
[5] So corr. Ch ह्येनान्वैदेवतान्स [6] So corr. Ch ह्येनानांवदताद्व्य°; Kap. S. 39, 3 = Corr.
[7] cf. oben 2, 9; Kap. S. 39, 3 विदेदग्निनाभा नामेति; MS 3, 8, 5 विदेरग्ने etc.
[8] So corr. Ch मनुषीरूप° [9] So corr. Ch शुंभंभत्ये°: Kap. S. 39, 3 = Corr.
[10] So corr. Ch त्पिपतु [11] So corr. Ch भ्याधृष्णुवाँस्ते
[12] So corr. Ch उत

स्तेषामेकैकमावहेमादिंस्तस्मान्न[1] मोघहासिना भव्यं यन्निस्सारयति य-
देवास्या अभिमृतममेध्यं तन्निस्सारयति प्रोक्षत्येतावती वा इयं पृ-
थिव्यासीद्यावत्युत्तरवेदिस्तां समन्तं रक्षांसि संप्राकम्पन्त तानि देवा
विनुद्यैताभिर्देवताभिस्समन्तं[2] परिन्यदधुर्यत्प्रोक्षत्येतद्देवत्या वा इमा
5 दिशो रक्षांस्येव विनुद्यैताभिर्देवताभिस्समन्तमात्मानं परिनिदधाति॥
गोपीथायैतद्वा एतां पूर्वामग्नेराहुतिरश्नुते यद्व्याघारयत्यथादो ऽब्रवी-
न्मामेव पूर्वामग्नेराहुतिरश्नवाता[3] अथ मया यूयं सर्वान्कामान्व्यश्न-
वाथेत्यथ[4] वा एषां तर्ह्यसुरास्सपत्ना आसंस्ते ऽकामयन्त सपत्नान्स-
हेमहीति सिंह्यसि सपत्नसाही स्वाहेति सपत्नांस्तेनासहन्त ते ऽका-
10 मयन्त पशून्विन्देमहीति सिंह्यसि रायस्पोषवनिस्स्वाहेति पशूंस्ते-
नाविन्दन्त ते ऽकामयन्त प्रजां विन्देमहीति सिंह्यसि सुप्रजावनि-
स्स्वाहेति प्रजां तेनाविन्दन्त ते ऽकामयन्तादित्यास्स्यामेति सिंह्य-
स्यादित्यवनिस्स्वाहेत्यादित्यास्तेनाभवंस्तस्मादिमा आदित्याः[5] प्रजास्ते
ऽकामयन्त यज्ञियास्स्यामेति सिंह्यस्यावह देवान्देवायते[6] यजमानाय
15 स्वाहेति यज्ञियास्तेनाभवंस्ते[7] ऽकामयन्त स्वर्गं लोकमियामेति[8] भूते-
भ्यस्त्वेति॥ देवा वै भूतास्स्वर्गमेव तेन लोकमायन्यस्यैवं विदुष उत्त-
रवेदिर्व्याघार्यते यश्चैवं[9] विद्वान्व्याघारयति सर्वानेवैतया कामान्व्यश्नो-
तीमे वै लोका आधृता आसंस्ते संप्राकम्पन्त तान्देवा एतैर्यजुर्भिर्व्य-
ष्टभ्नुवन्यदेतैः परिधीन्परिदधात्येषां लोकानां विधृत्या अग्निर्वै देवेभ्यो
20 ऽपाक्रामत्स यां प्रथमां प्रावसत्तां पशुष्ववसद्वृष्णोरन्तराशृङ्गं तस्मादू-
र्णास्तुका भवति यां द्वितीयां तां वनस्पतिषु पीतुदारौ[10] तस्मात्पीतु-
दारुर्भवति[11] यां तृतीयां तामोषधिषु सुगन्धितेजने तस्मात्सुगन्धिते-

[1] So corr. Ch वांस्तेषा°; Kap. S. 39, 4 कमबर्हिंनादंस्त° [2] So corr. Ch विनुद्योता° [3] So corr. Ch पूर्वम°; cf. oben; Kap. S. 39, 4 = Corr. [4] So corr. Ch व्यश्नुवा°; s. oben. [5] So corr. Ch आदित्यः [6] So corr. Ch देवयते; s. I, p. 15, 1 Kap. S. 39, 4 देवायते [7] So corr. Ch भवंस्ते [8] So corr. Ch मियमिति [9] So corr. mit Caland; Ch यस्यैवं; cf. unten p. 113. [10] So corr. Ch पौत्तदारौ; Kap. S. 39, 4 प्रौतुदारु [11] So corr. Ch पौत्तदारु°; Kap. S. 39, 4 पौतुदारु°

जनो भवति यदेते संभारा भवन्ति यदेवास्याच्च श्लिष्टं यन्व्यक्तं तदे-
तैस्संभरति स पुनरूपावर्तमानश्शरीरमधूनुत तस्य यन्मांसमासीत्त-
द्गुल्गुल्वभवद्यदस्थि[1] स पीतुदारुर्यानि[2] लोमानि स सुगन्धितेजनो
यदेते संभारा भवन्ति यदेवास्याच्च श्लिष्टं यन्व्यक्तं तदेतैस्संभरत्यग्नेस्स-
र्वत्वायाग्नेः कुलायमस्यग्नेः पुरीषमसीति कुलायमिव ह्येतत्पुरीषमिव 5
यज्ञः प्रत्यष्ठादिति यज्ञस्य प्रतिष्ठित्यै ॥ ६ ॥

cf. Kap. S. 39, 3. 4; Mâitr. 3, 8, 5.

चत्वारो वै देवानां होतार आसन्भूपतिर्भुवनपतिर्भूतानां पतिर्भू-
तस्तेषां त्रयो होत्रेण प्रामीयन्ताथो यज्ञूत उदशिष्यत स प्रमयाद-
बिभेत्स न्यलयत स समुद्रं प्राविशत्स यत्समुद्रे भस्माकुरुत स एष क-
र्दमस्तं मत्स्यः प्राब्रवीत्तमशपदभिगन्ता त्वा हतादिति तस्मान्मत्स्य- 10
मभिगन्ता हन्ति शप्तो हि स तत उद्धृत्य नडं प्राविशत्तस्मान्नडो दग्धः
क्रूर इव वर्वरस्तमश्वश्श्वेतो ऽवमृशन्नन्वविन्दत्तं[3] प्रत्यौषत्तस्मात्स प्रत्यु-
ष्टमुखस्सो ऽक्रन्दत्सा या वागासीत्स सुश्लोकश्शकुनिरभवत्तस्माद्धि स
नष्टैषमभ्यवक्रन्दति[4] विन्दत्येवा तं देवा[5] अनुविद्यानयन्निदं[6] नो होता
भविष्यसीति स प्रमयादबिभेत्तं भ्रातरः प्रमीता अब्रुवन्वयं त इतो 15
वर्म भविष्यामो देवेषु नो भागधेयमिच्छेति ते ऽब्रुवन्यत्किंच हविर्भूतं
बहिष्परिधि स्कन्दात्तदेषां भागधेयमित्येते वाव ते परिधयो यदि ह-
विर्भूतं बहिष्परिधि स्कन्देद्भूपतये स्वाहा भुवनपतये स्वाहा भूतानां
पतये स्वाहेत्यनुमन्त्रयेतैते[7] वै देवास्स्कन्नभागा[8] य एव देवास्स्कन्नभा-
गास्तानेनत्र्मयति यज्ञो वा एतेषां मध्यमो यजमानो दक्षिणार्ध्यो[9] 20

---

[1] So corr. Ch स्तिः; Kap. S. 39, 4 = Corr. [2] So corr. Ch पीत्त°; Kap. S. 39, 4 = Corr. [3] So corr. Ch वमदन्न°; Böhtl. kl. WB s. v. mad sieht अवमदन्न° als Fehler an für अनुमदन्न°; aber Kap. S. 39, 5 वमर्ष्यांमिदन्नन्वविंदत्तं bestätigt das व am Anfang. [4] So corr. Ch नष्टोष° [5] Ch विन्दत्येवा तन्देवा [6] So corr. Ch याचदचो [7] So corr. mit Caland; Ch मन्त्रयैतेते [8] So corr. Ch स्कन्दभागाः; cf. unten. [9] So corr. Ch दक्षिणाव्यो; Kap. S. 39, 5 दक्षिणार्द्ध्यो

भ्रातृव्य उत्तरार्ध्येस्थविष्ठं[1] मध्यमं कुर्याद्वर्षिष्ठं दक्षिणार्ध्ये[2] क्रथिष्ठमुत्तरार्ध्ये[3] स्थविष्ठं प्रथमं परिदधाति प्रथमो हि यज्ञो वर्षिष्ठं दक्षिणार्ध्ये[4] यथा यजमानो दक्षिणतो यज्ञमुपसीदत्येवं तत्पश्चेवोत्तरार्ध्ये[5] पश्चेव हि भ्रातृव्यो यज्ञेनैवैतद्यजमानं प्रतरां करोति यज्ञेन भ्रातृव्यमपनुदते ऽक्ता दक्षिणार्ध्ये[6] प्रहरति मुखत एव यजमानं प्रीणात्यर्थो[7] हविर्भूतमेवैनं स्वर्गं लोकं गमयत्युपवपत्युत्तरार्ध्ये[8] भ्रातृव्यमेवं तदुपवपत्यथ ह स्माहायलः[9] काहोडिः किमु स यजेत यो[10] यज्ञस्य स्कन्नेन न वसीयानित्स्यादिति[11] यत्र स्कन्देत्तदपो[12] निनीय भपतये स्वाहेति प्राक्[13] प्रादेशेन[14] मिमीत भुवनपतये स्वाहेति दक्षिणा[15] भूतानां पतये स्वाहेति प्रत्यग्जनं[16] वा एतद्यज्ञस्यैति यत्स्कन्दतीयं वाव जनो यो[17] वा इमामेति न स पुनरागच्छति जनमेवैतस्य[18] यज्ञस्य यां कामयत आशिषं तामवरुन्द्धे ॥ दिशो[19] मिमीते दिशो वै यज्ञस्य स्कन्नस्याशीर्गच्छति दिग्भ्य एव यज्ञस्याशिषमवरुन्द्धे प्रादेशेन मिमीत एतावद्वै पुरुषे वीर्यं यावदस्य प्राणा अभि यावदेवास्मिन्वीर्यं तेनैनत्संभरत्यपो निनयति म्रियते वा एतद्यज्ञस्य यत्स्कन्दत्यद्भिस्तान्तमभिषिञ्चन्त्यापस्सर्वा[20] देवता देवता एवैनत्प्रवेशयति[21] यदि प्रातस्सवने स्कन्देद्देवाञ्जनमगन्यज्ञस्तस्य[22] यज्ञस्य मेष्टस्य वीतस्य द्रविणेहागम्या

---

[1] So corr. Ch उत्तराव्य°; Kap. S. 39, 5 उत्तराद्र्ये° [2] So corr. Ch दक्षिव्यं; Kap. S. 39, 5 दक्षिणार्ध्ये [3] Kap. S. 39, 5 क्रविष्टमुत्तरार्ध्ये [4] So corr. Ch णाव्यं; Kap. S. 39, 5 णार्धे [5] Kap. S. 39, 5 रार्धे [6] So corr. Ch णाव्यों; Kap. S. 39, 5 णार्ध्ये [7] So corr. Ch प्रीणायो; Kap. S. 39, 5 = Corr. [8] So corr. Ch त्युपवत्यु°; Kap. S. 39, 5 वपत्युत्तरार्ध्ये [9] So corr. Ch स्मह्रायलं; Kap. S. 39, 5 स्माहायलः [10] So corr. Ch यं; Kap. S. 39, 5 = Corr. [11] Kap. S. 39, 5 वसीयानिस्यादिति [12] So corr. Ch त्तदप; Kap. S. 39, 5 = Corr. [13] So corr. Ch प्राङ्; Kap. S. 39, 5 = Corr. [14] So corr. Ch प्रादेशं न; Kap. S. 39, 5 = Corr. [15] Kap. S. 39, 5 दक्षिणो [16] So corr. Ch प्रत्यङ् जनं; Kap. S. 39, 5 प्रत्यग्जानं [17] So corr. Ch या: Kap. S. 39, 5 = Corr. [18] So Ch; Kap. S. 39, 5 यजमानमेवैतस्य [19] So corr. Ch दिशे; Kap. S. 39, 5 = Corr. [20] So corr. Ch तांतमभिषिंचिंत्या° [21] So corr. Ch नत्मवे°, erste Hand नत्सवे [22] Ch द्वेवांजन°

मश्नुते यदभ्यनक्त्यभ्येवैने[1] धारयति मेध्यत्वाय शुष्को वा एष निर्ऋ-
तिगृहीतो यदक्षो नभ्याभ्यामुभयतो बद्ध उपधिभ्यां संदष्टो यदुपा-
नक्ति मेध्यमेवैनं[2] यज्ञियं करोति घोषो[3] वै नामासुर आसीत्स वन-
स्पतीन्प्राविशत्तं देवा गृहीत्वोभयतो ऽबध्नन्यत्स्वेदेदसुर्या[4] वाग्यज्ञम-
5 ववदेद्रक्षांसि यज्ञमन्ववेत्य हन्युरनुगृह्णन्तो यन्ति रक्षसामन्ववायाय
वर्त्मना वै यज्ञं रक्षांस्यन्ववेत्य जिघांसन्ति वैष्णव्या वर्त्मञ्जुहोति वि-
ष्णुर्वै यज्ञो विष्णुनैव यज्ञाद्रक्षांस्यपहन्ति व्यृद्धा वा एषाहुतिर्यामन-
ग्नौ जुहोति यद्धिरण्यमुपास्य जुहोत्यग्निमत्येव जुहोति समृद्ध्यै[5] स्वर्गं
वा एते लोकं प्रेतो यद्धविर्धाने गायत्र्या दक्षिणस्य वर्त्मञ्जुहोत्यस्या-
10 मेवैने आक्रमयति त्रिष्टुभोत्तरस्यान्तरिक्ष एवैने आक्रमयत्याहवनीयं
गमयति स्वर्गमेवैने लोकं गमयति स्वर्गो हि लोक आहवनीयस्त्री-
न्पुरस्तात्प्रक्रमानुच्छिंषति त्रय इमे लोका इमानेवास्मिंल्लोकानुच्छिं-
षति ॥ दिवो वा विष्ण उत वा पृथिव्या इति दक्षिणस्य हविर्धा-
नस्य मेथीमुपमिनोति विष्णुर्वै यज्ञो मुखत एव यज्ञस्याशिषमवरुन्द्धे
15 तां परुषि परुष्याशासान एति विष्णोर्नु कं वीर्याणि प्रवोचमित्यु-
त्तरस्य वैष्णवं वै हविर्धानं स्वयैवैनद्देवतया[6] समर्धयति विष्णोः पृष्ठ-
मसीति छदिरुपरिष्टादधिनिदधातीदमेव तेन करोति यदिदमुत्तरार्धं
शीर्ष्णो विष्णो रराटमसीति पुरस्ताद्रराटमेव तेन करोति विष्णोश्श्नप्त्रे
स्थ इत्यभितश्श्नप्त्रे[8] एव तेन करोति ॥ तिर्यञ्चं पुरस्ताद्विशं विषीव्यन्ति
20 तस्मात्तिरश्ची पुरुषस्य भ्रुवौ[9] विष्णोस्स्यूरसि विष्णोर्ध्रुवो[10] ऽसीति वै-
ष्णवं[11] वै हविर्धानं स्वयैव देवतया सीव्यति स्वया देवतया ग्रन्थिं

---

[1] So corr. Ch भ्योवेने; Kap. S. 40, 1 भ्येवैन [2] So corr. Ch क्ति मेवैनं (am Rande vor मे ein ये oder घे eingeschaltet, wie es scheint); Kap. S. 40, 1 = Corr. [3] So corr. Ch घोषा; Kap. S. 40, 1 = Corr. [4] So corr. Ch सुर्या [5] So corr. Ch समृद्ध्ये [6] So corr. Ch स्वयमेवै°; Kap. S. 40, 1 = Corr. [7] So corr. Ch श्नप्ते [8] So corr. Ch श्नप्ते [9] So corr. Ch भुवो; Kap. S. 40, 1 = Corr. [10] So corr. Ch ध्रुवो; Kap. S. 40, 1 = Corr. [11] So corr. Ch विश्णावं

ग्रथ्नाति यं प्रथमं ग्रन्थिं ग्रथ्नीयात्तं प्रथमं विचृतेदात्मनो[1] गोपीथाय यदन्यं पूर्वं[2] विचृतेदमेहेनाध्वर्युः[3] प्रमीयेतोपरिष्टाच्छम्यास्संनह्यन्ति पश्चादुपमिन्वन्त्यधस्ताद्धि मनुष्या युञ्जन्ति पुरस्तादुपमिन्वन्ति व्यावृत्त्यै ॥ शिरो वा एतद्यज्ञस्य यद्धविर्धानं पुरस्ताद्वर्षीयो भवति पश्चाऌकधीयस्तस्मात्पुरस्तात्पुरुषस्य शिरो वर्षीयः[4] पश्चाऌकधीयो वैष्णवमसि विष्णवे त्वेति संमितमभिमन्त्रयते[5] वैष्णवं वै हविर्धानं स्वयैवैनद्देवतया समर्धयति प्र तद्विष्णुस्स्तवते वीर्येणेति त्रीन्प्रक्रमान्यजमानं प्राञ्चं प्रक्रमयति[6] विष्णुमेवैनं भूतमिमांल्लोकान्गमयति ॥ ८ ॥

cf. Kap. S. 40, 1; Mâitr. S. 3, 8, 7; TS 6, 2, 9.

शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवा दक्षिणस्य हविर्धानस्याधस्तात्परिलिखत्येतद्वा एतयोः पर्वं मुखत एव यज्ञस्य प्राणान्प्रतिदधाति तस्मान्मुखतः प्राणाश्चतुरः[7] परिलिखति चत्वारो हि प्राणाः प्रादेशं प्रादेशं विपरिलिखत्येतावदेतावद्धीमे ऽभि[8] प्राणा असंभिन्दन्तः[9] खनन्ति प्राणानामसंभेदाय यत्संभिन्द्यात्प्राणान्संभिन्द्यात्प्रमीयेत तान्पर एकधा संतृन्दन्ति तस्मात्प्राणाः[10] पर एकधा संतृण्णा देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते सवितृप्रसूत एवैनान्देवताभिरादत्त इदमहं रक्षसो ग्रीवा अपिकृन्तामीति भ्रातृव्यो वै रक्षो भ्रातृव्यस्यैव ग्रीवा अपिकृन्ततीदमहं यो नस्समानो यो ऽसमानो ऽरातीयति तस्य ग्रीवा अपिकृन्तामीति ॥ प्राणा वा उपरवाः प्राणेभ्य एव भ्रातृव्यमन्तरेति ताजक्प्रधन्वाति बृहन्नसि[11] बृहद्ग्रावा बृहतीमिन्द्राय वाचं वदेति बृहती ह्येष[12] इन्द्राय वाचं वदति रक्षोहणं वलगहनं

---

[1] So corr. Ch विसृते° [2] So corr. Ch पूर्वं [3] So corr. Ch विसृतेदमहेनाध्वर्युः; Kap. S. 40, 1 मेहेनाध्वर्युः [4] So corr. Ch वर्षीयत्पश्चा° [5] So corr. Ch सस्मितम°; Kap. S. 40, 1 = Corr. [6] Ch क्रामयति; aber cf. oben. [7] So Ch; Kap. S. 40, 2 प्राणांश्चतुरः [8] So corr. mit Caland; Ch वद्धीमे वि प्राणा; Kap. S. 40, 2 त्येतावदेवतीवद्धीमे प्राणा [9] So corr. Ch असंविन्दन्तः; Kap. S. 40, 2 असंभिंदतः [10] So corr. mit Caland; Ch प्राणान्पर s. Çat. Br. 3, 5, 4, 13. [11] So corr.; Ch schreibt zwei Mal nach einander बृहन्नसि; in Kap. S. 40, 2 steht es nur ein Mal. [12] So corr. Ch ह्युष

वैष्णवीमिति रक्षसामपहत्यै यद्वैष्णवीमिति[1] यज्ञो वै विष्णुस्स्वयैवैनं
देवतया समर्धयति देवाश्च वा असुराश्च व्यभ्यचरन्त[2] ते ऽसुरा देवानां
प्राणेषु वलगान्यखनंस्तान्बाहुमात्रे ऽन्वविन्दंस्तस्माद्बाहुमात्राः खेयाः
प्राणानामनुवित्त्या इदमहं तान्वलगानुद्वपामि यान्नस्समानो यान-
5 समानो निचखानेति यदेवास्यात्र शप्तं यदभिचरितं तदनुविद्योद्वपति
तस्मादेते भिषज्यास्तस्मादामयाविनमनुमर्शयन्ति ॥ सम्राडसि स्वरा-
डसीति साम्राज्यमेवैतैरुपैति गायत्रेण छन्दसावबाढो यं द्विष्मस्त्रैष्टु-
भेन जागतेनेत्येतावन्ति वै छन्दांसि छन्दोभिरेव भ्रातृव्यमवबाधते
किमत्र भद्रं तन्नौ[3] सहेत्याशिषमेवाशास्ते निरस्तो वलगो ऽवबाढो
10 दुरस्युरिति यथायजू रक्षोघ्नो वलगघ्नः प्रोक्षामि वैष्णवानिति रक्ष-
सामपहत्यै यद्वैष्णवानिति यज्ञो वै विष्णुस्स्वयैवैनं देवतया समर्ध-
यति रक्षोघ्नो वलगघ्नो ऽवसिञ्चामि वैष्णवानिति रक्षसामपहत्या
अथो यदेवैषां खनन्तः क्रूरं[4] कुर्वन्ति तच्छमयति यद्वैष्णवानिति यज्ञो
वै विष्णुस्स्वयैवैनं देवतया समर्धयति रक्षोघ्नो वलगघ्नो ऽवस्तृणामि
15 वैष्णवानिति रक्षसामपहत्यै[5] यद्वैष्णवानिति यज्ञो वै विष्णुस्स्वयैवैनं
देवतया समर्धयत्यवसिञ्चत्यव च स्तृणाति तस्मात्प्राणा अन्तरतो
लोमशा उदन्वन्तो रक्षोहणौ वलगहनौ प्रोक्षामि वैष्णवी इति रक्ष-
सामपहत्यै यद्वैष्णवी इति यज्ञो वै विष्णुस्स्वयैवैनं देवतया समर्धय-
त्यृक्षे वा एते तष्टे अमेध्ये आपो मेध्या यज्ञिया यदद्भिः प्रोक्षति
20 मेध्ये[6] एवैने यज्ञिये करोति हनू वा एते यज्ञस्य यदधिषवणे अवि-
तृण्णे भवतस्तस्माद्धनू[7] अवितृण्णे पुरस्तादंहीयसी पश्चाद्वरीयसी एव-
मेव हि हनू द्व्यङ्गुलमन्तराधिषवणे भवति तस्मादियमन्तरा हनू रा-
स्नाकेव[8] रक्षोहणौ वलगहना उपदधामि वैष्णवी इति रक्षसामप-

---

[1] So corr. Ch मितो [2] So corr. Ch व्यभ्यचरत [3] So corr. Ch तन्नो; Kap. S. 40, 2 तनो [4] So corr. Ch क्रूराः; Kap. S. 40, 2 = Corr. [5] So corr. Ch सामहत्यै [6] So corr. Ch मेध्य [7] So corr. Ch भवतत॰ [8] Kap. S. 40, 2 मंतरास्निकेव

हत्यै यद्वैष्णवी इति यज्ञो वै विष्णुस्स्वयैवैनं देवतया समर्धयति रक्षो-
हणौ वलगहनौ पर्यूहामि वैष्णवी इति रक्षसामपहत्यै यद्वैष्णवी इति
यज्ञो वै विष्णुस्स्वयैवैनं देवतया समर्धयति ॥ पर्यूहति तस्माद्धनू अ-
नग्ने अमुषिते बस्वैरोष्ठाभ्यां[1] सृक्काभ्यां[2] श्मश्रुभिश्शिरो वा एतद्यज्ञस्य
यद्धविर्धानं प्राणा उपरवा हनू अधिषवणे दन्ता ग्रावाणो जिह्वा-
धिषवणं चर्म[3] मूर्धा द्रोणकलशो यज्ञः प्रजापतिर्मुखतो वा इदं प्र-
जापतेस्सोमं निष्पिबन्ति तस्मादृजीषं जग्धमिव प्सातमिवैवं[4] हि
दद्भिः[5] प्सातं[6] भवति यो विराजं यज्ञमुखे दोह्यां वेद दुह एनामियं
वाव विराट् तस्या एतदूधो यदधिषवणे स्तना उपरवा वत्सा ग्रावा-
णस्त्वगधिषवणं चर्मर्त्विजो दुहन्ति य एवं विराजं[7] यज्ञमुखे दोह्यां
वेद दुह एनाम् ॥ ९ ॥ cf. Kap. S. 40, 2; Mâitr. S. 3, 8, 8; TS 6, 2, 11.

शिरो वा एतद्यज्ञस्य यद्धविर्धानं ग्रीवा आग्नीध्रमुदरं[8] सद[9] ऊर्गु-
दुम्बरो यत्सदस्यौदुम्बरीं[10] मिनोत्यूर्जमेव मध्यतो दधाति यजमाने च
प्रजासु च तस्मान्मध्यतः प्रजा ऊर्गूर्जयत्यस्मै वै लोकायौदुम्बरी मीयते
ऽमुष्मै यूपस्तस्मादितः पराञ्चं यूपं प्रोक्षत्यमुतो[11] ऽर्वाचीमौदुम्बरीम-
नयोर्लोकयोर्विधृत्या ऊर्ग्वा उदुम्बरो यदमुतो[12] ऽर्वाचीमौदुम्बरीं प्रो-
क्षत्यमुत[13] एवार्वाचीमूर्जं च्यावयत्यस्मिन्नेव[14] लोक ऊर्जं न्यनक्ति प्र-
जापतेर्वा[15] उद्गातोर्गुदुम्बर्यां[16] श्रयते प्रजास्वेवोर्जं न्यनक्ति देवस्य त्वा
सवितुः प्रसव इत्यभ्रिमादत्ते सवितृप्रसूत एवैनां[17] देवताभिरादत्त इद-

---

1 So corr. Ch बन्स्वैरेष्टाभ्यां 2 So corr. Ch सृक्वाभ्यां; Kap. S. 40, 2 etwa स्त्काभ्यां 3 चर्म fehlt in Ch und ist von mir ergänzt; cf. das Ende des Cap. und Kap. S. 40, 2 जिह्वाधिषवणं चर्म 4 So corr. Ch वैव 5 So corr. Ch ऋद्भिप्स्सातं; Kap. S. 40, 2 प्सानमिववैवमिवह्विवद्भिः प्सातं 6 Zu दद्भिः प्सातं cf. Pâ. 8, 3, 37 Vârtt. Schol. 7 So corr. Ch विराजा; Kap. 40, 2 = Corr. 8 So corr. Ch आग्ने° 9 So corr. Ch स ऊर्गु°; cf. MS 3, 8, 9 (p. 108, Z. 7). 10 So corr. Ch सदस्योदु° 11 So corr. Ch प्रोक्ष° 12 So corr. Ch यदुमुतो 13 So corr. Ch प्रोक्ष° 14 So corr. Ch श्याव° 15 So corr. Ch प्रजापतिर्वा; Kap. S. 40, 3 = Corr.; cf. MS 3, 8, 9 प्राजापत्य उद्गाता 16 So Ch उद्गातोर्गुदुम्बर्यां श्रयते; Kap. S. 40, 3 उद्गातोदुंबर्यां सयंते 17 Ch एवैनान्दे°

महं रक्षसो ग्रीवा अपिकृन्तामीति भ्रातृव्यो वै रक्षो भ्रातृव्यस्यैव
ग्रीवा अपिकृन्तति ॥ शुन्धन्तां लोकाः पितृषदना इति शुन्धत्येवैन-
मथो यद्देवास्य[1] खनन्तः क्रूरं[2] कुर्वन्ति तच्छमयति यवमतीरवसिञ्च-
त्यन्नं वै यवा ऊर्गुदुम्बरो ऽन्न एवोर्जं दधाति[3] पितृषदनं त्वा लोकमा-
5 स्तृणामीति यद्वा एतामपबर्हिषं मिनुयुर्गर्तमित्स्यादस्या[4] उत्तरार्धं
ओषधयो ऽस्या एवैनामुत्तरार्धे मिनोत्यगर्तमितमेवाकरुद्द्यां स्तभा-
नान्तरिक्षं पृण दृंहस्व पृथिव्यामिति दृंहत्येवैनां[5] नितानस्त्वा मारुतो
निहन्त्विति मनो वै नितानः प्राणा मारुतास्स्वयैवैनां[6] देवतयावह-
रति ॥ नितानो ह स्म[7] वै मारुतो देवानामौदुम्बरीं मिनोति तेनैवैनां
10 मिनोति मित्रावरुणयोर्ध्रुवेण[8] धर्मणेति मित्रेण वा इमाः प्रजा-
श्शान्ता वरुणेन विधृताः कॢप्त्या[9] एव विधृत्यै ब्रह्मवनिं त्वा क्षत्रवनि-
मित्याशिषमेवाशास्ते ब्रह्म दृंह क्षत्रं दृंहेत्याशिषमेवास्मा आशिष्टां
दृंहति घृतेन द्यावापृथिवी आपृणेथामिति घृतेन द्यावापृथिवी व्यु-
नत्ति तस्मादोषधयो ऽनभ्यक्ता रेभन्ते घृतेनौदुम्बरीमभिजुहोति तेजो वै
15 घृतमन्नमुदुम्बरो ऽन्न एव तेजो दधात्यान्तमेव[10] वनस्पतिषु चौषधिषु
च रसं[11] दधाति ॥ विश्वजनस्य छायासीति विश्वजनस्य ह्येषा छाया
गोत्राद्गोत्राद्ध्येतत्संप्रसर्पन्त्यौदुम्बरीमभि[12] छर्दींषि[13] संमुखानि कुर्या-
द्देवीर्वा एता विशो यदोषधय[14] ओषधयश्छर्दींषि यजमान औदुम्बरी
यजमानमेव प्रजा अभिसंमुखाः करोति छदिर्भवत्यथान्तर्वर्तस्तस्मा-
20 त्पुरुषस्य[15] मांसमथ पर्शुरुदरं[16] वा एतद्यज्ञस्य यत्सदस्तिर्यङ् मिन्व-
न्ति तस्मात्पुरुषे ऽशितं ध्रियते यदन्वङ् मिनुयुर्न पुरुषे ऽशितं ध्रियेत

---

[1] So corr. Ch यद्देवस्य [2] So corr. Ch क्रूरः [3] So corr. Ch दधानि [4] So corr. Ch गंर्तमि° [5] So corr. Ch वैनाच्चिता° [6] Ch वैनान्दे° [7] So corr. Ch स्स [8] So corr. Ch णायोब्रुवेण [9] So corr. mit Caland; Ch कप्ता [10] Ch und Kap. S. 40, 3 त्यांतमेव cf. TS 6, 2, 10, 5. [11] So corr. Ch श्च रसन्द; Kap. S. 40, 3 = Corr. [12] So corr. Ch त्राढ्येत° भिः [13] So corr. Ch कर्दीनेषि [14] So corr. Ch यदौ° [15] So corr. Ch त्यथांतर्वंतस्त°; cf. अन्तर्वर्तं TS 6, 2, 10, 7; Kap. S. 40, 3 भवति तेषांतर्वंर्ग्रस्तस्मा [16] So corr. Ch undeutlich, etwa पर्श्वरु°; Kap. S. 40, 3 यशुरुदरं

पुरुषेण वै यज्ञस्संमितो यज्ञेन पुरुषो यत्सद उभयतश्छिद्रं[1] तस्मात्पु-
रुष उभयतश्छिद्रो विषीव्यन्ति तस्मात्पुरुषो ऽन्तरतो विषूत इन्द्रस्य[2]
स्यूरसीन्द्रस्य ध्रुवो ऽसीत्यैन्द्रं[3] वै सदस्स्वयैव देवतया सीव्यति स्वया
देवतया ग्रन्थिं ग्रथ्नात्यैन्द्रमसीन्द्राय त्वेति संमितमभिमन्त्रयत[4] ऐन्द्रं
वै सदस्स्वयैवैनं देवतया समर्धयति ॥ नव च्छदींषि कुर्याद्यद्यग्निष्टो- 5
मस्यात्तेजसा[5] त्रिवृता[6] संमितं[7] पञ्चदश यद्युक्थ्यः[8] पञ्चदशेन सं-
मितं वज्रः[9] पञ्चदशो वज्रेण संमितं सप्तदश यद्यतिरात्रस्सप्तदशेन[10]
संमितं प्रजापतिस्सप्तदशः प्रजापतिना संमितमेकविंशतिं प्रतिष्ठा-
कामस्य कुर्यादेकविंशो वै स्तोमानां प्रतिष्ठा प्रतिष्ठित्या अथो यज्ञ-
क्रतूनामेव व्यावृत्त्यै या अन्ततस्स्थूणास्ताः क्रधिष्ठाः कुर्याद्यदि काम- 10
येत वर्षेदिति नीचैरिव हि द्यौर्वर्षिष्यन्ती भवति ता वर्षिष्ठाः कुर्या-
द्यदि कामयेत न वर्षेदित्युच्चैरिव हि द्यौरवर्षिष्यन्ती भवति यानि
दक्षिणानि च्छदींषि तान्युत्तराणि कुर्याद्यजमानलोके वा एतानि
यानि दक्षिणानि भ्रातृव्यलोक उत्तराण्युत्तरमेव यजमानमयजमाना-
द्भ्रातृव्यात्करोत्युत्तरो हि यजमानो ऽयजमानात् ॥ १० ॥ 15

cf. Kap. S. 40, 3; Mâitr. S. 3, 8, 9.

इति श्रीयजुर्वेदकाठके चरकशाखायां मध्यमिकायामिषुस्थानकं
नाम पञ्चविंशं संपूर्णम्[11] ॥

---

[1] So corr. Ch यतोश्छिद्रं [2] So corr. Ch इंद्रस्यूर° [3] So corr. Ch सीत्यैंद्रं [4] So corr. Ch सस्मितम°; Kap. S. 40, 3 = Corr. [5] So corr. Ch कुर्याद्यद्यदग्निष्टो-मस्या°; Kap. S. 40, 3 कुर्याद्यद्यग्निष्टोमस्यांमेजसा [6] So corr. Ch तिवृता; Kap. S. 40, 3 तृवृता [7] So corr. Ch मितः; Kap. S. 40, 3 मितं; vgl. auch MS 3, 8, 9 a. E. [8] So corr. Ch पञ्चदशमद्युत्त्यः; Kap. S. 40, 3 पंचदश यद्युक्थ्यः [9] So corr. Ch वज्र प° [10] So corr. Ch रात्रसस्त°; Kap. S. 40, 3 यद्यतिरात्रः [11] So die Unterschrift des Capitels in Ch.

धिष्ण्या न्युप्यन्ते ऽनयोर्लोकयोर्विधृत्यै न्यन्य उप्यन्ते नान्ये ये न्यु-
प्यन्त[1] इमं तैर्लोकं दाधार[2] ये न न्युप्यन्ते ऽमुं तैः पराङ् ह्यसौ लोको
ऽनिरुक्तो ऽग्निर्वै देवेभ्यो ऽपाक्रामत्स पृथिवीं प्राविशत्तं जानुदघ्ने
ऽन्वविन्दंस्तस्माज्जानुदघ्नं खेयमनुविद्यैवैतान्निवपति[3] चात्वालान्निव-
5 पत्येषा वा अग्नेर्योनिस्स्वादेवैनान्योनेर्निवपति यो वेद्यास्तीर्थं वेद न
सदस्यामार्तिमार्छति[4] प्राचीनमाग्नीध्रात्प्रतीचीनं चात्वालात्तेन संचरे-
देतद्वै वेद्यास्तीर्थं य एवं वेद न सदस्यामार्तिमार्छति न प्रत्यङ्[5] सदो
ऽतीयादध्वर्युरुदरं[6] वा एतद्यज्ञस्य यत्सद[7] उदरं यज्ञस्य[8] संकर्षेत्प्रमी-
येत जनो वा एषो ऽध्वर्योर्जनमेति जनता[9] जनतामभीत्य जिनाति
10 यद्यतीयादैन्द्र्या संचरेदैन्द्रं वै सदस्स्वयैव देवतया संचरति न प्राङ्
हविर्धाने शिरो वा एतद्यज्ञस्य यद्धविर्धाने शिरो यज्ञस्य संकर्षेत्प्रमी-
येत यद्यतीयाद्वैष्णव्या[10] संचरेद्वैष्णवं वै हविर्धाने स्वयैव देवतया सं-
चरति तदाहुः क्षैत्रपत्ययैव[11] संचरेदितीयं क्षेत्रस्य पतिस्तेनास्या नै-
त्यमुष्मिन्वै लोके सोम आसीत्तं धिष्ण्या अगोपायंस्तं[12] गायत्र्याह-
15 रन्नेष्टापोत्रोः प्रति गोपीथं तस्मादेते होत्रे[13] व्यृद्धे व्यृद्धसोमपीथे[14] त-
स्मान्न नेष्टा न पोता भवितव्यं तस्मादेतौ संसचन्ता इव यजतस्तमेते
ऽन्वायन्द्वितीयानि नामानि कृत्वा तस्माद्ब्राह्मणो द्विनामार्धुकस्तं[15] प-
र्यविशन्भागधेयमिच्छमानास्तेभ्य एतद्भागधेयमकल्पयद्यद्धिष्ण्यान्व्या-
घारयति स्वेनैवैनान्भागधेयेन समर्धयति तेषां ये[16] नेदिष्ठं पर्यविशंस्ते
20 सोमपीथं प्राप्नुवन्नाहवनीय आग्नीध्रो होत्रीयस्तस्मादेत[17] उपर्युपरि

---

[1] So corr. Ch न्यप्यंत [2] So corr. Ch तैर्लोकन्दार; Kap. S. 40, 4 नेर्लोकं ग्धार [3] Ch न्निर्वपति; cf. oben. [4] cf. MS. 3, 8, 10 p. 109, Z. 16; p. 111, Z. 16. [5] Ch प्रत्यं [6] Kap. S. 40, 4 भीयाद° [7] So corr. Ch यत्सदन उ° [8] So corr. Ch यज्ञ सं° [9] Dies जनता fehlt in Kap. S. 40, 4. [10] So corr. Ch तीयावै° [11] So corr. mit Caland; Ch क्षैत्रपत्यायैव; Kap. S. 40, 4 क्षेत्रपत्ये संचरे° [12] So corr. Ch स्तां [13] So corr. Ch होत्रं [14] cf. oben 24, 6. [15] So corr. Ch द्विनामावुक; Kap. S. 40, 4 = Corr. [16] So corr. Ch यो; Kap. S. 40, 4 = Corr. [17] So corr. Ch होत्रेय° Kap. S. 40, 4 = Corr.

वषट्कुर्वन्तं न हिंसन्ति प्रीता हि न प्रत्यङ् धिष्ण्यानतिसर्पेदध्वर्युः
प्राणा वै धिष्ण्याः प्राणान्संकर्षेन्न[1] प्रत्यङ् होतारं नाभिर्वा एषा य-
ज्ञस्य यद्धोतोर्ध्वं नाभ्याः प्राणो ऽवाचीनमपानो[2] ऽपाने प्राणं दध्या-
त्प्रमीयेत ॥ दक्षिणतो वै देवानां[3] यज्ञं रक्षांस्यभ्यजयंस्तमाग्नीध्रात्पु-
नरपाजयन्यदाग्नीध्राद्धिष्ण्यान्विहरन्ति यज्ञस्याभिजित्यै रक्षसामपहत्यै 5
जम्भो वै नामासुर आसीत्स देवानां यज्ञमगिरत्स आग्नीध्रमपि ना-
गिरद्यदाग्नीध्राद्धिष्ण्यान्विहरन्ति तेन यज्ञो जीवस्तेन मेध्यो ऽङ्गारा-
न्पूर्वयोस्सवनयोर्विहरन्ति[4] शुक्रवती हि ते शलाकान्दीप्यमानांस्तृती-
यसवने तेन तच्छुक्रवत्सर्वाण्यस्य सवनानि शुक्रवन्ति भवन्ति य एवं
वेद ॥ प्राचीभिर्वा आहुतिभिर्देवा अन्यानसुरान्प्राणुदन्त[5] प्रतीची- 10
भिरन्यान्प्रत्यञ्चो धिष्ण्या व्याघार्यन्ते[6] प्राचीरन्या आहुतयो हूयन्ते भ्रा-
तृव्यस्य विनुत्त्या अग्नेर्वा एता वैश्वानरस्य प्रियास्तन्वो यद्धिष्ण्या
यद्धिष्ण्यान्व्याघारयति ता एवैतत्समुद्धर्षयत्यग्निर्वा एष वैश्वानर उ-
पावसृज्यते यदग्निष्टोमस्स ईश्वरो[7] ऽशान्तो यजमानं च सदस्यांश्चा-
भ्युषः प्रोर्णुवीत[8] यजमान आत्मनो ऽनभिदाहाय सवने[9] वै यज्ञस्या- 15
शिष ईरते[10] यत्प्रोर्णुवीत ताभ्य आत्मानमन्तर्दध्यान्नाभिं[11] वै पितरो
ऽभिसंजानत आविर्नाभिं कुर्वीताभीव कर्णौ प्रोर्णुवीत नाशीर्भ्य आ-
त्मानमन्तर्दधाति जानन्त्वेनं पितरो[12] घ्नन्ति वा एतत्सोमं यदभिषुण्व-
न्ति यावन्तः प्रसृप्तास्स्युस्ते सर्वे ऽग्निष्टोममुपगायेयुरन्तो वा अग्नि-
ष्टोमो ऽन्तमेवैनमागत्य समीरयन्तीन्द्रियाय वै कं ब्राह्मणस्सोमं पि- 20
बति यदुपगायेदिन्द्रियं निस्स्वरेत्तस्मान्नोपगेयं[13] संवत्सरो वा अग्नि-

---

[1] So corr. Ch प्राणा सं; Kap. S. 40, 4 = Corr. [2] So corr. Ch मापानो [3] Ch देवानां [4] So corr. Ch रात्पू° [5] So corr. Ch प्रणुदंत [6] So corr.; Ch प्रत्यञ्चौ धिष्ण्यान्व्याघारयतः; Kap. S. 40, 4 प्रत्यंचौ धिष्ण्यां व्याघारयति; cf. MS 3, 8, 10 (p. 110 Z. 16) प्रत्यञ्चो धिष्ण्या व्याघार्यन्ते [7] So corr. Ch ईश्वर शान्तो; Kap. S. 40, 4 = Corr. [8] So corr. Ch प्रार्णु° [9] So Ch; Kap. S. 40, 4 तृतीयसवने [10] So Ch; Kap. S. 40, 4 शिषं कुरुते [11] So corr. Ch नसंतर्दं [12] So corr. Ch पितर [13] So Ch; Kap. S. 40, 4 गायेदिंद्रियं द्वेद्रे निसरेत्त°

ष्टोमो द्वादशाग्निष्टोमस्य स्तोत्राणि द्वादश मासास्संवत्सरस्संवत्सरं प्र-
जा अनुप्रजायन्ते यदग्निष्टोमस्य स्तोत्रे ऽप उपप्रवर्तयति प्रजननाय
यद्वै पत्नी यज्ञे करोति तन्मिथुनं यत्पत्न्यप उपप्रवर्तयति मिथुन एव
रेतः प्रसिञ्चत्युद्गात्रा पत्नीं संख्यापयति वृषा वा उद्गाता पत्न्याः[1] प्र-
5 जाः प्रजायन्ते वृषाणमेवास्यामपिसृजति प्रजननायोरुभ्यां प्रवर्तय-
त्यूरुभ्यां हि प्रजाः प्रजायन्ते प्रजननायान्तरत इव नु देवतान्तरतो[2]
ह्येषा वीर्यं करोति दूरमुपर्युदूहेताह्रीतमुख्यस्या जायते[3] न दक्षिणा
प्रवर्तयेद्यद्दक्षिणा प्रवर्तयेत्पितृभ्यः प्रजां निधूवेदुदीचीः[4] प्राची प्रवर्त-
यत्येषा वै मनुष्याणां दिङ् मनुष्यलोक एवैना उपप्रजनयति ॥ १ ॥
cf. Kap. S. 40, 4; Mâitr. S. 3, 8, 10; TS 6, 3, 1; 6, 5, 8, 6.

10 उपसद्भिर्वै देवा इमांल्लोकान्व्यजयंस्तान्वैसर्जनैरभिव्यसृजन्त[5] यथा
ग्रामस्संग्रामाद्विसृज्यते तद्वैसर्जनानां वैसर्जनत्वं प्राञ्चं सोममिमे[6] प्र-
णयन्ति प्राचीं पत्नीमुदानयन्तीमानेवैतल्लोकानभिप्रयन्त्यग्निना वै
मुखेन देवा इमांल्लोकानभ्यजयन्गार्हपत्येनेममाग्नीध्रेणान्तरिक्षमाहव-
नीयेनामुं यद्गार्हपत्य इमं तेन लोकमभिजयति यदाग्नीध्रो ऽन्तरिक्षं
15 तेन यदाहवनीयो ऽमुं तेन स्वर्गाय वा एष लोकाय प्रह्रियते द्वाभ्यां
गार्हपत्ये जुहोति द्विपाद्यजमानो ऽस्यामेवैनमाक्रमयति[7] यदाग्नेय्या-
ग्नीध्रे[8] जुहोत्यन्तरिक्ष एवैनमाक्रमयति यद्वैष्णव्याहवनीये जुहोति स्व-
र्गमेवैनं लोकं गमयति स्वर्गो हि लोक आहवनीयो[9] रक्षांसि वा
एतमेतर्हि जिघांसन्ति प्रच्युतमितो ऽप्राप्तमदस्त्वं सोमेति सौम्या
20 गार्हपत्ये जुहोति सौमीरिमाः प्रजाः प्रजाभ्य एवैनं प्राह जुषाणो अ-
प्तुरित्यप्तुमेवैनं कृत्वेमामतिनयति यदाग्नेय्याग्नीध्रे जुहोत्यग्निमेवैनं कृ-

---

[1] So corr. Ch पत्नः; Kap. S. 40, 4 पत्न्या [2] So corr. Ch नुभेता°; Kap. S. 40, 4 = Corr. [3] Kap. S. 40, 4 दूहेताद्गातः मुख्य° [4] So corr. Ch undeutlich, etwa प्रजं निधू° oder प्रांनधू° oder प्रजां नेधू°; Kap. S. 40, 4 प्रजानिनुवेद° Caland verm. प्राचीः [5] So corr. Ch कानव्यज° [6] So corr. Ch सोमंमिमे; cf. MS 3, 9, 1 a. A. [7] So corr. Ch क्रयति [8] So corr. Ch यदग्नेय्या° [9] So corr. Ch नीये ॥ र°; Kap. S. 40, 5 = Corr.

त्वान्तरिक्षमपिनयति यद्वैष्णव्याहवनीये जुहोति स्वर्गमेवैनं लोकं गम-
यति स्वर्गो हि लोक आहवनीयस्सर्वेभ्यो वा एष आह्रियते मनुष्येभ्यः
पितृभ्यो देवेभ्यस्त्वं सोमेति सौम्या गार्हपत्ये जुहोति सौमीरिमाः प्रजाः
प्रजाभ्य एवैनं प्राह जुषाणो अप्तुरिति पितृभ्य एवैनं प्राह यदाग्नेय्या-
ग्नीध्रे जुहोत्यग्निस्सर्वा देवता देवताभ्य एवैनं प्राह ॥ वैष्णवो वै सो- 5
मस्तं देवतया व्यर्धयति यदन्यामन्यां देवतां करोति यद्वैष्णव्याहवनीये
जुहोति स्वयैवैनं देवतया समर्धयति सर्वान्वा एतद्वरुणो गृह्णाति
यद्दीक्षिते[1] मनुष्यान्पितॄन्देवांस्त्वं सोमेति सौम्या गार्हपत्ये जुहोति
सौमीरिमाः प्रजाः प्रजा एव वरुणपाशान्मुञ्चति जुषाणो अप्तुरिति
पितॄनेव वरुणपाशान्मुञ्चति यदाग्नेय्याग्नीध्रे जुहोत्यग्निस्सर्वा देवता 10
देवता एव वरुणपाशान्मुञ्चति सो ऽनृण इमांल्लोकानभिविसृजमान
एति तद्वैसर्जनानां वैसर्जनत्वम् ॥ तस्मादाहुरपि वा एतर्ह्यारण्येभ्यः
पशुभ्यो विसृजत इत्याग्नीध्रे ग्राववायव्यानि सादयति प्राञ्चं सोमं प्र-
णयन्त्येतैर्वा एतं घ्नन्ति हन्तृभिरेवैनं व्यावर्तयति न हन्तॄन्प्रतिपद्यते[2] य
एवं वेद पुरस्तात्प्रतिपद्येत रुद्रो वा अग्निः पशवो ऽशवो[3] रुद्राय पशू- 15
नपिदध्यादपशुस्स्यात्पश्चात्प्राञ्चः प्रपद्यन्ते श्रीर्वै सोमः पश्चादिव प्राङ्
श्रियमाप्नोति तस्मात्पश्चात्प्राचीः प्रजाः क्षेत्राण्यभिजयन्तीर्यन्ति पुर-
स्ताद्गतश्रीः प्रपद्येत पुरस्तादेव प्रत्यङ् श्रियमाप्नोतीममेव लोकमभि
प्रतितिष्ठति पश्चात्सोमं प्रपादयन्ति पुरस्ताद्यजमानः प्रपद्यत उभयत
एवास्मै श्रियं परिगृह्णात्युर्वन्तरिक्षं वीहीत्यन्तरिक्षदेवत्यो ह्येष एत- 20
र्ह्यदित्यास्त्वगस्यदित्यास्सदने सीदेत्यादित्यो वै सोमः पृथिव्यदितिः पृ-
थिव्या अनस्संभृतं स्व एवैनं योनौ दधाति ॥ देव सवितरेष ते सोम
इति सविता वै देवानामधिपतिर्मनुष्या एतमतः प्राचीनं गोपाय-

---

[1] So Ch; fast ebenso Kap. S. 40, 5 सर्वात्वा एतन्वरुणो गृह्णाति यद्दीक्षिते [2] So corr. Ch हंतॄन्प्र° [3] Dieses Wort nach einer glänzenden Vermuthung von Caland hier eingefügt; Kap. S. 40, 5 liest पशवो सर्वो; in Ch fehlt सर्वो, das offenbar aus °शवो verdorben ist.

न्ति तस्मा एवैनं संप्रयच्छति गोपीथायैतस्त्वं देव सोम देवानुपागा इति देवो ह्येष देवानुपैतीदमहं मनुष्यान्सह प्रजया सह रायस्पोषेणेति सहैव प्रजया पशुभिरिमं लोकमुपावर्तते नमो देवेभ्यस्स्वधा पितृभ्य इति नमो हि देवानां स्वधा पितॄणां निर्द्रुहो निर्वरुणस्य 5 पाशान्मुक्षीयेति द्रुह एवैनं वरुणपाशान्मुञ्चति स्वरभिव्यख्यमितीमे वै लोकास्स्वरिमानेव लोकानभिविपश्यत्यग्ने व्रतपा इत्यग्निना वा एष तन्वं विपरिधत्ते तानूनप्त्रे सैनमीश्वरा[1] हिंसितोरग्निनैवैतत्तन्वं यथायथं कुरुत एतर्हि वा एष देवैस्तन्वं विसृजते तद्वैसर्जनानां वैसर्जनत्वं[2] यात्मनस्तां पूर्वां ब्रूयाद्यदितरस्य पूर्वां ब्रूयादीश्वरो निकमो[3] 10 यं द्विषात्तस्योत्तरं ब्रूयादग्निर्वै रुद्रो रुद्रायैवैनमपिदधाति ताजकप्रधन्वति ॥ २ ॥ cf. Kap. S. 40, 5; Mâitr. S. 3, 9, 1.

न[4] दीक्षितेन होतव्यं हविर्वै दीक्षितो रुद्रो ऽग्निर्यज्जुहुयाद्धविर्भूतमात्मानं रुद्रायापिदध्याद्यन्न जुहुयाद्यज्ञपरुरन्तरियाद्यदि[5] क्रीतस्सोमस्स्याद्दीक्षितस्याग्नौ जुहुयाद्विसृष्टो[6] हि तर्हि यज्ञः प्रेता आहुतयो 15 भवन्ति यद्यक्रीतो ऽरणी चाज्यं चादाय परेत्याग्निं मथित्वा वैष्णव्यर्चा यूपस्यान्ते जुहुयाद्वैष्णवो वै यूपस्स्वयैवैनं देवतयाच्छैत्यत्यन्यानगां नान्यानुपागामित्यति ह्यन्यानेति नान्यानुपैति यान्नाजुजोषं परि तानवृजमिति यान्हि न जुषते परि तान्वृणक्त्यर्वाक्त्वा परेभ्यो ऽविदं परो ऽवरेभ्य इत्यर्वाग्घ्येनं परेभ्यो विन्दति परो ऽवरेभ्यस्तं त्वा जुषामहे व- 20 नस्पते देवयज्याया इति देवयज्यायै ह्येनं जुषते जुष्टं विष्णव इति यज्ञो वै विष्णुर्यज्ञायैवैनं जुष्टं करोति देवस्त्वा सविता मध्वानक्त्विति घृतं वै देवानां मधु मेध्यमेवैनं यज्ञियं करोत्योषधे[7] त्रायस्वैनमिति वर्मैव करोति स्वधिते[8] मैनं हिंसीरिति वज्रो वै स्वधितिरहिंसायै

---

[1] So corr. Ch मैन॰ [2] So corr. Ch विसर्ज॰ [3] Kap. S. 40, 5 निकामा
[4] Der Anfang dieses Capitels fehlt in Kap. S. (41, 1). [5] So corr. Ch द्यज्ञपरुरंत; cf. PW s. v. यज्ञपरुस् [6] So corr. Ch सृष्टे [7] So corr. Ch त्यों॰
[8] So corr. Ch स्वधिति

यः प्रथमश्शकलः परापतति तमाहरेदेतं वा एतस्य परापतन्तं[1] तेजो ऽनुपरापतति सतेजसमेवैनं मिनोति ॥ यो दक्षिणावृन्न तं वृश्चेद्गर्त्येस्स[2] य उदङ्ङावृतो न तं स्थूरयस्स[3] य ऊर्ध्वशाख ऊर्ध्वशकलस्तं वृश्चेदेष वै यूप्यो य एव यूप्यस्तं वृश्चति यो ऽशुष्काग्रो बहुशाखो बहुपर्णस्तं वृश्चेदोषधयो वै वनस्पतयः पशव ओषधयः पशुभिरेवैनं समर्धयति यश्शुष्काग्रो ऽशाखो ऽपर्णस्तं वृश्चेद्यं द्विष्यात्तस्यौषधयो वनस्पतयः पशव ओषधयः पशुभिरेवैनं व्यर्धयति य उदङ् प्राङुपनतस्तं वृश्चेदेष वै मेधमभ्युपनतो[4] य एव मेधमभ्युपनतस्तं वृश्चति द्यां मा लेखीरन्तरिक्षं मा हिंसीः पृथिव्या[5] संभवेति वज्रो वै यूप एषां लोकानामहिंसाया उदञ्चं प्राञ्चं प्रश्रयत्येष वै देवलोको देवलोकमेवैनमुपप्रश्रयति ॥ वनस्पते शतवल्शो विरोहेत्याव्रश्चने जुहोति वनस्पतिष्वेव भूमानं दधाति तस्मादेत आव्रश्चनाद्भूयांसो[6] जायन्ते सहस्रवल्शा वि वयं रुहेमेत्याशिषमेवाशास्ते यं त्वायं स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेति महते ह्येष सौभाग्याय प्रणीयते यो यज्ञाय प्रणीयते य आरोहस्तं वृश्चेद्यं[7] द्विष्यात्तस्यायोनिर्वा एषो ऽनायतनो य आरोहो ऽयोनिमेवैनमनायतनं[8] करोति यस्स्वारुस्तं वृश्चेदेष वै योनिमानायतनवान्यस्स्वारुर्योनिमन्तमेवायतनवन्तं[9] यजमानं करोति गुल्फदघ्ने वृश्चेत्परुर्हि गुल्फो यज्ञपरुषा[10] संमितं जानुदघ्ने वृश्चेत्परुर्हि जानु यज्ञपरुषा संमितं यावत्यनक्षसङ्गस्स्यात्तावति वृश्चेद्यज्ञपरुषा संमितं पशूनामप्रतिनोदाय ॥ ३ ॥

cf. Kap. S. 41, 1; Mâitr. S. 3, 9, 2. 3.

---

[1] So corr. Ch परापतंतत्तेजो [2] So corr. mit Caland; Ch द्गर्म्येस्सं; s. Kâush. Br. 10, 2. [3] So corr. Ch सं [4] So corr. Ch भ्यपानतो; Kap. S. 41, 1 = Corr. [5] So corr. Ch व्याः [6] So corr. Ch आवृश्चनाः प्रयांसो; cf. MS 3, 9, 3 (p. 116, Z. 7) नाद्भूयांसो; Kap. S. 41, 1 आव्रनाद्भयांसा [7] So corr. Ch द्यां; Kap. S. 41, 1 = Corr. [8] So corr. Ch वैनामनायतनां; Kap. S. 41, 1 यानिमेवैतमनायनतं [9] So corr. Ch योनिमना°; Kap. S. 41, 1 योनिमाः ना° [10] So corr. Ch यज्ञपुरुषा; cf. unten.

पशुसंमितो व्रश्च्यो दशारत्निर्दश[1] वै पशोः प्राणा आत्मैकादशो ऽष्टा अश्वयो द्वे परुषी आत्मैकादशः[2] पशुसंमितमेव वृश्चति स्तोमसंमितो व्रश्च्यो नवारत्निस्तेजसा[3] त्रिवृता संमितः पञ्चदशारत्निर्व्रश्च्यः[4] पञ्चदशेन संमितो वज्रः पञ्चदशो वज्रेण संमितस्सप्तदशारत्निर्व्रश्च्यस्सप्तदशेन[5] संमितः प्रजापतिस्सप्तदशः प्रजापतिना संमित एकविंशत्यरत्निर्व्रश्च्य[6] एकविंशेन संमितो ऽसा आदित्य एकविंशो ऽमुनादित्येन संमितस्सप्तविंशत्यरत्निर्व्रश्च्यस्सप्तविंशेन संमितस्त्रिणवा इमे लोका एभिर्लोकैस्संमितस्त्रयस्त्रिंशदरत्निर्व्रश्च्यस्त्रयस्त्रिंशेन संमितस्त्रिंशद्देवता देवताभिस्संमितश्छन्दस्संमितो व्रश्च्यः पञ्चारत्निः पङ्क्त्या छन्दसा[7] संमितष्षडरत्निरतिच्छन्दसा संमितस्सप्तारत्निश्शक्वर्या संमितो ऽष्टारत्निर्गायत्र्या संमितो नवारत्निर्बृहत्या संमितो दशारत्निर्विराजा संमित एकादशारत्निस्त्रिष्टुभा संमितो द्वादशारत्निर्जगत्या संमितस्त्रयोदशारत्निस्साध्यैर्देवैस्संमितो बृहन्नपरिमितो व्रश्च्यो यूपाद्वै देवास्स्वर्गं लोकमायन्स्वर्गस्य लोकस्य समष्ट्यै य एव कश्च पुरुषाद्वर्षीयान्स्यात्तं वृश्चेदेषा वै यूपस्य[8] मात्रा यावानेव यूपस्तं वृश्चति चषालं[9] भवति चषालाद्वै[10] देवास्स्वर्गं लोकमायन्स्वर्गस्य लोकस्य समष्ट्या इन्द्रो वै वृत्राय वज्रं प्राहरत्तस्य यावदालब्धमासीत्तत्प्राशीर्यत तच्चषालं[11] प्रत्यवृञ्जन्यच्चषालं[12] भवति द्रढिम्न[13] एवालब्ध्या[14] अशिथिलत्वायेयद्भवत्येतावद्धि तदालब्धमासीन्न यूपस्यातिरेचयेद्यदतिरेचयेदर्बुदिनीर्जनयस्स्युर्यावदुत्तममङ्गुलिकाण्डं तावदतिरेचयेद्यद्भपरु-

---

[1] So corr. Ch दशारात्रिर्दश [2] So corr. Ch कादशः [3] So corr. Ch नवारत्रि° [4] So corr. Ch रत्रि° [5] So corr. Ch र्व्यष्टव्य [6] So corr. Ch र्व्यष्टव्य [7] So corr. Ch पांत्त्याश्छंदसास्स° [8] So corr. Ch यूपस्ये [9] So corr. Ch चशालं; Kap. S. 41, 2 वषालं [10] So corr. Ch दशालद्वै; Kap. S. 41, 2 = Corr. [11] So corr. Ch तच्चशालम्; Kap. S. 41, 2 तच्चखालं [12] So corr. Ch यच्चशालं; Kap. S. 41, 2 यच्चखालं [13] So corr. Ch द्रढिम्न; Kap. S. 41, 2 Lücke. [14] So corr. Ch एवालब्या; आलब्धि zwar nur bei Gramm., doch die Conj. an dieser Stelle auch von Böhtlingk gebilligt (Brief vom 18. Dec. 1894); Kap. S. 41, 2 Lücke.

षा[1] संमितं पशूनामप्रतिनोदाय यद्वै यज्ञस्यातिरिच्यते साध्यान्तद्देवा-
नभ्यतिरिच्यते यज्ञस्य तदतिरिच्यते यद्यूपस्यातिरिच्यते साध्यानेव
तेन देवान्प्रीणात्यन्यस्य वृक्षस्य चषालं कुर्याद्यस्य च यूपस्स्याद्यं का-
मयेत भ्रातृव्यमस्मै जनयेयमिति भ्रातृव्या वा एतस्यान्ये वनस्पतयो
भ्रातृव्यमेवास्य लोकमभ्यारोहयत्यलोकमेनं करोति ॥ ४ ॥ 5
cf. Kap. S. 41, 2; Mâitr. S. 3, 9, 2.

पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेति यूपं प्रोक्षत्येभ्य एवैनं लो-
केभ्यः प्रोक्षत्यस्मै वै लोकायौदुम्बरी मीयते ऽमुष्मै यूपस्तस्मादितः प-
राञ्चं यूपं प्रोक्षत्यमुतो ऽर्वाचीमौदुम्बरीमनयोर्लोकयोर्विधृत्यै[2] देवस्य
त्वा सवितुः प्रसव इत्यभिमादत्ते सवितृप्रसूत एवैनां देवताभिरादत्त
इदमहं रक्षसो ग्रीवा अपिकृन्तामीति भ्रातृव्यो वै रक्षो भ्रातृव्यस्यैव 10
ग्रीवा अपिकृन्तति शुन्धन्तां[3] लोकाः पितृषदना इति शुन्धत्येवैनम-
थो यदेवास्य खनन्तः[4] क्रूरं[5] कुर्वन्ति तच्छमयति यवमतीरवसिञ्चत्यन्नं
वै यवास्तेजो यूपो ऽन्न एव तेजो दधात्यन्नं वै यवा वज्रो यूपो ऽन्न
एव वज्रं दधाति ॥ पितृषदनं त्वा लोकमास्तृणामीति यद्वा एतमप-
बर्हिषं मिनुयुर्गर्तमित्स्यादस्या उत्तरार्धं ओषधयो ऽस्या एवैनमुत्त- 15
रार्धे मिनोत्यगर्तमितमेवाकस्स्वावेशो ऽस्यग्रेगा नेतृणामिति यूपश-
कलमवास्यत्यृक्षो वा एष तष्टो ऽपशव्यस्तत्वचसमेवैनं मिनोति घृतेन
द्यावापृथिवी आपृणेथामिति घृतेनैव द्यावापृथिवी व्युनत्ति तस्मा-
दोषधयो ऽनभ्यक्ता रेभन्ते देवस्त्वा सविता मध्वानक्त्विति घृतं वै दे-
वानां मधु मेध्यमेवैनं यज्ञियं करोति ॥ सुपिप्पला ओषधीस्कृधीति 20
चषालं प्रतिमुञ्चत्योषधीरेव फलं ग्राहयति तस्मादेता अकृष्टपच्याः
पच्यन्ते घृतेनाग्निष्ठामनक्ति तेजो वै घृतं यजमानो ऽग्निष्ठास्तेजसैव

[1] So Ch; in Kap. S. 41, 2 यज्ञपुरुषासंमितं  [2] So corr. Ch मनयं ल्लोकयोर्वि॰
[3] Ch शुंधतां  [4] So corr. Ch धिनंतः; Kap. S. 41, 3 यदवास्य खनंतः क्रूर कुर्वंति
[5] So corr. Ch क्रूराः; Kap. S. 41, 3 क्रूर

यजमाने[1] समर्धयत्याक्तं संततमनक्ति तेजसस्संतत्या अविच्छेदाय[2] यं
द्विष्यात्तस्य विच्छिन्द्यात्तेजसैवैनं व्यर्धयति सर्वतो ऽनक्ति सर्वत एवैनं
तेजसा समर्धयति द्यामग्रेणास्पृक्ष आन्तरिक्षं मध्येनाप्राः पृथिवीमु-
परेणादृंहीरिति वज्रो वै यूप एषां लोकानां विधृत्यै ॥ ता[3] वां वा-
5 स्तूनीति वैष्णव्यावहरति वैष्णवो वै यूपस्स्वयैवैनं देवतयावहरति
विष्णोः कर्माणि पश्यतेति वैष्णव्या कल्पयति वैष्णवो वै यूपस्स्व-
यैवैनं देवतया कल्पयत्यग्निं प्रत्यग्निष्ठां कुर्यात्तेजो वा अग्निर्यजमानो[4]
ऽग्निष्ठास्तेजसैव यजमानं समर्धयति यं द्विष्यात्तस्येत्थं वेत्थं वा नम-
येत्तेजसैवैनं व्यर्धयति ब्रह्मवनिं त्वा क्षत्रवनिमित्याशिषमेवाशास्ते ब्र-
10 ह्म दृंह क्षत्रं दृंहेत्याशिषमेवास्मा आशिष्टां[5] दृंहति तद्विष्णोः परमं
पदमिति वैष्णव्योदीक्षते वैष्णवो वै यूपस्स्वयैवैनं देवतयोदी-
क्षते ॥ ५ ॥ cf. Kap. S. 41, 3; Mâitr. S. 3, 9, 3.

अर्धं वेद्यां यूपावटस्य कुर्यादर्धं बहिर्वेदि[6] परिमितस्य चापरिमि-
तस्य चावरुद्ध्यै नाविरूपस्य कुर्याद्यदाविरूपस्य कुर्याद्गर्तमित्स्या-
15 न्नापरिवीतमवसृजेद्यदपरिवीतमवसृजेत्क्षोधुको यजमानस्स्यान्नग्नंभा-
वुको ऽध्वर्युरूर्ग्वै[7] रशना मध्यं प्रतिपरिव्ययत्यूर्जमेव मध्यतो दधाति
यजमाने च प्रजासु च तस्मान्मध्यतः प्रजा ऊर्गूर्जयत्यरशनं मिनुयाद्यं
द्विष्यात्तस्योर्ग्वै रशनोर्जैवैनं व्यर्धयत्यूर्ध्वामुदूहेदवाचीं यं द्विष्यात्तस्यो-
र्ग्वै रशनोर्जैवैनं व्यर्धयत्युपरि दूरे परिव्ययेद्यदि कामयेत वर्षेदित्यन्नो
20 वा एष ओषधिभ्यो वर्षति यर्हि वर्षत्योषधयो रशनौषधीरेव नेदीयो
वृष्ट्याः करोति ताजक्प्रवर्षत्यधो दूरे परिव्ययेद्यदि कामयेत न वर्षे-
दित्यन्नो वा एष ओषधिभ्यो वर्षति यर्हि वर्षत्योषधयो[8] रशनौष-
धीरेव दवीयो[9] वृष्ट्याः करोति चिरं प्रवर्षति परिवीरसि परि त्वा

---

[1] So corr. Ch मान [2] So corr. Ch अविश्छेदायन्द्वि° [3] So corr. Ch तां [4] So corr. Ch अग्निं यज° [5] So corr. Ch आशिष्टान्दृं° [6] So corr. Ch वहिर्वदि [7] So corr. Ch ध्वर्यु ऊर्ग्वै [8] So corr. Ch त्यौषधयो [9] So corr. Ch देवीयो; Kap. S. 41, 4 = Corr.

दैवीर्विशो[1] व्ययन्तामिति दैवीर्वा एता विशो यदोषधय ओषधयो रशना यजमानो यूपो यजमानमेव प्रजा अभिसंमुखाः[2] करोति परीमं रायो मनुष्यमिति पशवो वै रायः पशुभिरेवैनं समर्धयत्यन्तरिक्षस्य सानूपेषेति स्वरुमुपोहत्यन्तरिक्षदेवत्यो ह्येष एतर्ह्युपरीवास्माल्लोका- दधो ऽमुष्मात्स्वयैवैनं देवतयापोहति पितॄणामुपरं मनुष्याणामूर्ध्वमु- परादोषधीनां रशनां प्रति[3] विश्वेषां देवानामूर्ध्वं[4] रशनाया इन्द्रस्य चषालं साध्यानामतिरिक्तमेवमिव वा एषु लोकेषु पितरो मनुष्या देवास्सर्वदेवत्यो यूपस्सर्वाभिरेवैनं[5] देवताभिस्समर्धयत्यग्नेरर्धादुपनतं यूपस्य कुर्याद्बहिष्टान्निर्णतमग्नेर्वा[6] अर्धादुपनतेन यजमानाय लोकं करोति बहिष्टान्निर्णतेन भ्रातृव्यं यज्ञान्निर्णुदते ॥ यज्ञेन वै देवास्स्वर्गं लोकमायंस्ते ऽकामयन्तेमं नो लोकमन्यो नानुप्रजानीयादिति ते दिशो ऽयोपयन्यद्दिशो ऽयोपयंस्तद्यूपस्य यूपत्वं ते ऽमुं लोकं गत्वा व्य- तृष्यंस्ते ऽविदुरमुतःप्रदानाद्वा इहाजगामेति त एतं पुनः प्रायच्छंस्ते- नार्ध्नुवन्नेष[7] वै यज्ञस्य तन्तुरेष उत्तमपदी यथा वै मयूखात्तन्त्वं तायत एवमतो यज्ञस्तायते तं ह स्म वा एतं पुरावृह्यैव जुह्वति यत्स्वरुं जुहोत्येतस्यैव निष्क्रीत्यै सो ऽस्य निष्क्रीतः प्रीतस्स्वगाकृत इमांल्लो- कानुपतिष्ठते द्यां ते धूमो गच्छत्वन्तरिक्षमर्चिः पृथिवीं भस्म स्वाहे- तीमानेवैनं लोकान्गमयति[8] ॥ ६ ॥ cf. Kap. S. 41, 4; Mâitr. S. 3, 9, 4.

साध्या वै नाम देवा आसन्पूर्वे देवेभ्यस्तेषां न किंचन स्वमासीत्ते ऽग्निं मथित्वाग्नौ जुह्वत आसत तस्माद्बन्धोः[9] पशवो ऽजायन्त तस्मा- दाग्नेयास्सर्वे पशव उच्यन्ते यदग्निं मथित्वा पशुमालभते प्रजातमेवै- नमालभते ऽथो यथापूर्वमेव करोति तदाहुः पशुमालभ्याग्निर्मथितव्य

---

[1] So corr. Ch देवो°; Kap. S. 41, 4 = Corr. [2] Kap. S. 41, 4 अभिसंमुखीः [3] So corr. Ch पति; Kap. S. 41, 4 = Corr. [4] So corr. Ch देवनामू° [5] So corr. Ch रेवनन्देव° [6] So corr. Ch बहिष्टानिर्णमग्ने° [7] So corr. Ch तेनावुवन्नेष [8] So corr. Ch लोकं ग°; Kap. S. 41, 4 = Corr. [9] Ch तस्माद्वन्ध्योः; Kap. S. 41, 5 तस्माद्द्वंद्वो

इत्यग्निस्सर्वा देवतास्सर्वा एव[1] देवताः पशव आलभ्याय जनयति
पशुना सर्वाणि सवनानि पशुमन्ति वीर्यावन्ति कर्तव्यानि यद्वपया[2]
प्रातस्सवने चरन्ति तेन तत्पशुमद्वीर्यावद्यद्दक्षिणाभिर्मध्यन्दिने तेन
तत्पशुमद्वीर्यावद्यदितरेण पशुना तृतीयसवने तेन तत्पशुमद्वीर्याव-
5 त्सर्वाण्यस्य सवनानि पशुमन्ति वीर्यावन्ति भवन्ति य एवं वेद ॥
सर्वाभ्यो[3] वा एष दिग्भ्य ऋद्ध्या आलभ्यते यत्पशुर्यत्प्राञ्चमाप्रीणन्ति[4]
देवलोकं तेनाभिजयति यदुदञ्चमाप्रीतं[5] नयन्ति मनुष्यलोकं तेनाभि-
जयति यद्दक्षिणतः परिहृत्यावद्यन्ति पितृलोकं तेनाभिजयति यत्प्रती-
चीनं समवत्तं[6] हरन्त्येतां तेन दिशमभिजयति यदूर्ध्वस्तिष्ठञ्जुहोति[7]
10 स्वर्गं तेन लोकमभिजयति पशुना वै देवास्स्वर्गं लोकमायंस्ते शरीर-
मधून्वत[8] स्वर्गो वपा यद्वपया प्रातस्सवने चरन्ति स्वर्गस्य लोकस्य
समष्ट्यै यदितरेण पशुना तृतीयसवने शरीरस्य निष्क्रीत्यै यार्द्रा बहु-
पर्णा[9] तयोपाकुर्यादोषधयो वै वनस्पतयः पशव ओषधयः पशुभिरे-
वैनं समर्धयति या शुष्कापर्णा तयोपाकुर्याद्यं द्विष्यात्तस्यौषधयो वै
15 वनस्पतयः पशव ओषधयः पशुभिरेवैनं व्यर्धयति ॥ घोरो वा अन्यो
वज्रश्शिवो ऽन्यो यश्शुष्कस्स घोरो य आर्द्रस्स शिवो य एव शिव-
स्तेनोपाकरोति बर्हिषोपाकरोति पशवो वै बर्हिः पशुभिरेवास्मै प-
शूनुपाकरोत्युपावीरसीत्युप ह्येषो ऽवत्युप देवान्दैवीर्विशः प्रागुरिति
दैवीर्वा एता विशो यत्पशवः पशूनेवास्मा उपाकरोति वह्नीनुशिज
20 इत्यृत्विजो वै वह्नय उशिज ऋत्विग्भ्य एवैनानुपाकरोति बृहस्पते
धारया वसूनीति ब्रह्म वै बृहस्पतिर्ब्रह्मणा[10] प्रजाः प्रजायन्ते ब्रह्मणै-

---

[1] So corr. Ch एवै; Kap. S. 41, 5 = Corr. [2] So corr. Ch यद्वपयः; Kap. S. 41, 5 यद्वपय [3] So corr. Ch सर्वेभ्यो; Kap. S. 41, 5 = Corr. [4] So corr. Ch यत्प्राञ्च आप्रीणंति; Kap. S. 41, 5 यत्प्राचीनं प्रीणंति [5] So corr. Ch माप्रीरन्नयंति; Kap. S. 41, 5 = Corr. [6] So corr. Ch समवर्तं; Kap. S. 41, 5 समवत्तं [7] Ch तिष्ठं जु°; ebenso Kap. S. 41, 5. [8] So corr. Ch मधूनुत; Kap. S. 41, 5 शरीरमधून्वतः; cf. MS 3, 9, 6 a. A. (p. 123, Z. 9). [9] So corr. Ch यान्द्रा बहुवर्णा; Kap. S. 41, 5 = Corr.; cf. unten. [10] Ch ब्रह्मणाः

वैनाः प्रजनयति देव त्वष्टर्वसु रण्वेति[1] त्वष्टा वै रूपाणां विकर्ता सो
ऽस्मै रूपाणि विकरोति रेवती रमध्वमिति ब्रह्म वै बृहस्पतिः पशवो
रेवतीर्ब्रह्मणैवास्मै पशून्यच्छत्यग्नेर्जनित्रमसीत्यग्नेर्ह्येतज्जनित्रं वृषणौ स्थ
इति न ह्यमुष्काः[2] प्रजाः प्रजायन्ते प्रजननायोर्वश्यस्यायुरसि पुरूरवा
असीति माता वा उर्वश्यायुर्गर्भः पिता पुरूरवा रेतो घृतं यद्घृतेना- 5
रणी समनक्ति मिथुन एव रेतो दधाति गायत्रं छन्दो ऽनुप्रजायस्व
त्रैष्टुभं जागतमित्येतावन्ति वै छन्दांसि च्छन्दोभी रेतो हितं प्रजायते
छन्दोभिरेवास्मै रेतो हितं प्रजनयति ॥ दक्षिणा वर्तयत्येषा वा आदि-
त्यस्य प्रजनिष्णुस्तनूस्तामेवानुप्रजायते ऽमी वा एतर्हि यजमानम-
भिसंधत्तो भवतं नस्समनसा इति समनसा एवैनौ[3] करोति मा हिं- 10
सिष्टं यज्ञपतिं मा यज्ञं जातवेदस इत्यात्मनो ऽहिंसायै शिवौ[4] भवत-
मद्य न इति शिवा एवैनौ कुरुते रक्षसां[5] वा एते ऽनवजयाय[6] परि-
धीयन्ते यत्परिधयो[7] यदुपर्युपरि प्रहरेद्रक्षोभ्यस्तीर्थं कुर्यात्संधिना वा
प्रहरत्यग्रेण वा तीर्थेनैव स्रुवेण जुहोति संजग्मानाभ्यामेवाभ्यां भाग-
धेयमपिदधाति ॥ ७ ॥ cf. Kap. S. 41, 5; Mâitr. S. 3, 9, 5. 6. 15

सावित्रीमन्वाह सवितृप्रसूत एवैनं प्रजनयत्येकदेवत्यामन्वाहैक-
धैवैनं प्रजनयति यद्द्विदेवत्यामनुब्रूयाद्भ्रातृव्यमस्मै[8] द्वितीयं जनयेद् द्या-
वापृथिव्यामन्वाह प्रजानां प्रजातानां परिगृहीत्यै न धूमवतीमनुब्रू-
यादिन्द्रो वै यद्वृत्रमहंस्तस्य[9] यत्र यत्र व्यृद्धमासीत्ततो[10] धूम उदायत
व्यृद्धाद्वा[11] एष जातो[12] व्यर्धुकमस्मै[13] भवति यदि मथ्यमानो न जायेत 20
रक्षोघ्नीमनुब्रूयाद्रक्षसामपहत्या अनवानमनुब्रूयादवानं वा अनु यज्ञं

---

[1] So corr. Ch रेणेति [2] Ch ह्यमुष्का [3] So corr. Ch एवैनो [4] So corr. Ch शिवो [5] So corr. Ch रक्षसा; Kap. S. 41, 5 = Corr. [6] Kap. S. 41, 5 एतेनविशेयाय [7] So corr. Ch परिधायो [8] So corr. Ch द्वैव° [9] So corr. mit Caland; Ch यत्रमहंस्तस्य; Kap. S. 41, 6 वै यद्वृत्तमहं तस्य [10] So corr. Ch व्यद्ध°; Kap. S. 41, 6 व्यृत्ध° [11] So corr. Ch वृद्धा°; Kap. S. 41, 6 वृधा [12] So corr. Ch जातौ; Kap. S. 41, 6 = Corr. [13] So corr. Ch व्यवुकम°; Kap. S. 41, 6 व्यंधुकम°

रक्षांसि जिघांसन्ति रक्षोभ्य एवातीर्थं करोति गायत्रीं ब्राह्मणस्या-
नुब्रूयाद्गायत्रो हि ब्राह्मणस्त्रिष्टुभं राजन्यस्य त्रैष्टुभो हि राजन्यो जगतीं
वैश्यस्य जागतो हि वैश्यो यथाछन्दसमेव ॥ देवस्य त्वा सवितुः प्र-
सव इति रशनामादत्ते सवितृप्रसूत एवैनां[1] देवताभिरादत्त[2] ऋतस्य
त्वा देवहविः पाशेन प्रतिमुञ्चामीति यो वै यज्ञियो मेध्यस्स ऋतस्य
पाशस्तेनैवैनमालभते ऽमुष्मै जुष्टमिति यस्या एव देवताया आल-
भते तस्या एव जुष्टं करोति धर्षा मानुषं[3] इति वज्रो वै यूपः पशवो
मानुषा वज्रेणैवास्मै पशून्यच्छत्यृक्षो वा एष तष्टो ऽमेध्यो यत्पशुं[4]
नियुनक्ति मेध्यमेवैनं यज्ञियं करोति ॥ पुरस्ताद्वै पशवो मेधमुपति-
ष्ठन्ते देवता एतस्मिन्प्राणा यत्पुरस्तात्प्रत्यञ्चमाप्रीणन्ति देवतानामे-
वैनमर्धमाप्रीणन्त्यद्भ्यस्त्वौषधीभ्य इत्यद्भ्यो वा एष ओषधिभ्य आल-
भ्यते यत्पशुरद्भ्य एवैनमोषधिभ्यः प्रोक्षत्यनु त्वा माता मन्यतामनु
पितेति पिता च ह्येतस्य माता चानुमन्तारा आपो वै सर्वा देवता-
स्सर्वदेवत्यः[5] पशुस्सर्वाभिरेवैनं देवताभिस्समर्धयति बहु वा एषो
ऽमेध्यमयज्ञियं निगच्छति यत्पशुरापो मेध्या यज्ञिया यदद्भिः प्रोक्षति
मेध्यमेवैनं यज्ञियं करोत्यपां पेरुरसीत्यप[6] उपगृह्णाति यान्यन्तरतो
ऽवदानानि तानि तन्मेध्यानि करोति स्वात्तं हव्यं देवेभ्यो घृतवदि-
त्युरः प्रत्युपोक्षति[7] यान्यधस्तादवदानानि[8] तानि तन्मेध्यानि करोति
सर्वत[9] उपोक्षति सर्वत एवैनं मेधेन समर्धयति शिरो वा एतद्यज्ञस्य
यदाघार आत्मा पशुर्यदाघारमाघार्य[10] पशुं समनक्ति शिर एव यज्ञ-
स्यात्मन्प्रतिदधाति सं ते वायुः प्राणेन गच्छतामिति वायुमेवास्य

---

[1] So corr. Ch एवैनं; Kap. S. 41, 6 und MS 3, 9, 6 (p. 124, Z. 2) = Corr. [2] So corr. Ch राधत्त; Kap. S. 41, 6 und MS 3, 9, 6 (p. 124, Z. 2) = Corr. [3] So Ch; cf. auch oben 3, 5 धर्षा मानुषं अ° [4] So corr. Ch पशुर्नि° [5] So corr. Ch सर्वदेवेभ्यः; Kap. S. 41, 6 सर्वदेवत्य [6] So corr. Ch मेरु° [7] So corr. Ch प्रोत्तति [8] So corr. Ch वधानानि [9] So corr. Ch सर्वत्र [10] So corr. Ch पशुय°

प्राणं गमयति सं यजत्रैरङ्गानीति देवता वै यजत्रा देवता एवास्या-
ङ्गानि गमयति सं यज्ञपतिराशिषेत्याशिषैव यजमानं समर्धयति ॥ ८ ॥
cf. Kap. S. 41, 6; Mâitr. S. 3, 9, 5. 6.

ऋत्विजो वृणीते छन्दांसि वा ऋत्विजश्छन्दांस्येव तद्वृणीते तैरस्य
वृतैर्युक्तैर्वषट्काराः पुरो युज्यन्ते होतारं वृणीते जगतीं तच्छन्दसां[1] वृ-
णीते ऽग्निधं वृणीते पङ्क्तिं तच्छन्दसां[2] वृणीते ऽध्वर्युं वृणीते ऽतिच्छ- 5
न्दसं तच्छन्दसां[3] वृणीते ऽन्तरा होतारं चाध्वर्युं चाग्निधं वृणीते तस्मा-
दग्निर्मध्यत ओषधीः प्रविष्टो यदुत्तमस्संयजति तस्मादुपरिष्टान्मथ्य-
मानो जायते मैत्रावरुणं वृणीते गायत्रीं तच्छन्दसां[4] वृणीते ब्राह्म-
णाच्छंसिनं वृणीते त्रिष्टुभं तच्छन्दसां[5] वृणीते पोतारं वृणीत उष्णिहं
तच्छन्दसां[6] वृणीते नेष्टारं वृणीते ककुभं तच्छन्दसां[7] वृणीते ॥ पश्वा- 10
जमिव वा एतच्छन्दो यदनुष्टुप्पश्वाजेवैषा होत्रा[8] यदच्छावाक्या[9] त-
स्मादच्छावाकमुपैव ह्वयन्ते[10] न वृणते ऽथैता आप्रियः प्रजापतिः प्र-
जास्सृष्ट्वा स रिरिचान इवामन्यत स एता आप्रीरपश्यत्ताभिरात्मान-
माप्रीणीत यज्ञः प्रजापतिर्यज्ञात्मा यजमानो यदेताः पूर्वार्धे यज्ञस्य
क्रियन्ते मुखत एव यजमानमाप्रीणाति प्रयाजान्यजति प्राणा वै प्र- 15
याजाः प्राणानेव तत्प्रयजति[11] तत्प्रयाजानां प्रयाजत्वमनवानमाप्री-
णीयाद्यं कामयेत सर्वमायुरियादिति प्राणा वै प्रयाजा अविच्छिन्ना-
नेवास्मिन्प्राणान्प्रतिदधाति सर्वमायुरेत्यात्मा वै पशोर्वपात्मा यजमा-
नस्याप्रीर्यदुत्तमाप्रीर्वपां परिशय आत्मैवात्मानं परिशये यज्ञस्य संत-
त्या अविच्छेदायैकादश प्रयाजा[12] एकादशानुयाजा एकादशोपयज 20
एतावतीर्वै देवतास्सर्वदेवत्यः पशुस्सर्वाभिरेवैनं देवताभिस्समर्धयति

---

[1] Ch तछंद° [2] So corr. Ch पंक्तिश्छं°; Kap. S. 41, 7 पंक्ति त्तछंदसां [3] So corr. Ch तश्छ° [4] So corr. Ch तश्छं [5] Ch तश्छं° [6] Ch तश्छं° [7] Ch तश्छं° [8] So corr. Ch होता; Kap. S. 41, 7 = Corr. [9] So corr. Ch यदश्छावाक्यास्त°; Kap. S. 41, 7 यदछावाक्या त° [10] So corr. mit Caland; Ch दश्छावक° हूयन्ते; Kap. S. 41, 7 दछावकम° [11] So corr. Ch तत्प्रयति; Kap. S. 41, 7 = Corr. [12] So corr. Ch प्रजा; Kap. S. 41, 7 = Corr.

त्रयस्त्रिंशद्वै देवतास्सोमपास्त्रयस्त्रिंशदसोमपा[1] अष्टौ वसव एकादश रुद्रा द्वादशादित्या वषट्कारश्च प्रजापतिश्च ते सोमपाः प्रयाजा अनुयाजा उपयजस्ते ऽसोमपास्तस्मात्ते बहिर्यज्ञं क्रियन्ते सोमेन वै तद्देवान्सोमपान्प्रीणाति[2] पशुनासोमपांस्ते ऽस्योभये प्रीता यज्ञे भव-
5 न्त्येतद्ध वा उवाच श्यापर्णस्सायकायनो ऽषाढं कैशिनं यत्रैनमदस्सोमान्नयति[3] यदि वै मा सोमान्नेष्यस्युभयैर्मा[4] देवैस्सह नेष्यसि सोमपैश्चासोमपैश्च[5] विदेवस्ते यज्ञो ऽवहास्यते ऽथो यद्व्यञ्चं[6] मा नेष्यन्ति ततस्त्वाभीत्य ज्यास्यन्तीति ते मीमांसित्वेतो[7] नो भयं[8] नास्तीति दक्षिणा प्रत्यञ्चं निन्युस्ततः[9] कुन्तयः[10] पञ्चालानभीत्य[11] जिनन्ति य
10 एवंविदं[12] सोमान्नयत्युभयैरेनं देवैस्सह नयति सोमपैश्चासोमपैश्च विदेवो ऽस्य यज्ञो ऽवहीयते ऽथो यद्व्यञ्चमेनं[13] नयन्ति तत एनमभीत्य जिनन्ति ॥ ९ ॥ cf. Kap. S. 41, 7; Mâitr. S. 3, 9, 8.

देवाश्च वा असुराश्च समावदेव यज्ञे ऽकुर्वत यदेव देवा अकुर्वत तदसुरा अकुर्वत ततो देवा एतमुपांशुमपश्यंस्त एतस्मिन्यज्ञे[14] संस्था-
15 प्यमपश्यंस्तस्मिन्नेव यज्ञे समस्थापयन्नष्टौ[15] कृत्वो ऽभ्यष्टुवन्गायत्रीं[16] तच्छन्द आप्नुवन्नेकादश कृत्वस्त्रिष्टुभं तद्द्वादश कृत्वो जगतीं तत्त्रिर्व्यगृह्णन्त्सवनान्येव[17] तदाप्नुवंस्ते देवा यावानेव यज्ञस्तं परिगृह्योपोदतिष्ठन्होतुं[18] ते ऽसुरा अपश्यञ्जुह्वति[19] वै देवा इति तान्वज्रमुद्यत्याभ्यपतंस्तान्देवा अन्तर्यामेनान्तरदधतेभ्यो लकेभ्यस्ततो देवा अभवन्प-

---

[1] So corr. Ch दसोमपदा [2] So corr. Ch तद्देवाः सो°; Kap. S. 41, 7 तद्देवां [3] So corr. Ch दस्सोमा° [4] So corr. Ch न्नेषस्यु°; Kap. S. 41, 7 नेष्यस्यु° [5] So corr. Ch पश्च; Kap. S. 41, 7 = Corr. [6] So corr. Ch यद्व्रांच्यं; cf. unten; Kap. S. 41, 7 वहास्यते द्रोडंच मा ने° [7] So corr. Ch मीमांसित्वेते; Kap. S. 41, 7 मांसित्वेतो नोभयस्मास्मीति [8] Ch भयन्ना° [9] So corr. Ch निन्य; Kap. S. 41, 7 = Corr. [10] Kap. S. 41, 7 कुंचयः [11] Ch पंचला°; Kap. S. 41, 7 = Corr. [12] Kap. S. 41, 7 एवंवेदं [13] So corr. Ch यद्दंचसेनन्नयन्ति; Kap. S. 41, 7 यद्यंचमेनं [14] So corr. Ch यज्ञे; Kap. S. 41, 8 यज्ञ [15] So corr. Ch ममस्था° [16] So corr. Ch भ्यष्टुवन्गायन्गायत्रीं; Kap. S. 41, 7 भ्य एव गायत्रीं तच्छंद [17] So corr. Ch तं त्रि° [18] So corr. mit Caland; Ch होत्तृं; Kap. S. 41, 7 होत्तु [19] So corr. Ch अपश्यं जु°

रासुरा अभवन्यस्यैवं विदुष उपांशुं जुह्वति यश्चैवं[1] विद्वाञ्जुहोत्येभ्य
एव लोकेभ्यो भ्रातृव्यमन्तर्धत्ते भवत्यात्मना परास्य भ्रातृव्यो भवत्यथ
ह स्माहारुण औपवेशिः किमु स यजेत य उपांशौ[2] यज्ञं संस्थाप्यं न
विद्यादित्यष्टौ कृत्वो[3] ऽभिषुणोति गायत्रीं तच्छन्द आप्नोत्येकादश
कृत्वस्त्रिष्टुभं तद्द्वादश कृत्वो जगतीं तत्त्रिर्विगृह्णाति[4] सवनान्येव त- 5
दाप्नोत्युपांशा एवैतद्यज्ञस्संस्थाप्यते[5] न संस्थितेनारिष्टेनाघात्येन प्रच-
रत्यष्टा अष्टा अभिषुणुयाद्ब्रह्मवर्चसकामस्याष्टाक्षरा गायत्री गायत्री-
मेव यज्ञमुखे ऽधि वियातयति गायत्र्यामेवैतत्तेजसि स्वे योनौ स्वर्गे
लोके यज्ञमुखं तायते मुख्यो भवति य एवं वेद नोपयामगृहीतो
ऽसीति ब्रूयादियं वा उपयामो ऽनया प्राणानपिहन्यान्न पवित्रं वि- 10
तन्वन्यन्तरिक्षं वै पवित्रमन्तरिक्षेण प्राणान्परिगृह्णीयात्प्रमीयेतायं
वाव यः[6] पवते स प्राणस्तस्येदमपय्याहं प्राणिमो यन्नोपयामगृहीतो
ऽसीत्याह न पवित्रं वितन्वन्ति तस्मादयमपरिगृहीतः काममित्थं
चेत्थं च पवते तस्मात्कामं प्राणिमः प्राणपवित्रो वा उपांशुः प्राणै-
रेवैनं पावयति षडंशून्परिगृह्णाति[7] तस्मात्षट्[8] प्राणा द्वन्द्वं पावयति 15
तस्मात्प्राणा द्वन्द्वमुपांशुसवनादुपांशुं[9] निगृह्णाति प्राणो वा उपां-
शुसवनः प्राण उपांशुः[10] प्राणादेव[11] प्राणं निगृह्णात्युत्तर उपांशुस-
वनो भवत्यधरे ऽंशवः[12] प्राणो वा उपांशुसवनः प्रजा अंशवः प्रजा-
स्वेवं प्राणं दधाति तस्मात्प्राण उत्तमः ॥ १० ॥

cf. Kap. S. 41, 8; Mâitr. S. 4, 5, 5 und 6; TS 6, 4, 6.

क्रत्वा दा अस्तु श्रेष्ठो ऽद्य त्वा वर्धन्सुरेक्णाः[13] । 20
मर्त आनाश सुवृक्तिम् ॥

---

[1] So corr. mit Caland; Ch यस्यैवं [2] So corr. Ch उपांशो [3] So corr. Ch क्रत्वा [4] So corr. Ch तं त्रि° [5] So corr. Ch यज्ञे सं° [6] So corr. Ch Ch याः [7] So corr. 41, 8 षडंशून प° [8] So corr. Ch तस्मात्त्वड् [9] So corr. Ch पांशुन्निगृ°; Kap. S. 41, 8 पांशु निगृ° [10] So corr. Ch उपांश [11] So corr. Ch प्राणादेव; Kap. S. 41, 8 = Corr. [12] So corr. Ch धरेंशवः; Kap. S. 41, 8 धरे ँवः [13] So Ch; RV 6, 16, 26 वर्ध॑न्तसु°

इमा ब्रह्म[1] ब्रह्मवाहः क्रियन्त आ बर्हिस्सीद ।
वीहि शूर पुरोडाशम् ॥
उप नस्सूनवो गिरश्शृखन्त्वमृतस्य ये ।
सुमृडीका भवन्तु नः ॥[2]
5 ता नश्शक्तं[3] पार्थिवस्य महो रायो दिव्यस्य ।
महि वां क्षत्रं[4] देवेषु ॥
बृहस्पते जुषस्व नो अग्न आयाहि वीतय एन्द्र सानसिं रयिम् ॥
आ नो भद्राः क्रतवो यन्तु विश्वतो ऽदब्धासो अपरीतास उद्भिदः ।
देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवे दिवे ॥[5]
10 आ नो मित्रावरुणा ॥
आ विबाध्या परिरापस्तमांसि च ज्योतिष्मन्तं रथमृतस्य तिष्ठसि ।
बृहस्पते भीममभित्रदम्भनं रक्षोहणं गोत्रभिदं स्वर्विदम् ॥[6]
पञ्च व्युष्टीः ॥
सखे सखायमभ्यावव्रृत्स्वाशुर्न चक्रं रथे ऽवरोह्यास्मभ्यं[7] दस्म रंह्या ।
15 अग्ने मृडीकं वरुणे सचा विदो मरुत्सु विश्वभानुषु ।
तोकाय तुजे शुशुचान शं कृध्यस्मभ्यं दस्म[8] शं कृधि ॥
अग्निं होतारं मन्ये दास्वन्तं वसुं सूनुं सहसो जातवेदसं विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
20 घृतस्य विभ्राष्टिमनु वष्टि शोचिषाजुह्वानस्य सर्पिषः ॥[9] ॥ ११ ॥
द्रष्ट्रे[10] नम उपद्रष्ट्रे नमो ऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमो

---

[1] ब्रह्म fehlt in Ch; ergänzt nach RV 3, 41, 3. [2] cf. RV 6, 52, 9. [3] So corr. Ch शं॑; cf. RV 5, 68, 3. [4] So corr. Ch क्षेत्रं; cf. RV 5, 68, 3. [5] cf. RV 1, 89, 1. [6] cf. RV 2, 23, 3. [7] So Ch; cf. dagegen RV 4, 1, 3. [8] So corr. Ch दम; cf. RV 4, 1, 3. [9] cf. RV 1, 127, 1. [10] Für dies Capitel ist auch T 6, fol. 7b collationirt worden; die Accente sind nach T 6 gesetzt.

ऽनुकशात्रे[1] नमश्शृण्वते[2] नम उपशृण्वते नमस्सते नमो ऽसते[3] नमो
जाताय नमो जनिष्यमानाय नमो भूताय नमो भविष्यते नमश्चक्षुषे
नमश्श्रोत्राय नमो मनसे नमो वाचे नमो ब्रह्मणे नमश्श्रान्ताय नम-
स्तपसे नमः ॥ १२ ॥

इति श्रीमद्यजुर्वेदकाठके चरकशाखायां मध्यमिकायां धिष्ण्यं
नाम षड्विंशं स्थानकं संपूर्णम् ॥

---

वाचस्पतये पवस्वेति वाच आधिपत्याय पवस्वेत्येवैतदाह तस्मा-
देतया कामं वदामश्च प्र चानिमः प्रजापतिर्वा इदमासीत्तस्य वा-
ग्द्वितीयासीत्तां मिथुनं समभवत्सा गर्भमधत्त सास्मादपाक्रामत्सेमाः[4]
प्रजा असृजत सा प्रजापतिमेव पुनः प्राविशद्वाचस्पतये पवस्वेत्येत-
स्मादेव मिथुनात्प्रजया च पशुभिश्च प्रजायते वाचस्पतये पवस्वेति
ब्रह्म वै वाचस्पतिर्ब्रह्मणैवैनं पावयति वृष्णो[5] अंशुभ्यां[6] गभस्तिपूत
इतीन्द्रो वै वृषा तस्य हस्तौ[7] गभस्ती ताभ्यामेवैनं पावयति ॥ देवो
देवानां पवित्रमसीति देवताभ्य एवैनं निदिशति मधुमतीर्न इष-
स्सोमेन[8] हि सोमं[9] पुनन्ति येषां भागो[10] ऽसीति देवताभ्य एवैनं नि-

---

[1] So T 6 und Ch, ohne Accent; da beide Mss. diese Form neben ख्यात्रे und उपख्यात्रे bieten, habe ich trotz der offenbaren Inconsequenz eine Aenderung nicht für angezeigt gehalten. [2] So corr. Ch शृणुते; T 6 शृणवते ohne Accent. [3] So corr. T 6 सते नमो सते; Ch सते नमो सतो [4] So corr. Ch पक्रा° [5] So corr. Ch वृष्णे; Kap. S. 42, 1 विष्णो [6] So corr. Ch अंशुभ्यं; Kap. S. 42, 1 = Corr. [7] So corr. Ch हस्तो; Kap. S. 42, 1 = Corr. [8] Ch इष सो° [9] So corr. Ch सोमः [10] So corr. Ch भाग

दिशति मधुमतीर्न इषस्कृधीति देवता वा इषो देवेभ्य एवैनं मधु-
मन्तं करोति स्वंकृतो[1] ऽसीति प्राणमेव स्वं कुरुत उर्वन्तरिक्षं वी-
हीत्यन्तरिक्षदेवत्यो ह्येष एतर्हि विश्वेभ्य इन्द्रियेभ्य इति देवेषु चैव
मनुष्येषु च प्राणं दधाति मनस्त्वाष्ट्विति[2] मनसा हि प्राणो धृतस्स्वा-
5 हा त्वा सुभो सूर्यायेति सोमो वै सुभूरमुष्मिन्नादित्ये देवानां प्रियास्त-
न्वस्ता एव तर्पयत्यथो स्वाहाकारेणैवास्मिन्नाहुतीश्श्रीणाति ॥ सर्व-
हुतं जुहोति तस्मात्पराङ् प्राण ऋजुस्तिष्ठञ्जुहोति[3] पुरुषेणैव यज्ञस्सं-
मितः प्राणापानाभ्यां पुरुषस्संततः प्राणापानयोरसंँशराय नाध्वर्युर्वि-
हूर्छति य एवं वेदोत्तरादुपांशुं जुहुयाद्दक्षिणतो ऽन्तर्यामं देवरथो वा
10 एष यद्यज्ञस्तस्यैतौ रश्मी[4] यदुपांश्वन्तर्यामौ देवरथस्यैव पुरस्ताद्रश्मी
विहरति संवत्सरस्य कॢप्त्यै स्वर्गस्य लोकस्य प्रज्ञात्यै तामनुकृतिं मनु-
ष्यरथस्य रश्मी विह्रियेते[5] ऋजू होतव्यौ[6] प्राणानामव्यतिहारायोर्ध्व-
मुन्मृज्याद्यदि कामयेत न वर्षेदित्यमुत्रैव वृष्टिं परिगृह्णात्यवाचीनम-
वमृज्याद्यदि कामयेत वर्षेदिति या वा इतराहुतिरुद्यते सामुतो वृ-
15 ष्टिं च्यावयति[7] सौम्यैवाहुत्या दिवो वृष्टिं[8] निनयति ॥ देवेभ्यस्त्वा म-
रीचिपेभ्य इति परिधौ निमार्ष्टि प्राणा वै देवा मरीचिपास्तानेव[9]
प्रीणात्यथो परिधीनामेवैष सोमपीथो ऽन्तरतो निमार्ष्टि तस्मात्प्रा-
णा अन्तरतो वि वा एतद्यज्ञं[10] छिनत्ति यत्पुराभिषोतोस्संस्थां गम-
यति यदंशूननभिषुतानपिसृजति यज्ञस्य संतत्या अविच्छेदाय षडंशू-
20 नपिसृजति तस्मात्षट् प्राणा द्वन्द्वं तस्मात्प्राणा द्वन्द्वमाद्रीस्सन्तो[11]

---

[1] So auch oben Kâṭh. 4, 1; Kap. S. 42, 1 स्वांकृतो [2] So corr. Ch मन-स्त्वाष्टेति; cf. oben 4, 1; Kap. S. 42, 1 मनस्त्वाष्ट्रेति; MS 4, 5, 5 = Corr. [3] Ch तिष्ठं जु° [4] So corr. Ch रश्मी [5] So corr. Ch रश्मीन्विह्रियते; Kap. S. 42, 1 रश्मी विहरेते [6] So corr. Ch होतव्यो; Kap. S. 42, 1 = Corr. [7] So corr. Ch श्यावयति; Kap. S. 42, 1 व्यावयत्य° [8] So corr. Ch वृष्टिर्नि°; Kap. S. 42, 1 = Corr. [9] So corr. Ch चोपा°; Kap. S. 42, 1 = Corr. [10] So corr. Ch एतद्यत्र [11] So corr. Ch संतौ; cf. aber die folgende Anmerkung; Kap. S. 42, 1 संतो संतोः संसृष्टा

ऽसँश्लिष्टा भवन्ति तस्मात्प्राणा आर्द्रास्सन्तो[1] ऽसँश्लिष्टा यो ह वै सो-
मस्य सोमपीथं वेद न सोमपीथाच्छिद्यते[2] नास्य प्रजा यत्ते सोमा-
दाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेत्येष वै सोमस्य सो-
मपीथस्सोममेवैतत्सोमस्य तर्पयति न सोमपीथाच्छिद्यते नास्य प्रजा
य एवं वेद यद्यभिचरेत् ॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां
पूष्णो हस्ताभ्यामादद इत्याददीत प्रहर्षिणो[3] मदिरस्य मदे मृषासा[4]
अस्त्वथ त्वा होष्यामीति मृषैवैनं करोति सर्वदेवत्यो वै सोमस्सर्वा वा
एतर्ह्येतस्मिन्देवता आशँसन्ते मह्यँ होष्यति मह्यँ होष्यतीति[5] देवता
एवैनमाहुतिमभीप्सन्तीरुद्दहन्त्या तमितोस्तिष्ठति प्राणस्यैवास्यान्तं
गच्छति यद्यजुर्वदति देवेभ्य एवैनमावृश्चत्युपाँशुनाभिचरति प्राणो 10
वा उपाँशुः प्राणेनैवास्य प्राणमभिचरति ताजक्प्रधन्वति ॥ १ ॥
cf. Kap. S. 42, 1; Mâitr. S. 4, 5, 5; TS 6, 4, 5.

देवा वै सोमायाभिषुताय पात्रं नाविन्दन्त[6] येनेमं विगृह्णीम-
हीति त इमामेव देवपात्रमपश्यँस्तमनयैव व्यगृह्णतेयं वाव देवपा-
त्रमस्यास्स्थालीः कुर्वन्त्यस्या वायव्यानि प्र श्रेयसः पात्रमाप्नोति य
एवं वेद ब्राह्मणं पात्रेण मीमाँसेत[7] तद्व्रतमुपयामगृहीतो[8] ऽसीतीयं 15
वा उपयामो यदत्र स्कन्दत्यनया तद्यतं नास्य[9] सोमस्स्कन्दति य एवं
वेदोपयामगृहीतो ऽसीत्युपयामगृहीता[10] ह्यतस्सोमा भवन्ति पवित्रं
वितन्वन्ति पवित्रपूता ह्यतस्सोमा भवन्ति स्वर्भानुर्वा आसुरस्सूर्यँ
तमसाविध्यत्स न व्यरोचत तस्माद्देवास्तमो ऽपालुम्पन्यत्प्रथममपालु-
म्पन्सा विष्कृष्णाभवद्यद्द्वितीयँ[11][12] सा फल्गुर्यत्तृतीयँ सा बलक्षी ॥ 20
तस्मात्तस्याः पवित्रं कुर्वन्त्यादित्यस्यैवैनं तन्वा पावयत्यन्तर्यच्छ मघ-

---

[1] Ch संतोस्संम्लिष्टा; Kap. S. 42, 1 संतो संसृष्टा [2] So corr. Ch थाच्छिद्यते
[3] So corr. mit Caland; Ch प्रहर्षिणां [4] Kap. S. 42, 1 महषांसावस्त्वव त्वा [5] So corr. Ch होषति मह्यँ होषतीति; Kap. S. 42, 1 = Corr. [6] So corr. Ch विन्दत
[7] So corr. Ch मेमाँसेत; Kap. S. 42, 2 मीमांसेति [8] So corr. Ch होता [9] Ch तद्यतचास्य [10] So corr.; Ch सोह्यु° [11] So corr. mit Caland; Ch द्वेवा-स्तमोपालु° [12] So corr. Ch द्वितीयाँ; Kap. S. 42, 2 = Corr.

न्याहि सोममित्येभ्य एव लोकेभ्यो भ्रातृव्यमन्तर्धत्ते मधुमतीर्न इष-
स्कृधीति देवता वा इषो देवेभ्य एवैनं मधुमन्तं करोति स्वंकृतो
ऽसीत्यपानमेव स्वं कुरुत उर्वन्तरिक्षं वीहीत्यन्तरिक्षदेवत्यो ह्येष ए-
तर्हि विश्वेभ्य इन्द्रियेभ्य इति देवेषु चैव मनुष्येषु चापानं दधाति
5 मनस्त्वाष्टिति[1] मनसा ह्यपानो धृतस्स्वाहा त्वा सुभो सूर्यायेति सो-
मो वै सुभूरमुष्मिन्नादित्ये[2] देवानां प्रियास्तन्वस्ता एव तर्पयत्यथो
स्वाहाकारेणैवास्मिन्नाहुतीश्श्रीणाति ॥ सूदि[3] कुर्यादन्तर्यामपात्रमूर्ग्वै
सोमो ऽन्तरिक्षमन्तर्यामो ऽन्तरिक्ष एव रसं दधात्यूर्जं पशुषूपांश्वन्त-
र्यामौ वै पशवो ऽनुप्रजायन्त इतरान्ग्रहानन्वन्याः प्रजास्ता असन्नौ
10 जुहोति तस्मादसन्नाः पशवस्सदंदि प्रजायन्ते तस्मात्सद्यो जाताः प-
शवः[4] प्रतितिष्ठन्ति संवत्सरे पुरुषः प्राणाय त्वेत्युपांशुपात्रं सादयति
व्यानाय त्वेत्युपांशुसवनमपानाय[5] त्वेत्यन्तर्यामपात्रं[6] व्यानेन वा इमौ
प्राणापानौ विधृतौ प्राङ् च प्रत्यङ् च न क्षीयेते[7] नायमूर्ध्व उत्क्रा-
मति नेतरो ऽवाङ् संक्रामति व्यानमेव मध्यतो दधाति प्राणापान-
15 योर्विधृत्यै ॥ शृङ्गमुपांशुरेतो ऽन्तर्याम इन्द्रियं प्रजास्सोमपीथ एतौ
ह स्म वै तद्रजनः कौणेयो[8] ग्रहौ धयन्मन्यते[9] यच्छृङ्गं[10] धयति यदेतौ
पूर्वार्धे यज्ञस्य क्रियेते मिथुनमेव यज्ञमुखे दधाति प्रजननाय तस्मा-
दाहुः प्राणापानौ वै प्रजा अनुप्रजायन्त इति पुरुषेण वै यज्ञस्संमि-
तः[11] प्राणापानाभ्यां पुरुषस्संततो यदेते प्रातस्सन्ने आ तृतीयसव-
20 नाच्छयाते[12] प्राणापानाभ्यामेव यज्ञं संतनोति तस्मात्पुरुषात्सुप्तात्प्रा-

---

[1] So corr. Ch त्वाष्टेति; cf. oben 4, 1: 27, 1; Kap. S. 42, 2 मनस्त्वष्टेति
[2] So corr. Ch सुभोरमु°; Kap. S. 42, 2 = Corr.
[3] Kap. S. 42, 2 स्तादि
[4] So corr. Ch पशवाः
[5] So corr. Ch त्वेभ्यु° पानय
[6] So corr. Ch त्वेंत-र्याम°
[7] So corr. Ch चीयेति; Kap. S. 42, 2 चीयेते; cf. unten 27, 3.
[8] So corr. Ch कोणेयो; Kap. S. 42, 2 = Corr.
[9] So Ch; Kap. S. 42, 2 ग्राहो धनमन्यते
[10] So corr. Ch यक्षंगं; Kap. S. 42, 2 यः शृगं
[11] So corr. Ch मिताः
[12] Ch नाछयाते (erste Hand नछायाते; Kap. S. 42, 2 सव-नाछपात्रे

णापानौ नापक्रामतस्ते[1] पुनस्तृतीयसवने प्रयुज्येते तस्मात्सुप्त्वा प्रबु-
ध्यते तस्माद्वा अवाञ्चौ प्राणौ ॥ २ ॥ cf. Kap. S. 42, 2; Mâitr. S. 4, 5, 6. 7.

प्राण उपांशुरपानो ऽन्तर्यामो वागैन्द्रवायवो यदुपांश्वन्तर्यामा
ऐन्द्रवायवो ऽनुगृह्यते प्राणापानयोरेव वाचमुपरिष्टाद्दधाति तस्मा-
त्प्राण्यापान्य पुरुषो वाचं वदति देवा वै प्रातस्सवनमुद्यमं[2] नाशक्नु-
वंस्तृतीयसवने तर्हि वायुरासीत्तं देवाः प्राञ्चं पर्यहरन्प्राणो वायुरैन्द्रो
यज्ञो यदैन्द्रवायवः प्रातस्सवने गृह्यते प्राणेनैव यज्ञं परिगृह्य पुरस्ता-
दुद्यच्छन्ते वायव्यो वा एष पुरासीत्सा वाक्सृष्टा न व्यावर्तताध्वनदेव
स इन्द्रो ऽब्रवीन्मह्यमत्रापिगृह्यतामहमेतां व्यावर्तयिष्यामीति तत
एतमैन्द्रवायवमगृह्णन्सेयं[3] वागिन्द्रियेण व्यावृत्ता वदति स एष
सोमो वाचो व्यावृत्त्यै गृह्यते व्यावृत्तं पापीयसा वदति य एवं वेद
प्रजानां सृष्टानां तौ[4] समभिद्येतां ता न प्राण्यापानमशक्नुवन्नापान्य[5]
प्राणितुं[6] स इन्द्रो ऽब्रवीन्मह्यमत्रापि गृह्यतामहमेतौ प्राणापानौ
विदधिष्य[7] इति तत एतमैन्द्रवायवमगृह्णन्वायव इन्द्रवायुभ्यामनुब्रू-
हीतीन्द्रं मध्ये करोति वायुमभितः प्राणापानयोर्विधृत्या इन्द्रियं वै
व्यानो व्यानेन वा इमौ प्राणापानौ विधृतौ प्राङ् च प्रत्यङ् च न
क्षीयेते[8] नायमूर्ध्व उत्क्रामति नेतरो ऽवाक्संक्रामति व्यानमेव म-
ध्यतो दधाति प्राणापानयोर्विधृत्यै ॥ त्रिर्विगृह्णाति तस्मात्त्रिर्वाग्व-
दति शनकैरुच्चैरथ सूच्चैर्देवा[9] वै वायुमब्रुवंस्त्वया मुखेन वृत्रं[10] हनामे-
ति सो ऽब्रवीद्वार्यं वृणै मदग्रा एव ग्रहा गृह्यान्ता[11] इति तस्माद्वा-

[1] So corr. Ch नाक्रमतस्ते; Kap. S. 42, 2 नापक्रामतते  [2] So corr. Ch मुद्य-यन्नाश°; Kap. S. 42, 3 = Corr.  [3] So corr. Ch गृह्णन्त्सेयं  [4] So corr. Ch सृष्टानो सम°; Kap. S. 42, 3 = Corr.  [5] So corr. Ch प्राण्यपा°; s. die folgende Anm.  [6] So corr. Ch प्राणित्ती; Kap. S. 42, 3 ता नः प्राण्यापानमशक्नुवंन्नापान्यः प्राणितुं  [7] So Ch; Kap. S. 42, 3 विदधिष्ठा इति  [8] So corr. Ch क्षीयते; Kap. S. 42, 3 auch क्षीयते; cf. aber oben 27, 2.  [9] So corr. Ch सूम्च्चै°  [10] So corr. Ch वृत्र  [11] So corr. Ch गृह्णातां इति; Kap. S. 42, 3 गृह्यंता इति; MS 4, 5, 8 (p. 75, Z. 7) = Corr.; cf. Schol. zu Pâ. 3, 4, 96.

त्वया ग्रहा[1] गृह्यन्ते वार्यवृतो ह्यस्य स इन्द्रो ऽब्रवीन्मह्यमत्रापि गृ-
ह्यतामथ त्वै स्तरिष्यामह[2] इति त एतमैन्द्रवायवमगृह्णंस्ततो वृत्रम-
घ्नन्स एष सोमो वार्त्रघ्नो विजित्यै गृह्यते सोमो वै वृत्रस्स हतो ऽपू-
यत्त[3] देवा वायुमब्रुवन्निमं[4] नो विवाहीति सो ऽब्रवीद्वार्यं वृणै मद्दे-
5 वत्यान्येव पात्राण्युच्यान्ता[5] इति तं व्यवात्तस्माद्गन्धमपाहन्स[6] एष प-
शौ[7] प्रमीते तस्मात्तस्मान्नापिगृह्यं सोमस्य हि स राज्ञो गन्धो नैनं रा-
जयक्ष्मो विन्दति य एवं वेद तस्माच्छुक्तं[8] विषजन्ति तस्मादपि[9] तृ-
तीयं वायोः पात्रमथ वायव्यान्युच्यन्ते[10] वार्यवृतानि ह्यस्य ॥ ३ ॥
cf. Kap. S. 42, 3; Mâitr. S. 4, 5, 8.

नाना वा एतौ पुरा सोमा अगृह्णन्मित्राय च वरुणाय च ताः
10 प्रजा अशान्ता अविधृता अन्यान्यां घ्नतीरचरंस्ते देवा अब्रुवन्सहेमं[11]
गृह्णाम मित्रेण वरुणं शमयाम वरुणेन मित्रमिति ततो वा एतं
सहागृह्णंस्ते मित्रेणैव वरुणमशमयन्वरुणेन मित्रं ता इमाः प्रजा
मित्रेण शान्ता वरुणेन विधृता यन्मैत्रावरुणो गृह्यते क्ळृप्त्या एव
विधृत्यै देवा वै मित्रमब्रुवन्वृत्रं हनामेति नेत्यब्रवीन्मित्रो ऽहमस्मि न
15 हिनस्मीति हनामैवेत्यब्रुवन्सो[12] ऽब्रवीद्वार्यं वृणै पयसा मे सोमं श्री-
णानिति तस्मात्पयसा मैत्रावरुणं श्रीणन्ति वार्यवृतं ह्यस्य ततो वृ-
त्रमघ्नंस्तस्माद्राजन्येनाध्यक्षेण[13] वैश्यं[14] घ्नन्ति तं मित्रस्सन्ननृतमकरिति
वरुणो ऽगृह्णादप पशवो ऽक्रामन्स मित्रो वरुण एवानाथत सो ऽब्र-
वीत्सह न एष सोमो गृह्यतामथ त्वातो मोक्ष्यामीति ततो वा एतं

---

[1] So corr. Ch द्वाय्वग्रहा ग्र° [2] So Ch; Kap. S. 42, 3 तरिष्यामह [3] So corr. Ch प्रयत्ते; Kap. S. 42, 3 प्तयत्ते; cf. MS 4, 5, 8 (p. 75, Z. 5). [4] Ch मन्नो [5] So corr. Ch च्यन्ता; Kap. S. 42, 3 पात्राण्युच्चंताम इति; cf. Schol. zu Pâ. 3, 4, 96. [6] So corr. Ch व्यवत्तस्मा°; Kap. S. 42, 3 व्यवारतस्मा° [7] So corr. Ch पशो; Kap. S. 42, 3 पशौ [8] Ch तस्माकुक्तं; Kap. S. 42, 3 तस्माछक्रुं; cf. MS 4, 5, 8 (p. 75, Z. 8). [9] So corr. Ch तस्मादप; Kap. S. 42, 3 = Corr. [10] So corr. Ch वार्याव्यान्यस्यन्ते; Kap. S. 42, 3 वायव्याण्युच्यंते; MS 4, 5, 8 (p. 75, Z. 4) und TS 6, 4, 7, 2 = Corr. [11] So corr. Ch सहेसं; Kap. S. 42, 4 = Corr. [12] So corr. Ch ब्रवन्सो; erste Hand ब्रवीन्सो [13] So corr. Ch मघ्नस्त° [14] Ch वैश्य

सहागृह्णंस्तेनैनं वरुणादमुञ्चद्यन्मैत्रावरुणो गृह्यते निर्वरुणत्वाय प-
शवो वै पयः पशूनां हि पयो यत्पयसा मैत्रावरुणं श्रीणाति पशु-
भिरेवैनं समर्धयत्यसोमो वा एष इत्याहुरोषधय एताः पय एव सोम
इति यत्पयसा मैत्रावरुणं[1] श्रीणाति सोममेवैनं करोत्यथो यदेवा-
स्याभिषुण्वन्तो घ्नन्ति यत्क्रूरं कुर्वन्ति तच्छमयति ॥ शृतेन श्रीणाति
मैत्रं वै शृतं वारुणं प्रतिधुक्स्वेनैवैनौ भागधेयेन समर्धयति मैत्रो
ब्राह्मणो वारुणो राजन्यो यदेष मैत्रावरुणो गृह्यते तस्माद्ब्रह्मपुरोहितं
क्षत्रं यज्ञस्य वै शिरोऽच्छिद्यताथ तर्ह्यश्विना असोमपौ भिषजौ दे-
वानामास्तां तौ देवा अब्रुवन्भिषजौ वै स्थ इदं यज्ञस्य शिरः परिध-
त्तमिति ता अब्रुवतां वार्यं वृणावहै सोमपीथो नौ देवेष्वस्तु ग्रहो
नौ[2] गृह्यतामिति तौ देवा बहिष्पवमानेन पावयित्वा ताभ्यां शुचि-
भ्यां मेध्याभ्यां भूताभ्यां ग्रहमगृह्णंस्तस्मात्स्तुते बहिष्पवमान[3] आश्वि-
नो[4] गृह्यते तस्माद्ब्राह्मणो बहिष्पवमानमासीत पवित्रं हि तत्तस्माद्यं
द्विष्यात्तं बहिष्पवमानात्परिबाधेत पवित्रादेवैनं परिबाधते तौ देवा-
नुपावर्तमानौ तयोर्या भिषज्या तनूरासीत्तां त्रेधा विन्यदधातामग्नौ
तृतीयं ब्राह्मणे तृतीयमप्सु तृतीयं यं कामयेतामयाविनं जीवेदित्यग्ने-
रन्ते ब्राह्मणाय प्रोच्यापः परिब्रूयादेतावद्वै भेषजं यावदेव भेषजं तदस्मै
करोति जीवति सर्वमायुरेति न पुरायुषः प्रमीयते ॥ ४ ॥

cf. Kap. S. 42, 4; Mâitr. S. 4, 5, 8 und 6, 2.

प्राणा वै द्विदेवत्या एकपात्रा गृह्यन्ते तस्मात्प्राणा एकनामानस्ते
द्विपात्रा हूयन्ते तस्मात्प्राणा द्वन्द्वं येन यजुषा प्रयच्छति तेन प्रतिगृ-
ह्णाति प्राणानां संतत्यै प्रतिज्ञात्यै नानुवषट्करोति यदनुवषट्कुर्यात्प्राणा-
न्संस्थापयेत्प्रमीयेत यन्नानुयजति तस्मात्प्राणा असंस्थिता आ च परा

---

[1] So corr. Ch मैत्रावरुणो; Kap. S. 42, 4 मैत्रावरुणां [2] So corr. Ch नो; Kap. S. 42, 4 = Corr. [3] So corr. Ch तस्मात्तुते बहिष्पवमाना; Kap. S. 42, 4 तस्मौ स्तुते बहिः पवमान [4] So corr. Ch आश्विनो; Kap. S. 42, 4 = Corr.

च चरन्ति द्विदेवत्याः[1] पूर्वे भक्षयितव्या ३ इडोपहूया ३ इति मीमां-
सन्ते ॥[2] इडैव पूर्वोपहूया यज्ञस्य यथापूर्वत्वाय प्राणा वै द्विदेवत्याः[3]
पशव इडा यदेवं कुर्यात्पशुभिः प्राणानन्तरियात्प्रमीयेत द्विदेवत्या एव
पूर्वे भक्षयितव्या अन्तरे वै प्राणाः परे पशवः प्राणानेवात्मन्धित्वा प-
शूनुपहूते[4] ॥ ये वा इमे पुरुषे प्राणास्ते द्विदेवत्या वाक्च प्राणश्चैन्द्र-
वायवश्चक्षुश्च[5] मनश्च मैत्रावरुणश्श्रोत्रं[6] चात्मा चाश्विनो ऽग्निर्होता-
सीत्स[7] वषट्कृत्याताम्यदाहितास्येडासीत्तस्य[8] देवा द्विदेवत्यैरन्वौन्दन्प्रा-
णा[9] वै द्विदेवत्याः[10] प्राणैरेवैनं तदभ्यधिन्वन्स[11] इडोपहूतेति प्रत्यप-
द्यत प्राणा वै द्विदेवत्या[12] यद्द्विदेवत्यान्भक्षयति प्राणैरेवात्मानमभि-
धिनोति तस्माद्द्विदेवत्या एव पूर्वे भक्षयितव्यास्ते हि पूर्वे भक्षिता
आश्विनो दशमो गृह्यते ॥ दश हि प्राणास्तं तृतीयं जुहोति शिर एव
प्राणानभिसंहरति समन्तं परिहृत्य भक्षयति श्रोत्रं वा आश्विनस्त-
स्मात्पुरुषस्सर्वतश्शृणोति रक्षांसि वा एतत्पात्रं सचन्ते यद्यज्ञे रिक्त-
मविमुक्तं भवति पुरोडाशमैन्द्रवायवस्य पात्रे ऽवदधाति पयस्यां मै-
त्रावरुणस्य धानामाश्विनस्य[13] रक्षसामपहत्यै तस्मात्प्राणा अदस्ता
अरिक्ता दक्षिणस्य हविर्धानस्याधस्तात्सादयत्येतद्वा एतयोरग्निमद्वी-
र्यावद्यदेवाग्निमद्वीर्यावत्तस्मिन्सादयति पुरुषेण वै यज्ञस्संमितः प्रा-
णापानैः पुरुषस्संततो यदेतानि प्रातस्सन्नान्या[14] तृतीयसवनाच्छेरे[15]
प्राणापानैरेवं यज्ञं संतनोत्येकया च दशभिश्चेत्येतां प्रतिविमुञ्चति य-

---

[1] So corr. Ch द्विदैव°; Kap. S. 42, 5 hier wie im Folgenden = Corr. [2] Die Interpunction ist von mir gesetzt, da Ch मीमांसिन्ते schreibt. [3] So corr. Ch द्विदैव°; cf. oben. [4] Kap. S. 42, 5 प्राणानैवान्मयित्वापशूनुपह्वयति [5] So corr. Ch प्राणाश्चेंद्र° [6] So corr. Ch मैत्रावरुणाः; Kap. S. 42, 5 = Corr. [7] So corr. Ch ग्निहोत्रासन्स; Kap. S. 42, 5 ग्निर्होतसेत्स; cf. Mâitr. S. 4, 6, 1 in der folgenden Anm. [8] So corr. Ch त्यातास्यदाह्रितास्येडासीत्तस्य; Kap. S. 42, 5 वषट्कृत्यातामिडाहिता-सेडासीत्तस्य; cf. Mâitr. S. 4, 6, 1 प्रजापतिर्वै स्वयं होतासीत्सो ताम्यत्तं देवा द्विदेवत्यैरभ्यधावन् [9] So corr. Ch द्विदै° [10] So corr. Ch द्विदै° [11] Ch तदभ्यृधि° [12] So corr. Ch द्विदै° [13] So corr. Ch धानामश्वि° [14] So corr. Ch प्रातस्सन्न्या; Kap. S. 42, 5 प्रातः सन्नान्या [15] Ch नाक्रेरे; Kap. S. 42, 5 तृतीयसवनास्येरे

दर्वाग्विमुञ्चेत्प्राणान्विच्छिन्द्याद्यत्परः प्राणानतिरेचयेत्प्रमीयेत प्राणो वै वायुः प्राणा द्विदेवत्याः प्राणेनैव प्राणान्विमुञ्चति बहु वायव्यं[1] प्रातस्सवने[2] शस्यत एकैव[3] तृतीयसवने तस्माद्बहवो मुखप्राणा एको ऽवाङ्यदि कामयेतावगतमपरुन्ध्युरपरुद्धो[4] ऽवगच्छेदितीदमहममुमामुष्यायणममुष्याः पुत्रममुष्या विश उदूहामीत्यध्वर्योः[5] पात्रमुदूहेदिदमहममुमामुष्यायणममुष्याः[6] पुत्रममुष्यां विश्यध्यूहामीति प्रतिप्रस्थातुः पात्रमध्यूहेदध्वर्युर्वै श्रेयान्पापीयानपरुद्धो ऽवगतमेवापरुणद्ध्यपरुद्धमवगमयति ताजग्व्यवगच्छेते व्यत्यूहेत्पात्राणि यदि कामयेत पापवसीयसं[7] स्यादित्यध्वर्योः पात्राणां लोके प्रतिप्रस्थातुः पात्राणि सादयेत्प्रतिप्रस्थातुः पात्राणां लोके ऽध्वर्योः पात्राणि सादयेदध्वर्युर्वै श्रेयान्पापीयान्प्रतिप्रस्थाता पापीयांसमेव वसीयसो लोके सादयति वसीयांसं पापीयसः पापवसीयसं करोत्येतद्ध[8] वै विपूजनस्सौराकिः पापवसीयसं विदांचकार ॥ ५ ॥ cf. Kap. S. 42, 5; Mâitr. S. 4, 6, 1. 2.

यदि कामयेत यजमानादयजमानं भ्रातृव्यं पूर्वं कुर्यामिति प्रतिप्रस्थाता पूर्वो गृहीत्वा स पूर्वो निरुहेद्यजमानो[9] वै श्रेयान्पापीयानस्माद्भ्रातृव्यो ऽयजमानो भ्रातृव्यमेवास्मात्पूर्वं करोत्यध्वर्योर्लोके तिष्ठञ्जुहोत्यध्वर्युर्वै श्रेयान्पापीयान्प्रतिप्रस्थाता भ्रातृव्यमेवास्य लोकमभ्यारोहयत्यलोकमेनं करोति नयन्नाश्रावयेदध्वर्युरप्रतिष्ठानस्स्यान्नानालभ्य पात्रमाश्रावयेदेतद्वा अध्वर्योस्स्वमस्वस्स्याद्यत्राग्र आहुतिं जुहोति तदुत्तरा जुहुयाद्यत्र वा अग्र आहुतिं जुहोति तद्देवताः परिविशन्ति यदन्यत्रा जुहुयाद्देवताभ्यस्समदं कुर्यात्साक्षादेव देवेभ्यो भागधेयं[10]

---

[1] So corr. mit Caland; Ch वायव्योः; cf. Mâitr. S. 4, 6, 2 (p. 79, Z. 4. 5 वायव्यायां शस्यमानायां etc.); Kap. S. 42, 5 वायव्यं [2] So corr. Ch सवनि [3] So corr. mit Caland; Ch एकोषा; Kap. S. 42, 5 एवोका [4] So corr. Ch येतवागत°; Kap. S. 42, 5 = Corr. [5] So corr. Ch त्यधुर्यो; Kap. S. 42, 5 = Corr. [6] So corr. Ch मुदुहे° [7] So corr. Ch पापवसोयसो; Kap. S. 42, 5 पापवश्रोयस [8] So corr. Ch करोत्येतेतद्ध [9] So corr. mit Caland; Ch निर्द्रव्येद्यजमानो; Kap. S. 42, 6 निद्रहेद्यजमानो [10] So corr. Ch धेय

संप्रयच्छति ॥ नाना वा एतौ पुराग्नी आस्तां पशोश्चाहवनीयश्च[1] त-
स्मात्पुरा रुद्रः पशूनघातुक आसीत्पशवो वै पशवः पशवो ऽँशवो
रुद्रो ऽग्निर्यदाहुतीस्संसृजति रुद्राय पशूनपिदधात्यपशुर्भवति तस्मा-
दिदानीं रुद्रः पशून्घातुको मध्ये ऽग्नेर्जुहुयादाज्याहुतीश्च पश्चाहुती-
5 श्चाभितस्सोमाहुती रुद्रमेव पशुभिः परिवृणक्त्यघातुकस्तत्र रुद्रः पशू-
न्भवति यत्रैवंविदध्वर्युर्भवति ॥ ६ ॥ cf. Kap. S. 42, 6; Mâitr. S. 4, 6, 2.

आयुस्संधत्तं प्राणौ संधत्तमिति प्राणानेव संधत्तस्तस्मात्प्राणा[2] इन्द्वीँ
संजग्माना दिवा पृथिव्येतीमानेव लोकान्समर्धयतो निरस्ता शण्डा-
मर्कौ सह तेन यं द्विष्म इत्येतावान्वै यज्ञो यावच्छुक्रामन्थिना एता-
10 वती पृथिवी यावत्युत्तरवेदिरनृतौ शण्डामर्कावनृतं भ्रातृव्यो ऽनृत-
मेव भ्रातृव्यमेतावता यज्ञाच्च[3] पृथिव्याश्च निर्भजतश्शुक्रस्याधिष्ठान-
मसि मन्थिनो[4] ऽधिष्ठानमसीति समिद्ध एव जुहुतो ऽग्निर्वा आहुत्या
अतिद्रवादबिभेद्यच्छल्कौ प्रास्यत आहुत्या अनतिद्रवाय ॥ चक्षुषी
वा एते यज्ञस्य यच्छुक्रामन्थिनौ यच्छल्कौ प्रास्यतश्चक्षुषोरेवान्तर्ध-
15 त्तो[5] ऽप्रदाहाय तस्मा इन्द्राय सुतमाजुहोत तस्मै सूर्याय सुतमाजुहो-
तेति[6] चक्षुषोर्व्यावृत्त्यै तस्मात्समानं सच्चक्षुर्द्वेधा सर्वहुतौ जुहुतस्सर्व-
मेव प्रजासु चक्षुर्धत्तो यः पात्राणां ग्रहाणां सोमानां मिथुनं वेद
तस्मादेव मिथुनात्प्रजायते स्थालीभिरन्यान्ग्रहान्गृह्णन्ति वायव्यैरन्यां-
स्तत्पात्राणां[7] मिथुनं श्रीणन्त्यन्यान्ग्रहान्नान्यांस्तद्ग्रहाणां मिथुनमाशी-
20 र्वन्तो ऽन्ये सोमा भवन्ति नान्ये तत्सोमानां मिथुनं तस्मादेव मिथु-
नात्प्रजायते ॥ ७ ॥

देवाश्च वा असुराश्च संयत्ता आसन्बृहस्पतिर्देवानां पुरोहित आ-
सीच्छण्डामर्कावसुराणां ते न व्यजयन्त स इन्द्रो ऽवेदुभये हि वै ब्र-

---

[1] So Ch; Kap. S. 42, 6 पशुश्चाहवनीयश्च   [2] So corr. Ch संधत्तस्मा   [3] So corr. Ch यज्ञाश्च   [4] So corr. Ch मंथीनो   [5] So corr. Ch प्रास्यतश्चक्षु°   [6] So corr. Ch जुहोतीति   [7] So corr. Ch रन्यास्त°

ह्लखन्तस्समस्तेन्न विजयामह इति ता उपामन्त्रयत अब्रुवतां वार्यं वृणावहै सोमपीथो नौ[1] देवेष्वस्तु ग्रहौ नौ गृह्येतामिति[2] ताभ्यामेता इन्द्रश्शुक्रामन्थिनौ प्रायच्छदात्मनस्सन्तौ तद्भागधेयमभ्यैतां तस्माद्राष्ट्रमपुरोहितं पराभावुकं तस्माद्भ्रातृव्यायानृतं[3] वदेत्सो ऽमन्यत यदिमा आभ्यामसुरब्रह्माभ्यां[4] होष्यामि तदन्वसुरा आभविष्यन्ति यन्न होष्यामि तदन्वाभविष्यन्तीति[5] ता आददानो ऽपानुदतापनुत्ता[6] शण्डामर्कौ सह[7] तेन यं द्विष्म इति ततो देवा अभवन्परासुरा अभवन्यस्यैवं विदुषश्शुक्रामन्थिनौ जुह्वति यस्यैवं विद्वांसौ[8] जुहुतो भ्रातृव्यस्यापनुत्त्यै भवत्यात्मना परास्य भ्रातृव्यो भवति प्रजापतेर्वा अक्ष्यश्वयत्तस्य कनीनिका परापतत्सा विकङ्कतं प्राविशत्तस्मिन्नाध्रियत सा[9] यवं प्राविशत्तस्मिन्नध्रियत वैकङ्कतं मन्थिनः पात्रं भवति सक्तुभिश्श्रीणाति प्रजापतेरेव चक्षुस्संभरति यजमानदेवत्यो वै शुक्रो भ्रातृव्यदेवत्यो मन्थी हिरण्येन शुक्रं श्रीणाति तेजो वै हिरण्यं तेजसैव यजमानं समर्धयति तस्मादन्यतरच्चक्षुषोस्तेजस्वितरं[10] तस्मादहरेकरूपं सक्तुभिर्मन्थिनं[11] श्रीणाति तेज एव भ्रातृव्यस्य विनयति तस्माद्राची बहुरूपानभिध्वंसयन्नितराणि पात्राणि श्रीणीयाद्यदभिध्वंसयेदक्ष्यामयः[12] प्रजा विन्देदन्धम्भावुको यजमानस्स्यात्प्रजापतेर्वा एते चक्षुषी[13] यच्छुक्रामन्थिनौ[14] यज्ञः प्रजापतिर्यत्प्राञ्चा उद्धृत्य जुहुतस्सवनमुखयोरेव चक्षुषी धत्तस्तस्माद्द्वे सवने शुक्रवती असौ वा आदित्यश्शुक्रश्चन्द्रमा मन्थी यदपिगृह्य प्राञ्चा उद्द्रवतस्तस्मादेतौ प्राञ्चौ यन्तौ न पश्यन्ति यदनपिगृह्य पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ जुहुतस्तस्मात्प्रत्यञ्चौ[15]

---

[1] So corr. Ch नां [2] So corr. Ch ग्रहौ नो गृह्यतामिति; Kap. S. 43, 1 ग्रहा नौ गृह्येतामिति [3] Ch नृत [4] So corr. Ch अभ्या° [5] Ebenso Mâitr. S. 4, 6, 3 (IV, p. 81, Zeile 5). [6] So corr. Ch पानुदतापानुदत्ता [7] So corr. Ch मह [8] So corr. Ch विद्वांसो [9] So corr. Ch मा [10] So corr. Ch रश्चच° [11] So corr. Ch थोनं [12] So corr. Ch क्ष्यमयः [13] Ch चक्षुर्षी [14] So corr. Ch क्रम° [15] Ch जुह्वत° oder जुहूत°

यन्तौ पश्यन्ति ॥ प्राचीभिर्वा आहुतिभिर्देवा अन्यानसुरान्प्राणुदन्त
प्रतीचीभिरन्यान्प्रत्यञ्चौ तिष्ठन्तौ शुक्रामन्थिनौ जुहुतः प्राचीरितरा
आहुतयो हूयन्ते भ्रातृव्यस्य विनुत्त्यै न वा एतौ मनुष्याः प्रच्यवमर्ह-
न्ति तुथो[1] ऽसि जनधाया[2] देवास्त्वा शुक्रपाः[3] प्रणयन्तु तुथो ऽसि ज-
5 नधाया[4] देवास्त्वा मन्थिपाः[5] प्रणयन्त्विति स्वयैवैनौ देवतया प्रणय-
ति सुवीराः प्रजाः प्रजनयन्परीहि सुप्रजाः प्रजाः प्रजनयन्परीहीति
वीरमेवात्त्रीषु प्रजासु धत्तो भूमानमाद्यासु तस्मादेतासु[6] वीर आजा-
यते तस्मादितरा अद्यमाना न क्षीयन्ते ॥ शुक्रं वा अन्वत्त्रीः प्रजाः
प्रजायन्ते मन्थिनमाद्या अग्निः प्रजनयिता यदभितो ऽग्निं[7] विपरिद्रु-
10 त्य जुहुत उभयीरेवैतदत्त्रीश्चाद्याश्च प्रजाः प्रजनयतो ऽवरिफन्ता इवो-
त्तरवेदिं परीयातां[8] सपर्वास्य सूपकाशो जायते प्रजापतेर्वा एषा
नासिका यदुत्तरवेदिश्चक्षुषी शुक्रामन्थिनौ[9] यज्ञः[10] प्रजापतिर्यत्प्राञ्चा
उद्धृत्य जुहुतो नासिकाया एव पुरस्ताच्चक्षुषी धत्त एतद्ध्येतस्याः पूर्व-
मभितस्तिष्ठन्तौ जुहुतस्तस्मान्नासिकामभितश्चक्षुषी अनाधृष्टासीति[11]
15 निगृह्णीतस्तस्मादक्षि धाने नीपततमम् ॥ ८ ॥ cf. Mâitr. S. 4, 6, 3.

देवाश्च वा असुराश्च समावदेव यज्ञे ऽकुर्वत यदेव देवा अकुर्वत
तदसुरा अकुर्वत ते ऽसुरा भूयांसश्श्रेयांस आसन्कनीयांसः पापीयांस
आनुजावरतरा इव देवास्ते देवा एतमाग्रायणमपश्यंस्तमगृह्णत ते-
नाग्रं पर्यायन्यदग्रं पर्यायंस्तदाग्रायणस्याग्रायणत्वं य आनुजावर-
20 स्स्यात् ॥

विदद्यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यं सध्र्यक्कः ।
अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥[12]

---

[1] So corr. Ch ज्जुथो; cf. Kâṭh. 4, 4; Mâitr. S. 1, 3, 12. [2] So corr. Ch जनदाया (erste Hand दया). [3] So corr. Ch पः [4] So corr. Ch जनदाया (erste Hand दया). [5] So corr. Ch पः [6] So corr. Ch द्यासु तंमादेतासु (erste Hand सुतम्मा°). [7] Ch ग्नि [8] cf. Âpast. Çr. 12, 22, 7. [9] So corr. Ch मंथिना [10] So corr. Ch यज्ञा [11] So corr. Ch अनादृष्टा° [12] cf. RV 3, 31, 6.

इत्येतया पुरोरुचाग्रायणं[1] गृहीतं भ्रातृव्यमेव वृक्त्वाग्रं[2] पर्येति ॥ वाग्वै
देवेभ्यो ऽपाक्रामद्यज्ञं[3] भागधेयमिच्छमाना ते देवा एतावद्यज्ञस्य म-
नसातन्वत सान्तर्यन्ति मेत्याग्रायणं[4] प्रतिन्यागच्छद्यदाग्रायणं[5] गृहीत्वा
वाचं विसृजते वाचमेव यज्ञ आगतां युनक्ति मृगस्येव वै यज्ञस्या-
भित्सार आत्मा यज्ञस्याग्रायणो यद्वाचं यच्छति यज्ञमेवाभित्सरति[6] 5
यद्विसृजते यज्ञमेव यत्वा वाचं विसृजते प्रजापतिर्वा आग्रायणः प्रा-
जापत्या एत ऋत्विजस्त्रयो वृता युक्ता यज्ञे भवन्ति प्रस्तोतोद्गाता प्र-
तिहर्ता[7] यद्धिङ्करोत्युद्गातॄनेव[8] वृणीते ते ऽस्य वृता युक्ता यज्ञे भवन्ति ॥
द्वयोर्धारयोः प्रातस्सवने गृह्णाति तिसृणां मध्यन्दिने चतसृणां तृती-
यसवने नव वै पुरुषे प्राणा आत्मा यज्ञस्याग्रायणः प्राणानेवात्मा- 10
नमभिसंपादयते वि वा एतद्यज्ञं छिन्दन्ति यन्नाना सवनानि संस्था-
पयन्त्यात्मा यज्ञस्याग्रायणो यदाग्रायणं[9] सवने सवने ऽभिगृह्णात्या-
त्मनैव यज्ञं संतनोति ये देवा दिव्येकादश स्थेति त्रयस्त्रिंशद्देवताभिरेव
यज्ञं संतनोति प्रजापतिर्वा आग्रायणो यत्प्रस्कन्दयति रेत एव दधा-
ति यदुपगृह्णाति प्रैव जनयति स्थाल्या गृह्णाति सो ऽविज्ञातो भ- 15
वति येन होष्यन्तीति तस्माद्गर्भेणाविज्ञातेन भ्रूणहा स्थाल्या गृह्णाति
वायव्येन जुहोति तस्मात्स्त्री निर्वीर्यानिर्वीर्यः पुमान्परा स्थालीमस्य-
न्ति न वायव्यं तस्मात्स्त्रियं[10] जातां परास्यन्ति न पुमांसं यदि ग्रह
उपदस्येदाग्रायणाद्गृह्णीयाद्यद्याग्रायण उपदस्येद्ग्रहेभ्यो[11] गृह्णीयात्पि-
ता वा आग्रायणः पुत्रा ग्रहा यद्वै पुत्रस्योपदस्यति पितरं स उपधा- 20
वति स एष प्रायश्चित्त्या[12] एव सोमो गृह्यते ब्रह्मवादिनो वदन्ति क-
स्माद्गायत्र्ययातयाम्न्यभिनिर्वर्तते[13] सर्वाणि सवनानि वहतीति वत्सो

---

[1] So corr. Ch पुरूरुचा°; cf. aber unten 27, 10. [2] So corr. Ch वृत्क्वा° [3] So corr. Ch पाक्रम° [4] So corr. Ch सान्तर्यैर्तिमे° [5] So corr. Ch दग्रा° [6] So corr. Ch त्सरिति [7] So corr. Ch प्रतिहन्ता [8] So corr. Ch यद्विंक° त्रूनेव [9] Ch यग्रा [10] So corr. Ch तस्तस्मा° [11] So corr. Ch उपदास्य [12] So corr. Ch प्रयश्चत्त्या, dann vielleicht corr. in प्रायश्चि° [13] So corr. Ch निवर्ते

वा एष[1] गायत्र्या यदाग्रायणो यदाग्रायणं सवने सवनेऽभिगृह्णाति तस्माद्गायत्र्ययातयाम्न्यभिनिर्वर्तते सर्वाणि सवनापि वहति तस्माद्गौर्वत्सादपक्रियमाणा पुनरभिनिवर्तते प्रजापतिः प्रजास्सृष्ट्वा ता अभिहिङ्करोत्प्रजापतिराग्रायणो यदाग्रायणं गृहीत्वा हिङ्करोति तस्माद्गौर्वत्सं जातमभिहिङ्करोति ॥ ९ ॥ cf. Mâitr. S. 4, 6, 4.

इन्द्रो वै वृत्राय वज्रमुदयच्छत सोऽब्रवीद्वीर्यं वा इदं मय्यस्ति तत्ते प्रदास्यामि मा मे प्रहारिति तदस्मै प्रायच्छत्सोऽवेदस्ति वावास्मिन्वीर्यमिति तस्मै द्वितीयं तस्मै तृतीयमुदयच्छत सोऽब्रवीद्वीर्यं[2] वा इदं मय्यस्ति तत्ते प्रदास्यामि मा मे प्रहारिति तदस्मै प्रायच्छद्यज्ञं वावास्मै तत्प्रायच्छदुकथ्यमेवैतावान्यज्ञो[3] यावानुकथ्यो[4]ऽन्तश्श्लेषणाय[5] त्वा इतरे[6] ग्रहा गृह्यन्ते त्रिः प्रायच्छत्तस्मादेतं त्रिर्विगृह्णन्ति[7] यदेकं सन्तं बहुधा विगृह्णन्ति तस्मादेको बहूनां ग्रामणीश्शिरो वै यज्ञस्योकथ्यो[8]ऽङ्गान्युकथानि चक्षुषी शुक्रामन्थिनौ यदेतौ भूयिष्ठास्सोमा अनुहूयन्ते तस्माच्चक्षुस्सर्वाण्यङ्गानि प्रति यदुकथ्यपात्रं[9] भूयिष्ठास्सोमा अन्वायन्ति तस्मादेकं पुण्यं यन्तं बहवोऽनुयन्ति ॥ वि वा एतद्यज्ञं छिन्दन्ति यन्नाना सवनानि संस्थापयन्त्यात्मा यज्ञस्योकथ्यो[10] यदुकथ्यं[11] सवने सवने विगृह्णाति तेनैव यज्ञं संतनोतीन्द्राय त्वा बृहद्वत इत्यैन्द्रो वै यज्ञस्तस्मै त्वा विष्णवे त्वेति विष्णुर्वै यज्ञो विष्णुनैव यज्ञेन यज्ञं संतनोति यथा वा उभयतोयुक्तं यथोभयतोवीवधमेवं पुरोरुक्क ग्रहश्चाथैषोऽपुरोरुक्को गृह्यत ईश्वरो यज्ञो विवृहो यदुकथ्यं[12] विगृह्णाति तेनैष सयुक्तेन[13] सवीवधं शिरो वै यज्ञस्योकथ्यो[14]ऽङ्गान्युकथानि पश्चाद्वै प्राङ् यज्ञ उकथैश्शिरो

---

[1] So corr. Ch एषा [2] So corr. Ch द्वीर्ये [3] So corr. Ch दुक्त्यमे° [4] So corr. Ch नुक्त्यो [5] So corr. Ch श्लेषाणाय [6] So corr. Ch इतरै [7] So corr. Ch त्रिवि° [8] So corr. Ch क्यो [9] So corr. Ch यदुक्यपात्रं [10] So corr. Ch क्यो [11] So corr. Ch क्यं [12] In Ch undeutlich; vielleicht क्त्यं [13] So corr. Ch सयत्तेन [14] In Ch undeutlich, ob त्त्यों oder क्यों oder क्त्यों

यन्त इतरान्यहानन्वन्याः[1] प्रजा अनुपोप्ते ध्रुवं सादयत्युपोप्त इतरा-
न्यहांस्तस्मात्पुरुषो मांसेन प्रतितिष्ठत्यस्थ्ना[2] पशवो राजपुत्रो गोपा-
यति राजन्यो वै प्रजानामधिपतिरायुर्ध्रुव[3] आयुरेव प्रजानां गोपाय-
त्यथो क्षत्रमेव गोपायते यदि कामयेतावगतमपरुन्ध्युरपरुद्धो ऽवग-
5 च्छेदित्यध्रुवं त्वा ध्रुवक्षितिमध्रुवाणामध्रुवतममच्युतानामच्युततमम-
मुष्या[4] विश उदूहामीति[5] ध्रुवमुदूहेद्ध्रुवो वा एष यो ऽवगतो ऽध्रुवो
ऽपरुद्धो ऽवगतमेवापरुणद्ध्यपरुद्धमवगमयति[6] ताजग्व्यवगच्छेते[7] य-
देवं कुर्यादायुः प्रजानां विचालयेत्तृणमेतेन मन्त्रेणोपर्युपर्यतिहरेत्तेनै-
वापरुद्धमवगमयति नायुः प्रजानां विचालयति देवक्षेत्रं[8] वै वेदिरे-
10 तावती[9] पृथिवी यावती वेदिर्देवक्षेत्रेणैवैनं मनुष्यक्षेत्रान्वदति पूर्णं[10]
गृह्णीयाद्यं कामयेत सर्वमायुरियादिति पूर्णमेवास्मा आयुर्गृह्णाति
सर्वमायुरेत्यल्पं गृह्णीयाद्यं कामयेताल्पमायुरियादित्यल्पमेवास्यायु-
ष्करोति[11] ताजक्प्रधन्वत्युपर्युपार्धं[12] गृह्णीयाद्यं कामयेतोत्तरमायुरि-
यादित्युत्तरमेवैनमायुर्गमयति ॥ यथारूपमस्मा आयुः परिगृह्णात्युभ-
15 यतोवैश्वानरं गृह्णाति तस्मात्प्राणा उभयतोवैश्वानरा मूर्धानं दिवो
अरतिं पृथिव्या इति देवेषु चैवं मनुष्येषु चायुर्दधाति पुरुषेण वै य-
ज्ञस्संमित आयुषा पुरुषस्संततो यदेष प्रातर्गृहीत आ तृतीयसवना-
च्छय[13] आयुषैव यज्ञं संतनोति प्रातर्वा एतौ गृह्येते गायत्र्या लोक
आग्रायणश्च ध्रुवश्च ता आ तृतीयसवनाच्छयाते[14] जगत्या लोकात्त-
20 स्माद्गायत्र्ययातयाम्न्युत्तरे[15] सवने प्रत्येत्येतद्देवाभि भागधेयं प्राणो वै

---

[1] So corr. Ch एतरा° [2] So corr. Ch स्था [3] So corr. Ch पेति° [4] So corr. Ch तममुष्या [5] So corr. Ch तदुहासीति [6] So corr. Ch परुणोद्ध्यपरुद्धम° [7] So corr. Ch ग्व्यू°° [8] So corr. Ch देवक्षत्रं [9] So corr. Ch वदिरे° [10] So corr. Ch पूर्णां [11] So meine Correctur, resp. Ergänzung; Ch कामयेतेत्यल्पमेवा° [12] So meine Correctur; उपार्धं „diese erste Hälfte“; Ch प्रधन्वत्युपर्युवंधं [13] So corr. Ch नाच्छय, erste Hand नाच्छाय [14] So corr. Ch नाच्छयाते [15] So corr. Ch यत्र्ययाम्न्युत्तरे

गायत्र्यायुर्ध्रुवो[1] यदेष प्रातस्सन्न आ तृतीयसवनाच्छये[2] तस्माद्यावदे-
वायुस्तावान्प्राण आयुर्वै ध्रुवो रुद्रो ऽग्निर्नैकाकी होतव्य आयुः[3] प्रजा-
नां प्रदध्यात्प्रमायुकास्स्युर्होतुश्चमसे ऽवनयति वैश्वदेवो वै होता वैश्व-
देवीरिमाः प्रजाः पजास्वेवायुर्दधात्यध्रुवं वा एनमेतत्करोति यदवन-
यत्येतस्य वा अध्रुवत्वमनु प्रजाभ्यो न[4] कल्पते दृंहन्तां दैवीर्विशः क- 5
ल्पन्तां मनुष्या दिवि दिव्यानि सन्त्वन्तरिक्षे वयांसि पृथिव्यां पार्थि-
वानीति ध्रुवमवनयति यथायतनमेव प्रजा दृंहत्याहूत उक्थे[5] ऽवन-
येत्स्तुतेनैव शस्त्रमभिसंतनोति यदाहूते ऽवनयेदुक्थमतिरेचयेद्यच्छस्ते[6]
ग्रहमतिरेचयेद्या मध्यमा परिधानीया तस्यामवनयत्यङ्गानि वा ए-
तानि यज्ञस्य यदुक्थामदान्यायुर्ध्रुवो[7] ऽर्धं वै पुरुषस्यात्मनो ऽङ्गान्य- 10
र्धमायुरन्ता एवाभितस्संधायायुर्मध्यतो दधाति कस्मात्सत्यादित्याहुर्ब्र-
ह्मवादिन आपस्त्वरमाणा न क्षीयन्ते न प्रदस्यन्तीत्येतमेव सोमपीथं
प्रतीक्षमाणा यद्ध्रुव[8] एष ह्येना अपनुदते[9] प्रत्यङ्ङासीनो[10] ऽवनयत्य-
न्वीपमेवैना अवार्जति न सामि[11] प्रस्नावयेताग्निष्टोममेवासीतायुर्वै[12]
ध्रुव आयुर्व्यवस्नावयेतैतावान्वै यज्ञो यावानेवाग्निष्टोमो यदाग्निष्टो- 15
ममास्ते प्राणस्यैवास्यान्तर्गच्छति[13] सर्वमायुरेत्युदरं वा एतद्यज्ञस्य य-
त्सदस्तद्द्रवन्ति[14] निस्सर्पन्तो यज्ञः प्रजापतिर्यदाग्निष्टोममास्ते प्रजा-
पतेरेवोदरं[15] न रिणक्त्यक्षोधुको भवति ॥ १ ॥
cf. Kap. S. 44, 1[16]; Mâitr. S. 4, 6, 6; TS 6, 5, 2.

---

[1] So corr. Ch युब्रुवो [2] So corr. Ch नम्छये; vielleicht corr. in नाम्छये [3] Hier setzt Kap. S. 44, 1 ein, mit प्रजानां etc. [4] Kap. S. 44, 1 नु (त्येतस्य वा ध्रुवत्वमनु प्रजाभ्यो नु कल्पते); ich übersetze den Kâṭh.-Text mit Caland: infolge seiner Unfestigkeit geht es seinen Nachkommen nicht gut. [5] So corr. Ch उक्ते; Kap. S. 44, 1 उक्थ्ये [6] So corr. Ch वनयेदुक्तमतिरेचयेद्यम्छस्ते; Kap. S. 44, 1 वनयेयुक्थ्य-मतिरेचयेद्यछस्ते [7] So corr. Ch यदुक्ताम॰ युर्ब्रुवो; Kap. S. 44, 1 यदुक्थ्यान्यंगान्यायुर्ध्रुवो [8] So corr. Ch यद्ध्रुवा; Kap. S. 44, 1 यध्रुव [9] So corr. Ch अपददते; Kap. S. 44, 1 ऽपनुदते [10] So corr. Ch प्रत्यज्ञासीनो; Kap. S. 44, 1 प्रत्यंगासीनो [11] So corr. Ch न मामि; Kap. S. 44, 1 = Corr. [12] Kap. S. 44, 1 प्रस्नापयेता॰ [13] So Ch; Kap. S. 44, 1 स्यांतं गछति [14] So corr. mit Caland; Ch स्तद्रेचंति; Kap. S. 44, 1 स्तद्रवंति [15] Ch दरन [16] Nach längerer Lücke beginnen hier wieder

देवा वा असुरान्हत्वा वैरदेयादीषमाणास्त ऋतून्संवत्सरममोहयं-स्तस्य देवाः कॢप्तिमैच्छंस्तमृतुग्रहैरेवाकल्पयन्यदृतुग्रहा[1] गृह्यन्ते संव-त्सरस्य कॢप्त्यै स्वर्गस्य लोकस्य प्रज्ञात्या उभौ सह प्रथमं गृह्णाते उभौ ह्येतौ सह संवत्सरं कल्पयितुमुपप्रेत उभौ सहोत्तमौ संवत्सरमेव कल्प-
5 यित्वोभौ सह विमुच्येते उभयतोमुखे ऋतुपात्रे भवत उभयतोमुखा ह्यृतवो न हि तद्विद्म यतरत ऋतूनां मुखं नान्यो ऽन्यमभिप्रपद्येयातां यदभिप्रपद्येयातामृतुरृतुमभ्यायुकस्स्याद्यद्व्यतीतस्तस्मादाहुरश्वा[2] इवतू समघ्रातामिति[3] द्वादशैते गृह्यन्ते द्वादश मासास्संवत्सरस्संवत्सरस्य[4] कॢप्त्यै संवत्सरो वै स्वर्गो[5] लोकस्तस्यैत आक्रमास्संक्रमा[6] यदृतुग्रहा रो-
10 हमेवैते रोहति स्वर्गस्य लोकस्य समष्ट्यै षडन्ये भवन्ति षडन्ये ऽसौ वा आदित्य ऋतुस्तस्मादेष षण्मास उदङ्केति षड् दक्षिणा षड्तुना षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति चतुरृतुभिश्चतुष्पादाः पशवस्सं-वत्सरं पशवो ऽनुप्रजायन्ते संवत्सरादेवास्मै पशून्प्रजनयति द्विरृतुना पुनर्द्विपाद्यजमानः पशुष्वेवोपरिष्टात्प्रतितिष्ठति ॥ सोमपाना[7] वा
15 एते सोमपा इन्द्रस्य सजाता यदृतुग्रहा ऋतुना सोमं पिबन्त्विति ह्याह नर्तुरिति नर्तवे जुह्वति तेषामेते स्वे पात्रे याभ्यामेनाञ्जुह्वति[8] तस्मात्सजातस्स्वेन पात्रेण बलिं हरत्यास्मै बलिं हरन्ति य एवं वेद व्यवहारं भक्षयन्त्ययातयामत्वाय तस्मादृतुमृतुं[9] वर्षति तेन देवास्संव-त्सरं कल्पयित्वा स्वर्गं लोकं प्रज्ञाय त एतद्यज्ञस्य ज्योतिरुपरिष्टा-
20 ददधुर्यदैन्द्राग्नो गृह्यते ज्योतिरेव मुखतो यज्ञस्य दधाति संवत्सरस्य

---

mit Cap. 44, 1 entsprechende Partieen in Kap. S. Leider fehlt uns der Anfang dieses Capitels.

[1] So corr. Ch हैरेवकल्प° [2] So corr. Ch द्व्यतीति°; Kap. S. 44, 2 = Corr. [3] So corr. Ch इवतूममघ्राता°; Kap. S. 44, 2 इवत्तं समघ्राता° [4] So corr. Ch संवत्सर (ohne स्य); Kap. S. 44, 2 = Corr. [5] So corr. Ch स्वर्गो; Kap. S. 44, 2 = Corr. [6] Kap. S. 44, 2 आक्रामाः संक्रामा [7] Kap. S. 44, 2 सोमपा [8] Ch und Kap. S. 44, 2 मेनां जु° [9] So corr. Ch दृतमत्तं; Kap. S. 44, 2 दृतुमतं

कॢप्त्यै स्वर्गस्य लोकस्य प्रज्ञात्यै ॥ तस्मात्संवत्सरं ज्योतिरुपर्युपरि चरत्यृतुपात्रेणैन्द्राग्नं[1] गृह्णाति क्षत्त्रं वा इन्द्राग्नी विडृतवो विश्येव क्षत्त्रमध्यूहति विश्वे वै देवास्तृतीयसवनभागास्सन्तस्ते[2] प्रातस्सवनमभ्यकामयन्त तान्प्रजापतिरेतस्मिन्ग्रहे तर्पयितव्यानपश्यद्यद्वैश्वदेवः[3] प्रातस्सवने गृह्यते विश्वानेव देवान्प्रातस्सवने तर्पयति तानस्य तृप्तान्प्रीतानुत्तरे सवने अभिविसृज्येते[4] शुक्रपात्रेण वैश्वदेवं गृह्णात्यसौ वा आदित्यश्शुक्रो वैश्वदेवीरिमाः प्रजास्तस्मादेष सर्वाः प्रजाः प्रत्यङ् मा३म्प्रति मा३म्प्रतीति[5] हि मन्यन्ते ॥ २ ॥

cf. Kap. S. 44, 2; Mâitr. S. 4, 6, 7. 8; TS 6, 5, 3. 4.

माध्यन्दिनेन[6] वै सवनेनेन्द्रो वृत्रमहन्मरुद्भिर्वीर्येण मरुत्वतीयं स्तोत्रं भवति मरुत्वतीयमुक्थं[7] मरुत्वतीया ग्रहास्सर्वत एव यजमानं वीर्येण समर्धयति सर्वतो वृत्रं हन्ति प्रतिहितिरेव प्रथमो मरुत्वतीयो ऽपायतिर्द्वितीयो[8] विसृष्टिं[9] तृतीयेन विसृजति वज्रमेव प्रथमेन मरुत्वतीयेनोद्यच्छते प्र द्वितीयेन हरति स्तृणुते तृतीयेन यं द्विष्यादमरुत्वतीयांस्तस्य गृह्णीयाद्वीर्यं वै मरुतो वीर्येणैवैनं व्यर्धयतीन्द्रो वै वृत्रं[10] हनिष्यन्प्रदानं देवेभ्यः[11] प्रायच्छद्दक्षिणास्स मरुत्वतीयैरेव वृत्रमहंस्तस्मान्मरुत्वते ऽनूक्ते न[12] देयं हतो हि तर्हि वृत्रो विजितं[13] भवति नो प्रतिगृह्णीयात्प्रतिष्ठितान्पशून्प्रच्यावयत्यपशुर्भवतीन्द्रो वै वृत्रं हत्वा स महेन्द्रो ऽभवत्सो ऽन्यान्देवानत्यमन्यत स एतं ग्रहमुद्वारमुदहरत

---

[1] So corr. Ch मात्रे°; Kap. S. 44, 2 = Corr. [2] So corr. Ch संतप्ते; Kap. S. 44, 2 संतस्ते [3] So corr. Ch ग्राह्न तर्पयितेव्या°; Kap. S. 44, 2 ग्रहे तर्पयतव्यानिपश्यन् [4] Kap. S. 44, 2 अभिविसृष्वेते [5] Ch मा ३ म्प्रति मा ३ प्रतीति; Kap. S. 44, 2 मा प्रति मां प्रतीति [6] So corr. Ch माध्यंदिन; Kap. S. = Corr. [7] So corr. Ch undeutlich त्यम्मरु° oder स्यम्मरु°; Kap. S. 44, 2 तीयमुक्तिं मरु° [8] Ch पायतिं द्वितीयो; unsere Aenderung also nur geringfügig; Kap. S. 44, 3 liest auch पायति द्वितीयो; अपायति wohl das „Spannen“, „Zielen“, von einem unbelegten यम mit अपा [9] So corr. Ch वृसृष्टिं; Kap. S. 44, 3 विसृष्टमु तृतीयेन [10] Ch वृत्र [11] Ch प्रदानन्दे°; Kap. S. 44, 3 = Corr. [12] So Ch; Kap. S. 44, 3 नात्तेमन [13] Kap. S. 44, 3 विजितिं

महेन्द्रीयं तस्माद्राजा संग्रामं जित्वा निराजं निरजते ते तं[1] देवा अब्रु-
वन्सर्वं वा अवोचथा अस्तु नो ऽत्रापीति[2] कथं वो ऽपि स्यादिति[3]
विराजैतस्य ग्रहस्य यजन्त्विति देवपात्रं वै विराड् यद्विराजा यजति
देवपात्रेणैव देवतास्तर्पयति ॥ तस्माद्यद्राजा संग्रामं जयत्यपि तत्र
5 सूतग्रामणीनां गायत्र्या वै त्रिवृदायतनवांस्त्रिष्टुभा[4] पञ्चदशो जगत्यै-
कविंशो ऽथैषा[5] विराडायतनमेव यत्सप्तदशो[6] यद्विराजा यजति सप्त-
दशमेवायतनवन्तं करोति यं द्विष्यात्त्रिष्टुभा तस्य यजेदोजो वै वीर्यं
त्रिष्टुबोजसैवैनं वीर्येणायतनाच्छिनत्ति[7] सो ऽनायतनः पराभवति
देवा वा असुरान्हत्वा वैरदेयादीषमाणास्ते यज्ञं मध्यतः प्राविशन्नेतां
10 वाव तदृचं प्राविशन्विराजमेव यद्विराजा यजति देवतानामभीष्ट्या
आदित्या वै स्वर्गं लोकं यन्तस्ते ऽङ्गिरसो ऽस्मिंल्लोके सह यज्ञेन प्र-
त्यौहंस्ते ऽङ्गिरस आदित्यानब्रुवन्कतिभ्यो वो हव्यं वक्ष्याम इति त्रय-
स्त्रिंशत इत्यब्रुवन्दश वसव इन्द्र एकादशो[8] दश रुद्रा इन्द्र एकादशो द-
शादित्या इन्द्र एकादशस्त्रिंशदेता देवतास्त्रिंशद् द्व्यक्षरो वषट्कार एका-
15 क्षरा वाक्तेनैन्द्रं[9] कल्पन्ते ऽस्य देवता हव्ये यथादेवतमस्य हव्यं गच्छ-
ति वृणत एनमार्त्विज्याय य एवं वेद यावतीर्हि देवतास्ता हव्यं ग-
मयति ॥ ३ ॥ cf. Kap. S. 44, 3; Mâitr. S. 4, 6, 8; TS 6, 5, 5.

माध्यन्दिनाद्वै सवनाद्देवास्स्वर्गं लोकमायंस्तेषामेत आक्रमासं-
क्रमा[10] यद्दक्षिणा यद्दक्षिणा ददाति सेतुमेव कीर्त्वा[11] स्वर्गं लोकमेति
20 यावद्वा इह प्राणद्दाति तावन्तो ऽमुष्मिंल्लोके प्राणास्तस्माद्बहु[12] देयं

---

[1] Ch निरजत ते तं; Kap. S. 44, 3 निरजतं ते तं [2] So corr. Ch नो तापीत; Kap. S. 44, 3 = Corr. [3] Kap. S. 44, 3 पिष्यादिति [4] So corr. Ch त्रिवृदा°; Kap. S. 44, 3 तृवृता° [5] So corr. Ch थेष; Kap. S. 44, 3 = Corr. [6] Von जगत्यैकविंशो bis यत्सप्तदशो in Ch zwei Mal nach einander; in Kap. S. 44, 3 fehlt die Dittographie. [7] So corr. Ch श्छिनत्ति [8] So corr. Ch इन्द्र इकादश रुद्रा [9] Kap. S. 44, 3 वात्तेनेंद्र कल्पंत [10] So corr. Ch संगमा; cf. aber oben 28, 2; Kap. S. 44, 4 आक्रमाः संक्रामा [11] Kap. S. 44, 3 कोर्त्ता [12] So corr. Ch द्वाहु

तस्मादिह बहु दत्तं प्रशंसन्ति ज्यायांसमेव सेतुं किरत एतर्हि वै दे-
वता नेदिष्ठाद्व्यानमन्ति तस्मादेष एतर्हि तेजिष्ठं तपति यावन्नेदि-
ष्ठादेव स्वर्गं लोकमारोहति सौरीभ्यां जुहोति स्वर्गस्य लोकस्य स-
मष्ट्यै द्वाभ्यां द्विपाद्यजमानो ऽस्यामेवैनमाक्रामयति यदाग्नेय्याग्नीध्रे
जुहोत्यन्तरिक्ष एवैनमाक्रामयति ॥ यद्ददाति स्वर्गमेवैनं लोकं गम-
यति द्यां गच्छ स्वर्गच्छेति स्वर्गस्य लोकस्य समष्ट्यै रूपं[1] वो रूपे-
णाभ्यागां[2] वयसा वय इत्येतद्वै पशूनां रूपं यद् घृतं यद्धिरण्यं रूपमे-
वैषां रूपेणाभ्येति वयसा वयस्तुथो वो विश्ववेदा विभजत्विति सत्यं
वै तुथो[3] विश्ववेदास्सत्येनैवैनान्ब्रह्मणा विभजत्येतत्ते अग्ने राध एति[4]
सोमच्युतमित्याग्नेया वै पशवस्ते सोमे दीयन्ते तान्मित्रस्य पथा न-
येति मित्रस्यैवैनान्पथा[5] नयत्यन्तराग्नीध्रं च[6] सदश्च नयत्येतेन वै पथा
देवास्स्वर्गं लोकमायंस्तमेवैना अपिपादयति ॥ दक्षिणतो वै देवानां
यज्ञं रक्षांस्यभ्यजयंस्तमाग्नीध्रात्पुनरपाजयन्यदाग्नीध्राद्दक्षिणा दक्षिणा
नयन्ति यज्ञस्याभिजित्यै रक्षसामपहत्या आग्नेय्याग्नीध्रे[7] जुहोत्याग्नेया
वै पशवः पशूनां निष्क्रीत्यै वारुण्या द्वितीयया जुहुयाद्यद्यश्वं वानो
वा रथं वा दास्यन्स्याद्वारुणा ह्यश्वा वारुणा वनस्पतयो[8] ऽग्निस्सर्वा
देवता देवतानामभीष्ट्या उपबर्हणं ददात्येतद्वै छन्दसां रूपं रूपेणैव
छन्दांस्यवरुन्द्धे[9] हिरण्यं ददाति हिरण्यज्योतिष एवैनास्स्वर्गं लोकं
गमयत्यस्मद्राता मधुमती देवत्रा गच्छेति स्वर्गमेवैना लोकं गमय-
ति ॥ प्र दातारमाविशेति तस्मादमुष्मिंल्लोक आगामुका ऋतस्य
पथा प्रेत चन्द्रदक्षिणा[10] इति यो वै यज्ञियो मेध्यस्स ऋतस्य पन्था-

---

[1] Ch रूपि [2] Ch भ्यांगां; Kap. S. 44, 4 भ्यागां [3] So corr. Ch तूथो [4] So corr. mit Caland; Ch ब्रह्मा न und इति [5] So corr. Ch मित्रस्यवैना°; Kap. S. 44, 4 = Corr. [6] So corr. Ch ग्नोप्रंचं; Kap. S. 44, 4 रोग्नोघ्रं च [7] So corr. Ch य्याग्रौ; Kap. S. 44. 4 य्याग्नोघ्रे; cf. aber oben und TS 6, 6, 1, 1. [8] Kap. S. 44, 4 वनस्पतयो ग्नोघ्रे ग्रे ददात्यग्निः सर्वा देवता etc. [9] So corr. Ch स्येवरुन्धे; Kap. S. 44, 4 स्यवरुंधे [10] So corr. Ch चन्द्रं दक्षिणा; Kâṭh. 4, 9 wie Kap. S. 44, 4 und TS 6, 6, 1, 3 = Corr.

स्तेनैवैना[1] नयति ब्राह्मणमद्यध्र्यासं पितृमन्तं[2] पैतृमत्यमिति यो वै श्रोत्रिय आर्षेयस्स पितृमान्पैतृमत्यस्तं[3] विदेयमित्येवैतदाह स हि सुधातुदक्षिणो यामब्राह्मणाय ददाति वनस्पतयस्तया प्रथन्ते यां कण्वकश्यपेभ्यो[4] ददाति नीहारस्तया प्रथते यां ब्राह्मणायाश्रोत्रियाय[5]
5 ददाति मरीचयस्तया प्रथन्ते यां श्रोत्रियायार्षेयाय ददाति तयामुष्मिंल्लोक[6] ऋध्नोत्यस्मिंश्चास्य लोके पुनर्भोगाय भवति तस्मात्स एवैष्टव्यो वि स्वः पश्य व्यन्तरिक्षमिति सदः प्रेक्षते[7] ॥ सोमपा वा एते ब्राह्मणास्तेषां तेजस्वीनि चक्षूंष्यरातीयन्ति वा एते ददते त एनमीश्वराः[8] प्रतिनुदस्तेभ्य[9] एव नमस्करोत्यप्रतिनोदायात्रिहिरण्यं[10] द-
10 दाति स्वर्भानुर्वा आसुरस्सूर्यं[11] तमसाविध्यत्तमत्रिरेवाग्रे ऽन्वविन्दद्यदत्रिहिरण्यं[12] ददाति स्वर्गस्य लोकस्य समष्ट्यै यद्यात्रेयं न विन्देद्य आर्षेयस्संहितस्तस्मै दद्यात्तेनैवर्ध्नोत्यसुरा[13] वै देवेभ्यो दक्षिणामनयंस्तां प्रत्यनुदन्त ते ऽब्रुवन्नस्निहदेषेति[14] तेभ्यो ऽपरामनयंस्तां[15] प्रत्यनुदन्त ते ऽब्रुवन्नृम्णामेषागादिति तेभ्यो ऽपरामनयंस्तां[16] प्रत्यनुदन्त ते
15 ऽब्रुवन्नद्राप्सीदेषेत्येता[17] ह वै तदृषिरभ्यनूवाच ॥
अव द्रप्सो अंशुमतीमतिष्ठदियानः[18] कृष्णो दशभिस्सहस्रैः ।
आवत्तमिन्द्रश्शच्या[19] धमन्तमप स्नेहितीर्नृमणामदध्राम्[20] ॥

---

[1] Kap. S. 44, 4 वैनां  [2] So corr. Ch द्यध्र्यांस मितृमंत  [3] Ch erste Hand त्यस्ते, dann der e-Strich getilgt; Kap. S. 44, 4 त्यस्तं  [4] So corr. Ch कण्वकश्यपे; Kap. S. 44, 4 कण्वकैश्चापेभ्यो  [5] So corr. Ch ब्रह्मणायायाश्रोत्रियाय; Kap. S. 44, 4 ब्रह्मयाश्रोत्रियायार्षेयाय द°  [6] So corr. Ch ल्लोका  [7] So corr. mit Caland; Ch प्रोक्षते  [8] So corr. Ch तपनमी°; Kap. S. 44, 4 = Corr.  [9] So corr. Ch प्रतिनुदैस्तेभ्य; Kap. S. 44, 4 प्रतिनुदास्तभ्यः  [10] So Ch; Kap. S. 44, 4 नोदायात्रिर्हिरण्यं  [11] Ch erste Hand असुर°, dann wohl corr. Kap. S. 44, 4 असुरः  [12] Kap. S. 44, 4 द्यदत्रिर्हिरण्यं  [13] So corr. Ch तेनैवर्ध्नोत्यसुरा; Kap. S. 44, 4 तेनैवध्नोव्यसुरा  [14] So corr. Ch त ब्रुवन्नम्निहदे°; Kap. S. 44, 4 तेब्वेवन्नस्निकदेषेति  [15] So corr. Ch नयांस्ताम्  [16] So corr. Ch नयांस्ताम्  [17] So corr. mit Caland; Ch न्नाद्रासी°; Kap. S. 44, 4 नद्राशीदोषत्येतां  [18] So corr. Ch मदिष्टदि°  [19] So corr. Ch आवर्तमि° शस्या; Kap. S. 44, 4 आवत्तमिंद्र शच्या; cf. RV 8, 85 (96), 13.  [20] Ch स्निहितिन्नृमणामदधाम् ॥ Kap. S. 44, 4 स्तेह्हितीनृमणामथंद्रो इति; cf. RV 8, 85, 13.

इति सा सालावृकी संभूयासुरान्प्राविशत्तैनान्निरदहत्तस्माद्दक्षिणा[1] प्रतिनुत्ता न प्रतिगृह्या न गोषु चालयेत्सालावृक्येवैनं[2] भूत्वा प्रविशति सैनं निर्दहति ॥ ४ ॥ cf. Kap. S. 44, 4; Mâitr. S. 4, 8, 2—3; TS 6, 6, 1.

यद्गां ददात्यायुस्तेन स्पृणोति यद्वासो ददाति दीर्घं तेनायुष्कुरुते यदश्वं ददाति सूर्यभ्राजमेवैनं[3] करोति यदनो यद्रथं ददाति शरीराणि तेन[4] स्पृणोति यदविं यदजां[5] ददाति मांसानि तेन स्पृणोति यदोदनं यन्मन्थं[6] ददाति यदेवास्यान्तरात्मं[7] तत्तेन स्पृणोति यद्वरं ददात्यात्मानं तेन स्पृणोत्यात्मा हि वरो यद्ब्रह्मणे ददाति बार्हस्पत्यो वै ब्रह्मा बृहस्पतिमेव तेन प्रीणाति यदुद्गात्रे ददाति प्राजापत्यो वा उद्गाता प्रजापतिमेव तेन प्रीणाति यद्धोत्रे ददाति वैश्वदेवो वै होता सर्वा एवास्य[8] तेन देवता अभीष्टाः प्रीता भवन्ति यदध्वर्युभ्यां[9] ददात्याश्विनौ वा अध्वर्यू[10] अश्विना एव[11] तेन प्रीणाति यदृत्विग्भ्यो ददाति होत्रा वा ऋत्विजो[12] होत्रा एवास्य तेनाभीष्टाः प्रीता भवन्ति ॥ यत्सदस्येभ्यो ददाति यमेव ते[13] सोमं पिबन्ति तं तेन निष्क्रीणाति यां ब्राह्मणाय श्रोत्रियायानृत्विजे प्रसृप्ताय ददाति[14] यामेव स विद्वां वेद सास्य तेनाभीष्टा[15] प्रीता भवति यामब्राह्मणायाश्रोत्रियायानृत्विजे[16] प्रसृप्ताय ददाति यामेव स विद्वां वेद सास्य तेनाभीष्टा[17] प्रीता

---

[1] So corr. प्राविशेत (erste Hand प्रविशेत); Kap. S. 44, 4 = Corr. [2] So corr. Ch वृके° (erste Hand वृको); Kap. S. 44, 4 न द्योषु चारये त्कालावृक्यैवेनं [3] Kap. S. 44, 5 सूर्यभाजम° [4] So corr. Ch स्तेन [5] Ch यदजान्द°; Kap. S. 44, 5 = Corr. [6] Kap. S. 44, 5 मंथं च [7] So corr. Ch स्यंतरात्मं; Kap. S. 44, 5 स्यात्तरात्म [8] So corr. Ch होतास्सर्वास्य; Kap. S. 44, 5 = Corr. [9] So corr. Ch यददर्युभ्यान्; Kap. S. 44, 5 यदद्वर्युभ्यां [10] So corr. Ch श्विनो वाध्वर्यू; Kap. S. 44, 5 = Corr. [11] Kap. S. 44, 5 अश्विनावेव [12] So corr. Ch त्विजा [13] So corr. Ch त्वे; Kap. S. 44, 5 = Corr. [14] Der vorausgehende Satz, von यां ब्राह्मणाय bis zu diesem ददाति folgt hier in Ch noch einmal; in Kap. S. fehlt die Dittographie. [15] So corr. Ch तेनो°; Kap. S. 44, 5 = Corr. [16] So corr. mit Caland; Ch यासब्रा° यश्रो° Kap. S. 44, 5 यामब्राह्मणायाश्रो° [17] So corr. Ch तेनो° Kap. S. 44, 5 = Corr.

भवति यामकामो[1] ददाति तस्मात्क्षत्रं ब्रह्मात्ति[2] यां याचितो ददाति
भ्रातृव्यं तया जिन्वति यां बहिर्वेदि ददाति नैनं सा गच्छति यां
ज्ञातये ऽनृत्विजे[3] प्रसृप्ताय ददाति पाप्मानं तन्निधत्ते यां ज्येष्ठाय यां
श्रोत्रियाय ददाति येनैव स तदिन्द्रियेण भवति तदस्याभीष्टं प्रीतं
5 भवति ॥ ५ ॥ cf. Kap. S. 44, 5; Mâitr. S. 4, 8, 3.

आदित्या वा असुरान्हत्वा वैरदेयादीषमाणास्ते देवान्प्राविशन्द्वि-
देवत्यान्वाव तत्प्राविशन्नेते हि देवानां सह भूयिष्ठास्तस्मादादित्यो[4]
द्विदेवत्येभ्यो गृह्यत उच्छिष्टाद्वा[5] आदित्या जातास्तस्मादेष उच्छिष्ट-
स्सोमो[6] गृह्यत उच्छेषणभागा वा आदित्यास्तस्मादेष उच्छिष्टस्सोमो
10 गृह्यते परिश्रिते गृह्णाति रुद्रो वा अग्निः पशव आदित्यः[7] पशूनां
गोपीथाय रुद्रं वै देवा यज्ञान्निरभजंस्ते समवादिशन्नेष ते मातरि
भाग इत्यादित्यान्तमेतावदागमयित्यैतत्प्रति[8] यज्ञादन्तरदधुर्यत्परिश्रित
आदित्यं गृह्णाति रुद्रमेव यज्ञादन्तर्दधाति ॥ पशवो वा आदित्यो
यदेष भूयिष्ठस्सोमो गृह्यते तस्मात्पशवो ऽद्यमाना न क्षीयन्ते यदा
15 बहवो ऽन्तर्वेदि स्युरथ[9] गृह्णीयात्तानेवान्नाद्यमवरुन्द्धे[10] यदास्य भ्रा-
तृव्यो ऽन्तर्वेदि स्यादथ गृह्णीयादेष वै यजमानस्य स्वो लोको यद्वेदिः
पशव आदित्यस्स्व एव लोके भ्रातृव्यस्य पशून्वृङ्क्ते बृहतीः पुरोरुचो
भवन्ति पशवो वै बृहतीः पशव आदित्यः पशुष्वेव पशून्दधाति सो-
ममग्रे गृह्णात्यथ दध्यथ सोममूर्ग्वै दधि पशव आदित्य ऊर्जमेव प-
20 शुषु मध्यतो दधाति शृतातङ्क्यं[11] भवति तस्मादामा पक्वं दुहे[12] यदि

---

[1] So corr. Ch यासकामो; Kap. S. 44, 5 = Corr. [2] Erste Hand in Ch ब्रह्मत्ति; Kap. S. 44, 5 ब्रह्माति [3] So corr. Ch ज्ञातये ऋत्विजे; Kap. S. 44, 5 = Corr. [4] So corr. Ch दादित्या; Kap. S. 44, 6 = Corr.; cf. auch TS 6, 5, 6, 3. [5] So corr. Ch उच्छेष्टाद्वा; Kap. S. 44, 6 उच्छिष्टाद्वा [6] So corr. Ch श्छिष्ट [7] So corr. Ch त्या:; Kap. S. 44, 6 = Corr.; cf. TS 6, 5, 6, 4. [8] So Ch (त्यांत॰); Kap. S. 44, 6 इत्यादित्यांतमे तागमयत्वैतत्प्रति [9] So corr. Ch स्यरथ; Kap. S. 44, 6 स्यारथ [10] So corr. Ch त्तानेवणनाद्यम॰; Kap. S. 44, 6 तामेवानाद्यम॰ [11] So corr. Ch शृता-उंक्यं; Kap. S. 44, 6 शृतातंक्यं; cf. auch TS 6, 5, 6, 4. [12] So corr. Ch दामपक्व-न्महे; Kap. S. 44, 6 = Corr.

कामयेत वर्षेदिति या दिव्या वृष्टिस्तया त्वा श्रीणामीति दध्नोपरिष्टा-
च्छ्रीणीयात्पशवो वै दधि पशव आदित्यः[1] पशुभ्य एव[2] वर्षति यर्हि
वर्षति पशुभ्य एव वृष्टिं निनयत्युपांशुसवनेन[3] मेक्षयति[4] प्राणो वा
उपांशुसवनः पशव आदित्यः[5] पशुष्वेव प्राणं दधाति विवस्व आदि-
त्यैष ते सोमपीथ इत्येष वाव स उपांशुसवनस्साक्षाद्देवैनं सोमपीथेन 5
समर्धयति यद्युद्गृहीतस्य स्तोको ऽवपद्यते ताजक्प्रवर्षति गृहीत्वापि-
दधाति गर्भाणां धृत्या अप्रपादाय तं दशमे स्तोत्रे प्रच्यावयति त-
स्माद्दशमे मासि गर्भा हिताः प्रजायन्ते ऽन्यत्रेक्षमाणो[6] जुहोति रुद्रो
वा अग्निः पशव आदित्यः[7] पशूनां गोपीथाय यदीक्षेत ब्राह्मण उप-
द्रष्टा पशून्गृह्णीयात्पशूनामेव प्रदीयमानानामनुपद्रष्टा[8] भवति ॥ ६ ॥ 10
cf. Kap. S. 44, 6; Mâitr. S. 4, 6, 9; TS 6, 5, 6.

अन्तर्यामपात्रेण सावित्रं गृह्णाति पशवो वा अन्तर्यामस्सवि-
तृप्रसूताः पशवः प्रजायन्ते सवितृप्रसूत एवैनान्प्रजनयति तमसन्नं[9]
जुहोति तस्मादसन्नाः पशवस्सदद्रि[10] प्रजायन्ते देवा वै तृतीयसवन-
मुद्यमं नाशक्नुवन्प्रातस्सवने[11] तर्हि सवितासीत्तं देवा[12] अब्रुवंस्त्वयेद-
मुद्यच्छामहा इति नेत्यब्रवीन्मुख्यो ऽहमस्मि न प्रत्यङ्ङुपक्रमिष्यामीति 15
मुख्य एवात्रास इत्यब्रुवन्मुख्य[13] इहाथ त्वयोद्यच्छामहा[14] इति तत्स-
वित्रोदयच्छन्त यत्सावित्रो गृह्यते तृतीयसवनस्योद्यत्या अभि त्वा देव
सवितरित्येतया प्रातस्सवने मुख्यस्समन्तं वै तत्सविता यज्ञं पर्यभव-

---

[1] So corr. Ch आदित्याः; Kap. S. 44, 6 = Corr. [2] So corr. Ch एष; Kap. S. 44, 6 = Corr. [3] So corr. Ch वृष्टिर्नि; Kap. S. 44, 6 = Corr. [4] So corr. Ch erste Hand मोक्षयति; Kap. S. 44, 6 मेक्षयति [5] So corr. Ch आदित्याः; Kap. S. 44, 6 = Corr. [6] Kap. S. 44, 6 अन्यत्प्रेक्षमाणो [7] So corr. Ch आदित्याः; Kap. 44, 6 = Corr. [8] So corr. Ch प्रदीयमानानामानुपद्रष्टा; Kap. S. 44, 6 प्रवीर्यमानानामनुपद्रष्टा; Mâitr. S. 4, 6, 9 a. E. प्रधीर्यमानानामेषामुपद्रष्टा [9] So corr. Ch तसमन्न; Kap. S. 44, 7 तमसंन [10] Kap. S. 44, 7 सदधि [11] So corr. Ch सवनमुद्यशक्नुव॰; Kap. S. 44, 7 = Corr.; cf. auch Mâitr. S. 4, 7, 1 (p. 94, Z. 2). [12] So corr. Ch सवितासेतुर्देवा; Kap. S. 44, 7 = Corr. [13] Kap. S. 44, 7 एवापासत इत्य॰ [14] So corr. Ch मह; Kap. S. 44, 7 = Corr.; cf. oben.

त्समन्तं भ्रातृव्यं परिभवति य एवं वेदान्तर्यामपात्रेणाग्रायणात्सा-
वित्रं तृतीयसवने गृह्णाति ॥ प्रातर्वा एष गृह्यते गायत्र्या लोके य-
दाग्रायणस्तं तृतीयसवने विगृह्णाति जगत्या लोके तस्मादाग्रायणा-
त्सावित्रो गृह्यते सविता हि देवानां गायत्रस्सावित्रस्य संस्रावे वैश्व-
5 देवमभिगृह्णाति समानो वा एष ग्रहस्संतत्यै वैश्वदेवीरिमाः प्रजास्स-
वितृप्रसूताः प्रजाः प्रजायन्ते सवितृप्रसूता एवैनाः प्रजनयति सुशर्मा-
सि सुप्रतिष्ठान इति सोमे[1] हि सोममभिगृह्णात्यथो[2] सुशर्माणमे-
वोत्तरमधरस्मै करोति सुप्रतिष्ठानमधरमुत्तरस्मै बृहदुक्षे नम इति बृह-
द्धि देवानां नमः पितॄणामुक्थभागा[3] वै पितरो ऽस्तोमभाजो यन्नै-
10 वैभ्य उक्थं[4] शंसति तदेभ्यो ग्रहं गृह्णाति ॥ ७ ॥
cf. Kap. S. 44, 7; Mâitr. S. 4, 7, 1; TS 6, 5, 7.

प्रजननं वै पात्नीवतो यद्वै किंच यज्ञे पात्नीवतं क्रियते प्रजनन-
मेव तदुपांशुपात्रेण गृह्णाति प्राणो वा उपांशुः प्राणात्प्रजाः प्रजा-
यन्ते प्रजननायोपांशुना प्रयन्त्युपांशुपात्रेणोद्यन्ति प्राणो वा उपांशुः
प्राणेनैव प्रयन्ति प्राणेनोद्यन्ति बृहस्पतिसुतस्य त इति ब्रह्म वै बृह-
15 स्पतिर्ब्रह्मणः प्रजाः प्रजायन्ते ब्रह्मणैवैनाः प्रजनयतीन्द इति[5] रेत एव
दधातीन्द्रियावत इतीन्द्रियं वै प्रजास्सामपीथो[6] ऽग्ना३इ[7] पत्नीवा-
न्निति मिथुनमेव करोति सजूस्त्वष्ट्रा सोमं पिबेति त्वष्टा वै रूपाणां
विकर्ता सो ऽस्मै रूपाणि विकरोत्येष वै ग्रहः पत्नीभ्यो नातिष्ठत तं[8]
देवा आज्यं वज्रं कृत्वाघ्नन्यत्पात्नीवतं श्रीणाति स्तृत्यै संपातेन श्री-
20 णाति संतत्या उपरिष्टाच्छ्रीणाति तस्मात्स्त्र्यखलतिर्भावुका स्पृतं[9] वा

---

[1] So corr. mit Caland; Ch und Kap. S. 44, 7 सोमो; cf. TS 6, 5, 7, 3 सोमे सोममभिगृह्णाति [2] So corr. Ch समम॰; Kap. S. 44, 7 सोमम॰; cf. auch TS 6, 5, 7, 3 (vorige Anmerkung); Mâitr. S. 4, 7, 1 (p. 94, Z. 8) यत्स्विवत्सोमः सोमे प्रतितिष्ठति [3] So corr. Ch मुक्ताभागा; Kap. 44, 8 मुख्यभागा; Mâitr. S. 4, 7, 1 उक्थभाजो [4] So corr. Ch उक्तौ; Kap. S. 44, 8 उक्थ्यं [5] Kap. S. 44, 8 तंनेदविति [6] So corr. Ch सोमपीय; Kap. S. 44, 8 = Corr. [7] Kap. S. 44, 8 ग्नायु [8] So corr. Ch तान्देवा; Kap. S. 44, 8 तं देवा; cf. Mâitr. S. 4, 7, 4 (p. 97, Z. 14); TS 6, 5, 8, 2. [9] So corr. mit Caland; Ch स्तृतं

एतँ सोमं जुहोत्यशृतानितराँस्तस्मात्स्त्री निर्वीर्यानिर्वीर्यः[1] पुमान्नै-
तस्य होता यजति पश्चेव हि स पश्चात्प्राणान्परिहरेदग्निर्यजति पुरो
हि स पुरः प्राणान्नानुयजति यदनुयजेदग्निना प्राणानन्तरियात्प्रमीयेत
स्तृतं वा एतँ सोमं भक्षयति तस्मादग्नित्पण्डको[2] भावुकः प्रजननं वै
पात्नीवतस्तस्माद्बहुपशुर्भावुकस्सह[3] पात्रेण नेष्टारमभिसर्पति पत्नी-
रेव सोमपीथं गमयति नोपस्थ आसीत यदुपस्थ आसीत पण्डक-
स्स्यादन्तरा नेष्टारं च धिष्ण्यं च व्यवसर्पति स्त्रीणां वै नेष्टा पुमा-
न्धिष्ण्यो मिथुन एव रेतो दधाति ॥ ८ ॥

cf. Kap. S. 44, 8; Mâitr. S. 4, 7, 4; TS 6, 5, 8.

इन्द्रो वै वृत्रमहँस्तस्य मूर्धानमुदरुजत्स[4] द्रोणकलशो ऽभवत्ततो
यस्सोमस्समस्रवत्स हारियोजनो ऽभवदिन्द्रो वै वृत्रँ हत्वा तस्य क्लो-
म्नो हृदयात्सोमँ समसिञ्चत्स हारियोजनो[5] ऽभवत्सो ऽमन्यत यदिम-
मशृतमद्वितीयँ होष्यामि तदन्वसुरा आभविष्यन्ति यन्न होष्यामि त-
दन्वाभविष्यन्तीति[6] स सँस्थितस्सोम आसीत्प्रहृताः परिधयो ऽथोपो-
दतिष्ठद्धोतुं तमग्निरब्रवीन्न मय्येतमशृतमद्वितीयँ[7] होष्यसीति तस्मि-
न्धाना[8] आवपतँ शृतं द्वितीयवन्तमजुहोद्यद्धाना आवपति शृतत्वायैव
द्वितीयत्वाय ये वै ते वृत्रे पशव आसँस्त[9] एवैते पशूनेवैतत्कामदुघो[10]
ऽवरुन्द्धे कामं कामँ ह्येतेषां कुरुत ऋक्सामे वा इन्द्रस्य हरी तयोरे-
तद्भागधेयम् ॥ यद्धारियोजन आधानानि परिधयो यत्प्रहृतेषु परि-
धिषु हारियोजनं जुहोति निराधानाभ्यामेवाभ्यां घासमपिदधाति[11]

---

[1] So corr. mit Caland; Ch स्तृता° णिर्वीर्यां णिर्वीर्यः [2] So corr. Ch तस्मादग्निं पण्डको; Kap. S. 44, 8 तस्मादग्नीत्यंद्रुको [3] So corr. Ch बहुपशुभा° [4] So corr. Ch मुदरुणात्स; Kap. S. 44, 9 = Corr.; cf. auch Mâitr. S. 4, 7, 4 (p. 98, Z. 1). [5] Kap. S. 44, 9 schreibt hier und auch weiterhin immer हार्यांजन [6] So auch Kap. S. 44, 9; aber cf. Mâitr. S. 4, 7, 4 (p. 98, Z. 5). [7] So corr. Ch मय्येदमशृत°; cf. Mâitr. S. 4, 7, 4 (p. 98, Z. 11); Kap. S. 44, 9 तमसिरब्रवीत्तमस्येदमशृतम° [8] So corr. Ch तस्मिन्नाना; Kap. S. 44, 9 = Corr. [9] So corr. Ch आसँ; Kap. S. 44, 9 आसुंस्त [10] So auch Kap. S. 44, 9. [11] So corr. Ch घममपिद°; Kap. S. 44, 9 = Corr.

प्रजापतिर्वा आग्रायण आग्रायणादेष सोमो ऽतिरिच्यते यद्वै यज्ञ-
स्यातिरिच्यते प्रजापतिं तदभ्यतिरिच्यते यदेतमतिरिक्तं सोमं जुहोति
तस्मादयमतिरिक्तः प्रजापतिः प्रजा एवाभिवपते द्रोणकलशेनोन्नेता
हारियोजनं जुहोत्यतिरिक्तं वा एतत्पात्राणां यद्द्रोणकलशो ऽतिरिक्त
5 एष ऋत्विजां यदुन्नेतातिरिक्त एष सोमानां यद्धारियोजनो ऽतिरि-
क्तेनैवातिरिक्तमाप्नोत्युन्नेतर्युपहवमिच्छन्ते[1] य एव तत्र[2] सोमपीथस्त-
स्यावरुद्धै ये वै ते वृत्रे पशव आसंस्त एवैते यत्संभिन्द्यात्संशारुका
एनमल्पाः पशवो भुञ्जन्त उपतिष्ठेरन्हिनस्ति[3] हि यन्न संभिन्द्यादसं-
शारुका एनं बहवः पशवो भुञ्जन्त उपतिष्ठेरन्न हि हिनस्ति समिव[4]
10 गृह्णीयादुभयमेव करोत्यसंशारुका एनं बहवः पशवो भुञ्जन्त उपति-
ष्ठन्ते निरिव[5] धयेद्य एव तत्र सोमपीथस्तस्यावरुद्ध्या उत्तरवेद्यां निव-
पति पशवो वा उत्तरवेदिः पशवो हारियोजनीः[6] पशुष्वेव पशून्दधा-
ति ॥ ९ ॥ cf. Kap. S. 44, 9; Mâitr. S. 4, 7, 4; TS 6. 5, 9.

पात्राणि प्रयुज्यन्ते ऽनयोर्लोकयोर्विधृत्यै प्रान्यानि युज्यन्ते ना-
15 न्यानि यानि प्रयुज्यन्त इमं तैर्लोकं[7] दाधार यानि न प्रयुज्यन्ते ऽमुं तैः
पराङ् ह्यसौ लोको ऽनिरुक्त उपांशुपात्रं प्रयुज्यते ऽजा एव तत्पशू-
नामनुप्रजायन्ते त्रिर्विगृह्णाति तस्मात्सा त्रीञ्जनयत्यथो[8] द्वौ यदुपां-
शुपात्रं प्रयुज्यते ऽजा एव तेन पशूनां[9] दाधारान्तर्यामपात्रं प्रयुज्यते
ऽवय एव तत्पशूनामनुप्रजायन्ते यदन्तर्यामपात्रं प्रयुज्यते ऽवीरेव
20 तेन पशूनां दाधारर्तुपात्रे[10] प्रयुज्येते अश्वा एव तत्पशूनामनुप्रजा-
यन्ते[11] तस्मात्तयोरश्वस्येव शफो[12] ऽधस्ताद्यदृतुपात्रे प्रयुज्येते[13] अश्वा-

[1] Kap. S. 44, 9 मिछंति; TS 6, 5, 9, 4 इछन्ते [2] So corr. Ch तत्र; Kap. S. 44, 9 = Corr. [3] So corr. Ch उपरिष्टेंर [4] So Ch; Kap. S. 44, 9 समव [5] So Ch; Kap. S. 44, 9 निरव [6] cf. TS 6, 5, 9, 2. 3. 4; Kap. S. 44, 9 हार्याजनिः [7] So corr. Ch लोंकान्दा°; Kap. S. 45, 1 = Corr. [8] So corr. Ch तस्मात्मा त्रीं°; Kap. S. 45, 1 तस्मात्सा तृन् जनयत्यथो; cf. TS 6, 5, 10, 1. [9] So corr. Ch पशून्दा°; Kap. S. 45, 1 पशूनां दा°; cf. auch weiter unten. [10] So corr. Ch दाधारंतुपात्रे [11] So corr. Ch ते पशूना° [12] So corr. mit Caland; Ch शयो; Kap. S. 45, 1 तयोरश्वास्य शयो [13] So corr. Ch प्रयुजेते

नेव तेन पशूनां दाधारोक्थ्यपात्रं प्रयुज्यत आरण्या एव तत्पशवो ऽनुप्रजायन्ते तस्मात्तान्धृतान्ग्राममागतान्घ्नन्ति[1] यदुक्थ्यपात्रं[2] प्रयुज्यत आरण्यानेव तेन पशून्दाधार शुक्रपात्रं प्रयुज्यते ऽत्तीरेव तत्प्रजा अनुप्रजायन्ते मन्थिपात्रं प्रयुज्यत आद्या एव तत्प्रजा अनुप्रजायन्ते यदेते प्रयुज्येते[3] उभयोरेवैतदत्तीश्चाद्याश्च प्रजा दाधारर्तुपात्रे शुक्रपात्रात्पूर्वे प्रयुज्येते असौ वा आदित्यश्शुक्रो रश्मय ऋतवस्तस्मादेते पूर्वे प्रयुज्येते पूर्वे ह्येत एतस्मादवरमादित्यपात्रं[4] प्रयुज्यते गाव एव तत्पशूनामनुप्रजायन्ते यदादित्यपात्रं प्रयुज्यते गा[5] एव तेन पशूनां दाधाराग्रायणपात्रं प्रयुज्यते सर्वा एव तत्प्रजा अनुप्रजायन्ते यदाग्रायणपात्रं प्रयुज्यते सर्वा एव तेन प्रजा दाधार द्रोणकलशः प्रयुज्यते प्रजापतिर्वै[6] द्रोणकलशो यद्द्रोणकलशः प्रयुज्यते तस्मादिदं प्रजापतिः प्रजा वेद तस्मादयं क्षयो ऽस्त्येतावन्तो वै प्रातर्ग्रहा गृह्यन्ते ते स्तोत्रवन्त उक्थवन्तो[7] निदानवन्त आयतनवन्तः कर्तव्या नवैतान्गृहीत्वा नवभिर्बहिष्पवमाने[8] स्तुवन्ति तेन ते स्तोत्रवन्तो यत्पुनरेत्याश्विनं गृह्णाति सोमेनैव[9] स स्तोत्रवान्यदुपांश्वन्तर्यामौ हुतौ[10] होतानुमन्त्रयते तेन ता उक्थवन्तौ[11] ॥ यदैन्द्रवायवं तेनैन्द्रवायव[12] उक्थवान्यन्मैत्रावरुणं[13] तेन मैत्रावरुण उक्थवान्यदाश्विनं[14] तेनाश्विन उक्थवान्यन्निष्केवल्यं[15] तेन शुक्रमन्थिना उक्थवन्तौ[16] यद्वैश्वदेवं तेनाग्रायण

---

[1] So corr. Ch ग्रामममागतान्; Kap. S. 45, 1 ग्राममागतां [2] So corr. Ch यदुत्त्यपात्रं; Kap. S. 45, 1 = Corr. [3] So corr. Ch यादेते प्रयुज्येते; Kap. S. 45, 1 यदेते प्रयुष्वेते [4] So corr. Ch एतस्मादवर आदित्यपात्रं; Kap. S. 45, 1 ह्येव एतस्मादवरादित्यपात्र [5] So corr. Ch गाव एव; Kap. S. 45, 1 = Corr. [6] So corr. Ch प्रजापतिर्वा; Kap. 45, 1 = Corr. [7] So corr. Ch तद्वंतो; Kap. S. 45, 1 = Corr. [8] So corr. Ch मानो; Kap. S. 45, 1 मानं [9] So Ch; Kap. S. 45, 1 स्तोमेनैव [10] So corr. Ch यामे हुतो; Kap. S. 45, 1 यामो हुतो [11] So corr. Ch उक्त°; Kap. S. 45, 1 युक्थ्यवंतो [12] So corr. Ch तेनेन्द्र°; Kap. S. 45, 1 = Corr. [13] So corr. Ch उक्त°; Kap. S. 45, 1 उकथ्य° [14] So corr. Ch उक्त°; Kap. S. 45, 1 उकथ्य° [15] So corr. Ch उक्त°; Kap. S. 45, 1 उकथ्य° [16] So corr. Ch उक्त°; Kap. S. 45, 1 नावुकथ्यवंतौ

उक्थवान्यदुक्थान्युक्थशँसिनश्शँसन्ति[1] तेनोक्थ्य[2] उक्थवानेताव-न्तो[3] वै प्रातर्ग्रहा गृह्यन्ते तानेतान्स्तोत्रवत उक्थवतो[4] निदानवत आयतनवतः करोति निदानवानायतनवान्भवति य एवं वेद ॥ १० ॥
cf. Kap. S. 45, 1; Mâitr. S. 4, 8, 8; TS 6, 5, 10, 1; 6, 5, 11, 1—3.

इति श्रीमद्यजुषि काठके चरकशाखायां मध्यमिकायामायुष्यं ना-
5 माष्टाविंशं स्थानकं संपूर्णम्[5] ॥

---

देवाश्च वा असुराश्च संयत्ता आसँस्ते देवास्संघातँ संघातं पराज-यन्त ते ऽविदुरनायतना हि वै स्मस्तस्मात्पराजयामहा इति त एताः पुरो ऽकुर्वत ता एषामनायतना[6] नाध्रियन्त त[7] एतान्पुरोडाशँ[8] अप-

---

[1] So corr. Ch उक्त° दुक्तान्युक्त°; Kap. S. 45, 1 उक्थ्य° यदुक्थ्यान्युक्थ्यशंसिनः [2] So corr. Ch तेनोक्तय; Kap. S. 45, 1 = Corr. [3] So corr. Ch उक्त°; Kap. S. 45, 1 = Corr. [4] So corr. Ch उक्त°; Kap. S. 45, 1 उक्थ्यवंता [5] So die Unterschrift in Ch (resp. विंशि habe ich in विंशं geändert, weil sonst den Unterschriften das ˆ fehlt). — Sehr merkwürdig aber ist der Umstand, daß Kap. S. hier die Worte hat इति आयुस्थानकं दशमं (sic) प्रपाठकः समाप्तः ॥ १ ॥ Nach Abschluß von 44, 9 steht deutlich इति कपिष्ठलसंहितायां चतुश्चत्वारिंशतमो ध्यायः ॥ Hier aber wird der darauf folgende Abschnitt als zehnter den vorangehenden neun offenbar zugerechnet, während ihn die Ziffer ॥ १ ॥ im Widerspruch damit deutlich als ersten Abschnitt von Cap. 45, also 45, 1, charakterisiert. Es scheint also, daß hier eine ältere Zählung mit einer jüngeren sich kreuzt, in unausgeglichener Weise. Das Interessanteste dabei aber ist, daß die ältere Rechnung zum Kâṭhaka stimmt, in welchem dieser Abschnitt ja deutlich als zehnter zu den neun vorangehenden gehört. [6] So corr. एषासनायतना; Kap. S. 45, 2 एषमनायतना; cf. Mâitr. S. 3, 10, 5. [7] Dies त fehlt in Ch und ist von mir ergänzt, unter Anlehnung an die freilich corrupte Lesung in Kap. S. 45, 2 नाध्ययंत नं एता°; auch der Saṃdhi erfordert die Ergänzung, da die Schreibung von Ch नाध्रियन्त एता° unter keinen Umständen bestehen bleiben kann. [8] So Ch, hier ausnahmsweise

श्यैस्तानन्वसवनं[1] निरवपंस्तैः पुरो ऽहंहन्सवनानि वाव ते पुरो ऽकुर्वत यत्पुरो ऽहंहंस्तत्पुरोडाशानां पुरोडाशत्वं यदनुसवनं पुरोडाशान्निर्वपति सवनानां धृत्यै विजित्यै तस्मादनुसवनं पुरोडाशस्य प्राश्नीयात्सोमपीथस्य धृत्यै यतो घृताक्तं[2] स्यात्ततः प्राश्नीयादाज्येन वै वज्रेण देवा वृत्रमघ्नन्सोमो वृत्रस्सोमपीथस्याघाताय[3] तदाहुर्न वा अन्येनाज्याद्धीने समष्टुमर्हतीति[4] सर्वमेतद्धविर्भूतं यत्किंचोत्पुनन्ति यद्देवानुत्पूतं[5] स्यात्तस्य नाश्नीयाद्दीर्घजिह्वी वै देवानां यज्ञमवालेट्[6] प्रातस्सवनं तद्ध्रमाद्यत्सा[7] पयस्याभवत्तस्मादामिक्षा[8] विमदितेव[9] यत्पयस्या प्रातस्सवने भवति प्रातस्सवनस्य समृद्ध्यै मैत्रावरुणी प्रातस्सवने भवति नोत्तरे सवने अश्नुते प्राणापानौ[10] वै मित्रावरुणौ प्राणापाना एव मुखतः परिहरते तस्मान्मुखतः प्राणापानौ न वै स्तोत्रेण न शस्त्रेण पङ्क्तिर्यज्ञे ऽवकल्पते पञ्चैतानि हवींषि पङ्क्तिमेवैतद्यज्ञे ऽवकल्पयति ॥ हविष्पङ्क्तिर्वै यज्ञो नाराशंसपङ्क्तिः पाङ्क्तः पञ्चैतानि हवींषि तेन हविष्पङ्क्तिर्द्विनाराशंसा[11] प्रातस्सवने द्विनाराशंसा[12] माध्यन्दिन[13] एकनाराशंसा[14] तृतीयसवने तेन नाराशंसपङ्क्तिरग्नीषोमीयः पशुस्त्रीणि सवनानि वशानूबन्ध्या तेन पाङ्क्तो य एवमेतानि यज्ञस्य रूपाण्यनुवेदर्ध्नोति[15] देवाश्च वा असुराश्च संयत्ता आसंस्ते देवेभ्यो महिमानो

---

ähnlich der Mâitr. S.; doch vgl. unten हरिर्वा इन्द्रो; Kap. S. 45, 2 एतान्पुरोडाशान्यगृंस्तनेनुसवनं

[1] So corr. Ch ननुमवनन्निर°; Kap. S. 45, 2 = Corr. [2] Kap. S. 45, 2 घृतानात्तं [3] So corr. Ch सोमपीथस्याघताय; Kap. S. 45, 2 सोमपीथस्याद्यातय [4] Kap. S. 45, 2 न वा अन्येनाष्ठादद्दीने समष्टुमर्हतीति [5] So corr. Ch यद्देवा°; Kap. S. 45, 2 यदेवानुत्पूतं [6] So corr. Ch मवालेड्; cf. Mâitr. S. 3, 10, 6 (p. 138, Z. 5. 6) und Schol. zu Pâ. 4, 1, 59; Ait. Br. 22, 2 असुरो प्रातः सवनमवालेद्; Kap. S. 45, 2 दीर्घजिह्वो वै देवानां यज्ञमवालेत्प्रा° [7] So corr. Ch तद्ध्रमाद्य°; Kap. S. 45, 2 तुद्ध्रमाद्य°; cf. Mâitr. S. 3, 10, 6 (p. 138, Z. 6); Ait. Br. 22, 2. [8] So corr. Ch पयस्यो भव° [9] So corr. Ch विसदितेव; in Kap. S. 45, 2 Lücke. [10] So corr. Ch प्राणापानो; Kap. S. 45, 2 = Ch. [11] So corr. Ch शंसाः; in Kap. S. 45, 2 Lücke. [12] So corr. Ch द्विनाराशंस्या; Kap. S. 45, 2 = Corr. [13] So corr. Ch मध्यन्दिन; Kap. S. 45, 2 = Corr. [14] So corr. Ch एकनाराशंसास्तृतो°; Kap. S. 45, 2 = Corr. [15] So corr. Ch दब्नोति; Kap. S. 45, 2 वेदध्नोते

ऽपाक्रामँस्ते[1] ऽसुरानगच्छँस्ते ऽसुरा देवानां बहूनि शतान्यघ्नँस्तानीमा-
नि छन्दाँसि यान्ययज्ञवाहानि[2] ते देवा अबिभयुरित्थं[3] वाव नस्स-
र्वानसुरा अवपत्स्यन्तीति[4] तान्युपामन्त्रयन्त ते ऽब्रुवन्वार्यं वृणामहा
इति ते परिवापपुरोडाशमवृणत तद्भागधेयमभ्यायन्नृक्सामे वावैभ्य-
5 स्तदपाक्रामतां[5] पशवो वागिन्द्रियं प्राणापानौ स इन्द्रो ऽमन्यतेमे
वावेदमभूवन्निति तेषाँ सायुज्यमगच्छद्धरिवाँ[6] इन्द्रो धाना अस्त्वित्यृ-
क्सामे वा इन्द्रस्य हरी ऋक्सामयोरेव तत्सायुज्यमगच्छत्पूषण्वान्क-
रम्भमिति पशवो वै पूषा पशूनामेव तत्सायुज्यमगच्छत्सरस्वतीवा-
न्भारतीवान्परिवाप इति वाग्वै सरस्वती वाच एव[7] तत्सायुज्यमग-
10 च्छदिन्द्रस्यापूप इतीन्द्रियं वा इन्द्र इन्द्रियस्यैव तत्सायुज्यमगच्छन्मि-
त्रावरुणयोः पयस्येति प्राणापानौ वै मित्रावरुणौ प्राणापानयोरेव
तत्सायुज्यमगच्छदेतेषामेव महिम्नाँ सायुज्यं गच्छति सर्वमायुरेति प-
शुमान्भवति न यज्ञियामार्तिमार्छति[8] य एवं वेद ॥ १ ॥
cf. Kap. S. 45, 2; Mâitr. S. 3, 10, 5. 6.

नीडं[9] वा एतद्यज्ञस्य क्रियते यद्यजुषा क्रियत उच्चैर्हृचा च साम्ना
15 च क्रियते यदृचः पुरोरुचो भवन्ति[10] दृढिम्न[11] एव प्रत्युत्तब्ध्या अशि-
थिलत्वाय[12] प्रैवर्चाह प्र यजुषा यच्छति गमयति ग्रहेणार्चा[13] वै स्तो-

---

[1] So corr. Ch पाक्रमि°; Kap. S. 45, 2 पाक्रामस्ते [2] Kap. S. 45, 2 या अन्ये अन्यवहानि [3] So corr. Ch युरित्त्थं; Kap. S. 45, 2 युरित्वं [4] Kap. S. 45, 2 अवपशंतीति [5] So corr. Ch वावेभ्य° पक्रामतां; Kap. S. 45, 2 lückenhaft; cf. Mâitr. S. 3, 10, 6 a. A. [6] So Ch; Kap. S. 45, 2 न्धरिवाँ इ°; cf. Mâitr. S. 3, 10, 6 (p. 137, Z. 14) हरिवं इ°; vgl. aber oben पुराडाशी अप° für पुरोडाशानप° [7] Kap. S. 45, 2 एष [8] So corr. Ch यज्ञियमा°; Kap. S. 45, 2 यज्ञोयामार्त्ति याछति [9] So Kap. S. 45, 3 a. A.; Ch मीडं; sehr ansprechend ist die Vermuthung von Bloomfield नीचं, insbesondere durch den Gegensatz zu उच्चैः, doch habe ich nicht gewagt, dieselbe in den Text zu setzen, da das ड sowohl in Ch wie in der Kap. S. übereinstimmend bezeugt ist. [10] So corr. Ch भवति; Kap. S. 45, 3 = Corr. [11] So corr. Ch द्रढिम्ण; Kap. S. 45, 3 दृढंम्न [12] In Ch das थ unbegreiflicherweise ausgemerzt, so daß nun अशिलित्वाय dasteht, während zuerst das Richtige geschrieben war; Kap. S. 45, 3 असिथिलत्वाय [13] So corr. Ch ग्रहेनर्चां; Kap. S. 45, 3 ग्रहेणार्च्चां

चाय गृह्यते यजुषा शस्त्राय तस्मादेते संहिते संहिते हि स्तोत्रं च शस्त्रं
च पराङ् वा एतर्हि यज्ञः पराचीर्देवतास्तृतीयसवने यजमानादाग्ने-
य्या पुरस्तात्सौम्यं परियजति वैष्णव्योपरिष्टादग्निर्वै सर्वा देवता वि-
ष्णुर्यज्ञो देवताश्चैव यज्ञं चालभते घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति
तस्यैषानुस्तरणी यत्सौम्यो दक्षिणार्धे ऽग्नेर्जुहोति दक्षिणा हि पितॄणां 5
सकृदवद्यति सकृदवत्तं हि पितॄणां यन्मेक्षणेन द्वितीयमवद्यति[1] तेनैव
सकृदवत्तं भवत्युद्गातृभ्यो हरन्ति सोमदेवत्यं वै साम साम्नस्सवीर्यत्वाय
सतनूत्वाय[2] प्राश्या३ न प्राश्या३ इति मीमांसन्ते यत्प्राश्नीयात्प्राका-
रुकस्स्याद्यन्न प्राश्नीयादहविस्स्यादवजिघ्रेदुभयमेव करोति[3] यो ऽलम-
न्नाद्याय सन्नन्नं नाद्यात्स प्राश्नीयात्परं वा एतदन्नं यत्पितरः परेणैवा- 10
न्नेनावरमन्नाद्यमवरुन्द्धे भेषजं वा एतद्देवा यज्ञायाकुर्वन्यत्सौम्यस्तदेष
भिषज्यस्तस्मादामयाविना[4] प्राश्यः पितरो मन्दन्तां सोमप्रतीका म-
न्दन्तां[5] व्यशेम देवहितं यदायुरिन्द्रपीतो विचक्षणो व्यशेम देवहितं
यदायुर्हृदिस्पृक्क्रतुस्पृग्वर्चोधा[6] असि वर्चो मे धेहि ॥

यन्मे मनो यमं गतं यद्वा मे अपरागतम् । 15
राज्ञा सोमेन तद्वयमस्मासु[7] धारयामसि ॥

इति सौम्यमवेक्षेत यद्वा इह प्राकरोति[8] यदस्यात्मनो मीयते पितॄ-
स्तद्गच्छति यत्सौम्यमवेक्षते[9] तदेवात्मन्यच्छते परीव पश्येद्यत्परिपश्य-

---

[1] Von सकृदवत्तं bis hierher im Texte von Ch nicht vorhanden, doch ist am Rande angemerkt वद्यति und unten auf der Seite finden sich als Einschaltung mit † bezeichnet die Worte सकृदवत्तं हि यन्मेक्षणेन द्वित्ती, offenbar unvollständig; die Kap. S. 45, 3 bietet das Ganze vollständig und darnach habe ich den Text hier ergänzt, resp. berichtigt. [2] So corr. Ch ohne स, bloß तनूत्वाय, und zwar am Rande eingeschaltet; Kap. S. 45, 3 सतनूप्राय; cf. TS 6, 6, 8, 2 सतनुत्वाय [3] So corr. mit Caland nach Kap. S. 45, 3 यमेव कराति; Ch भयमेवा करोति [4] Kap. S. 45, 3 तस्मादेषा भविष्यद्यस्तस्मादा° [5] Auch Kap. S. 45, 3 पितरो मंदंता सोमः प्रतीका मंदंतां; cf. Âpast. Çr. 19, 3, 7 सोमप्रतीकाः पितरो मदन्तां etc. [6] So corr. Ch स्पृक्रतु; cf. Mâitr. S. 4, 7, 2 (IV, p. 95, Z. 9). [7] So corr. Ch उद्वयम°; Kap. S. 45, 3 = Corr. [8] So auch Kap. S. 45, 3; cf. oben das Adj. प्राकारुक [9] So corr. Ch सोम्य; Kap. S. 45, 3 = Corr.

त्यात्मानमेव परिपश्यति सह त्वा अमुष्मिंल्लोके सर्वतनूर्य एवं वि-
द्वान्सौम्यमवेक्षते वीर्यं वा उपसदो निर्वीर्यं[1] तृतीयसवनं ता बहि-
र्यज्ञं क्रियन्ते यत्सौम्येन तृतीयसवने चरन्ति तृतीयसवन एव वीर्यं
दधत्येता हि देवता उपसत्स्विज्यन्त आग्नेय्या पुरस्तात्सौम्यं[2] परिय-
5 जति हतो नेद्यज्ञमभिप्रपद्याता[3] इति वैष्णव्योपरिष्टादग्निष्टोमे[4] नेत्सौ-
म्यमभिप्रपद्याता इत्युभयत[5] एव परिस्तृणात्यनभिप्रपादायाग्नेय्या[6] घृ-
तस्य[7] यजति सौम्या सौम्यस्य वैष्णव्योपरिष्टाद्घृतस्य यथापूर्वमेव दे-
वताः कल्पयति[8] ॥ २ ॥ cf. Kap. S. 45, 3; Mâitr. S. 4, 7, 2. 3; TS 6, 6, 7. 8.

प्राणा वै संस्थितयजूंषि नवैतानि यजूंषि नवभिर्बहिष्पवमानं
10 स्तुवन्ति नव प्राणाः प्राणैरेव प्रयन्ति प्राणैरुद्यन्ति संततं जुहोति
प्राणानां संतत्या अविच्छेदाय यं कामयेत[9] प्रमीयेतेति नव कृत्वो गृ-
हीत्वायजुष्केणैकैकं जुहुयात्प्राणा वै संस्थितयजूंषि प्राणेभ्य एवैनम-
न्तरेति ताजक्प्रधन्वति विश्वरूपो वै त्वाष्ट्रो यज्ञस्य व्यृद्धं च समृद्धं
चापश्यत्षडेतान्यृग्म्याणि[10] यदेवास्य व्यृद्धं तत्तैस्समर्धयति त्रीणि य-
15 जूंषि समृद्धमेव तत्षडृग्म्याणि षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति
त्रीणि यजूंषि त्रय इमे लोका एष्वेव लोकेष्वृध्नोति ॥ यद्वै यज्ञस्या-
तिरिच्यते वरुणस्तद्गृह्णाति यज्ञस्यैतदतिरिच्यते यदृजीषं यदौदुम्बरी
यदधिषवणे तेनापो ऽवभृथमवयन्त्यापो वै वरुणो निर्वरुणत्वाय न
वहन्तीष्वभ्यवेयुः[11] पशवो वा ऋजीषं पशूनस्य निर्मृज्युरपशुस्स्या-
20 न्नोदञ्चो[12] ऽभ्यवेयुर्यदुदञ्चो[13] ऽभ्यवेयुरभीपतः प्रजा वरुणो गृह्णीयान्न

---

[1] Ch निर्वर्यं; Kap. S. 45, 3 निर्वीर्यं [2] So corr. Ch सोम॰; Kap. S. 45, 3 = Corr. [3] Kap. S. 45, 3 नेयज्ञ॰ [4] Kap. S. 45, 3 ष्टोमो [5] So corr. Ch नेत्सौम्यमनुप्रपद्याता ता इत्युभयत; Kap. S. 45, 3 नेत्सौम्यमभिप्रपद्यतोमित्युनयतमेव [6] So corr. Ch ॰नभिप्रापादाया॰; Kap. S. 45, 3 नभिप्रपादयोग्नेय्या [7] So corr. Ch घृत; Kap. S. 45, 3 घृतस्या [8] Kap. S. 45, 3 देवतास्तर्पयति [9] So corr. Ch कामयेते [10] So corr. Ch षडोतान्यग्म्यानि; Kap. S. 45, 4 षडेतान्यृजिग्मानि; cf. Mâitr. S. 4, 8, 4 (IV, p. 111, Z. 6). [11] So Ch न वहंतीष्वभ्यवेयुः; Kap. S. 45, 4 त्वाय षेचहंतीष्व-भ्येयुः; cf. Mâitr. S. 4, 8, 5 a. A. (IV, p. 112, Z. 4 flg.). [12] So corr. Ch नोदञ्चे; Kap. S. 45, 4 नोदंचो [13] So corr. Ch दुदञ्चे; Kap. S. 45, 4 भ्यवेयुर्यदुदंचो

दक्षिणा यद्दक्षिणा पितृभ्यः प्रजा निधूवेयुरुदञ्चः[1] प्राञ्चो[2] ऽभ्यवय-
न्ति पश्चाद्धि[3] प्राङ् यज्ञो वरुणपाशान्मुच्यमान एति स्थावरास्स्रव-
यन्ति स्थावरा वै प्रत्यक्षं वरुणो वरुण एव वरुणमवयजत उरुं हि
राजा वरुणश्चकार शतं ते राजन्भिषजस्सहस्रमिति यथायजुरग्नेरनी-
कमप आविवेशेत्याघारमाघारयति समिद्ध्या एवोद्दीप्त्यै यत्र तृणं वा
दारु वा पश्येत्तत्रत्याघारयेदग्निमत्येव जुहोति समृद्ध्या अपबर्हिषः
प्रयाजान्यजति प्रजा वै बर्हिः प्रजा एव मृत्योरुत्सृजत्याज्यभागौ[4] य-
जति प्राणापानौ वा आज्यभागौ प्राणापाना एव प्रजानां वरुण-
पाशान्मुञ्चत्यथैष वारुणो निर्वरुणत्वायैककपालो भवति न वै पुरुषं
कपालैराप्तुमर्हत्येकधैवैनमाप्नोत्यग्नीवरुणाभ्यां समवद्यत्युभयत[5] एवैनं
वरुणपाशान्मुञ्चत्यग्नेश्च वरुणाच्च[6] सर्वो वा एष यज्ञस्तस्य बहु क्रि-
यते बहु न क्रियते यत्सँस्थापयेद्यज्ञं वरुणेन ग्राहयेद्यन्न सँस्थापयति
यज्ञमेव वरुणपाशादुत्सृजति समुद्रे ते हृदयमप्स्वन्तरिति समुद्रयो-
निर्वै यज्ञस्स्वमेवैनं योनिं गमयति यज्ञस्य त्वा यज्ञपत इत्याहुतिमेव
करोत्यवभृथ निचुङ्कुणेत्युभयस्मादेवैनमेतद्देवकृताच्च[7] मनुष्यकृताच्चैनसो[8]
मुञ्चति देवीराप[9] एष वो गर्भ इत्यपां वा एष गर्भस्स्वमेवैनं योनिं
गमयत्यभिष्ठितो वरुणस्य पाशो ऽवहतो वरुणस्य पाश इति वरुण-
पाशमेवावहन्त्यप्सुधौतस्य ते देव सोमेति बिन्दुमाचामति य एव
तत्र सोमपीथस्तस्यावरुद्ध्यै ॥ यदाचामेद्वरुण[10] एनं ग्राहुकस्स्यान्वीव
गृह्णीतोभयमेव करोति प्रत्यस्तो वरुणस्य पाशो नमो वरुणस्य पा-
शायेति वरुणपाशमेव प्रत्यस्यत्युदेत प्रजामायुर्वर्चो दधाना इत्याशि-

---

[1] Kap. S. 45, 4 निधुवेयुरुदंचः [2] Ch प्राञ्चे; Kap. S. 45, 4 प्राचो [3] So corr. Ch पश्चद्धि; Kap. S. 45, 4 पश्चाद्धि प्राग्यज्ञो [4] So corr. Ch सृज्यत्या°; Kap. S. 45, 4 vacat (die 2. Hälfte des Capitels fehlt). [5] So corr. Ch समवाद्य°; Kap. S. vacat. [6] So corr. Ch वरुणाश्च [7] So corr. Ch णोत्यु° कृताश्च [8] So corr. Ch कृताश्चैनसो [9] So corr. Ch देवीरापो; cf. TS 6, 6, 3, 4. [10] So corr. Ch यदाचमे°

षमेवाशास्ते ॥ एधो ऽस्येधिषीमहीति वरुणमेव निरवदायैधन्तमुपयन्ति[1] समिदसि समेधिषीमहीत्याशिषमेवाशास्ते तेजो ऽसि तेजो मयि धेहीति तेज एवात्मन्धत्ते ऽपो अद्यान्वचारिषं रसेन समगन्महीति यथायजुः ॥ ३ ॥ cf. Kap. S. 45, 4; Mâitr. S. 4, 8, 4. 5; TS 6, 6, 3.

5 यज्ञस्य वै शिरो ऽच्छिद्यत ततो यो रसो ऽस्रवत्सा[2] वशाभवद्यद्वशानूबन्ध्या[3] भवति यज्ञस्य सरसत्वाय मित्रो वै यज्ञस्य स्विष्टं गृह्णाति वरुणो दुरिष्टं यन्मैत्रावरुणी वशानूबन्ध्या भवत्युभयत एव यज्ञं प्रमुच्य यजमानाय संप्रयच्छति मित्राच्च वरुणाच्च[4] यथा लङ्गलेनोर्वरां प्रभिनत्त्येवमृक्सामाभ्यां यज्ञः[5] प्रभिद्यते यथा मत्यमन्ववास्य-
10 त्येवं[6] तद्यद्वशानूबन्ध्या यज्ञस्य शान्त्या अनुबध्यते[7] यत्प्रथममस्रवत्तद्बृहस्पतिरुपागृह्णाद्यद्द्वितीयं तन्मित्रावरुणौ यत्तृतीयं तद्विश्वे देवा यदि तिस्रो ऽनूबन्ध्यास्स्युर्मैत्रावरुणीं प्रथमां कुर्यादथ वैश्वदेवीमथ बार्हस्पत्यां[8] यज्ञस्य सर्वत्वाय सरसत्वायात्रात्र हि यज्ञस्य रसो ऽयातयामा वा एतस्य देवताश्च ब्रह्म च यस्सोमेन यजते यदेते वैश्वदेवी च बार्ह-
15 स्पत्या च भवतो देवतानां चैव ब्रह्मणश्चायातयामत्वाय[9] वैश्वदेवी मध्ये[10] भवति वैश्वदेवीरिमाः प्रजाः प्रजास्वेव रेतो दधात्युपांशु यजत्यनिरुक्तं हि रेतो बार्हस्पत्युत्तमा भवति ब्रह्म वै बृहस्पतिरन्तमेवागत्य ब्रह्मवर्चसे प्रतितिष्ठति ॥[11] यथा वा अनड्वान्यथाश्वो विमुक्तो

---

[1] So corr. Ch निरवधायैधन्तमुपयन्ति; anders Mâitr. S. 4, 8, 5 a. E. (IV, p. 113, Z. 16); Kap. S. vacat. [2] So corr. Ch स्रवत्मा [3] So corr. Ch वशाभवद्यशा° [4] So corr. Ch मित्राश्च वरुणाश्च; Kap. S. = Corr. (in einem entsprechenden Stück, das fälschlich in 45, 6 hineingerathen ist). [5] So corr. Ch यज्ञं; Kap. S. = Corr. (in einem entsprechenden Stück, das fälschlich in 45, 6 hineingerathen ist). [6] cf. Mâitr. S. 4, 8, 6 (IV, p. 114, Z. 9); TS 6, 6, 7, 4. [7] So corr. Ch अर्वबध्यते; Kap. S. = Corr. (in einem entsprechenden Stück, das fälschlich in 45, 6 hineingerathen ist). [8] So corr. Ch स्पत्या [9] So corr. Ch ब्राह्मण°; cf. Mâitr. S. 4, 8, 6 (IV, p. 114, Z. 2). [10] So corr. Ch मध्यो; Kap. S. = Corr. (in einem entsprechenden Stück, das fälschlich in 45, 6 hineingerathen ist). [11] Nur von hier an bis zum Schluß ist Kap. S. 45, 5 — das entsprechende Cap. — vorhanden.

ऽपक्रामत्येवं सोमेनेजानाद्देवताश्च[1] यज्ञश्चापक्रामन्त्याग्नेयं[2] पञ्चकपा-
लमुदवसानीयं निर्वपत्यग्निर्वै सर्वा देवताः पाङ्क्तो यज्ञो देवताश्चैव
यज्ञं चालभते गायत्रो वा अग्निर्गायत्रच्छन्दास्तं छन्दसा व्यर्धयति य-
त्पञ्चकपालं करोत्यष्टकपालः[3] कार्यो ऽष्टाक्षरा गायत्री गायत्रो ऽग्नि-
र्गायत्रच्छन्दास्स्वेनैवैनं छन्दसा समर्धयति पाङ्क्ते[4] याज्यानुवाक्ये भवतः 5
पाङ्क्तो यज्ञस्तेन यज्ञान्नैति ॥ ४ ॥

cf. Kap. S. 45, 5 (nur der Schluß an richtiger Stelle vorhanden; der Anfang des Cap. zum größten Theil fälschlich in 45, 6 hineingerathen); Mâitr. S. 4, 8, 6; TS 6, 6, 7.

उपयामगृहीतो ऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृ-
ह्णामि दक्षाय दक्षवृधमग्निजिह्वेभ्यस्त्वर्तायुभ्यो[5] वातापिभ्यः पर्जन्या-
त्मभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यः पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा
सते त्वासते त्वा भूताय त्वा भव्याय त्वा यतः प्रजा अखिद्रा अजायन्त 10
तस्मै त्वा प्रजापतये विभुदाव्ने[6] जुहोमि स्वाहाभि सोमो ऽपः[7] का-
मयते ऽभि सोममापो यथा गावस्संजानानास्संगत्यान्यान्यां[8] घ्नन्त्येवं
वा एतौ संजानानौ संगत्यान्यो ऽन्यस्येन्द्रियं वीर्यान्निहत[9] उभयमेत-
त्प्राजापत्यं यत्सोमश्चापश्चापामेष रसो यद्दधि यद्वै पुत्रौ युध्येते पिता
ताभ्यां कल्पयति स्व एवैनौ[10] लोके स्वेन भागधेयेन पिता शमयति 15
सह त्वै यज्ञेन समृद्धेन यजते यस्यैष गृह्यते दध्ना सर्वाणि सवनानि
पशुमन्ति वीर्यावन्ति[11] कर्तव्यानि यत्पयस्यया प्रातस्सवने चरन्ति
तेन तत्पशुमद्वीर्यावद्यद्दधिघर्मेण[12] मध्यन्दिने तेन तत्पशुमद्वीर्याव-

---

1 So corr. Ch सोमेनजादाद्दे; Kap. S. 45, 5 मत्येवासामेनोजानादेवताश्च 2 So corr. Ch यज्ञाश्च; Kap. S. 45, 5 यज्ञश्च 3 So Ch; Kap. S. 45, 5 ष्टाक; die Form अष्टकपाल in Böhtlingks Wörterbuch mit Sternchen versehen, also überliefert, aber nicht belegt. 4 So corr. Ch पंङ्क्ते; Kap. S. 45, 5 पांक्तौ 5 So corr. Ch ग्निर्जिह्वे°; Kap. S. 45, 6 = Corr. 6 So corr. Ch विभुदाव्नो; Kap. S. 45, 6 विभुदाम्ने 7 So corr. Ch भि सोमपः; Kap. S. 45, 6 भि सोमाय कामयते भि सोममपो 8 Ch संगत्यान्यान्या; Kap. S. 45, 6 संगत्यान्यान्यां 9 So Ch; Kap. S. 45, 6 न्यो न्यस्येप्रियतिरहरत 10 So corr. Ch एवैनो; Kap. S. 45, 6 = Corr. 11 Kap. S. 45, 6 वीर्यवंति 12 Kap. S. 45, 6 वीर्यवद्य°; ebenso weiterhin.

ध्याशिरा तृतीयसवने तेन तत्पशुमद्वीर्यावत्सर्वाण्यस्य सवनानि प-
शुमन्ति वीर्यावन्ति[1] भवन्ति य एवं वेद ॥ ५ ॥
cf. Kap. S. 45, 6; Mâitr. S. 1, 3, 35; TS 3, 5, 8.

देवा वा असुरान्यज्ञमभिजित्य ते प्रबाहुग्ग्रहान्गृह्णाना आयन्स
प्रजापतिरमन्यत यः प्रथमो ग्रहीष्यते स एवेदं भविष्यतीति स एत-
मंशुमपश्यत्तं पराङ्[2] प्राणन्न गृह्णीत स पराङ् श्रियो ऽन्तमगच्छद्बुभू-
षन्नेतं[3] गृह्णीत पराङेव[4] प्राण्यान्नापान्यात्पराङेव[5] श्रियो ऽन्तं गच्छ-
ति यदपानित्यातिमार्छति[6] प्र वा मीयते[7] सर्वज्यानिं[8] वा जीयते
यदि कामयेत सहङ्यजमानस्स्यादिति न प्राण्यान्नापान्यात्सहङ्केव[9]
भवति चतुस्स्रक्ति[10] पात्रं भवति चतस्रो दिशस्सर्वास्वेव दिक्ष्वृध्नोति ॥
हिरण्येन संस्पर्शयत्यमृतं वै हिरण्यममृतेनैवैनं संदधाति सकृदभिषु-
तस्य गृह्णाति न वै प्रजापतिं सवनैराप्तुमर्हत्येकधैवैनमाप्नोति नर्चं-
मन्वाह न यजुर्वदति न वै प्रजापतिं वाचाप्तुमर्हति मनसैवैनमाप्नोति
यो ऽंशोरायतनं[11] वेदायतनवान्भवति वामदेव्यमेवांशुं गृह्णन्वामदेव्यं
मनसा[12] ध्यायेदेतद्वा अंशोरायतनमायतनवान्भवति य एवं वेद हिर-
ण्यमभिव्यनित्यायुर्वै[13] हिरण्यमायुषैवात्मानमभिधिनोत्यद्भिः प्रत्युक्ष-
त्यमृतं[14] वा आपो ऽमृतेनैवैनं संरम्भयति ॥ ६ ॥
cf. Kap. S. 45, 7; TS 6, 6, 10; Mâitr. S. 4, 7, 7.

---

[1] Kap. S. 45, 6 वीर्यवंति  [2] So corr. Ch परां; Kap. S. 45, 7 परां प्राणं न; cf. aber weiter unten पराङेव  [3] So corr. Ch परां श्रियं तम°; Kap. S. 45, 7 स परां सयोत्तमगछत  [4] Kap. S. 45, 7 परांगव; gleich darauf aber परांडेव  [5] Kap. S. 45, 7 प्राणानापाण्यापरांडेव श्रेयो त्तं  [6] So corr. Ch यदपानिभ्यार्ति°; Kap. S. 45, 7 यदपानित्यतिमार्छति  [7] So corr. Ch प्र वा सीयते; Kap. S. 45, 7 = Corr.  [8] So corr. Ch सर्वज्यानि; cf. Pet. Wört. s. v. 1 ज्या; Kap. S. 45, 7 सर्वेष्वातिं चा जीयते  [9] So corr. Ch पान्या स°; Kap. S. 45, 7 प्राणयान्नापांण्यात्संद्वंगेव  [10] So corr. Ch चतुस्सृक्ति; Kap. S. 45, 7 चतुः स्रक्ति; TS 6, 6, 10, 1 चतुः स्रक्ति भवति; cf. auch Mâitr. S. 4, 7, 7 a. E.  [11] So corr. mit Caland; Ch यंशोरायतनं; Kap. S. 45, 7 यशोरायतंनं; TS 6, 6, 10, 2 यो वा अंशोरायतनं वेदा  [12] So corr. Ch मनामा; Kap. S. 45, 7 मनस  [13] So corr. Ch भिव्यचित्या°; Kap. S. 45, 7 भिव्यच युर्वै; cf. TS 6, 6, 10, 2.  [14] So corr. Ch त्यचत्य°; Kap. S. 45, 7 प्रत्यत्तत्य°

अथैते ऽतिग्राह्या यदेव परमोजो वीर्यमनवरुद्धं तस्यावरुद्ध्यै य-
दाग्नेयस्तेजो वा अग्निस्तेज एव तेन पुरस्ताद्धत्ते यदैन्द्र इन्द्रियं वा इन्द्र
इन्द्रियमेव तेन मध्यतो धत्ते यत्सौर्यो ब्रह्मवर्चसमसा आदित्य उपरि-
ष्टादेव तेन ब्रह्मवर्चसं धत्ते तेजो वा अग्निरिन्द्रियमिन्द्रो ब्रह्मवर्चस-
मसा आदित्यस्तेजसा चैव ब्रह्मवर्चसेन चेन्द्रियमुभयत आत्मन्परिगृ- 5
ह्णात्युपस्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याश्चक्रियौ[1] पृष्ठानि यदेते
न[2] गृह्णेरन्नुपरिष्टाद्गरीयांसि[3] पृष्ठानि प्राञ्चं यज्ञं संमृण्युर्यदेते[4] गृह्यन्ते
पुरस्तादेव यज्ञमुपस्तभ्य चक्रिया[5] उपास्यति समत्वाय प्रातस्सवने गृ-
ह्णीयादेतद्वै सवनानां वीर्यावत्तमं[6] वीर्यादेवैनानधिगृह्णाति ॥ देवा
वै सर्व एव सदृशा आसन्न व्यावृतमगच्छंस्तत एत एतान्ग्रहानपश्य- 10
न्नग्निराग्नेयमिन्द्र ऐन्द्रं सूर्यस्सौर्यं ततो वै ते व्यावृतमगच्छञ्छ्रैष्ठ्यं[7] दे-
वानां यस्यैते गृह्यन्ते व्यावृतमेव गच्छति श्रैष्ठ्यं समानानां प्रजाप-
तिर्वै देवेभ्यो भागधेयानि व्यादिशद्यज्ञमेव सो ऽमन्यतात्मानमन्तर-
गामिति तस्य याः प्रियास्तिस्रस्तन्व आसंस्ता अपन्यधत्तैतान्वाव स
तद्ग्रहानपन्यधत्त येन यज्ञेनेत्सेत्तस्मिन्नेतान्ग्रहान्गृह्णीयात्सर्वमेवैनं[8] स- 15
वीर्यं सयोनिं सतनूमृद्धै संभरति ॥ वृत्रे वा एते पुरासन्स इन्द्रो
वृत्रं हत्वा स एतमाग्नेयमविन्दत तमग्नये प्रायच्छदेतं मे धारयेति स
सौर्यमविन्दत तं सूर्याय प्रायच्छदेतं मे धारयेति स ऐन्द्रं विस्वेतरौ
पुनरयाचत ता अस्मै न पुनरदत्तां त इमांल्लोकान्व्युपायन्नग्निरिममि-
न्द्रो ऽन्तरिक्षं सूर्यो ऽमुमेतैर्वै ते ग्रहैरेषु लोकेष्वार्ध्नुवन्नेतैरेषां[9] लोका- 20
नामाधिपत्यं पर्यायन्सर्वेष्वेवैषु लोकेष्वृध्नोत्येषां लोकानामाधिपत्यं
पर्येति यस्यैते गृह्यन्ते ॥ यद्वै विराजस्तेजस्तदाग्नेयो[10] यच्छक्वर्यास्तदै-

---

[1] Kap. S. 45, 7 श्चक्रुति [2] In Kap. S. 47, 7 fehlt das न [3] Kap. S. 45, 8 द्वरीयांसि [4] Ch समृण्युर्यदेते; Kap. S. 45, 8 संमृण्युर्यदो [5] Kap. S. 45, 8 चक्रया [6] Kap. S. 45, 8 वीर्यवत्तमं [7] So corr. Ch व्यावृतमागश्छंछ्रैष्टन्दे° Kap. S. 45, 8 व्यावृतमगछं श्रैष्ठ्यं [8] So corr. Ch यज्ञेनेत्सेत्त°; Kap. S. 45, 8 यज्ञेनैर्छेततस्मि° [9] So corr. Ch श्वाऽनुव° [10] Von hier an wieder Lücke in Kap. S.

न्द्रो यद्देवत्यास्तत्सौर्यो[1] यच्चैतानि सामानि स्युस्तदेतान्गृह्णीयात्साम्नीं सतेजस्त्वायाथैते होमाश्च भक्षणानि चैतैर्वै बम्भाविश्ववयसा[2] इमांल्लोकानर्वाचश्च पराचश्च प्राजानीतां यस्यैते गृह्यन्ते समस्मा इमे लोका अर्वाञ्चः पराञ्चश्च भान्त्येतेषां[3] वै वीर्येणाग्निरित ऊर्ध्वो भात्यर्वाङ् सूर्यस्तपति तिर्यङ् वायुः पवते सुप्रज्ञानो वा इत इत्थमसौ लोको ऽमुतो ह त्वा अर्वाङ् दुष्प्रज्ञानिँ स[4] ह त्वा इमं लोकममुतो ऽर्वाङ् प्रजानाति यस्यैते गृह्यन्ते ॥ ७ ॥

cf. Kap. S. 45, 8; Mâitr. S. 4, 7, 3; TS 6, 6, 8.

आग्नेयसौम्यो बार्हस्पत्यस्ते[5] समानमर्धमालभ्यन्ते यदाग्नेयस्तेजो वा अग्निस्तेजस्स[6] एव तेन पुरस्ताद्धत्ते यत्सौम्य इन्द्रियं वै सोम इन्द्रियमेव तेन मध्यतो धत्ते यद्बार्हस्पत्यो ब्रह्म वै बृहस्पतिरुपरिष्टादेव तेन ब्रह्मवर्चसं धत्ते तेजो वा अग्निरिन्द्रियँ सोमो ब्रह्म बृहस्पतिस्तेजसा चैव ब्रह्मवर्चसेन चेन्द्रियमुभयत आत्मन्परिगृह्णाति दक्षिणतो वै देवानां यज्ञं रक्षाँस्यजिघाँसन्या देवता ओजीयसीस्ताभ्यो दक्षिणत आलभ्यन्ते रक्षसामपहत्यै किं तदेकादशिन्यां क्रियत इत्याहुर्ब्रह्मवादिनो यस्माद्विट् क्षत्रस्योपाशारमवस्यतीति[7] या देवता ओजीयसीस्ताभ्यो दक्षिणत आलभ्यन्ते ॥ या अबलीयसीस्ताभ्य उत्तरां तस्माद्विट् क्षत्रस्योपाशारमवस्यति दक्षिणत उद्धनां कुर्याद्देवयजनस्य रूपं रक्षसामपहत्यै तस्माद्दक्षिणतस्तीर्थानां गाधं[8] ये ऽग्निष्ठास्त्रयस्तान्समान्कुर्यादग्निं[9] वै पशवो ऽनूपतिष्ठन्ते पशूनामुपस्थित्या आत्मा वा अग्निष्ठो भ्रातृव्या अस्येतरौ तौ क्रधीयाँसौ कुर्यादधरमेव भ्रातृव्यं कुरुते यौ परौ ता अग्निष्ठेन समौ तौ हि तस्य स्वा आ परार्धादेवं मिनुया-

---

[1] So corr. Ch सूर्यो [2] So ist wohl zu lesen; Ch बंभाविंश्ववयसा; Mâitr. S. 4, 7, 3 (p. 96, Z. 15) बम्बविश्ववंयसा; TS 6, 6, 8, 4 बम्बांविश्ववंयसौ; Kap. S. vacat. [3] So corr. mit Caland; Ch पराञ्चश्च इत्येतेषां [4] So corr. Ch म [5] So corr. Ch बार्हस्पस्ते [6] So corr. Ch स्तेजस; aber vgl. das Folgende. [7] So corr. Ch क्षेत्र [8] So corr. Ch गाधय्ये [9] So corr. Ch तान्समा°

त्पापवसीयसस्य व्यावृत्त्या अथो अधरमेव भ्रातृव्यं कुरुते[1] ये[2] ऽग्नि-
ष्ठादुदीचीनं तान्वर्षीयसः कुर्याद्यदि कामयेत विट् क्षत्रादोजीयसी
स्यादिति विशमेव क्षत्रादोजीयसीं करोति ॥ ये ऽग्निष्ठाद्दक्षिणात्तान्व-
र्षीयसः कुर्याद्यदि कामयेत क्षत्रं विश ओजीयस्स्यादिति क्षत्रमेव
विश ओजीयः करोति सर्वान्समान्कुर्याद्यदि कामयेत पापवसीयसं 5
स्यादिति पापवसीयसमेव करोति तिरश्ची मीयते दिशां विधृत्या
ऊर्ध्वा मीयन्त[3] एषां लोकानां विधृत्यै न यूपं बहिर्वेदि मिनुयान्न
वेद्या[4] अतिरेचयेद्यजमानो वै यूप एतावती पृथिवी यावती वेदिर्यद्यूपं
बहिर्वेदि मिनुयात्पृथिव्या यजमानं निर्भजेद्यद्वेद्या अतिरेचयेद्भ्रातृव्याय
लोकमुच्छिंषेत्समां[5] वेद्यन्तेन मिनुयान्न पृथिव्या यजमानं निर्भजति 10
न भ्रातृव्याय लोकमुच्छिंषत्युपरसंमितां[6] मिनुयाद्यदि कामयेत पितृ-
लोक ऋध्नुयादिति पितृलोक एवर्ध्नोति[7] रशनासंमितां[8] मिनुयाद्यदि
कामयेत मनुष्यलोक ऋध्नुयादिति[9] मनुष्यलोक एवर्ध्नोति[10] चषाल-
संमितां मिनुयाद्यदि कामयेत देवलोक ऋध्नुयादिति देवलोक एव-
र्ध्नोति[11] सर्वेष्वेवैषु लोकेष्वृध्नोति रथाक्षेण मिमीते वज्रो वै यूपो 15
वज्रो रथो वज्र एव वज्रं दधाति सर्वे ऽग्निष्ठाः कार्या या अग्निष्ठा
अश्रयस्ता अग्निमभिपर्यूहेत्तेनैव सर्वे ऽग्निष्ठाः क्रियन्ते ॥ यदग्निष्ठाद्रश-
ना विहरन्ति तेनैव सर्वे ऽग्निष्ठाः[12] क्रियन्ते द्वे द्वे रशने यूपमृच्छतस्त-
स्मात्स्त्रियः पुंसो ऽतिरिक्तास्तस्मादुतैको बह्वीर्जाया[13] विन्दते नैका
बहून्पतीनुपशयो द्वादशो भवति द्वादश मासास्संवत्सरस्संवत्सरस्याप्त्यै 20
तं दक्षिणतः परिहृत्य निदधति दक्षिणतो वै देवानां यज्ञं रक्षांस्यजि-

---

1 So corr. Ch क्रियते  2 So corr. Ch यो  3 So Ch मीयन्त  4 So corr. mit Caland Ch मनुया वे°  5 So corr. Ch छिपे°  6 So corr. Ch त्युपरः सस्मितास्मि°; vgl. उपरसंमिता in Mâitr. S. 4, 7, 9 (p. 105, Z. 8); TS 6, 6, 4, 1.  7 So corr. Ch एवाब्नोति  8 So corr. Ch रशनासस्मितास्मि°  9 So corr. Ch ऋब्नुया°  10 So corr. Ch एवब्नोति  11 So corr. Ch एवब्नोति  12 So corr. Ch ग्नेष्टाः  13 So corr. Ch बह्वीर्जोया; zu dem Inhalt dieser Stelle vgl. Mâitr. S. 4, 7, 9 a. A.; TS 6, 6, 4, 3.

घ्नंसन्वज्रो यूपो रक्षसामपहत्यै यद्यभिचरेत्पुरुषपशुं कुर्यादिदमहममु-
मामुष्यायणममुष्याः पुत्रं नियुनज्मीति रशनां यूपे ऽधिन्यस्येद्वज्रो वै
यूपो वज्र एवैनं नियुनक्ति ताजक्प्रधन्वति यदि नाभिचरेदारण्यं
पशुं[1] निर्दिशेत्तस्य नाश्नीयादुपसद्यं वा अन्वारण्याः पशव उपतिष्ठ-
5 न्त एकादशिनो ग्राम्या यदेकादशिन्या वेदिर्मीयते[2] तस्माद्ग्राम्याः
पशव आविरिव शान्ता इव यदुपशयो गुहेव शये तस्मादारण्याः प-
शवो गुहेव निलायमिव प्रलायमिव चरन्ति ॥ ८ ॥

cf. Mâitr. S. 4, 7, 9; TS 6, 6, 4; Kap. S. vacat.

प्रजापतिः प्रजास्सृष्ट्वा स रिरिचान इवामन्यत स एतामेकादशि-
नीमपश्यत्तामाहरत्तयात्मानमाप्रीणीत यो रिरिचान इव मन्येत स
10 एतामेकादशिनीमाहरेद्यस्मिन्नेव कस्मिंश्च यज्ञे दश वै पुरुषे प्राणा
आत्मैकादशो यावानेवास्यात्मा तमाप्रीणात्यग्निस्सर्वा देवता अग्ना[3]
एवैता देवता उपालभ्यन्त आत्मा वा आग्नेयो वाक्सरस्वती यत्सा-
रस्वती वाचमेव मिथुनमात्मन्नुपनियुङ्क्ते ऽथ सौम्यस्सोमो[4] रेतोधा
मिथुन एव रेतो दधात्यथ पौष्णः पशवो वै पूषा प्रैव जनयत्यथ बा-
15 र्हस्पत्यो[5] ब्रह्म वै बृहस्पतिर्ब्रह्मैव पशुष्वधिवियातयत्यथ वैश्वदेवो वै-
श्वदेवीरिमाः प्रजाः प्रजा एव ब्रह्मन्ननुनियुनक्त्यथैन्द्रः[6] क्षत्रं वा इन्द्रः
क्षत्रमेव प्रजास्वधिवियातयत्यथ मारुतो विड्वै मरुतो विशमेव क्ष-
त्रायानुनियुनक्त्यथैन्द्राग्न[7] ओजो वै वीर्यमिन्द्राग्नी ओजसैव वीर्येण
विशं क्षत्रायोपोहति[8] प्रसवायैव सावित्रो निर्वरुणत्वाय वारुणः प्र-
20 जापतिः प्रजा असृजत ता अस्मादपाक्रामंस्ता[9] ऊर्ध्वा आयंस्ता[10] अ-
कामयतोप मा वर्तेरन्निति सो ऽतपत स[11] आत्मानं मेधायालभत

---

[1] So corr. Ch पशुनिं° [2] So corr. Ch विदीर्मो° [3] So corr. Ch आग्ना
[4] So corr. Ch सौम्यं सोमो [5] So corr. Ch स्पत्या [6] So corr. Ch नियुक्त्यथैंद्र
[7] So corr. Ch नियुक्त्यथै° [8] So corr. Ch विशट् चत्रायोपहति; vgl. unten Anfang von 29, 10 उपोहति [9] So corr. Ch दपक्रा° [10] So corr. Ch आयस्ता [11] So corr. Ch सा तप्यता आ°

ता एनमुपावर्तन्त ता अस्मादबिभयुस्ता न्याच्यन्त[1] तस्मात्पशवो न्य-
क्रान्ता[2] आरादचरंस्ता एनं बलिभिरुपायन्देवयजनेन पृथिवी बर्हि-
षौषधयः प्रोक्षणीभिराप इध्मेन च यूपेन च वनस्पतयः पशुभिरजा-
वय आशिरा चाज्येन च गाव एते वै देवा बलिहृतो यज्ञः प्रजाप-
तिस्तस्मा एते सर्वा हैवं बलिं हरन्त्यास्मै बलिं हरन्ति य एवं वेद ॥ 5
तेषामपक्रमादबिभेत्तेषां द्वन्द्वं वीर्याण्यात्मन्नुपन्ययुङ्क्तात्मा वा आग्नेयो
वाक्सरस्वतीन्द्रियं सोमो वाचं चैवेन्द्रियं चात्मन्नुपनियुङ्क्ते ऽथ पौ-
ष्णो[3] ऽथ बार्हस्पत्यः[4] पशवो वै पूषा ब्रह्म बृहस्पतिः पशूंश्चैव ब्रह्म
चात्मन्नुपनियुङ्क्ते ऽथ वैश्वदेवो[5] ऽथैन्द्रो वीर्यं वै विश्वे देवास्सह इन्द्रो
वीर्यं चैव सहश्चात्मन्नुपनियुङ्क्ते ऽथ मारुतो ऽथैन्द्राग्नो बलं वै मरुत 10
ओज इन्द्राग्नी बलं चैवौजश्चात्मन्नुपनियुङ्क्ते प्रसवायैव सावित्रो नि-
र्वरुणत्वाय वारुणः ॥ ९ ॥

cf. Kap. S. 46, 2 (nur der Schluß vorhanden); Mâitr. S. 4, 7, 8; TS 6, 6, 5.

आग्नेयीं सारस्वतीं सौम्यं बार्हस्पत्यं तान्सहालभेत ब्रह्मवर्चसकामः
प्रजाकामः पशुकामः पुरोधाकामो[6] यदाग्नेय आग्नेयो हि ब्राह्मणो य-
त्सारस्वती वाग्वै सरस्वती वाचं हि वदति यत्सौम्यस्सोमं हि पि- 15
बति यद्बार्हस्पत्यो ब्रह्म वै बृहस्पतिर्ब्रह्मैव चतुष्पात्संपाद्य प्रतिष्ठाप-
यति ब्रह्मवर्चसी भवत्यथ पौष्णः पशवो वै पूषा पशूनेव ब्रह्मन्ननुनि-
युनक्त्यथैन्द्राग्नो[7] ऽथैन्द्रः क्षत्रं वा इन्द्राग्नी क्षत्रमिन्द्रः क्षत्रमेव संपाद्य
प्रतिष्ठापयत्यथो क्षत्रेणैव पशून्ब्रह्मण उपोहत्याग्नेयो मध्ये भवत्यैन्द्रा[8]
अभित आग्नेयो वै ब्राह्मण ऐन्द्रो राजन्यो ब्रह्मणैव क्षत्रं मध्यतो व्यव- 20

---

[1] Ch liest न्याश्यन्त; da श और च in der Çâradâ-Schrift kaum zu unterscheiden, dürfte die Çâradâ-Vorlage न्याच्यन्त gelesen haben. [2] So corr. Ch न्यक्राणा° [3] So corr. Ch पौष्णे; Kap. S. 46, 2 = Corr. [4] So corr. Ch बार्हस्पत्याः; Kap. S. 46, 2 = Corr. [5] So corr. Ch वैश्वदेवे; Kap. S. 46, 2 = Corr. [6] So corr. Ch पुरोधकामो; Kap. S. 46, 3 = Corr. [7] So corr. Ch नियुक्त्य°; Kap. S. 46, 3 = Corr. [8] So corr. mit Caland; Ch भवत्यैन्द्रो अभित; Kap. S. 46, 3 त्यैंद्रा अभित

सर्पति प्र पुरोधामाप्नोति य एवं वेदैन्द्राग्नी पशूनां भूयिष्ठभाजौ[1] क-
रोत्यग्नेराग्नेय इन्द्रस्यैन्द्र ऐन्द्राग्नस्सह तस्माद्ब्राह्मणश्च राजन्यश्च प्रजानां
भूयिष्ठभाजा अथ वैश्वदेवो ऽथ मारुतो विड्वै विश्वे देवा विण्मरुतो
विशमेव संपाद्य तां क्षत्रायानुनियुनक्ति[2] ब्रह्ममुखमेव क्षत्रं कृत्वा
5 तस्मै विशमनुनियुनक्ति[3] प्रसवायैव सावित्रो निर्वरुणत्वाय वारुण-
स्सम्यगेव ब्रह्म समूहति सम्यक्क्षत्रं समीचीं विशं यत्रैव क्लृप्तैकाद-
शिन्यालभ्यते कल्पते तत्र प्रजाभ्यो ब्राह्मण एव ब्राह्मणो भवति रा-
जन्यो राजन्यो वैश्यो वैश्य[4] एकादशिन्या वा इदमक्लृप्तमनु प्रजाभ्यो
न कल्पत[5] एषा वावैकादशिनी तामेतां कापेया विदुस्तामेतामति-
10 रात्रचरमामालभेत[6] सन्त्रियेयमितरायामिदं[7] प्रजा आपद्य चरन्त्यहा-
मेवैषा[8] विधैतह्येवन्त्यान्यहानि ॥ १० ॥
cf. Kap. S. 46, 3.

इति श्रीमद्यजुर्वेदकाठके चरकशाखायां मध्यमिकायां दीर्घजिह्वी
नामैकोनत्रिंशं स्थानकं संपूर्णम्[9] ॥

---

[1] So corr. Ch भाजो; Kap. S. 46, 3 = Corr. [2] So corr. Ch नियुक्ति; Kap. S. 46, 3 = Corr. [3] So corr. Ch नियुक्ति; Kap. S. 16, 3 = Corr. [4] So corr. Ch वैश; Kap. S. 46, 3 वैश्यः [5] Kap. S. 46, 3 मनु प्रजाभ्यो मुकल्पत [6] So corr. Ch चरमालभेत; Kap. S. 16, 3 चरममलोभत [7] Ch erste Hand मन्त्रियेय°, dann सन्त्रियेय°; Kap. S. 46, 3 सन्त्रियेयमितरायः मिदं [8] So corr. Ch वैष; Kap. S. 46, 3 वेषा [9] So die Unterschrift des Capitels in Ch.

प्रजननं वै पात्नीवतो यद्वै किंच यज्ञे पात्नीवतं क्रियते प्रजनन-
मेव तत्पराङ् वा एतर्हि यज्ञः पराचीर्देवतास्त्वाष्ट्रो भवति पराची-
ष्वेव देवतासु त्वष्टारं वृषाणमपिसृजति सो ऽस्मै मिथुनं करोति
वज्रो वा एष पुरस्तात्संमीयते यदेकादशिनी स ईश्वरः प्रत्यञ्चं यज्ञं
संपुरो[1] यत्पात्नीवतो मीयते[2] प्रत्युत्तब्ध्यै सयत्वाय मनोर्वै कपालान्या-
सँस्तैर्यावतो[3] यावतो ऽसुरानभ्युपाधात्ते पराभवन्नथ तर्हि त्विष्टाव-
रुत्री[4] आस्तामसुरब्रह्मौ[5] ता असुरा अब्रुवन्निमानि मनुकपालानि[6]
याचेथामिति तौ प्रातरित्वाना अभिप्रापद्येतां वायवे ऽग्ना३इ् वायव
इन्द्रा३ इति किंकामौ स्थ इत्यब्रवीदिमानि नौ कपालानि देहीति
तान्याभ्यामददात्तान्यरण्यं[7] पराहृत्य[8] समपिंष्टां तन्मनोर्गावो ऽभिव्य-
तिष्ठन्त तान्यृषभस्समलेट् तस्य रुवतो यावन्तो ऽसुरा उपाशृण्वँस्ते
पराभवँस्तौ प्रातरित्वाना अभिप्रापद्येतां[9] वायवे ऽग्ना३इ् वायव इ-
न्द्रा३ इति किंकामौ स्थ इत्यब्रवीदनेन त्वर्षभेन याजयावेति[10] तत्प-
त्नी यजुर्वदन्ती[11] प्रत्यपद्यत तस्या द्यां वागातिष्ठत्तस्या वदन्त्या या-
वन्तो ऽसुरा उपाशृण्वँस्ते पराभवँस्तस्मान्नक्तं स्त्री चन्द्रतरं वदति तौ
प्रातरित्वाना अभिप्रापद्येतां वायवे ऽग्ना३इ्[12] वायव इन्द्रा३ इति
किंकामौ स्थ इत्यब्रवीदनया त्वा पत्न्या याजयावेति सा पर्यग्निकृ-

---

[1] So corr. Ch सम्पुरो; Kap. S. 46, 4 संमुरो [2] So corr. mit Caland; Ch पोयते; Kap. S. 46, 4 मोयते [3] So corr. Ch कपालन्या° [4] Diese Form त्रिष्टवरुत्री auch in mehreren Mss. der Mâitr. S. 1, 8, 1 (s. dort p. 106, Anm.); Kap. S. 46, 4 त्वष्टावरूत्री [5] So corr. Ch ब्रह्मौं ता; Kap. S. 46, 4 मसुरब्रह्मोता; cf. Mâitr. S. 4, 8, 1 a. A. अंसुराणां ब्राह्मणा आंस्तां तृष्टांवरुत्री [6] In Ch ist ursprünglich षट्कपालानि geschrieben; das ष ist dann mit gelber Farbe getilgt und offenbar soll damit auch das ट् wegfallen. Am Rande steht मनु, und daß dies hierher gehört, beweist die Lesung der Kap. S. 46, 4 त्त्रिमानि मनु-कपालानि [7] So corr. Ch न्यरन्यां; Kap. S. 46, 4 = Corr. [8] Kap. S. 46, 4 कुंपराहृत्य [9] So corr. Ch पद्येयां; Kap. S. 46, 4 = Corr. [10] So corr. Ch यवेति; Kap. S. 46, 4 = Corr. [11] So corr. Ch पत्नी यजुर्वदन्तंनी; Kap. S. 46, 4 पत्नोर्यजुर्वदंती [12] Dies इ् ist von mir ergänzt, da es in Ch fehlt; Kap. S. 46, 4 = Corr.

तासीदथेन्द्रो ऽध्यायन्मनुं[1] श्रद्धादेवं त्रिष्टावरूत्री असुरब्रह्मौ जायया व्यर्धयत इति स आगच्छत्सो ऽब्रवीदाभ्यां त्वा याजयानीति नेत्यब्रवीन्न वा अहमनयोरीश इत्यतिथिपतिर्वावातिथेरीश इत्यब्रवीत्ता अस्मै प्रायच्छत्स प्रतिवेशो वेदिं कुर्वन्नास्त ता अपृच्छतां को ऽसीति
5 ब्राह्मण इति कतमो ब्राह्मण इति ॥

किं ब्राह्मणस्य पितरं[2] किमु पृच्छसि[3] मातरम् ।
श्रुतं चेदस्मिन्वेद्यं स पिता स पितामहः ॥

इति ता अवित्तामिन्द्रो वा इति तौ प्रापततां तयोर्याः प्रोक्षणीराप आसंस्ताभिरनुविसृज्य शीर्षे अच्छिनत्तौ वृषश्च[4] यवाषश्चाभवतां त-
10 स्मात्तौ वर्षेषु शुष्यतो ऽग्निर्हि हतौ[5] तां पर्यग्निकृतामुदासृजत्तयार्ध्नोत्ता[6] इमा मनाव्याः[7] प्रजा यत्पर्यग्निकृतं पात्नीवतमुत्सृजति यामेव मनुर्ऋद्धिमार्ध्नोत्तामृध्नोति[8] संस्थाप्या३ न संस्थाप्या३ इति मीमांसन्ते स्रवति वै यज्ञो ऽसंस्थितस्तं[9] स्रवन्तं यजमानो ऽनु परास्रवति[10] प्रजया च पशुभिश्च संस्थाप्य एव यज्ञस्य प्रतिष्ठित्यै यदि संस्थापयेद्या-
15 वन्ति पशोरवदानानि तावन्त्याज्यस्यावद्येदयातयाम[11] ह्येतत्प्राजापत्यं यदाज्यमयातयामो[12] देवानां प्रजापतिस्तदेव संस्थापयति तदु न संस्थापयत्युभयमेव करोति ॥ १ ॥

cf. Kap. S. 46, 4; Mâitr. S. 4, 8, 1; TS 6, 6, 6.

ऐन्द्रवायवाग्रा अग्रे गृह्णन्ते ऽथ शुक्राग्रा अथाग्रायणाग्रा[13] गाय-

---

[1] So corr. Ch चायन्मन्वी श्रद्धादेव; Kap. S. 46, 4 वायन्मनुं द्रध्वादेव; vgl. Mâitr. S. 4, 8, 1 öfters मनो यज्वा वै श्रद्धादेवो ऽसि [2] So corr. Ch पितरः; Kap. S. 46, 4 = Corr.; desgl. Mâitr. S. 4, 8, 1. [3] Kap. S. 46, 4 पृकति; aber Mâitr. S. = Kâṭh. [4] Kap. S. 46, 4 रिषश्च यवाषश्च [5] Kap. S. 46, 4 हिंतौ [6] So corr. Ch ब्नोत्ता [7] So corr. Ch इमा पनाव्याः; Kap. S. 46, 4 इमा मानव्या प्रजा [8] So corr. Ch यामेव मनुवृद्धिमाब्नोत्ताम्ब्नोति; vgl. TS 6, 6, 6, 1; Kap. S. 46, 4 मनुरिरिद्धिमा° [9] Kap. S. 46, 4 यज्ञो असंस्थितस्तः [10] Kap. S. 46, 4 नुपदाभवति; cf. auch TS 6, 6, 6, 1. [11] So corr. Ch यासं; Kap. S. 46, 4 = Corr. [12] So corr. Ch यामा; Kap. S. 46, 4 यदाप्यमयातयामा [13] So corr. Ch ग्रयणाग्रा; Kap. S. 46, 5 = Corr.; cf. das Folgende.

त्रो वा ऐन्द्रवायवस्त्रैष्टुभश्शुक्रो जागत आग्रायण एतावन्ति वै छ-
न्दाँसि छन्दोभिर्देवास्स्वर्गँ लोकमायँश्छन्दोभिरेव स्वर्गँ लोकमेत्या-
ग्रायणश्चतुर्थे ऽहञ्जागतो वा आग्रायणो जगन्मुख[1] एष त्रिरात्रो यदेव
छन्द आप्नोति तेनोत्तरं त्रिरात्रं प्रतनुत ऐन्द्रवायवाग्राः पञ्चमे ऽह-
न्गायत्रो वा ऐन्द्रवायवः प्राणो गायत्री प्राणमेव मध्यतो दधाति 5
तस्मान्मध्यतः प्राणश्शुक्राग्राष्षष्ठे[2] ऽहँस्त्रैष्टुभो वै शुक्रस्त्रिष्टुबन्त एष
त्रिरात्रो ऽन्तमेवैनमभ्युदूहति शुक्राग्रा एव सप्तमे ऽहँस्त्रैष्टुभो वै शुक्र-
स्त्रिष्टुम्मुख एष छन्दोमः प्रत्युत्तब्ध्यै सयत्वायाथो यदेव छन्द आप्नो-
ति तेनोत्तरं त्रिरात्रं[3] प्रतनुत आग्रायणाग्रा अष्टमे ऽहञ्जागतो वा
आग्रायणो जगन्मध्य एष छन्दोमश्छन्दसामेव व्यूहमनुव्यूहत्यैन्द्रवा- 10
यवाग्राः प्रायणीय ऐन्द्रवायवाग्रा उदयनीये[4] प्राणो वा ऐन्द्रवायवः
प्राणेनैव प्रयन्ति प्राणेनोद्यन्ति प्राणा वै ग्रहास्तानेतन्मोहयति य-
द्व्यतिहारं गृह्णाति यदग्रान्यदग्रान्गृह्णीयात्तं धारयन्ना सादयितोरा-
सीत[5] प्राणा वै ग्रहाः प्राणानेवायतनश आपादयत्यथोत्तरं प्रसृता
गृह्णन्त एवँ ह वै केशिनो दाल्भ्यस्य[6] वैँशव्रश्चने ग्रहाञ्जगृहुस्स हो- 15
वाच लुशाकपिः[7] खार्गलिः[8] कथं ग्रहानग्रहीष्टेतीत्थमित्थमिति हा-
स्मा ऊचुस्स होवाच त्र्यनीकमस्य प्रजा भविष्यतीति ततः पञ्चाला-
स्त्रेधाभवन्यस्यैवं[9] ग्रहा गृह्णन्ते त्र्यनीकमस्य प्रजा भवति ॥ २ ॥

cf. Kap. S. 46, 5; TS 7, 2, 8.

ऐन्द्रवायवाग्रान्गृह्णीत यः कामयेत यथापूर्वं प्रजाभ्यः कल्पेतेति
यज्ञस्य वै क्लृप्तमनु प्रजाभ्यः कल्पते यज्ञस्याक्लृप्तमनु न कल्पते यथा- 20
पूर्वमेव प्रजाभ्यः कल्पयति न कनीयाञ्ज्यायाँसमतिक्रामत्यैन्द्रवायवा-

---

[1] Kap. S. 46, 5 जगन्मुख एष छंदोमः प्रत्युत्तब्ध्यै सयत्वायाथो यदेव छंद आप्नोति तेनोत्तरं तृरात्रं प्रतनुत etc. [2] Kap. S. 46, 5 शुक्राग्रा एव षष्ठे [3] So corr. Ch तेनोत्तरस्त्रि-रात्रं; Kap. S. 46, 5 तेनोत्तरं तृरात्रं [4] Ch vielleicht नीयै; Kap. S. 46, 5 = Corr. [5] Kap. S. 46, 5 न्ना सादयतोरासीन्प्राणा [6] Kap. S. 46, 5 दर्भस्य [7] So corr. Ch लुशाः कपिः; Kap. S. 46, 5 = Corr. [8] Kap. S. 46, 5 श्वार्गलि [9] So corr. mit Caland; Ch स्त्रेधा भवत्यस्यैव

ग्रान्गृह्णीयादामयाविनः प्राणेन वा एष व्यृध्यते यस्यामयति प्राण
ऐन्द्रवायवः प्राणेनैवैनं समर्धयति मैत्रावरुणग्रान्गृह्णीरन्येषां दीक्षि-
तानां प्रमीयेत प्राणापानाभ्यां वा एते व्यृध्यन्ते येषां दीक्षितानां प्र-
मीयते प्राणापानौ वै मित्रावरुणौ प्राणापाना एव मुखतः परिह-
5 रन्ते तस्मान्मुखतः प्राणापाना[1] आश्विनाग्रान्गृह्णीतानुजावरो ऽश्वि-
नौ[2] वै देवानामानुजावरौ ता अग्रं पर्यैतामश्विना एतस्य देवता य
आनुजावरस्ता एवान्वारभते ता एनमग्रं परिणयतः[3] शुक्राग्रान्गृह्णीत
गतश्रीरसौ वा आदित्यश्शुक्र एषो ऽन्तो ऽन्तं मनुष्यश्श्रियो गत्वा
निवर्तते ऽन्तादेवान्तमालभते[4] न ततः पापीयान्भवति यादृङ् सन्य-
10 जते[5] मन्थ्यग्रान्गृह्णीताभिचरन्नार्तपात्रं[6] वा एतद्यन्मन्थिपात्रं मृत्यु-
नैवैनं ग्राहयत्युक्थ्याग्रान्गृह्णीताभिचर्यमाणस्सर्वेषां वा एतत्पात्रा-
णामिन्द्रियं वीर्यं यदुक्थ्यपात्रं[7] सर्वेणैवैनमिन्द्रियेणातिप्रयुङ्क्ते ॥
मा त्वत्क्षेत्राण्यरणानि गन्म मापस्फरीः पयसा[8] मा न आधक् ।
मा वयमेनो ऽन्यकृतं[9] भुजेम सरस्वत्यभि नो नेषि वस्यः[10] ॥
15 इति मृत्योर्वै क्षेत्राण्यरणानि तेनैव मृत्योः क्षेत्राणि न गच्छत्याग्राय-
णाग्रान्गृह्णीत यस्य पिता पितामहः पुण्यस्स्यादथ तन्न[11] प्राप्नुया-
द्वाचा वा एष इन्द्रियेण व्यृध्यते यस्य पिता पितामहः पुण्यो भव-
त्यथ तन्न[12] प्राप्नोत्युर[13] इवैतद्यज्ञस्य वागिव यदाग्रायणो वाचैवैन-
मिन्द्रियेण समर्धयति पूर्णान्ग्रहान्गृह्णीयादामयाविनः प्राणान्वा ए-

---

[1] So corr. Ch पानः [2] So corr. Ch श्विनो [3] So corr. Ch पृणियतः; Kap. S. 46, 6 = Corr.; TS 7, 2, 7, 2 प॑रिणयतः [4] So corr. in Hinblick auf TS 7, 2, 7, 3; Ch न्तादेवार्तमालभते; Kap. S. 46, 6 त्वादेवत्तमालभते [5] So corr. Ch यादृङ् मन्यजते; Kap. S. 46, 6 यादक्स्यं यजते [6] So corr. Ch ग्रह्णीताभि°; Kap. S. 46, 6 = Corr. [7] So corr. Ch दुत्तगापात्री; Kap. S. 46, 6 = Corr. [8] So corr. Ch मापस्फरौ पोयसा; Kap. S. 46, 6 = Corr.; cf. RV 6, 61, 14. [9] So corr. Ch त्यक्रतं [10] So corr. Ch वस्य [11] Ch तत्र; TS 7, 2, 7, 3 त॑न्न॑; Kap. S. 46, 6 तं न [12] Ch तत्र; TS 7, 2, 7, 4 त॑न्न॑; Kap. S. 46, 6 तं न [13] So corr. Ch प्राप्नोत्युत्तर इवै°; aber TS 7, 2, 7, 4 प्राप्नो॑त्युर॑ इवै°; Kap. S. 46, 6 प्राप्नोत्यु-रैवैतद्य°

तस्य शुगृच्छति यस्यामयति प्राणा ग्रहाः प्राणानेवास्य शुचो मुञ्च-
ति पूर्णान्ग्रहान्गृह्णीयाद्यर्हि पर्जन्यो न वर्षेत्प्राणान्वा एतर्हि प्र-
जानां शुगृच्छति यर्हि पर्जन्यो न वर्षति प्राणा ग्रहाः प्राणानेव प्र-
जानां शुचो मुञ्चति ताजक्प्रवर्षति ॥ ३ ॥ cf. Kap. S. 46, 6; TS 7, 2, 7.

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व । 5
मधुश्चुतं घृतमिव[1] सुपूतमृतस्य नः पतयो मृडयन्तु ॥
उपयामगृहीतो ऽस्यदित्यै त्वा चतुरूध्न्यै[2] ॥
उदीरयत[3] मरुतस्समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः ।
न वो दस्रा उपदस्यन्ति धेनवश्शुभं यातामनु रथा अवृत्सत ॥
उपयामगृहीतो ऽस्यदित्यै त्वा चतुरूध्न्यै[4] ॥ 10
महीमू षु[5] मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम ।
तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिम् ॥
उपयामगृहीतो ऽस्यदित्यै त्वा चतुरूध्न्यै[6] ॥ एष ते योनिरदित्यै त्वा
चतुरूध्न्यै[7] ॥ वृष्टिर्वै देवेभ्यो ऽपाक्रामत्तेषु लोकेष्वश्रयत[8] तां[9] देवा
अन्वेष्टुमध्रियन्त त एतं ग्रहमपश्यंस्तमगृह्णत तेनैभ्यो[10] लोकेभ्यो वृ- 15
ष्टिं संप्राच्यावयंस्तमेतं[11] वृष्टिकामो गृह्णीत क्षेत्रस्य पते मधुमन्त-
मूर्मिमित्यसौ वै[12] क्षेत्रस्य पतिरमुतो वर्षत्युदीरयत[13] [14] मरुतस्समुद्रत
इति मरुतस्सृष्टां वृष्टिं नयन्ति महीमू षु मातरं सुव्रतानामितीयम-

[1] So corr. Ch मधुश्चुतमेव सुपूतमतस्य; aber cf. RV 4, 57, 2; TS 1, 1, 14, 3; auch Kap. S. 46, 7 मधुश्चुतं घृतमिव सुपूतम° [2] So corr. Ch चतुरूर्ध्यै; Kap. S. 46, 7 चरूध्न्ये [3] Ch उदीरयतम्म°; aber cf. oben Kâṭh. 11, 9; auch Kap. S. 46, 7 उदीरयतम°; Mâitr. S. 2, 4, 7 उदीरयता; RV 5, 55, 1 उदीरयथा [4] So corr. Ch चतुरूर्ध्यै; Kap. S. 46, 7 चरूर्ध्ये [5] So corr. Ch ष; Kap. S. 46, 7 = Corr.; cf. Mâitr. S. 4, 10, 1. [6] So corr. Ch चतुरूर्ध्यै; Kap. S. 46, 7 चरूध्या [7] So corr. Ch चतुरूर्ध्यै; Kap. S. 46, 7 त्वावरूध्यै [8] So corr. Ch लोकेषु श्रयत; Kap. S. 46, 7 लोकेष्वयंत [9] So corr. Ch तान्देवा; Kap. S. 46, 7 = Corr. [10] So corr. Ch तैनैभ्यो; Kap. S. 46, 7 = Corr. [11] So corr. Ch संप्रश्याव°; Kap. S. 46, 7 = Corr. [12] Das वै fehlt in Ch; ist von mir hinzugesetzt, nach Kap. S. 46, 7 सौ वै क्षेत्रस्य प° [13] So corr. Ch वर्षम्यु°; Kap. S. 46, 7 = Corr. [14] Ch दीरयतं म°; Kap. S. 46, 7 दीरयत म°; cf. oben.

दितिरस्यां वर्षत्येता वै देवता वर्षस्येशते ता एवोपधावत्येभ्य एव
लोकेभ्यो वृष्टिं संप्रच्यावयति[1] चतुःस्त्लनं पात्रं भवति चतस्रो दिशो
दिग्भ्य एव वृष्टिं संप्रच्यावयति[2] यं प्रथमं स्तनमनुपद्यते तस्या दिशो
ऽभ्येतद्वर्षत्यपि[3] पात्रे क्रियमाणे[4] वर्षति मृन्मयेन गृह्णाति दारुमये-
5 ण[5] जुहोति न हि मृन्मयमाहुतिमानशे ॥ ४ ॥ cf. Kap. S. 46, 7.

उपयामगृहीतो ऽसि प्रजापतये त्वा प्रजाभ्य एष ते योनिः प्रजा-
पतये त्वा प्रजाभ्य उपयामगृहीतो ऽसि प्रजाभ्यस्त्वा प्रजापतय एष
ते योनिः प्रजाभ्यस्त्वा प्रजापत उपयामगृहीतो ऽस्यन्तरिक्षाय त्वा
वनस्पतिभ्य एष ते योनिरन्तरिक्षाय त्वा वनस्पतिभ्य उपयामगृहीतो
10 ऽसि वनस्पतिभ्यस्त्वान्तरिक्षायैष ते योनिर्वनस्पतिभ्यस्त्वान्तरिक्षायो-
पयामगृहीतो ऽस्यद्भ्यस्त्वौषधीभ्य एष ते योनिरद्भ्यस्त्वौषधीभ्य उपया-
मगृहीतो ऽस्योषधीभ्यस्त्वाद्भ्य एष ते योनिरोषधीभ्यस्त्वाद्भ्यः ॥

उदु त्यं जातवेदसं देवं वहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ॥

15 उपयामगृहीतो ऽसि सूर्याय त्वैष ते योनिस्सूर्याय त्वा ॥

वाचस्पतिं विश्वकर्माणमूतये मनोयुजं[6] वाजे अद्या हुवेम ।
स नो नेदिष्ठं हवनान्यागमद्विश्वशम्भूरवसे साधुकर्मा ॥

उपयामगृहीतो ऽसीन्द्राय त्वा विश्वकर्मण[7] एष ते योनिरिन्द्राय त्वा
विश्वकर्मणे ॥

20 महीमू षु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम ।
तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिम् ॥

उपयामगृहीतो ऽस्यदित्यै त्वैष ते योनिरदित्यै त्वा ॥ संततिर्वा एते

---

[1] So corr. Ch संप्रश्या°; Kap. S. 46, 7 = Corr. [2] So corr. Ch संप्रश्या°; Kap. S. 46, 7 = Corr. [3] So versuchsweise; Ch दिशो भ्यो वर्ष°; Kap. S. 46, 7 दिशो भ्योतद्वर्षत्य° [4] So corr. Ch क्रियमाने; Kap. S. 46, 7 = Corr. [5] So corr. Ch दारुमयेन; Kap. S. 46, 7 दारुमयणा [6] So Ch; RV 10, 81, 7 मनोजुवं [7] So corr. Ch कर्माण

ग्रहा यथा वै शालैवं[1] संवत्सरो यथा शालायाः पक्षसी एवं संव-
त्सरस्य पक्षसी यथा मध्यमो वंश एवं दिवाकीर्त्यं यदेते न गृह्येर-
न्विषूची संवत्सरस्य पक्षसी व्यवस्रंसेयातामार्तिमार्छेयुर्यदेते[2] गृह्यन्ते
यथा शालायाः पक्षसी मध्यमं वंशमभिसमायच्छन्त्येवमेवैतत्संवत्स-
रस्य[3] पक्षसी दिवाकीर्त्यमभिसंतन्वन्ति ते सर्वे सह[4] दिवाकीर्त्ये गृ- 5
ह्यन्ते यथा वै मध्यमो वंश एवं दिवाकीर्त्यं यद्वै सौबलस्यादवशी-
र्येत ॥ यदेते न गृह्यन्ते दृढिम्न एवानुनद्धा अशिथिलत्वाय शुक्राग्रा
एतदहर्गृह्यन्ते त्रैष्टुभो वै शुक्रस्त्रैष्टुभमेतदहः प्रत्युत्तब्ध्यै सयत्वाय सौर्य
एतदहः पशुरालभ्यते सौर्यो ग्रहो गृह्यते ऽसौ वा आदित्य एतदहस्त-
मेव प्रत्यक्षमृध्नुवन्ति[5] षडेतदहरतिग्राह्या गृह्यन्ते पशुस्सप्तमस्सप्त प्राणा 10
असा आदित्यश्शिरः प्रजानां शीर्षन्नेव प्राणान्दधाति तस्मात्सप्त शी-
र्षण्याः प्राणा इन्द्रो वै वृत्रं हत्वा स इमांल्लोकानभ्यजयत्तस्यासौ लो-
को ऽनभिजित आसीत्तं विश्वकर्मा भूत्वाभ्यजयद्यद्वैश्वकर्मणो गृह्यते
ऽमुष्य लोकस्याभिजित्यै यन्ति वा एते ऽस्माल्लोकाद्ये वैश्वकर्मणं गृ-
ह्णते पराञ्च इव ह्येते न रोहन्ति त ईश्वराः प्रमेतोरादित्यं[6] श्वो गृ- 15
ह्णीरन्नियमदितिरस्यामेव तेन प्रतितिष्ठन्त्या परार्धात्संवत्सरस्यान्य-
मन्यं गृह्णीरन्विश्वान्यन्येन कर्माणि कुर्वाणा यन्त्यस्यामन्येन प्रतिति-
ष्ठन्ति ता उभौ सह महाव्रते गृह्येते अन्तमेवागत्योभयोर्लोकयोर्ऋध्नु-
वन्ति वैश्वकर्मणेनामुष्मिन्नादित्येनास्मिन्नर्क्यमुक्थं[7] भवत्यन्नं वा अ-
र्क्यमन्नाद् एव तेन प्रतितिष्ठन्ति ॥ ५ ॥ 20

अग्नये त्वा प्रवृहामि गायत्रेण छन्दसेन्द्राय त्वा प्रवृहामि त्रैष्टु-
भेन छन्दसा विश्वेभ्यस्त्वा देवेभ्यः प्रवृहामि जागतेन छन्दसा ॥

---

[1] So corr. Ch शालैधं [2] So corr. Ch व्यवस्रंसोयतामा°; cf. TBr 1, 2, 3, 1.
[3] So corr. Ch भिममा° [4] So corr. Ch मह [5] So corr. mit Caland; Ch
मब्नोवति [6] So corr. Ch प्रमेतोर° [7] So corr. Ch मुक्तं; die Ligatur र्क्यं nicht
ganz deutlich.

अग्निः प्रातस्सवने पात्वस्मान्वैश्वानरो विश्वकृद्विश्वशंभूः ।
स नः पावको[1] द्रविणं दधात्वायुष्मन्तस्सहभक्षास्स्याम[2] ॥
विश्वे देवा मरुत इन्द्रो अस्मानस्मिन्द्वितीये सवने न जह्युः ।
सुमेधसः प्रियमेषां वदन्तो वयं स्याम पतयो रयीणाम्[3] ॥
5 इदं तृतीयसवनं[4] कवीनामृतेन ये चमसमैरयन्त[5] ।
सौधन्वना[6] अमृतमानशानास्स्विष्टं नो ऽभि वस्यो नयन्तु ॥
शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपे सूर्यस्य रश्मिषु रेशीनां त्वा पत्मन्नाधूनोमि मान्दानां त्वा पत्मन्नाधूनोमि कृतनानां त्वा पत्मन्नाधूनोमि भन्दनानां त्वा पत्मन्नाधूनोमि देवयानीनां त्वा पत्मन्नाधूनोमि ॥
10 आ सीमुया[7] अचुच्यवुर्दिवो[8] धाराममश्चत[9] ।
ककुभं रूपमृषभस्य रोचते बृहत् ॥
सोमस्सोमस्य पुरोगाश्शुक्रश्शुक्रस्य पुरोगा यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा ॥ त्रिर्वसुभ्यो अवपथास्त्री[10] रुद्रेभ्यो अवपथास्त्रिरादित्येभ्यो अवपथा येन रूपेण प्रजापतये ऽवपथा-
15 स्तेन मह्यं पवस्वोशिक्त्वं देव सोम गा[illegible]ण छन्दसाग्नेः पाथ उपेहि वशी त्वं देव सोम त्रैष्टुभेन छन्दसेन्द्रस्य पाथ उपेह्यस्मत्सखा देव सोम जागतेन छन्दसा विश्वेषां देवानां पाथ उपेहि ॥ ६ ॥
cf. Mâitr. S. 1, 3, 36; TS 3, 1, 9.

देवाश्च वा असुराश्च समावदेव यज्ञे ऽकुर्वत यदेव देवा अकुर्वत तदसुरा अकुर्वत ते देवा एतमदाभ्यमपश्यंस्तमगृह्णताग्नये त्वा प्रवृ-
20 हामि गायत्रेण छन्दसेति देवताश्चैव तच्छन्दांसि चाप्नुवन्नग्निः प्रातस्सवने पात्वस्मानिति सवनान्येव तदाप्नुवंश्छुक्रं[11] ते शुक्रेण गृह्णामी-

---

[1] So corr. Ch पावतो; cf. TS 3, 1, 9, 1. [2] So corr. Ch भक्तस्याम [3] cf. TS 3, 1, 9, 2. [4] So Ch; TS 3, 1, 9, 2 तृतीयं सवनं [5] So corr. Ch मेरयंत; TS 3, 1, 9, 2 = Corr. [6] So corr. Ch सौधन्वाना [7] So Ch; Mâitr. S. 1, 3, 36 आं समुद्रां [8] So corr. Ch च्यवुन्दिवो [9] So corr. Ch श्चत [10] So corr. Ch अपवथा° [11] So corr. Ch प्नवंकुक्रं

प्रजानन्तः प्रतिगृह्णन्ति पूर्वे प्राणमङ्गेभ्यो[1] अधिनिश्चरन्तम् ।
हुतो याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः ॥
ये बध्यमानमनुबध्यमाना अन्वैक्षन्त मनसा चक्षुषा च ।
अग्निष्टाँ अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संविदानः[2] ॥
5 य आरण्याः पशवो विश्वरूपा विरूपास्सन्तो बहुधैकरूपाः ।
वायुष्टाँ[3] अग्रे प्रमुमोक्तु देवो विश्वकर्मा प्रजया संरराणः ॥
येषामीशे पशुपतिः पशूनां चतुष्पाद उत ये द्विपादः ।
निष्क्रीतास्ते यज्ञियं भागं यन्तु रायस्पोषा यजमानं विशन्तु ॥
प्रमुञ्चमाना[4] भुवनस्य रेतो गातुं[5] धत्त यजमानाय देवाः ।
10 उपाकृतं शशमानं यदस्थात्प्रियं[6] देवानामप्येतु पाथः ॥
नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिस्सह देवयानः ।
सम्यगायुर्यज्ञो यज्ञपतौ दधातु ॥
उपेत शमितारो देवानां दसितं हविः ।
पशोः पाशं[7] प्रमुञ्चत पाशं यज्ञपतेरधि ॥
15 अदितिः पाशान्प्रमुमोक्त्वेताान्नमः पशुभ्यः पशुपतये ऽस्तु ।
यो नो द्वेष्ट्यधरस्स पदीष्ट[8] तस्मिन्पाशान्प्रतिमुञ्चाम एतान् ॥
त्वामु त्ये दधिरे प्रथमं विचक्ष्णिं[9] ऋतंकर्तारमुत[10] यज्ञियं च ।
अग्ने सदक्षस्सतनूर्हि भूत्वाथ वह हव्यं देवेभ्यो जातवेदः ॥

---

[1] So corr. Ch प्रणास्सङ्गेभ्यो; cf. TS 3, 1, 4, 1. [2] cf. Mâitr. S. 1, 2, 15; TS 3, 1, 4, 2; AV 2, 34, 3. [3] So corr. Ch वायुष्टा; cf. TS 3, 1, 4, 2. [4] So corr. Ch प्रमुचमानो; cf. TS 3, 1, 4, 2. [5] So corr. Ch गात्तं; cf. TS 3, 1, 4, 3. [6] So corr. Ch यदस्नात्प्रियं oder यदस्ता°; cf. TS 3, 1, 4, 3. [7] So corr. Ch पाशः; vgl. denselben Vers richtig unten im folgenden Capitel. Anders TS 3, 1, 4, 4; Mâitr. S. 1, 2, 15 a. E. [8] So corr. Ch सस्पदोष्ट; Mâitr. S. 1, 2, 15 स पद्यतां; anders TS 3, 1, 4, 4. [9] So corr. Ch विचक्ष्यो; cf. unten im folgenden Capitel denselben Pâda. [10] cf. TS 3, 1, 4, 4.

जातवेदो वपया गच्छ देवांस्त्वं[1] हि होता प्रथमो बभूथ।
घृतस्याग्ने[2] तन्वा संभव सत्यास्सन्तु यजमानस्य कामाः॥ ॥ ८ ॥
cf. TS 3, 1, 4; (Mâitr. S. 1, 2, 15).

प्रजापतेर्वै पशवो जाताश्च जायमानाश्च रुद्रस्य जाता व्यृद्धेन वा एष पशुना चरति य एतयोस्सन्तं पशुं तमनिर्याच्यैतयोरालभते यथोरेव[3] पशुस्तयोरेवैनं निर्याच्य तेनानुमतेन प्रसूतेनर्ध्नोत्येव[4] जीवन्पशुस्स्वर्गं लोकं गमयितव्य इत्याहुर्न मृतस्स्वर्गं लोकं गन्तुमर्हतीति प्रजानन्तः प्रतिगृह्णन्ति पूर्व इति जीवन्तमेवैनं स्वर्गं लोकं गमयति ये च वै ग्राम्याः पशवो ये चारण्यास्त एतमालभ्यमानमनुध्यायन्ति स ईश्वरो यजमानो ऽपशुः पराभवितोर्ये बध्यमानमनुबध्यमाना य आरण्याः पशवो विश्वरूपा इति पशूनामेवैषा संप्रमुक्तिः पञ्चैतानि जुहोति पाङ्क्ताः[5] पशवो यावानेव पशुस्तं स्वर्गं लोकं गमयति॥ यदवघ्रापयति तमेव निर्दिष्टमालभते पशुर्वै यज्ञो यज्ञास्स[6] यजमान एतत्पशुमालभत[7] इत्याहुः क्वैतर्हि यजमानो भवतीति नाना प्राणो यजमानस्य पशुनेति प्राणा एवैनयोर्व्यावर्तयति यज्ञेन वा एनमेतद्व्यर्धयति[8] यन्नाना प्राण इत्याह सम्यगायुर्यज्ञो यज्ञपतौ दधात्विति यज्ञेनैवैनं समर्धयत्यधिरज्जू[9] वा एता अमुष्मिंल्लोके पशुश्च यजमानश्च ययोरेतेन पाशं न प्रमुञ्चत्युपेत शमितारो देवानां दसितं हविः पशोः पाशं प्रमुञ्चत पाशं यज्ञपतेरधीति पाशमेवैनयोः प्रमुञ्चति वरुणपाशं स ह त्वा अमुष्मिंल्लोके ऽपरज्जुर्यस्यैवं क्रियते यद्यभिचरेद्यो नो द्वेष्ट्यधरस्स पदीष्ट[10] तस्मिन्पाशान्प्रतिमुञ्चाम एतानिति स्तम्भं वा दारु वाभिदध्यात्पाशमेवास्मिन्प्रतिमुञ्चति वरुणपाशमाहव-

[1] So corr. Ch स्त्व [2] So corr. Ch स्याग्रे [3] So corr. Ch ययेरेव [4] So corr. Ch ब्नोत्येव [5] So corr. Ch पांक्तः [6] So corr. Ch सा [7] So corr. Ch भंत [8] So corr. Ch द्व्यवर्धयति [9] So corr. Ch रज्जु [10] So corr. Ch सम्पदंष्टा

नीयं वा एतद्वर्धयति[1] यत्पशुश्रपणं करोति त्वामु त्ये[2] दधिरे प्रथमं
विचक्ष्यमिति मेध्यमेवैनं यज्ञियं करोति जातवेदो वपया गच्छ दे-
वानिति स्वर्गमेवैनं लोकं गमयति यद्वा ऋषीणां च देवानां च
यज्ञस्यापूतमासीत्तदेतैरपुनत यदेवास्य यज्ञस्यापूतं तदेतैः पुनीत आ-
5 व्यं वा एतैस्ते ऽपाजयंस्तदपाव्यानामपाव्यत्वमाव्यमेवैतैरपजयति ॥ ९ ॥
cf. TS 3, 1, 5.

तृतीयस्यां[3] वै दिवि सोम आसीत्तं[4] गायत्र्याहरत्तस्य पर्णमच्छि-
द्यत स[5] पर्णो[6] ऽभवत्तत्पर्णस्य पर्णत्वं तस्मात्सर्वे वृक्षाः पर्णवन्तो
ऽथैष एव पर्ण उच्यते यत्पर्णशाखा भवति तमेव सोममवरुन्द्धे देवा
वै ब्रह्मन्समवदन्त तत्पर्ण उपाशृणोत्सुश्रवा वै नामैष न बधिरो भ-
10 वति य एवं वेद यत्पर्णशाखया प्रार्पयति ब्रह्मणैवैना:[7] प्रार्पयति प्र-
जापतिः पशूनसृजत तानयं[8] देवो ऽभ्यमन्यत[9] तं शम्याशमयत्तच्छ-
म्याश्शमीत्वं यच्छमीशाखया प्रार्पयति शान्त्या अपां वा एतदोषधी-
नां तेजो यद्दर्भा यद्दर्भपिञ्जूलैः प्रार्पयत्यपामेवैना ओषधीनां तेजसा
प्रार्पयतीषे[10] त्वोर्जे[11] इतीषमेवोर्जं यज्ञे दधाति वायवस्स्थेति वा-
15 युर्वा अन्तरिक्षस्याध्यक्षो ऽन्तरिक्षदेवत्याः पशवो वायुरेवैनानन्तरि-
क्षाय परिददाति प्र वा एनानेतदाकरोति यद्वायवस्स्थेत्याहारण्य-
स्येव[12] हि वायुरुपायवस्स्थेति[13] यजमानायैव पशूनपाकरोति देवो
वस्सविता प्रार्पयत्विति प्रसूत्यै श्रेष्ठतमाय कर्मण इति यज्ञो वै श्रेष्ठ-

---

[1] So corr. Ch एतद्व्रवर्धयति [2] So corr. Ch nicht deutlich त्यो oder त्यो, न्यो, न्यो; aber vgl. den Vers oben im vorhergehenden Capitel. [3] Dies Capitel findet sich auch in T 1, welche Handschrift daher hier verglichen ist; die Accente sind nach T 1 gesetzt. [4] Ch त्तां; T 1 त्तं; Kap. S. 46, 8 = T 1, ohne Accent. [5] So T 1, desgl. Kap. S. 46, 8, ohne Accent; Ch सो [6] Der Accent fehlt in T 1 und ist von mir ergänzt. [7] So T 1; Ch वैनः; Kap. S. 46, 8 वैनां [8] So T 1; desgl. Kap. S. 46, 8, ohne Accent; Ch तानयन्दे° [9] So corr. mit Caland; T 1 देवेभ्यो मन्येत; Ch देवेभ्यो मन्यत; desgl. Kap. S. [10] So corr. Ch तोषो; T 1 यति इषे; Kap. S. 46, 8 तोषे [11] Ch त्वार्जे; Kap. S. 46, 8 त्वोजे त्वेतोषमो° [12] So T 1; Ch यद्दाहवस्स्ये° [13] So T 1; Ch पायवास्स्ये°

तमं कर्मांप्यायध्वमघ्न्या देवभागमिति वत्सेभ्यश्च वा एता मनुष्येभ्यश्च पुराप्यायन्ते[1] ऽथैतर्हि देवेभ्य एवैना आप्याययति[2] प्रजावतीरनमीवा[3] अयक्ष्मा इति प्रजावतीरेवैना अनमीवा[4] अयक्ष्माः करोति ॥ मा वस्स्तेन[5] ईशत माघशंस इत्याशिषमेवाशास्ते परि वो रुद्रस्य हेतिर्वृणक्त्विति रुद्रमेव पशुभिः परिवृणक्त्यघातुको ऽस्य रुद्रः पशून्भवति[6] यस्यैवं विदुषो यश्चैवं[7] विद्वान्हविषे गाः प्रापयति ध्रुवा अस्मिन्गोपतौ स्यातेति ह्वींहत्यैवैना बह्वीरिति भूमानमेवैना गमयति यजमानस्य पशून्पाहीति यजमानस्य पशूनां गोपीथाय प्रतीचीं शाखामुपगूहति तस्माद्ग्राम्याः[8] पशवस्सायमारण्याद्ग्राममायन्ति[9] यत्पराचीमुपगूहेदरण्ये हीयेरन्[10] ॥ १० ॥

cf. Kap. S. 46, 8; Mâitr. S. 4, 1, 1; TBr 3, 2, 1.

इत्येकोत्तरशतशाखाध्वर्युप्रभेदभिन्ने श्रीमद्यजुर्वेदे काठके चरकशाखायां मध्यमिकायां पात्नीवतं नाम त्रिंशं स्थानकं परिपूर्णम् ॥ संपूर्णा चेयं मध्यमिका ॥ शुभमस्तु ॥ शुभमस्तु ॥ सर्वजगतास् ॥[11]

---

[1] So T1; desgl. Kap. S. 46, 8, ohne Accent; Ch पुराप्यायते [2] So T1; desgl. Kap. S. 46, 8, ohne Accent; Ch आप्यायति [3] So T1; Ch मीव [4] So T1; Ch मीव [5] So T1; Ch मा नस्स्तेन; Kap. S. 46, 8 मा वस्तेन [6] Ch पशुर्भवति [7] So corr. Ch यस्यैवं; T1 यस्यैवं; Kap. S. 46, 8 यश्चैव [8] In T1 eine kleine Lücke; aus diesem Grunde ist der Accent von mir ergänzt für die Worte ग्राम्याः पशवस्सायमारण्या° [9] Ch द्वासमायान्ति; T1 ग्राममायन्ति; Kap. S. 46, 8 सायमारण्याद्ग्राममायंति; Mâitr. S. 4, 1, 1 सायमरण्याद्ग्राममायन्ति [10] Die drei letzten Worte des Textes in T1 abgebrochen, daher der Accent von mir ergänzt. Kap. S. 46, 8 दरिण्ये हीयेरन् [11] So die Unterschrift des Capitels in Ch.

॥ काठकम् ॥

# KÂṬHAKAM

## DIE SAṂHITÂ DER KAṬHA-ÇÂKHÂ

HERAUSGEGEBEN

VON

**LEOPOLD VON SCHROEDER**

PROFESSOR AN DER K. K. UNIVERSITÄT ZU WIEN

WIRKL. MITGLIED DER KAIS. AKADEMIE DER WISSENSCHAFTEN

DRITTES BUCH

GEDRUCKT AUF KOSTEN DER DEUTSCHEN MORGENLÄNDISCHEN GESELLSCHAFT



LEIPZIG

IN COMMISSION BEI F. A. BROCKHAUS

1910

# VORWORT.

Auch die vorliegende Ausgabe des dritten Buches der Kaṭha-Samhitâ, welche den Abschluß des Textes bringt, beruht zum weitaus größten Theile bloß auf dem Berliner Codex Chambers 40 (Ch). An Ṛicaka-Mss. konnten verglichen werden und wurden für die Constitution des Textes benutzt: T 1 und Brl für die Capitel 31, 9 und 10; 36, 6; 37, 16; 38, 4; 39, 13; 40, 5; 40, 8 und 9; 40, 14; T 1 allein für 37, 11; 38, 13; 5, 11, 1—6; 5, 12, 1; Brl allein für 39, 12 (Fragment); 5, 1, 1; 5, 5, 20; 5, 10, 5 und 6; T 7, T 1 und Brl für 35, 1 und 38, 2; T 4, W und W 1 für 35, 3—20; T 1, T 3, T 4, W 1, W 1 ζ, G und Brl für 35, 7; T 1, Brl, W 2 für 37, 9; 38, 14; T 1, T 7, Brl und W 2 für 36, 15; T 1, Brl und W 1 für 38, 1; T 1, T 7, W 1 für 38, 5; T 1, T 7, Brl, W 1 und W 2 für 38, 12; W 2 allein für 39, 3 (Fragment); T 1, T 3, Brl für 39, 4; T 5, T 6, Brl für 40, 1; Brl, W 1 und G für 40, 11; T 6 allein für 5, 3, 2; W 1 ζ allein für 5, 4, 6—8; T 6 und Brl für 5, 5, 14. Selbstverständlich auch die Kapishṭhala-Saṃhitâ, wo der entsprechende Text in ihr vorliegt.

Herr Prof. W. Caland in Utrecht hat auch bei diesem Bande die Freundlichkeit gehabt, eine Correctur zu lesen und seine werthvollen Bemerkungen dazu zu machen. Sie sind in derselben Weise berücksichtigt worden, wie beim zweiten Bande der Ausgabe. Für diese ausdauernde thätige Mithülfe, die dem Werke wesentlichen Nutzen gebracht hat, sage ich Herrn Prof. W. Caland meinen wärmsten, herzlichsten Dank.

Der Anhang bringt ein Verzeichniß der Vers- und Capitel-Anfänge des Kâṭhakam. Vergleichungen, wie ich sie s. Z. bei der Ausgabe der Mâitr. Saṃhitâ hinzufügte, durfte ich mir jetzt ersparen, wo die großartige Vedic Concordance von M. Bloomfield sich in den Händen der Fachgenossen befindet. Ich bemerke nur, daß die fett gedruckten Zahlen die Capitel-Anfänge markiren. Einklammerung der Citate bedeutet, daß an den betreffenden Stellen nicht der ganze Vers, sondern bloß der Anfang desselben sich vorfindet.

Ein vollständiger Index Verborum des Kâṭhakam, zu dem ich schon vor Jahren die Zettel ausschrieb, befindet sich in der Arbeit. Herr Prof. Richard Simon in München hat sich in aufopfernder Weise der Herstellung

dieses ebenso wichtigen wie mühevollen Werkes gewidmet. Da die Vollendung desselben aber noch geraume Zeit in Anspruch nehmen dürfte, soll dieser Index Verborum s. Z. als besondere Lieferung nachfolgen.

Zum Schluß sage ich gern und freudig meinen wärmsten Dank dem Vorstande der Deutschen Morgenländischen Gesellschaft, welcher den Druck der nunmehr vollendeten Ausgabe des Kâṭhakam ermöglicht hat, — insbesondere den Herren Geh. Rath Prof. Dr. Ernst Windisch und Prof. Dr. August Fischer in Leipzig. Ich danke aber auch aufs Herzlichste der Buchdruckerei von W. Drugulin-Baensch in Leipzig, die bei der Herstellung des Druckes die größte Umsicht und Sorgfalt bewiesen hat.

Wien, am 1. Mai 1910.

**L. v. Schroeder.**

ओम्[1] ॥ प्रजापतिर्वा ओषधीः परुश्शो वेद प्राजापत्यो ऽश्वो यद-
श्वपर्श्वा बर्हिर्दात्योषधीनामहिंसायै[2] देवस्य त्वा सवितुः प्रसव इति
सवितृप्रसूत एवैनां देवताभिरादत्ते गोषदसीति रयिमेव यजमाने द-
धाति प्रत्युष्टं रक्ष इति यज्ञमुखादेव रक्षांस्यपहन्ति प्रेयमगाद्धिषणा[3]
बर्हिरच्छेति विद्या वै धिषणा विद्ययैवैनदच्छैति[4] मनुना कृता स्व- 5
धया वितष्टेति मनुना ह्येषा कृता स्वधया वितष्टोर्वन्तरिक्षं वीहीति
समष्ट्या इन्द्रस्य परिषूतमसीति यद्वा इदं किंच तदिन्द्रस्य परिषूतं[5]
यथा श्रेयसे प्रोच्य[6] कर्म करोत्येवमेवैतदिन्द्राय प्रोच्य बर्हिर्दाति[7] या-
वत्परिदिशति यत्तत्सर्वं न[8] दाति यज्ञस्य तदतिरिच्यते यद्वै यज्ञस्याति-
रिच्यते भ्रातृव्यं तेन वर्धयत्येकं स्तम्बं[9] परिदिशेत्तं[10] सर्वं दायाद्यज्ञस्या- 10
नतिरेकाय यत्सर्वं दायान्न पशुभ्यो जीवनमुच्छिंषेदेकां[11] वा शुष्टिं द्वे
वोच्छिंषेन्न[12] यज्ञस्यातिरेचयत्युत्पशुभ्यो जीवनं शिंषति माधो मोपरि
परुस्त[13] ऋध्यासमित्यृद्धा आच्छेत्ता ते मा रिषदिति यावद्यावद्वा अ-
विद्वानध्वर्युर्बर्हिषो दाति तावदस्यात्मनो[14] मीयते नास्यात्मनो मीय-

---

[1] Ch ओं नमो ब्रह्मणे ॥ ओं प्रजा° [2] So corr. Ch बर्हिर्दोत्यो° [3] So corr. Ch प्रियम°; aber cf. oben 1, 2; Kap. S. 47, 1 auch प्रियमगाद्धिषणा [4] So corr. Ch विद्यायैवैनदश्कति; Kap. S. 47, 1 विद्यएवैनदृक्षैति [5] So corr. Ch परिषूतो; Kap. 47, 1 = Corr. [6] So corr. Ch प्रोद्य; aber vgl. das Folgende; Kap. S. 47, 1 und Mâitr. S. 4, 1, 2 = Corr. [7] So corr. Ch बर्हिर्दधाति; Kap. S. 47, 1 und Mâitr. S. 4, 1, 2 = Corr. [8] So corr. mit Caland; Ch ohne न; Kap. S. 47, 1 wesentlich ebenso यावत्परिदिशमेति यत्तत्सर्वं दाति यज्ञस्यैतदतिरिच्यते; dagegen Mâitr. S. 4, 1, 2 यावत्परिदिशति तंत्सर्वं दाति यत्तत्सर्वं नं दाति यज्ञस्य तदतिरेचयति [9] So corr. Ch स्तंभं; Kap. S. 47, 1 स्तंब; Mâitr. S. 4, 1, 2 स्तम्बं [10] So corr. Ch परिदेशेत्ते [11] So corr. Ch मुक्तिषे° [12] So corr. Ch वौ° [13] So corr. Ch परोस्त°; vgl. aber oben 1, 2 [14] So corr. Ch तावस्या°; Kap. S. 47, 1 = Corr.

ते य एवं वेद देव बर्हिश्शतवल्शं[1] विरोहेत्योषधिष्वेव भूमानं दधाति सहस्रवल्शा[2] वि वयं रुहेमेत्याशिषमेवाशास्ते ऽदित्या रास्नासीतीयमदितिरस्या एवैनद्रास्नां[3] करोतीन्द्राण्यास्संनहनमितीन्द्राणी वा अग्रे देवतानां समनह्यत सार्ध्नोदद्ध्यै[4] बर्हिस्संनह्यति प्रजा वै बर्हिः प्रजा-
5 नामपरावापाय तस्मात्स्नाव्ना[5] प्रजास्संतताः ॥[6] पूषा ते ग्रन्थिं ग्रश्नात्विति पुष्टिर्वै पूषा पुष्टिमेव यजमाने दधाति स ते मास्थादित्यहिंसाया इन्द्रस्य त्वा बाहुभ्यामुद्यच्छ इतीन्द्रस्यैवैनद्बाहुभ्यामुद्यच्छते[7] बृहस्पतेस्त्वा मूर्ध्नाहरामीति ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनद्धरति देवंगममसीति बहु वा एतस्य पूर्वेद्युराह्रियमाणस्य स्कन्दत्यस्कन्नमेवैनद्देवेभ्य-
10 स्संप्रयच्छति तदाहरन्ति कवयः पुरस्तादिति ब्राह्मणा वै कवयो ब्राह्मणा ह्येतदाहरन्ति[8] देवेभ्यो जुष्टमिह बर्हिरासद इति देवेभ्य एवैनज्जुष्टं करोति ॥ १ ॥

cf. oben 1, 2; Kap. S. 47, 1; Mâitr. S. 4, 1, 2; TBr. 3, 2, 2.

वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमिति वसूनां वा एतद्भागधेयं यत्पवित्रं तेभ्य एवैनं करोति प्रजापतिः प्रजा असृ-
15 जत तस्योखे अस्रंसेतां स एते उखे अपश्यत्ताभ्यामादत्त यदेते उखे भवतः प्रजापतेरेवोखे प्रतिदधात्ययक्ष्मा वः प्रजया संसृजामीत्ययक्ष्मा एवैनाः करोति रायस्पोषेण बहुला भवन्तीरिति भूमानमेवैना गमयति मधुमद्घृतवत्पिन्वमाना इति मधुमदेव घृतवद्देवेभ्यो हव्यं करोति जीवा जीवन्तीरुप वस्सदेमेत्याशिषमेवाशास्ते ॥ मातरिश्वनो घर्मो ऽसीत्य-
20 न्तरिक्षं वै मातरिश्वनो घर्मो द्यौरसि पृथिव्यसीति दिवमेवैनां पृथिवीमकर्विश्वधायाः परेण धाम्नाहृतासि मा ह्वारिति दृंहत्येवैनां पवित्रमपिदधात्योषधीनां चैव पशूनां च पयस्संसृजति सा विश्वायु-

---

[1] Kap. S. 47, 1 शतवलिशं [2] Kap. S. 47, 1 सहवलिशा [3] Kap. S. 47, 1 एवैनां राश्णां [4] So corr. Ch सार्ब्नोदृध्ये [5] So corr. Ch स्नाब्ना; Kap. S. 47, 1 साम्नः [6] Ch schaltet hier in rother Farbe ओं ॥ ein. [7] Kap. S. 47, 1 स्यैवैतत् बा° [8] Kap. S. 47, 1 ह्येवं तदाहरंति

स्सा[1] विश्वव्यचास्सा विश्वधाया इत्यसौ[2] वै विश्वायुरन्तरिक्षं विश्वव्यचा
इयं विश्वधाया इमानेव लोकान्यथापूर्वं प्रदापयतीमे[3] ऽस्मै लोका य-
थापूर्वं प्रत्ता दुह्रे[4] तिस्रो यजुषाभिमन्त्रयते त्रय इमे लोका एष्वेव लो-
केषु रसं दधाति तस्मादिमांल्लोकान्प्रजा उपजीवन्त्युपजीवनीयो भवति
य एवं वेद ॥ हुतस्तोको हुतो द्रप्स इत्यनुमन्त्रयते ऽस्कन्दायाग्नये बृहते 5
नाकाय स्वाहेतीयं वा अग्निर्बृहन्नाको[5] बहु वा एतस्य दुह्यमानस्य
स्कन्दत्यस्यामेवैनत्प्रतिष्ठापयत्यस्कन्दाय न दारुपात्रेण दुह्यादग्निमद्वै
दारुपात्रं यातयामेन हविषा यजेत तदु ह स्माहुर्दार्तेयाः[6] पुरोडाशमु-
खं वै हविर्न वा इत इतः पुरोडाशं[7] हविषो यामो ऽस्ति दोग्धव्यमेवे-
ति न शूद्रो दुह्यादसतो वा एष संभूतो ऽसत्याद्यद्वाव पवित्रमत्येति 10
तद्धविरग्निहोत्रमेव शूद्रो न दुह्यात्तद्धि नोत्पुनन्ति संपृच्यध्वमृतावरी-
रिति प्रत्यानयति शृतत्वाय शृतकामा हि देवाः ॥ इन्द्रस्य त्वा भागं
सोमेनातनच्मीति[8] सोममेवैनं[9] करोति सोमो वै देवानां परोक्षं
सान्नाय्यं तस्य ह[10] त्वै सोमपीथस्संततो य एवं विद्वान्सान्नाय्येन यजते
ऽदस्तमसि विष्णव इति यज्ञो वै विष्णुर्यज्ञायैवैनददस्तं करोति न 15
मृत्पात्रेणापिदध्याद्यन्मृत्पात्रेणापिदध्यात्पितृदेवत्यं हविस्स्याद्दारुपात्रे-
णापिदधात्यग्निमद्वै दारुपात्रमग्निरेव हव्यं[11] रक्षत उदन्वत्कुर्यादापो
रक्षोघ्नी[12] रक्षसामपहत्यै विष्णो हव्यं रक्षस्वेति विष्णुरेव हव्यं रक्षत
आपो जागृतेत्यापो वै यज्ञस्य गोप्त्रीस्ताभ्य एवैनत्परिददाति ॥ २ ॥

cf. oben 1, 3; Kap. S. 47, 2; Mâitr. S. 4, 1, 3; TBr. 3, 2, 3.

---

[1] So corr. mit Caland; in Ch विश्वायुस्सा ausgefallen. [2] So corr. Ch इत्यमौ; Kap. S. 47, 2 = Corr. [3] So corr. Ch तीम (erste Hand तीमो). [4] Kap. S. 47, 2 दुह्रे [5] So corr. Ch अग्निर्वृत्रहन्नाको; Kap. S. 47, 2 अग्निर्बृहन्नाको [6] So Ch; Kap. S. 47, 2 दात्रेया; Mâitr. S. 4, 1, 3 दात्रेयाः [7] Kap. S. 47, 2 यत यतः पुरोडाशो हविषो यामो स्ति; aber vgl. Mâitr. S. 4, 1, 3 (p. 5, Zeile 5). [8] So corr. Ch सोमेनतनच्मीति [9] So corr. Ch सोमामे°; Kap. S. 47, 2 सोमामवैतत्करोति [10] So corr. Ch सान्नाय्यान्तस्य ऊ त्वै; Kap. S. 47, 2 परोक्षं सान्नाज्यं तस्य ह त्वै; vgl. Mâitr. S. 4, 1, 3 (p. 5, Z. 11). [11] Ch हव्यै [12] So corr. Ch कुर्यादापरोक्षोघ्नौ; Kap. S. 47, 2 उदन्वंत कुर्यादापो रक्षोघ्नौ

अपः[1] प्रणयत्यापो वै यज्ञो यज्ञमेव तत्वा प्रचरत्यापो देवानां प्रियं धाम देवानामेव प्रियं धाम प्रणीय प्रचरत्यापो रक्षोघ्नी रक्षसामपहत्या आपो वज्रो[2] वज्रमेव भ्रातृव्याय प्रहरत्यापश्श्रद्धा श्रद्ध वा अस्मै देवाश्श्रन्मनुष्या[3] दधते यस्यैवं विदुषो यस्यैवं विद्वानपः प्रणयति कर्मणे वामिति हस्ता अवनेनिक्ते कर्म ह्येतत्क्रियते वानस्पत्यमसि प्रत्युष्टं रक्ष इति यज्ञमुखादेव रक्षांस्यपहन्त्युर्वन्तरिक्षं[4] वीहीति समष्ट्यै धूरसि धूर्व धूर्वन्तमिति धुर्यो वा एषो ऽग्निर्यदनालभ्यातीयाद्यजमानं शुचार्पयेद्द्वौ वै पुरुषस्य भ्रातृव्यौ यं च द्वेष्टि यश्चैनं द्वेष्टि ता एवास्य शुचार्पयति ॥ देवानामसि वह्नितममिति देवेभ्य एवैनद्वह्निं करोति विष्णोः क्रमो ऽस्यहृतमसि हविर्धानं दृंहस्व मा ह्वारिति[5] दृंहत्येवैनन्मित्रस्य त्वा चक्षुषा प्रेक्ष इति मित्रमेवैनत्कुरुत उरु त्वा वातायेति यद्वै किं च वातो नाभिवाति तद्वरुणस्यावरुण्यमेवैनत्करोति देवस्य त्वा सवितुः प्रसव इति सवितृप्रसूत एवैनद्देवताभ्यो निर्वपत्यमुष्मै जुष्टमिति यस्या एव देवतायै निर्वपति तस्या एनज्जुष्टं करोति यच्छन्तु त्वा पञ्चेति पञ्च वा ऋतव ऋतूनेव प्रीणाति ते ऽस्मै प्रीताः कल्पन्ते कल्पन्ते ऽस्मा ऋतवो य एवं वेद ॥ रक्षायै त्वा नारात्या[6] इति रक्षसामपहत्या इदं देवानामिदं नस्सहेति व्यावृत्त्यै स्वरभिव्यख्यमिति तम इव वा एष प्रपद्यते परीणहिं स्वरेवाभिविपश्यतीमे वै लोका हविषो गृहीतादुदवेपन्त तान्देवा एतेन यजुषादृंहन्दृंहन्तां दुर्या इतीमानेव लोकान्दृंहत्युर्वन्तरिक्षं[7] वीहीति ब्रूयाद्धायुको ऽध्वर्युस्स्यादुर्वन्तरिक्षं प्रेहीत्यव्यायुको ऽध्वर्युर्भवति य एवं वेदाग्ने हव्यं रक्षस्वेत्युपसादयत्यग्निरेव हव्यं रक्षते ॥ ३ ॥

cf. oben 1, 4; Kap. S. 47, 3; Mâitr. S. 4, 1, 4 und 5; TBr. 3, 2, 4.

---

[1] So corr. Ch आपः [2] वज्रो fehlt in Ch und ist von mir eingefügt; Kap. S. 47, 3 = Corr.; cf. Mâitr. S. 4, 1, 4 (p. 6, Z. 4). [3] Ch श्रद्धा वा; Kap. S. 47, 3 प्रहरत्याप श्रत्धा श्रत्धास्मै देवासृन्मनु॰ [4] So corr. Ch स्युपहत्युर्वे॰; Kap. S. 47, 3 = Corr. [5] So corr. Ch माहुरिति; vgl. oben 1, 4. [6] So corr. Ch नाराभ्य; cf. 1, 4; Kap. S. 47, 3 नाराद्दत्या [7] So corr. Ch द्रृंहेत्यु॰; Kap. S. 47, 3 द्रहत्यु॰

विष्णोर्मनसा पूते स्थ[1] इति पुनात्येवैने देवो वस्सवितोत्पुनात्वि-
ति सवितृप्रसूत एवैना देवताभिरुत्पुनाति देवस्य त्वा सवितुः प्रसव
इति सवितृप्रसूत एवैनद्देवताभ्यः प्रोक्षत्यमुष्मै जुष्टमिति यस्या एव
देवतायै प्रोक्षति तस्या एनज्जुष्टं करोति शुन्धन्तां पात्राणि देवयज्या-
या इति देवेभ्य एवैनानि शुन्धत्यवधूतं रक्षो ऽवधूतारातिरिति रक्ष- 5
सामपहत्या अदित्यास्त्वगसीतीयमदितिरस्या एवैनस्त्वचं करोत्यधिष-
वणमसि वानस्पत्यमित्यधिषवणमेवैनत्करोत्यग्नेस्तनूरसि वाचो विस-
र्जनमित्यग्नेर्ह्येषा तनूर्वाचो विसर्जनं यदा हि पशव ओषधीरश्नन्त्यथ
वाचं विसृजन्ते बृहद्ग्रावासि वानस्पत्य इति ग्रावाणमेव कृत्वा हवि-
ष्करोति हविष्कृदेहीति[2] य एव देवानां हविष्कृत्तं[3] ह्वयति त्रिर्ह्वयति 10
त्रिसत्या हि देवा अद्रिरसि श्लोककृदपहतं रक्षो ऽपहतारातिरिति
रक्षसामपहत्यै वयं संघातं संघातं जयेमेति संघातं संघातमेव भ्रा-
तृव्यं जयति ॥ मनोर्वै श्रद्धादेवस्य यजमानस्यासुरघ्नी[4] वाग्यज्ञायु-
धानि प्रविष्टासीत्तेषां[5] यावन्तो ऽसुरा उपाशृण्वंस्ते पराभवन्त्य एवं
विद्वान्भ्रातृव्याणां[6] मध्ये ऽवसाय यजेत यावन्तो ऽस्य भ्रातृव्या यज्ञा- 15
युधानामुपशृण्वन्ति तेषामिन्द्रियं वीर्यं वृङ्क्ते भवत्यात्मना परास्य भ्रा-
तृव्यो भवति वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्त्विति मिथुनमेव करो-
त्यस्ना[7] वै देवाः पशुभ्यो रक्षांसि निरवादयन्त तुषैरोषधिभ्यः[8] परापूतं
रक्षः[9] परापूतारातिरित्येतावतैव यज्ञाद्रक्षांसि निरवदयते[10] निरस्तो
अघशंस इति भ्रातृव्यो वा अघशंसो भ्रातृव्यमेव निरस्यति वायुर्व इष 20

---

[1] So corr. Ch स्या; Kap. S. 47, 4 स्य [2] So corr. Ch हविष्टदेह्नीति; Kap. S. 47, 4 हविः स्कदाद्रवेति [3] So corr. Ch हविष्टत्तं; Kap. S. 47, 4 हविः कृत्व [4] So corr. Ch यजमानस्य तस्यासुरघ्नी; Kap. S. 47, 4 यजमानश्चासुरघ्नी; Mâitr. S. 4, 1, 6 (p. 8, Z. 10) यंजमानस्यासुरघ्नी [5] So corr. Ch प्रतिष्ठासीत्तेषां; Kap. S. 47, 4 प्रविष्टा आसीत्तेषां; cf. Mâitr. S. 4, 1, 6 (p. 8, Z. 11). [6] So corr. Ch विद्याङ्भ्रातृव्याणां; Kap. S. 47, 4 विद्वां भ्रा° [7] So corr. Ch erste Hand करोत्यत्यस्ना; dann etwa करोत्यत्यत्स्ना; Kap. S. 47, 4 करोत्यश्ना; cf. Mâitr. S. 4, 1, 7 a. A. [8] So corr. Ch त्तषै°; cf. Mâitr. S. 4, 1, 7 (p. 8 unten). [9] So corr. mit Caland; in Ch fehlt परापूतं रक्षः [10] So corr. Ch यज्ञाद्रक्षां निरवादयते

ऊर्जे विविनक्तीति वायुर्वै देवानां पवित्रं पुनात्येवैनान्सुफलीकृता-
न्करोति मेध्यानेवैनान्यज्ञियान्करोति त्रिः फलीकरोति त्रिसत्या हि
देवाः ॥ ४ ॥ cf. oben 1, 5; Kap. S. 47, 4; Mâitr. S. 4, 1, 6—7; TBr. 3, 2, 5.

अवधूतं रक्षो ऽवधूतारातिरिति रक्षसामपहत्या अदित्यास्त्वगसी-
5 तीयमदितिरस्या एवैनं त्वचं करोति धिषणासि पार्वती[1] प्रति त्वा-
दित्यास्त्वग्वेत्तु[2] पृथिवीं दृंहेति पृथिवीमेव दृंहति धिषणासि पार्व-
तेयी[3] प्रति त्वा पार्वती[4] वेत्तु दिवं दृंहेति दिवमेव दृंहति दिवस्स्क-
म्भन्यसीति[5] शम्यामुपदधातीमे वै सहास्तां[6] ते शम्यामात्रं शम्यामात्रं
व्यैतां वज्रश्शम्या यच्छम्यामुपदधात्यनयोरेव विधृत्यै ॥ धान्यमसि धि-
10 नुहि[7] देवानित्येतस्य वै यजुषो वीर्येण यावदेका देवता कामयेत या-
वदेका तावदस्या आहुतेः प्रथते प्राणाय त्वा व्यानाय त्वापानाय[8]
त्वेति प्राणं व्यानमपानं तानेव यजमाने दधाति दीर्घामनु प्रसृति-
मायुषे[9] त्वेत्यायुरेवास्मिन्दधाति देवो वस्सविता हिरण्यपाणिः प्रति-
गृह्णात्विति प्रेव वा एते स्कन्दन्ति प्रतिष्ठित्या अदब्धेन वश्चक्षुषाव-
15 पश्यामीति चक्षुषो गोपीथाय रायस्पोषाय सुप्रजस्त्वायेत्याशिषमे-
वाशास्ते[10] ॥ ५ ॥ cf. oben 1, 6; Kap. S. 47, 5; Mâitr. S. 4, 1, 7.

निर्दग्धं रक्षो निर्दग्धारातिरिति रक्षसामपहत्या अपाग्ने अग्निमा-
मादं जहीति य आमात्क्रव्यात्तमपहत्य यज्ञिये देवयजन उपदधाति[11]
यदधस्तादङ्गारमुपवर्तयत्यस्मिंस्तेन लोके ज्योतिर्धत्ते यदुपरिष्टादधि-

---

[1] So corr. Ch पर्वतो; ebenso Kap. S. 47, 5; cf. oben 1, 6; Mâitr. S. 1, 1, 7. [2] So corr. Ch वेतु; aber vgl. unten वेत्त; oben 1, 6; Kap. S. 47, 5 वेतु; Mâitr. S. 1, 1, 7. [3] Kap. S. 47, 5 पार्वतेयै; vgl. oben 1, 6. [4] Kap. S. 47, 5 पर्वतो [5] Kap. S. 47, 5 दिवस्कंभंनसीति; oben 1, 6 (p. 3, Z. 10) ist zu corrigiren दिवस्स्कम्भन्यसि धान्यमसि [6] So corr. Ch महास्तां [7] So corr. Ch धेनुहि [8] So corr. Ch त्वापानय [9] So in Uebereinstimmung mit Mâitr. S. 1, 1, 7 und 4, 1, 7; Kap. S. 47, 5 प्रस्ततिमा°; Kap. S. 1, 6 प्रसितिमा°; oben 1, 6 समृतिमा° darnach wohl zu corrigiren. [10] So corr. Ch सुप्रजजस्त्वाय [11] So corr. Ch यज्ञिये देवयजनमुपदधाति; aber vgl. Kap. S. 47, 6 यज्ञीय देवयजन उप°; Mâitr. S. 4, 1, 8 देवयंजने यज्ञिया उप°

वर्तयत्यन्तरिक्षे तेन ज्योतिर्धत्ते ऽसा एवास्यादित्यो ऽमुष्मिंल्लोके ज्योतिर्भवति सर्वे ऽस्मा इमे लोका ज्योतिष्मन्तो भवन्ति त्रीणि समीचीनान्युपदधाति त्रयः प्राणाः प्राणो व्यानो ऽपानस्तानेव यजमाने दधाति त्रय इमे लोका एष्वेव लोकेष्वृध्नोति ॥ ध्रुवमसि पृथिवीं दृंहेति पृथिवीमेव[1] दृंहत्यायुर्देहि प्राणं देहीत्याशिषमेवाशास्ते धरुणमस्यन्तरिक्षं दृंहेत्यन्तरिक्षमेव दृंहति चक्षुर्देहीत्याशिषमेवाशास्ते धर्त्रमसि दिवं दृंहेति दिवमेव दृंहत्योजो देहि बलं देहीत्याशिषमेवाशास्ते धर्मासि दिशो दृंहेति दिश एव दृंहति रयिं देहि पोषं देहीत्याशिषमेवाशास्ते यन्त्रमस्याशा दृंहेत्याशा एव[2] दृंहति रूपं देहि वर्णं देहीत्याशिषमेवाशास्ते ॥ प्रजापतिर्वै यदग्रे समभवत्स एतावच्छ[3] एव समभवदेकं वा अग्रे शीर्ष्णः कपालं संभवत्यथ द्वितीयमथ तृतीयमथ चतुर्थमथ पञ्चममथ षष्ठमथ सप्तममथाष्टमं यदष्टौ समीचीनान्युपदधात्यात्मानमेवैतद्यजमानस्संस्कुरुते तं संस्कृतममुष्मिंल्लोके ऽनुपरैति यदष्टा उपदधाति गायत्रीं तच्छन्द आप्नोति ॥ यदेकादश त्रिष्टुभं तद्यद्द्वादश जगतीं तच्छन्दस्संमितान्येवोपदधाति चितस्स्थ परिचित इति सर्वाण्येव यजुष्मन्ति करोति भृगूणामङ्गिरसां तपसा तप्यध्वमित्येतासामेवैनानि देवतानां तपसा तपति यानि घर्मे कपालान्युपचिन्वन्ति वेधस[4] इत्यसौ वा आदित्यो घर्मस्तस्य दिशः कपालानि ता एवैतद्विमुञ्चति यथायतनं पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चतामितीन्द्रवायू एवैषां विमोक्तारौ करोति ॥ ६ ॥

cf. oben 1, 7; Kap. S. 47, 6; Mâitr. S. 4, 1, 8; TBr. 3, 2, 6—7.

देवस्य त्वा सवितुः प्रसव इति सवितृप्रसूत एवैनद्देवताभ्यस्संवपत्यमुष्मै[5] जुष्टमिति यस्या एव देवतायै संवपति हविरेव करोत्यपि[6]

---

[1] So corr. Ch वोमेवै [2] So corr. दृंहेत्याशा एव fehlt in Ch und ist von mir ergänzt; vgl. Kap. S. 47, 6 यंत्रमस्याशा दंहेत्याशा एव दहंति [3] Kap. S. 47, 6 एतावंसमभवदेवं; cf. Mâitr. S. 4, 1, 8 (p. 10, Z. 4) एतावच्शस; dasselbe ebenda 1, 9, 8 (p. 139, Z. 6). [4] So corr. Ch वेदस; aber cf. oben 1, 8; Mâitr. S. 4, 1, 8. [5] So corr. Ch संवपतमुष्मै [6] So corr. mit Caland Ch करोत्यप

तस्या एनज्जुष्टं करोति पवित्रवति संवपति हविरेव करोत्यप उप-
सृजत्यमृतं वा आपो ऽमृतमेव हव्यं करोति समाप ओषधीभिस्समो-
षधयो[1] रसेनेत्यन्या[2] वा एतासामन्या जिन्वन्त्योषधयो[3] यज्ञो[4] रेवती
रेवत्यं[5] यज्ञो हविषा हविष्यं यज्ञो जगतीर्जगत्यमित्यापो वै रेवती-
5 रोषधयो मधुमतीः पशवो जगतीरप ओषधीः पशूँस्तानेवास्मा एकधा
सँसृज्य मधुमतः करोति ॥ जनयत्यै[6] त्वेति संयौति मिथुनमेव करोति
मखस्य शिरो ऽसीति यज्ञो वै मखो यज्ञस्यैव शिरः करोति घर्मो वि-
श्वायुरुरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति प्रथयत्येव प्रत्युष्टं रक्ष
इति यज्ञमुखादेव रक्षाँस्यपहन्ति घर्मो वा एषो ऽर्धमासे ऽर्धमासे
10 प्रवृज्यते[7] यत्पुरोडाशस्स ईश्वरो ऽशान्तो यजमानस्य पशून्निर्दहो यत्प-
र्यग्निं करोति पशुमेव करोति शान्त्या अनिर्दाहाय त्रिः परिहरति त्रय
इमे लोका एभ्य एवैनल्लोकेभ्यश्शमयति पुरोडाशं वा अधिश्रितं[8]
रक्षाँस्यजिघाँसन्स नाको नाम दिवि रक्षोहाग्निस्सो ऽस्माद्रक्षाँस्यपा-
हन्देवस्त्वा सविता श्रपयतु वर्षिष्ठे ऽधि नाक इति रक्षसामपहत्या
15 अग्निस्ते तन्वं मा हिँसीदित्यहिँसायै त्वचं ग्राहयति ॥ तस्मान्मस्तिष्कः
परिततो यानि वा इमानि शीर्ष्णः कपालानि तानि कपालानि यो[9]
मस्तिष्कस्स पुरोडाशो यन्नाभिवासयेदाविर्मस्तिष्कस्स्याद्यदभिवास-
यति तस्माद्गुहा मस्तिष्को भस्मनाभिवासयति तस्मादस्थि[10] माँसेन
छन्नं[11] वेदेनाभ्यूहति तस्माच्छिरः केशैश्छन्नं ते देवास्तन्नाविन्दन्त यस्मि-

---

[1] So corr. समोष॰ [2] So corr. Ch रसेनेत्येन्या [3] Ch schreibt जिन्वन्त्योषध, es liegt aber wohl eine Lücke vor, die nach Analogie von Mâitr. S. 4, 1, 9 (p. 11, Z. 3) etwa zu ergänzen wäre जिन्वन्त्योषधयो ऽपो जिन्वन्त्याप ओषधीर्यं॰; in Kap. S. 47, 7 fehlt der Anfang des Capitels ganz. Vgl. TBr. 3, 2, 8, 1. [4] So corr. Ch यद्वौ [5] So corr. Ch रवत्यं [6] So corr. Ch जनयित्यै; cf. aber oben 1, 8; Mâitr. S. 4, 1, 9 (p. 11, Z. 7). [7] So corr. Ch प्रवृज्येते; Mâitr. S. 4, 1, 9 (p. 11, Z. 10) = Corr. [8] So corr. Ch अधिते; Mâitr. S. 4, 1, 9 (p. 11, Z. 13) = Corr. [9] So corr. Ch सो; Kap. S. 47, 7 = Corr. यो; Mâitr. S. 4, 1, 9 यथा मस्तिष्क एवं पुरोडाशः [10] So corr. Ch तस्मादस्ति; Kap. S. 47, 7 तस्मादस्मि मांसेन छंन्नं; cf. Mâitr. S. 4, 1, 9 (p. 11, Z. 20). [11] So corr. Ch माँसेन स्कन्नश्छन्नं; vgl. Kap. S. in der vorigen Anmerkung.

न्यज्ञस्य क्रूरं माक्ष्यामह[1] इति सो ऽग्निरब्रवीदहं वस्तं जनयिष्यामि य-
स्मिन्यज्ञस्य क्रूरं माक्ष्यध्व इति सो ऽपो ऽङ्गारेणाभ्यपातयत्तत[2] एकतो
ऽजायत द्वितीयं ततो द्वितस्तृतीयं ततस्त्रितो यदात्मनो निरमिमीत
तदात्मीयानामात्मीयत्वं[3] यदद्भ्यो निरमिमीत तदाप्यानामाप्यत्वम-
न्तर्वेदि[4] निनयति तदेवावरुन्द्ध उल्मुकेनाभिघारयति भृतत्वाय भृत- 5
कामा हि देवास्ते ऽतिमृजाना[5] आयन्सूर्याभ्युदिते त ऽमृजत[6] सूर्याभ्यु-
दितस्सूर्याभिनिम्रुक्ते सूर्याभिनिम्रुक्तः[7] कुनखिनि कुनखी श्यावदति
श्यावदन्परिवित्ते[8] परिवित्तः परिविविदाने[9] परिविविदानो ऽग्रेदिधि-
षा अग्रेदिधिषुर्दिधिषूपतौ दिधिषूपतिर्वीरहणि[10] वीरहा ब्रह्महणि[11]
ब्रह्महा[12] भ्रूणहनि भ्रूणहनमेनो नात्येति ॥ ७ ॥ 10

cf. oben 1, 8; Kap. S. 47, 7; Mâitr. S. 4, 1, 9; TBr. 3, 2, 8.

देवस्य त्वा सवितुः प्रसव इति स्फ्यमादत्ते सवितृप्रसूत एवैनं
देवताभिरादत्त इन्द्रस्य बाहुरसि दक्षिणस्सहस्रभृष्टिश्शततेजा इति व-
ज्रो वै स्फ्यो वज्रमेव संश्यति भ्रातृव्याय प्रहरिष्यन्पृथिवि देवयज-
न्योषध्यास्ते मूलं मा हिंसिषमित्योषधीनामहिंसायै व्रजं गच्छ गो-
स्थानमिति छन्दांसि वै व्रजो गोस्थानश्छन्दांस्येवास्मै व्रजं गोस्थानं 15
करोति वर्षतु ते द्यौरिति वृष्टिमेव निनयति बधान देव सवितः
परमस्यां पृथिव्यां शतेन पाशैरिति द्वौ वै पुरुषस्य भ्रातृव्यौ[13] यं च

---

[1] So corr. Ch क्रूरस्मात्क्ष्यामह; cf. das Folgende; Kap. S. 47, 7 क्रौरमक्षामहा इति [2] So corr. mit Caland; Ch णाभ्यपयतुत; Kap. S. 47, 7 अंगारेणाभ्युपायंयत्तत; anders Mâitr. S. 4, 1, 9. [3] Kap. S. 47, 7 तदात्मेयानामात्मेयात्वं [4] Das तदाप्यो fehlt in Ch und ist von mir als nothwendig ergänzt; Kap. S. 47, 7 तदाप्येयानामप्येयत्वं [5] So corr. Ch तिसृजाना; Kap. S. 47, 7 पिसृज आयं; aber cf. Mâitr. S. 4, 1, 9 (p. 12, Z. 8). [6] So corr. Ch सृजत; ebenso Kap. S. 47, 7; aber cf. Mâitr. S. 4, 1, 9 (p. 12, Z. 9). [7] So corr. Ch भिनमुक्ते सूर्याभिनमुक्तः [8] So corr. Ch च्यावदति च्यावदन्; Kap. S. 47, 7 श्यावदति श्यावदं; cf. Mâitr. S. 4, 1, 9. [9] So corr. Ch दानो; Kap. S. 47, 7 nur ein Mal परिविविदानो; Mâitr. S. 4, 1, 9 a. E. = Corr. [10] Ch वोरहनि; aber cf. Mâitr. S. 4, 1, 9 a. E. [11] So corr. Ch ब्रह्मणये; Kap. S. 47, 7 ब्रह्मज्ये ब्रूणहनि ब्रूणहनमेनो नायेति [12] Dies Wort fehlt sowohl Kap. S. 47, 7 als auch Mâitr. S. 4, 1, 9 a. E. [13] So corr. Ch भ्रातृव्या; cf. oben 31, 3.

द्वेष्टि यश्चैनं द्वेष्टि ता एवास्य बध्नाति परमस्यां पृथिव्यां शतेन पाशै-
र्द्रप्सस्ते द्यां मा स्कानिति यो वा अस्या रसस्य द्रप्सस्तमिमाः प्रजा
उपजीवन्ति तमेवास्यां[1] यच्छति तस्यास्कन्दायाररुर्द्यां मा पप्तदिति
भ्रातृव्यो वा अररुर्भ्रातृव्यमेव स्वर्गाल्लोकात्प्रतिनुदते ऽररुर्वै नामासुर
5 आसीत्सो ऽबिभेद्यज्ञेन नो देवा अभिभविष्यन्तीति स पृथिवीं विषे-
णालिम्पदमेध्यां कुर्वन्निन्द्रो वै वृत्रमहंस्तस्येमां लोहितमनुव्यधावत्त-
दमेध्याभवद्यदुद्घ्नन्ति यदेवास्या अमेध्यमयज्ञियं तदपहन्त्यररुर्वै नामा-
सुर आसीत्सो ऽबिभेद्देवा मा पृथिव्या नोत्स्यन्त इति स पृथिवीमुप-
म्रुच्याशयत्तमिन्द्रो[2] ऽचायत्तमपाररुमदेवयजनं पृथिव्या देवयजनाज्ज-
10 हीति पृथिव्या अपाहन्स दिवमपतदररुर्द्यां मा पप्तदिति तं दिवः[3]
प्रत्यनुदत ततो देवा अभवन्परासुरा अभवन्यस्यैवं विदुषस्तम्बयजुर्ह्रि-
यते[4] यस्यैवं विद्वान्हरत्येभ्य एव लोकेभ्यो भ्रातृव्यं निर्भजति भवत्या-
त्मना परास्य भ्रातृव्यो भवत्यसुराणां वा इयं पृथिव्यासीत्ते देवा अब्रु-
वन्दत्त नो ऽस्या इति ते वै स्वयं बूध्वमित्यब्रुवन्सो ऽग्निरेव प्राचीं
15 दिशमुदजयद्वसवो दक्षिणां रुद्राः प्रतीचीमादित्या उदीचीं ते देवा
इमामसुराणामविन्दन्त ततो देवा अभवन्परासुरा अभवन्य एवं वि-
द्वानेताभिर्देवताभिर्वेदिं परिगृह्णातीमामेव भ्रातृव्यस्य विन्दते भव-
त्यात्मना परास्य भ्रातृव्यो भवति ॥ पृथिव्या वै मेध्यं चामेध्यं च व्युद-
क्रामत्प्राचीनमुदीचीनं मेध्यमुदक्रामत्प्रतीचीनं दक्षिणामेध्यं प्राचीमु-
20 दीचीं वेदिं प्रवणां कुर्यान्मेध्यामेवैनां यज्ञियां करोत्यथो मेध्यस्य चा-
मेध्यस्य च व्यावृत्त्यै प्राञ्चौ बाहू उन्नयत्याहवनीयमेव परिगृह्णाति
प्रतीची श्रोणी गार्हपत्यमेव परिगृह्णाति मूलं वै रक्षांस्यनूत्पिबन्ति[5]

---

[1] So corr. Ch तमेवास्या; Kap. S. 47, 8 तमेवास्यां यछंति; cf. Mâitr. S. 4, 1, 10 (p. 13, Z. 7). [2] So corr. Ch वीमुपस्रच्या°; Mâitr. S. 4, 1, 10 (p. 13, Z. 8) = Corr.; Kap. S. 47, 8 पृथिवीमुपमंयाशयतमिंद्रो जायतायाररुम° [3] So corr. mit Caland; Ch तद्दिवः Kap. S. 47, 8 तं दिव; तम auch Mâitr. S. 4, 1, 10 (p. 13, Z. 10). [4] So corr. Ch स्तंभयजु°; Kap. S. 47, 8 स्तंबंयजुह्रायते; cf. Mâitr. S. 4, 1, 10. [5] So corr. Ch नूत्पिबति

न नखेन च्छिन्द्याद्यन्नखेन च्छिन्द्यात्कुनखी[1] स्यात्स्फ्येन च्छिनत्ति वज्रो वै स्फ्यो वज्रेणैव रक्षांसि हन्ति ॥ ८ ॥

cf. oben 1, 9; Kap. S. 47, 8; Mâitr. S. 4, 1, 10; TBr. 3, 2, 9.

घृतं[2] च वै मधु च प्रजापतिरासीद्यतो मध्वासीत्ततः प्रजा असृजत तस्मान्मधोः प्रजननमिवास्ति[3] तस्मान्मधुना न प्रचरन्ति यातयामि हि तद्घृतेन प्रचरन्त्ययातयामि ह्येतत्प्राजापत्यं यदाज्यमयातयामा[4] देवानां प्रजापतिर्गार्हपत्ये[5] ऽधिश्रयति पत्न्यवेक्षते पत्न्या एवैष यज्ञस्यान्वारम्भो ऽथो मिथुनमेव यज्ञमुखे दधाति[6] प्रजननाय यद्वै पत्नी यज्ञे करोति तन्मिथुनं यत्पत्न्यवेक्षते[7] मिथुनमेव करोत्यमेध्यं वा एतदयज्ञियं यत्पत्न्यवेक्षत[8] आहवनीये ऽधिश्रयति मेध्यमेवैनद्यज्ञियं करोति देवाश्च वा असुराश्च समावदेव यज्ञे ऽकुर्वत यदेव देवा अकुर्वत तदसुरा अकुर्वत स इन्द्र एतमवकाशमपश्यत्तेनावैक्षत तेनासुरानभ्यभवत्ततो[9] देवा अभवन्परासुरा अभवन्य एवं विद्वानेतेनाज्यमवेक्षते ऽभ्येव भ्रातृव्यं भवति भवत्यात्मना परास्य भ्रातृव्यो भवति प्रत्युष्टं रक्ष इति यज्ञमुखादेव रक्षांस्यपहन्त्यनिशितास्थ सपत्नक्षयणीरित्यनिशिता[10] एवैनाः करोति स्रुचस्संमार्ष्टि पुनात्येवैनास्स्रुवमग्रे संमार्ष्टि पुमांसमेवासामग्रे संश्यत्यथ जुहूमथोपभृतमथ ध्रुवामसौ वै जुहूरन्तरिक्षमुपभृदियं ध्रुवेमानेव लोकान्यथापूर्वं संमार्ष्टि यजमानदेवत्या वै जुहू-

---

1 In Ch fehlen in diesem Wortcomplex die Sylben द्यन्नखेन च्छिन्द्या; sie sind von mir ergänzt, nach Anleitung von Kap. S. 47, 8 न मुषेन छिंद्याद्यं नषेन छिद्या कुनखी; die Lücke ist in Ch als solche durch einen freien Raum mit Strichelchen über der Linie angedeutet. 2 Dies Capitel ist nach T1 und Brl 140 accentuirt. 3 So T1 und Brl 140; Ch प्रजननमेवास्ति; Kap. S. 47, 9 प्रजननमिवास्ति 4 Kap. S. 47, 9 यदाज्यमयातयामा; cf. Mâitr. S. 4, 1, 12 (p. 15, Z. 6). 5 Ch पत्य; Kap. S. 47, 9 गार्हिपत्ते 6 So Ch und Kap. S. 47, 9; T1 und Brl 140 ददाति 7 So Accent corrigirt; T1 und Brl 140 पत्न्यवेक्षते; vgl. aber gleich weiter unten. 8 Ch वेक्षते 9 So accentuirt in Brl 140, resp. नभ्येभवत्ततो; T1 नभ्यभवत्ततो 10 T1 und Brl श्रित ए°

भ्रातृव्यदेवत्योपभृच्चतुर्जुह्वां गृह्णन्भूय आज्यं गृह्णात्यष्टौ गृह्णन्नुपभृति कनीयो भ्रातृव्यमेवास्मा उपस्तिं करोति ॥ ९ ॥

cf. oben 1, 10; Kap. S. 47, 9; Mâitr. S. 4, 1, 12; TBr. 3, 3, 4.

देवीरापो[1] अग्रेगुव इति यज्ञमेव प्रणयति प्रेमं यज्ञं नयत प्र यज्ञपतिं तिरतेत्याशिषमेवाशास्ते ऽग्नेर्वै मेधो ऽपाक्रामत्कृष्णो भूत्वा सं[2] वनस्पतीनाविशत्प्रोक्षितास्य कृष्णो ऽस्याखरेष्ठो अग्नये त्वा जुष्टं प्रोक्षामीति तमेव मेधमवरुन्द्धे ऽथो यस्या एव देवतायै प्रोक्षति तस्या एनं[3] जुष्टं करोति वेदिरसि बर्हिषे त्वा जुष्टं[4] प्रोक्षामि बर्हिरसि स्रुग्भ्यस्त्वा[5] जुष्टं प्रोक्षामीति प्रजा वै बर्हिः पृथिवी वेदिः प्रजा एव पृथिव्यां प्रतिष्ठापयत्यूर्जा पृथिवीं गच्छतेति पृथिव्यामेवोर्जं दधाति तस्मात्पृथिवीं प्रजा उपजीवन्त्युपजीवनीयो भवति य एवं वेद ॥ बह्वीरासादयेद्यावतीर्वै प्रोक्षणीरासादयति तावतीरस्यामुष्मिंल्लोक आपस्तस्माद्बह्वीरासाद्याः पुरस्तात्प्रस्तरं गृह्णाति मुख्यमेव यजमानं करोति यावद्धस्तेन पर्याप्नुयात्तावन्तं गृह्णीयादक्षोधुको[6] यजमानो भवत्यनगर्भावुको ऽध्वर्युर्न विधूनुयाद्यद्विधूनुयात्प्रजां चास्य पशूंश्च विधूनुयान्न प्रमृज्याद्यदेवास्य स्वं यद्वित्तं यद्वेद्यं तत्प्रमार्ष्टि न प्रमृज्याद्यदेवैनमागमिष्यद्भवति[7] तत्प्रतिनुदते ॥ दक्षिणतस्संनहनं स्तृणाति तस्माद्दक्षिणतो नीविः[8] प्रस्तरं[9] धारयन्परिधीन्परिदधाति यजमानो वै प्रस्तरस्स्वयमेवैतद्यजमान आत्मानं परिदधाति रक्षसामपहत्यै संहितान्परिधीन्परिदधाति[10] रक्षसामनन्ववायाय[11] न पुरस्ता-

[1] Dies Capitel ist nach T1 und Brl 141. 142 accentuirt. [2] In Ch fehlt das स; in Kap. S. 47, 10 ist es vorhanden; vgl. auch Mâitr. S. 4, 1, 13 (p. 17, Z. 6). [3] Ch एतं; Kap. S. 47, 10 एनं (wie T1 und Brl). [4] So Brl 141; auch Ch जुष्टं; vgl. auch Mâitr. S. 4, 1, 13 (p. 17, Z. 8); dagegen T1 जुष्टां und ebenso auch Kap. S. 47, 10. [5] So corr. Mss. स्रु°; aber cf. oben 1, 11 (p. 6, Z. 1); Kap. S. 47, 10 श्रुग्भ्यस्त्वा [6] T1 und Brl 141 दंक्षोदको [7] Brl 141 न प्रतिमृज्याद्यं° was Caland vorzieht. [8] So T1 und Brl 141; Ch नेविः; Kap. S. 47, 10 नोचिः [9] Brl 141 प्रस्तरे [10] Die Worte रक्षसामपहत्यै संहितान्परिधीन्परिदधाति fehlen in Ch; sie sind nach T1 und Brl gegeben, finden sich auch Kap. S. 47, 10. [11] Hier

त्परिदधात्यसा एवास्मादादित्य उद्यन्पुरस्ताद्रक्षांस्यपहन्त्यूर्ध्वे समिधा
आदधात्युपरिष्टादेव रक्षांसि हन्ति द्वे आदधाति मिथुनमेव करोति ॥
सवितुर्बाहू स्थो देवजनानां विधरणीरिति[1] सवितुर्ह्येतौ बाहू देवज-
नानां विधरणीर्वसूनां[2] रुद्राणामादित्यानां सदनमसीति या एव
देवता अभ्यजयंस्ताभ्य[3] एनत्सदनं[4] करोति जुहेहि घृताचीत्येतद्वा 5
आसां प्रियं धाम यद्घृतवत्प्रियेणैवैना[5] धाम्ना समर्धयति ध्रुवा असद-
न्नृतस्य योनौ तां विष्णो पाहीति यथाहैष ते भागस्तं गोपायस्वेत्ये-
वमेवैतद्विष्णुमाहैतत्त आज्यं तद्गोपायस्वेति ॥ १० ॥

cf. oben 1, 11; Kap. S. 47, 10; Mâitr. S. 4, 1, 13; TBr. 3, 3, 6.

भुवनमसि विप्रथस्वेति प्रथयत्येवाग्निर्यष्टेदं नम इति नमस्कृत्य
हि श्रेयांसमुपचरन्ति जुह्वेह्यग्निस्त्वाह्वयति देवयज्याया इत्यग्निस्सर्वा 10
देवतास्सर्वा एव देवता अवरुन्ध उपभृदेहि देवस्त्वा सविताह्वयति
देवयज्याया[6] इति सवितृप्रसूत एव प्रचरति नार्तिमार्छत्यङ्घ्रिणा
विष्णू मा वामवक्रमिषमिति[7] यथायजुः पाहि माग्ने दुश्चरितादा मा
सुचरिते भजेति पाप्मानमेवापहते विजिहाथां मा मा संताप्तमित्या-
त्मनो ऽहिंसायै लोकं मे लोककृतौ कृणुतमित्याशिषमेवाशास्ते वि- 15
ष्णोस्स्थाम्न[8] इति प्रतिष्ठित्या ऊर्ध्वो अध्वरो दिविस्पृगिति यज्ञो वा
अध्वरो यज्ञस्योर्ध्वत्वायाहुतो यज्ञो यज्ञपतेरिति समृद्ध्या इन्द्रवान्बृह-
द्भास्स्वाहेत्यैन्द्रो वै यज्ञो मुखत एवेन्द्राय यज्ञं संप्रयच्छति सेन्द्रो ऽस्य

---

folgen in Ch die in T1 und Brl fehlenden Worte न पुरस्तात्परिदधाति रक्षसामनन्ववायाय; sie fehlen auch in Kap. S. 47, 10 und beruhen offenbar auf einer Dittographie.

[1] So T1 und Brl 141; Ch जननां विदरणि [2] Ch विदरणि° [3] So corr. T1 und Brl अभ्यंजयंस्तांभ्य; ebenso Ch, ohne den Accent; Kap. S. 47, 10 भिजयस्ताभ्य [4] Ch एनत्सदनं; aber T1 und Brl 142 एनान्त्सदनङ्क°; Kap. S. 47, 10 एनं सदनं; Mâitr. S. 4, 1, 13 (p. 18, Z. 8) एवैनत्सदः करोति [5] Ch त्प्रियेनैवैनं [6] So corr. Ch देवस्ययज्याया; Kap. S. 47, 11 = Corr. [7] So corr. Ch वामक्रमिष°; aber cf. oben 1, 12 (p. 6 unten); Kap. S. 47, 11 त्यंघ्रणा विष्णू मा चामवक्रमिषमिति [8] So corr. Ch स्याम्न; Kap. S. 47, 11 विष्णोः स्याम्नः प्रष्ठि इति स्याम्न प्रतिष्ठित्या

यज्ञो भवति सं ज्योतिषा ज्योतिरिति ज्योतिर्वै यज्ञो यज्ञ एव यज्ञम-
नुसंतनोति वाजस्याहं प्रसवेनाग्नीषोमाभ्यां देवतयोज्जयामीति य ए-
वैनं पूर्वो ऽतिक्रान्तो भ्रातृव्यस्तं तेन प्रणुदते वाजस्याहं प्रसवेनाग्नी-
षोमाभ्यां देवतयामुं[1] प्रतिनुद इति य[2] एवास्य पश्चाद्भ्रातृव्यस्तं तेना-
पनुदते[3] प्र श्रेयाँसं भ्रातृव्यं नुदते प्रति पापीयाँसं नुदते ॥ पृथिव्यै त्वा-
न्तरिक्षाय त्वा दिवे[4] त्वेतीमानेवैनं लोकान्गमयत्यक्तं[5] रिहाणा व्यन्तु
वय इति स्वदयत्येव मरुतां पृषती वशा पृश्निर्भूत्वा दिवं गच्छेति
यजमानो वै प्रस्तरो हविर्भूतमेवैनं स्वर्गं लोकं गमयति ततो नो
वृष्टिमेरयेति वृष्टिमेवावरुन्द्धे ऽहीनः[6] प्राण इति प्राणानेवैतदध्वर्युर्मु-
खतः कल्पयति चक्षुष्पा असि चक्षुर्मे पाहीति चक्षुषो गोपीथाय यं
परिधिं पर्यधत्था अग्ने देव पणिभिरिध्यमान[7] इत्यग्निस्सर्वा देवता-
स्सर्वा एव देवता अवरुन्द्धे यजमानं प्रथतेति प्रथयत्येवाथो भूमानं
गमयति संस्रावभागास्स्थेति परिधीनभिजुहोति स्वेनैवैनान्भागधेयेन[8]
समर्धयति ॥ ११ ॥ cf. 1, 12; Kap. S. 47, 11; Mâitr. S. 4, 1, 14; TBr 3, 3, 7.

अग्ने ऽदब्धायो ऽशीततन इति यदेवान्तर्यन्ति यत्क्रूरं कुर्वन्ति त-
च्छमयत्यविषं नः पितुं कृधीत्यन्नमेवास्मै स्वदयति सुधीन्योनीन्सुषदां[9]
पृथिवीमिति सुषदेवैनं सादयति वेदिर्वै देवेभ्यो ऽपाक्रामत्तां वेदेना-
न्वविन्दंस्तद्वेदस्य[10] वेदत्वं यद्वेदो भवति वेद्या अनुवित्त्यै[11] स्त्री वै वेदिः

---

[1] So corr. Ch देवतयासुम्प्रति°; ebenso ist auch oben 1, 12 (p. 7, Z. 4) zu corrigiren; Kap. S. 47, 11 देवतयामं प्रतिनुदामीति [2] Dies य fehlt in Ch und ist von mir ergänzt; Kap. S. 47, 11 य एवैनं पश्चाद्भ्रातृव्यस्तं [3] So corr. Ch तेनानुपनुदते; Kap. S. 47, 11 तेनायनुदते [4] So corr. Ch दिवि [5] So Ch गमयत्यक्तं; das क्त wird bestätigt durch Kap. S. 47, 11 गमयत्यक्ता रूपाणा व्यंतु; ebenso Kap. S. 1, 12; darnach wohl oben 1, 12 (p. 7, Z. 10) das त्वार्थं zu corrigiren in त्वाक्तं; Mâitr. S. 1, 1, 13 (p. 9, Z. 1) स्यप्तुंभो रिंहाणा; 4, 1, 14 (p. 19, Z. 17) वदन्त्यप्तुंभो रिंहाणा [6] Kap. S. 47, 11 रुंधे अहीनाः प्राण इति; cf. oben 1, 12. [7] So corr. Ch पणिभिरिद्धमान; aber cf. oben 1, 12 (p. 7, Z. 14); Kap. S. 47, 11 पाणिभिरिध्यमान; aber Mâitr. S. 4, 1, 14 (p. 20, Z. 5) पणिभिर्वर्यमानः [8] So corr. Ch स्वेनवै° [9] Ch स्वधीन्यो°; aber oben 1, 12 (p. 7 unten) सुधीन्यो° [10] So corr. Ch स्ताद्वैदस्य [11] So corr. Ch वित्त्ये

पुमान्वेदो यद्वेदेन[1] वेदिं संमार्ष्टि मिथुनमेव करोति प्रजापतेर्वा एतानि श्मश्रूणि[2] यद्वेदो यां पत्नीं कामयेत पुत्रं विन्देतेति तस्या उपस्थ आस्येन्मिथुनमेव करोति वि वा एतद्यज्ञं[3] छिनत्ति यदर्धमासे संस्थां गमयति यद्वेदं संततमाहवनीयात्स्तृणाति तेनैव यज्ञं संतनोति तं संततमुत्तरे[4] ऽर्धमास आलभते ॥ एष वै वनस्पतीनां परिवेष्टा यदुपवेषो य एवं वेदादब्धा[5] अस्य वेशा भवन्ति पुरस्तात्प्रत्यञ्चमुपहन्ति तस्मात्प्रतीचीनावसिता वेशा[6] भवन्ति स्थाविमत उपहन्त्यनतिवादना[7] एनं वेशा भवन्ति सर्पेभ्यो[8] वै यज्ञे क्रियते सर्प उपवेषो[9] वल्मीक उत्करो यदुपवेषमुत्कर[10] उपहन्ति तस्मात्सर्पाणां वल्मीको गृहाः ॥ १२ ॥

cf. oben 1, 12 a. E. TBr. 3, 3, 9, 9—11; 3, 3, 11, 1—2.

यो ह वै स्रुचां योगमविद्वानध्वर्युरध्वर्य इति हूतः प्रतिशृणोत्या देवताभ्यो वृश्च्यते ऽप्रजा अपशुर्भवत्यथ यस्स्रुचां योगं विद्वानध्वर्युरध्वर्य इति हूतः प्रतिशृणोति न देवताभ्य आवृश्च्यते प्रजावान्पशुमान्भवत्याश्रावयेति जुहूं तेन युनक्त्यस्तु श्रौषडित्युपभृतं तेन यजेति ध्रुवां तेन ये यजामह इत्याज्यधानीं तेन वषट्कारेण स्रुवमसौ वै जुहूरन्तरिक्षमुपभृदियं ध्रुवा दिश आज्यधान्यसा आदित्यस्स्रुवो ऽसौ वा अस्यै प्रयच्छतीयममुष्यै तस्माद्यज्जुह्वां तेन ध्रुवामाप्याययति यद्ध्रुवायां तेन जुहूमसौ ह्यस्यै प्रयच्छतीयममुष्यै संततमस्मा अविच्छिन्नं प्रदीयते य एवं वेद ॥ १३ ॥

स्योनो[11] मे सीद सुषदः पृथिव्यामुरुः पृथुः प्रथमानस्स्वर्गे ।
स्रुवो ऽसि घृतादनिशितस्सपत्नक्षयणो दिवि सीदान्तरिक्षे पृथिव्या-
मुत्तमो ऽहं भूयासमधरे मत्सपत्नाः ॥[12]

---

[1] So corr. Ch यद्वैदेन [2] So corr. Ch श्मश्रुणि [3] So corr. Ch एतद्यज्ञञ्छि° [4] So corr. mit Caland; Ch संतत उत्तरे; cf. TBr. [5] So corr. Ch वेदब्धा [6] So corr. Ch वेसा [7] So corr. Ch वादन [8] So corr. Ch सर्वेभ्यो [9] So corr. Ch वेषो [10] So corr. Ch वेषमु° [11] So corr. Ch स्योना; TBr. 3, 7, 6, 10 a. A. = Corr. [12] Die Versabtheilungen sind bei diesem ersten unvollkommenen Verse von mir gesetzt; sie fehlen in Ch.

आरोह पथो जुहु देवयानान्यत्रर्षयो जग्मुः प्रथमाः पुराणाः ।
हिरण्यपक्षाजिरा संभृताङ्गा वहाँसि[1] सा सुकृतां यत्र लोक उत्त-
मो ऽहं भूयासमधरे मत्सपत्नाः ॥
अवाहं बाध उपभृता द्विषन्तं जातान्भ्रातृव्यान्ये च जनिष्यमाणाः ।
5 दुहे यज्ञं सुदुघामिव धेनुमुत्तमो ऽहं भूयासमधरे मत्सपत्नाः ॥
यो नो वाचा मनसा दुर्हृणायुर्हृदारातीयन्नभिदासदग्ने ।
इदमस्य चित्तमधरं[2] ध्रुवाया उत्तमो ऽहं भूयासमधरे मत्सपत्नाः ॥
यन्मे अग्ने अस्य यज्ञस्य रिष्याद्यद्वा स्कन्दादाज्यस्योत विष्णो ।
तेन हन्मि सपत्नं दुर्हृणायुमैनं दधामि निर्ऋत्या उपस्थे ॥
10 यो नः कनिष्ठमिह कामयाता अस्मिन्यज्ञे यजमानाय मह्यम् ।
अप तमिन्द्राग्नी भुवनान्नुदेतां प्रजां विदेय वाजवतीं सुवीराम् ॥
अयं वेदः पृथिवीमन्वविन्दद्गुहा हितां गह्वरेषु ।
स मह्यं लोकं यजमानाय विन्दत्वच्छिद्रं यज्ञं भूरिरेताः कृणोतु ॥
स्तृणीत बर्हिः परिधत्त वेदिं चर्मि[3] मा हिंसीरमुया शयानाम् ।
15 दर्भैस्स्तृणीत हरितैस्सुवर्णैर्निष्का एते यजमानस्य सन्तु ॥
अस्मिन्मे यज्ञ उप भूयो अस्त्वविक्षोधाय परिधीन्दधामि ।
धर्ता विधर्ता धरुणो धरीयान्विश्वा द्वेषांसि वीतो नुदन्ताम् ॥
चतुश्शिखण्डा युवतिस्सुपत्नी विनीयमाना महते सौभगाय ।
घृतं दुहानादितिर्जनाय सा मे धुक्ष्व सर्वान्भूतिकामान् ॥[4]
20 वेदेन वेदिं विविदुः पृथिव्यां[5] सा पप्रथे पृथिवी पार्थिवाय ।
गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञस्तायते विश्वदानीम् ॥
विशो यन्त्री नुदमाने अरातिं विश्वं जातमरणं दुर्हृणायुम् ।
सीदन्ती देवी सुकृतस्य लोके विश्वा द्वेषांसि वीतो नुदेताम् ॥

---

[1] So in Ch. [2] Ch चित्तमधरन्ध्रु॰ [3] So Ch! [4] Dieser Vers findet sich auch in Brl fol. 121. [5] So corr. Ch पृथिवीं

आप्यायतां ध्रुवा घृतेन यज्ञिया यज्ञं प्रति देवयद्भ्यः[1]।
सूर्याया ऊधो अदितेरुपस्थ उरुधारेव[2] दोहतां[3] यज्ञे अस्मिन् ॥
पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः।
पयस्वतीः प्रदिशस्सन्तु मह्यम् ॥ ॥ १४ ॥
cf. TBr. 3, 7, 6, 9 flg.

समृतयज्ञो[4] वा एष यद्दर्शपूर्णमासौ कस्य वा ह देवता यज्ञमागच्छन्ति कस्य वा न बहूनां समानमहर्यजमानानां यो वै देवताः पूर्वेद्युर्गृह्णाति तस्य श्वो भूते यज्ञमागच्छन्ति ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं गृह्णात्यग्निस्सर्वा देवता देवता एव पूर्वेद्युर्गृह्णाति ताश्श्वो भूते ऽभियजते बर्हिषा वै पूर्णमासे व्रतमुपयन्ति वत्सैरमावस्यायां पुरा वत्सानामपाकर्तोर्दम्पती अश्नीतो हस्ता अवनिज्य दक्षिणतो ऽग्नेस्तिष्ठन्ब्रूयादग्ने व्रतपते व्रतमालभ इत्यग्निर्वै व्रतपतिर्ब्राह्मणो व्रतभृद्व्रतपतय एव प्रोच्य व्रतमालभते समस्मै व्रतमृध्यते यदि निम्रुक्ते सूर्ये व्रतमालभेताग्निमुपस्थायैतद्यजुर्वदेदग्निं हि स तर्हि प्रविष्टो ऽग्निहोतोप तं हुव इति पात्रमभिमृशति येन हविर्निर्वप्स्यन्भवति दुर्ग्रहा वै देवता दुर्ग्रहो यज्ञो देवताश्चैवैतद्यज्ञं च गृह्णात्या देवा यन्तु सुमनस्यमाना इत्येता वै देवानां देवहूतयो यन्त्यस्य देवा देवहूतिं न[5] यज्ञाच्छिद्यते[6] य एवं वेद व्यन्तु देवा हविषो मे अस्येत्याशिषमेवाशास्ते ॥ युनज्मि त्वा ब्रह्मणा दैव्येनेति परिधिषु परिधीयमानेषु वदत्यग्नेर्वा[7] एष यागो ब्रह्मणैवाग्निं युनक्ति युक्तो ऽस्य हव्यं देवेभ्यो वहत्यङ्गिरसो मास्य यज्ञस्य प्रथमानुवाकैरवन्त्विति सामिधेनीनामेवैष योगस्तासां युक्तानां यां[8] कामयत आशिषं तामवरुन्द्धे समिद्धो अग्निराहुत इति समिद्भिरेवैषा मनो ऽसि प्राजापत्यं[9] मनसा मा भूतेना-

[1] So Ch; TS 1, 6, 5, 1 देवयज्ञः [2] So corr. Ch उरुदारेव; cf. TS 1, 6, 5, 1. [3] So corr. Ch दोहतं [4] So corr. Ch मयृत° [5] So corr. Ch देवहूतिर्न [6] So corr. Ch यज्ञाच्छिद्यते [7] So corr. Ch ग्निर्वा; Mâitr. S. 1, 4, 5 (p. 53, Z. 1) = Corr. [8] So corr. Ch यं [9] So corr. Ch पत्याम्म°

विशेति मन इव वै प्रजापतिः प्राजापत्यो यज्ञो यज्ञमेव संतनोति वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाविशेतीन्द्रियं[1] वै वागिन्द्रियमेवावरुन्द्धे ॥ न वै तद्विदुर्यदि ब्राह्मणा वसन्ता[2] यजन्ति ब्राह्मणा वा यदि तस्य वर्षैरन्यस्य वा यस्य ब्रुवते यस्यैवर्षैर्ब्रुवाणो यजते तं तदिष्टं गच्छति नेतरमुपनमति तत्प्रवरं प्रवृणाने ब्रूयाद्देवाः पितरो देवा यो ऽस्मि स सन्यज[3] इति य एव कश्च सन्यजते तं तदिष्टमागच्छति नेतरमुपनमति देवेभ्य एव पितृभ्यो यज्ञं परिददाति तमस्य[4] ते गोपयन्ति समिष्टापूर्तेन गच्छति स्वर्गे लोके तदस्याक्षय्यमपरिमितं भवति वसन्तमृतूनां प्रीणामीति पञ्च वा ऋतव ऋतूनेव प्रीणाति ते ऽस्मै प्रीताः कल्पन्ते ऽस्मा ऋतवो य एवं वेद ॥ १५ ॥
cf. Mâitr. S. 1, 4, 5; TS 1, 6, 7.

इति श्रीमद्यजुर्वेदकाठके चरकशाखायां पुरोडाशब्राह्मणं नामैकत्रिंशं स्थानकं संपूर्णम् ॥[5]

---

अग्नीषोमाभ्यां यज्ञश्चक्षुष्मानित्यग्नीषोमौ वै यज्ञस्य चक्षुषी यज्ञस्यैव चक्षुषा चक्षुरात्मन्धत्ते चक्षुष्मान्भवति य एवं वेदाग्निरन्नस्यान्नपतिरित्यग्निर्वै देवानामन्नादस्स एनं मनुष्येष्वन्नाद्यं प्रापयत्यन्नादो भवति य एवं वेद दब्धिरस्यदब्धो भूयासममुं दभेयमित्येतया[6] वै दब्ध्या देवा असुरानदभ्नुवंस्तयैव भ्रातृव्यं दभ्नोति नैनं दिप्सन्दभ्नोति य

---

[1] So corr. Ch विशती° darnach auch Kâṭh. 4, 14 (p. 39, Z. 5) zu corr. [2] So corr. Ch वसन्तो [3] So corr. Ch यो स्मिन्स सन्यण; das ण für ज erklärt sich aus Mißverständniß der Çâradâ-Schrift. [4] So corr. Ch तपस्य [5] So die Unterschrift des Capitels in Ch. [6] So corr. Ch धभेय°

एवं वेदाग्नीषोमौ वृत्रहणा इत्यग्नीषोमाभ्यां वै वीर्येणेन्द्रो वृत्रमहँ-
स्ताभ्यामेव भ्रातृव्यं स्तृणुत इन्द्राग्न्योरहं देवयज्ययौजस्वान्वीर्यावान्भू-
यासमित्योजो वै वीर्यमिन्द्राग्नी ओज एव वीर्यमात्मन्धत्त इन्द्रस्याहं
देवयज्ययेन्द्रियावान्भूयासमितीन्द्रियं वा इन्द्र इन्द्रियमेवात्मन्धत्ते ॥ म-
हेन्द्रस्याहं देवयज्यया जेमानं[1] भूमानं गमेयमिति जेमानमेव भूमान-
मुपैतीन्द्रस्याहं विमृधस्य देवयज्ययासपत्नो भूयासमित्यसपत्न एव
भवतीन्द्रस्याहमिन्द्रियावतो देवयज्यया पशुमान्भूयासमितीन्द्रियं वै
पशवः पशूनेवात्मन्धत्ते सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेय-
मिति वाग्वै सरस्वती वाचैवान्नाद्यमवरुन्द्धे पूष्णो ऽहं देवयज्यया
पुष्टिमान्पशुमान्भूयासमिति पुष्टिर्वै पूषा पुष्टिमेवावरुन्द्धे ऽदित्या अहं
देवयज्यया प्रतिष्ठां गमेयमितीयमदितिरस्यामेव प्रतितिष्ठति ॥ वि-
श्वेषामहं देवानां देवयज्यया प्राणानां सायुज्यं गमेयमिति प्राणाना-
मेव सायुज्यं गच्छति द्यावापृथिव्योरहं देवयज्यया प्रजनिषीय प्रजया
पशुभिरिति प्रजापतिमेवोपैत्यग्नेरहं स्विष्टकृतो देवयज्ययायुः प्रतिष्ठां
गमेयमित्यायुरेवात्मन्धत्ते प्रति यज्ञेन तिष्ठति यो देवताश्च यज्ञं च यज्ञे
तर्पयितव्यान्वेद तृप्यति प्रजया पशुभिरुपैनं सोमपीथो नमत्येतर्हि वै
सर्वा देवता यर्हि स्विष्टकृदेतर्हि ह्येनास्सर्वास्संयजत्येष खलु वाव
प्रत्यक्षं यज्ञो यत्स्विष्टकृदतीतृपद्यज्ञे[2] यज्ञमिति देवताश्चैवैतद्यज्ञं च
यज्ञे तर्पयति तृप्यति प्रजया पशुभिरुपैनं सोमपीथो नमत्ययाडग्निरग्नेः
प्रिया धामानीति ब्रह्मवर्चसं तेनावरुन्द्धे सोमस्यायाट् प्रिया धामा-
नीति क्षत्रं तेनाग्नीषोमयोरयाट् प्रिया धामानीत्युपांश्वनिरुक्तं तेना-
वरुन्द्धे ऽग्नीषोमयोरयाट् प्रिया धामानीत्युच्चैर्निरुक्तं तेनानिरुक्तं[3] च
वा इदं निरुक्तं च तस्यैवोभयस्यावरुद्ध्या अथो शुष्कहरिते एवावरुन्द्धे
यद्वै शुष्कं तदाग्नेयं यद्धरितं तत्सौम्यं शुष्कं च वा इदं हरितं च तस्यै-

[1] Darnach oben 5, 1 (p. 44, Z. 9) zu corr. [2] So corr. Ch ह्यज्ञो; oben 5, 1 (p. 45 p. 1) zu corr. [3] So corr. Ch त्युच्चैर्निरुक्तेनानिरुक्तं

वोभयस्यावरुद्धै देवानामाज्यपानामयाट् प्रिया धामानीति प्रया-
जानुयाजा वै देवा आज्यपास्तानेवोभयान्प्रीणाति ते ऽस्योभये प्रीता
यज्ञे भवन्ति ॥ १ ॥ cf. oben 5, 1; TS 1, 6, 11, 5 flg.

बृहतो मा वाजेन वाजय वामदेव्यस्य मा वाजेन वाजयेति वा-
5 मदेवो वा एतद्गोनामपश्यत्पशव[1] इडा पशुष्वेव पशून्दधाति जुष्टे
जुष्टिं ते गमेयमुपहूत उपहवं ते ऽशीयेति[2] आशीर्वै यज्ञो यज्ञस्यैवै-
तामाशिषमाशास्ते सुहवा मेहीति सुहवामेवैनां[3] कुरुते सह रायस्पो-
षेणेति सहैवैवं रय्याभ्यैत्यस्मास्विन्द्र इन्द्रियं दधात्वितीडाया वा एष
दोह इडामेवैतद्दुहे ऽस्मान्रायो मघवानस्सचन्तामिति पशवो वै रायो
10 मघवानः पशूनेवात्मन्धत्ते ऽस्माकं सन्त्वाशिष इत्याशिषमेवाशास्ते सं-
जयन्क्षेत्राणि सहसाहमिन्द्र कृण्वाणो अन्याँ अधरान्सपत्नानित्यधरमे-
व[4] भ्रातृव्यं कुरुते ॥ ब्रह्म तेजो मे पिन्वस्व क्षत्रमोजो मे पिन्वस्वे-
त्येतद्देवासा[5] इडा सर्वं दुहे[6] सर्वं हास्यैतद्भवति य एवं वेद मयि त्य-
दिन्द्रियं महदितीन्द्रियं वा आप इन्द्रियमेवात्मन्धत्ते बभ्रु पिन्वस्व क-
15 ल्पन्तां दिश इत्यसौ वा आदित्यो बभ्रुस्स यदोदेत्यथ दिशः कल्पन्ते य
एवं वेद यामब्राह्मणः प्राश्नाति सा स्कन्नाहुतिस्तस्या वै वसिष्ठ एव
प्रायश्चित्तिं विदांचकार बभ्रु पिन्वस्वेति पुरोडाशमभिमृशति दक्षि-
णीयेष्वेव यज्ञं प्रतिष्ठापयत्यस्कन्नमविक्षुब्धमपि ह वा अस्य यामब्रा-
ह्मणः प्राश्नाति सा हुतैव भवत्यथ ह स्माह कपिवनो भौवायनः किमु
20 स यजेत यो गामिव[7] यज्ञं न[8] दुहे सुदोहतरो वा एष गोरिति सं य-
ज्ञपतिराशिषेति यजमानो यजमानभागं प्राश्नाति यजमानो वै यज्ञ-
पतिर्यज्ञो यजमानभागो यद्यजमानो यजमानभागं प्राश्नाति यज्ञपता
एव यज्ञं प्रतिष्ठापयति ॥ २ ॥ cf oben 5, 2.

---

[1] Ch wohl मश्यत्प॰ [2] So corr. Ch शीयति [3] So corr. Ch स्वहवा मेहेति स्वह॰; cf. oben 5, 2 (p. 45, Z. 5). [4] So corr. Ch रामव [5] So corr. Ch त्यतदेवाः सा [6] So corr. Ch सर्वन्मुहे सर्वहा॰ [7] So corr. Ch गादिव; cf. Mâitr. S. 1, 4, 5 a. E. [8] So corr. Ch यज्ञनु; vgl. die vorige Anm.

देवस्याहं बर्हिषो देवयज्यया प्रजावान्भूयासमिति[1] बर्हिषा वै प्रजापतिः प्रजा असृजत प्रजामेव सृजते देवस्याहं नराशंसस्य देवयज्यया पशुमान्भूयासमिति नराशंसेन वै प्रजापतिः पशूनसृजत पशूनेव सृजते देवस्याहमग्नेस्स्विष्टकृतो देवयज्ययायुः प्रतिष्ठां गमेयमित्यायुरेवात्मन्धत्ते प्रति यज्ञेन तिष्ठत्या माशिषो दोहकामा इत्याशिषो वै दोहकामा यजमानमुपतिष्ठन्ते ता यथा धेनवोऽदुग्धा[2] अपक्रामन्त्येवं तस्माद्यजमानादपक्रामन्त्यथ य एवं वेदाशिष एवैष दुहे सा मे सत्याशीर्देवान्गम्यादिति सत्यामेवाशिषं देवान्गमयित्वा वरं वृणीते ॥ जुष्टाज्जुष्टतरेति जुष्टादेवैनां जुष्टतरां करोति पन्यात्पन्यतरेति पन्यादेवैनां पन्यतरां करोत्यरेडता[3] मनसा[4] देवान्गच्छेत्येवैतदाह यो देवयानः पन्थास्तेन देवान्गच्छेति य एव देवयानः पन्थास्तमेवैनमपिपादयति रोहितेन त्वाग्निर्देवतां गमयतु हरिभ्यां त्वेन्द्रो देवतां गमयत्विति यजमानो वै प्रस्तरो हविर्भूतमेवैनं स्वर्गं लोकं गमयति यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छेति स्वमेवैनं योनिं गमयति यो यज्ञस्यायुर्वेद सर्वमायुरेति यज्ञस्यायुरसि यज्ञो म आयुर्दधात्वित्येतद्वै यज्ञस्यायुर्य एवं वेद सर्वमायुरेति यद्वै युक्तो विमुक्तश्शमरथं[5] वा करोति प्र वा क्षिणाति वि ते मुञ्चामि रशनां वि रश्मीनिति विमोक[6] एवास्यैष स्वर्गमेव लोकं देवता गमयित्वा प्रतिष्ठाप्य विमुञ्चति विष्णोश्शम्योर्यज्ञस्यान्त[7] इति विष्णुर्वै यज्ञोऽन्तत एव यज्ञं प्रतिष्ठापयति ॥ ३ ॥

cf oben 5, 3; Mâitr. S. 1, 4, 5; TS 1, 7, 4 und 1, 6, 4.

इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिरिति यज्ञस्य वा एष दोहो

---

[1] So corr. Ch प्रजावान्भूयान्भूयास°; aber vgl. oben 5, 3 (p. 45, Z. 18), wodurch sich das doppelte न्भूया als Dittographie erweist. [2] cf. Mâitr. S. 1, 4, 5 (p. 53, Z. 6). [3] Darnach auch oben 5, 3 (p. 46, Z. 3) so zu corrigiren; cf. auch TS 1, 6, 3, 2; Mâitr. S. 1, 4, 1 (p. 48, Z. 1). [4] Hier folgen in Ch die Worte देवान्गच्छेत्यव्येनता मनसा, was auf fehlerhafter Dittographie beruht; cf. oben 5, 3. [5] So Ch; vgl. Drâhyây. 5, 4, 11; Bâudh. Çr. 16, 13; 17, 43; Caland. [6] So corr. Ch विमोका; cf. TS 1, 7, 4, 4. [7] So corr. Ch शंय्यायज्ञ°; cf. TS 1, 7, 4, 4; 1, 6, 4, 3.

यज्ञमेवैतद्दुहे तस्य यज्ञस्येष्टस्य स्विष्टस्य द्रविणमागच्छत्वित्याशिषमे-
वाशास्ते[1] ऽङ्गिरसो मे ऽस्य यज्ञस्य प्रातरनुवाकैरहौषुरित्याशिषामेवैष[2]
दोहो वसुर्यज्ञो वसुमान्यज्ञ इति वसुमन्तमेव यज्ञं कुरुते तस्य यज्ञस्य
वसोर्वसुमतो वसु मागच्छत्वित्याशिषमेवाशास्ते सोमो रेतोधा इति
5 सोमो वै देवानां रेतोधास्सोम एवास्मै रेतोधा रेतो दधाति त्वष्टा
रूपाणां विकर्तेति त्वष्टा वै रूपाणां विकर्ता सो ऽस्मै रूपाणि विक-
रोति देवानां पत्नीरग्निर्गृहपतिर्मिथुनं यजमानस्येत्येतद्वै दर्शपूर्णमा-
सयोर्मिथुनं दर्शपूर्णमासयोरेव मिथुनेन मिथुनमात्मन्धत्ते तयोरहं दे-
वयज्यया मिथुनेन प्रजनिषीयेति प्र प्रजया प्र पशुभिर्जायते या वा
10 एतस्य पत्नी सैतं संप्रति[3] पश्चादासीताग्निरस्याः प्रजा निर्दहेद्यदाह
पत्न्येष ते पत्नि लोक इति लोकमेवास्यै करोत्यनिर्दाहुको ऽस्या
अग्निः प्रजा भवति सं पत्नी पत्या[4] सुकृतेषु गच्छतामिति पत्न्या
एवैष यज्ञस्यान्वारम्भस्सह[5] स्वर्गे लोके भवतस्स्वाहा स्वाहेष्टेभ्यो वष-
डनिष्टेभ्य इति स्विष्टिश्च वै दुरिष्टिश्च यज्ञे संयतेते यस्य स्विष्टिर्यज्ञं
15 युवते स वसीयान्भवति यस्य दुरिष्टिर्यज्ञं युवते[6] स पापीयान्भवति
स्विष्ट्यैवास्य यज्ञं समर्धयति वसीयान्भवत्ययाश्चाग्ने ऽस्यनभिशस्ति-
श्चेत्ययया वै नामैवाग्नेस्तनूरया मर्याधैर्येणेति[7] खलु वा आहुर्यां च विद्म
यज्ञस्य प्रायश्चित्तिं यां च न विद्म यश्च यज्ञस्य क्रियते यश्च न क्रियते
तस्यैषोभयस्य प्रायश्चित्तिस्सरस्वत्यै वेशभगिन्यै स्वाहेति वेशयमनं वा
20 एतदपि ह वा एनमाजीवन्त[8] उपासते वाचमस्य ब्राह्मणस्य वा रा-
जन्यस्य वोपास्महे इति य एवं वेद यज्ञस्य त्वा प्रमयाभिमयोन्मया
प्रतिमया परिगृह्णामीति गायत्री वै यज्ञस्य प्रमा त्रिष्टुबभिमा जग-

[1] Ch द्रविणमा°; aber cf. oben 5, 4 a. A. [2] So corr. Ch होषु°; vgl. oben 5, 4 (p. 46, Z. 13). [3] So corr. Ch संप्रतो; vgl. Mâitr. S. 1, 4, 8 (p. 56, Z. 12). [4] So corr. Ch पत्या; cf. oben 5, 4 (p. 46, Z. 19). [5] So corr. Ch रम्भो सह; cf. Mâitr. S. 1, 4, 8 (p. 56, Z. 11). [6] So corr. Ch यवते [7] Vgl. dasselbe Mâitr. S. 1, 4, 8 (p. 56, Z. 18). [8] So corr. Ch एनमजीव°; cf. Mâitr. S. 1, 4, 8 (p. 56, Z. 15).

त्युन्मानुष्टुप्प्रतिमैतावन्ति वै छन्दांसि यज्ञं वहन्ति तैरेवैनं परिगृह्णा-
ति तेष्वेनं[1] प्रतिष्ठापयति ॥ ४ ॥ cf. oben 5,4; Mâitr. S. 1,4,8.

पूर्णमसि पूर्णं मे भूया इति येभ्य एव कामेभ्य ऊनस्तानापूरयते
ऽग्निर्वै भूयांसं यजमानं प्रदहति संततिं स्रावयत्यपो[2] ऽतिमुच्यमाना
अनु यजमानो ऽतिमुच्यते ऽथो अद्भिरेवैतदग्नेरात्मानमन्तर्धत्ते ऽप्रदा-
हाय सर्वं वा एतस्य यज्ञो मृष्टश्शुचाभिषीदति[3] यद्गृहा यत्पशवः प्रा-
च्या दिशा देवा ऋत्विजो मार्जयन्तामित्येता वै यज्ञस्य मृष्टय एता-
श्शान्तयो मृष्टो ऽस्य यज्ञो भवति शान्तो ऽघातुकः पशुपतिः पशून्पृ-
थिवीं[4] विष्णुर्व्यक्रंस्त गायत्रेण च्छन्दसेति विष्णुमुखा वै देवाश्छन्दो-
भिरेभ्यो लोकेभ्यो ऽसुरान्प्राणुदन्त[5] विष्णुमुख एवैतद्यजमानश्छन्दो-
भिरेभ्यो लोकेभ्यो भ्रातृव्यं प्रणुदते ऽगन्म स्वरिति स्वरेव गच्छति सं
ज्योतिषाभूमेति ज्योतिर्वै यज्ञो यज्ञ एव यज्ञमनुसंतनोति सूर्यस्या-
वृतमन्वावर्त इत्यमुष्यैवादित्यस्यावृतमन्वावर्तते ऽथो एवं हि यज्ञ
आवर्ततेदमहं यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तस्य प्राणं निवेष्टयामी-
ति[6] यमेव द्वेष्टि तस्य प्राणं निवेष्टयति[7] तेजो ऽसि तेजो मयि धेहीति
तेज एवात्मन्धत्ते[8] समहं प्रजया सं मया प्रजेति प्रजामेवात्मन्धत्ते समहं
रायस्पोषेण सं मया रायस्पोष इति पशवो वै रायस्पोषः पशूनेवात्म-
न्धत्ते ऽग्नेस्तेजसा तेजस्वी भूयासमिति तेज एवात्मन्धत्ते वायोरायुषा-
युष्मान्भूयासमित्यायुरेवात्मन्धत्ते सूर्यस्य वर्चसा वर्चस्वी भूयासमिति
वर्च एवात्मन्धत्ते इन्द्रस्येन्द्रियेणेन्द्रियावान्भूयासमितीन्द्रियं वा इन्द्र
इन्द्रियमेवात्मन्धत्ते ॥ धाता मे धाम्ना सुधां दधात्विति धातैवास्मै[9]
धाम्ना सुधां दधाति प्रजापतेः प्रजया प्रजावान्भूयासमिति प्रजामे-
वात्मन्धत्ते प्र वा एषो ऽस्माल्लोकाच्च्यवते[10] यः प्रक्रमान्प्रक्रामति च्छ-

---

[1] So corr. Ch तेस्वेनं [2] So corr. Ch त्यमो [3] cf. oben 5, 5 (p. 47, Z. 15 flg.). [4] So corr. Ch पशुन्पृ° [5] So corr. Ch प्रणुदंत [6] So corr. Ch निविष्टयामीति; cf. oben 5, 5 (p. 47, Z. 23). [7] So corr. Ch निविष्टयति [8] So corr. Ch त्मंधे [9] So corr. Ch धातोवा° [10] So corr. mit Caland Ch काश्चयावयते cf. TS 1, 7, 6, 1.

न्दोभिर्हि पराङ्रोहति स ईश्वरः प्रमेतोरग्ने गृहपत इति गार्हपत्यमुप-
तिष्ठते ऽस्मिन्नेव लोके प्रतितिष्ठति ॥ ५ ॥

cf. oben 5, 5; Mâitr. S. 1, 4, 7.

देवाञ्जनमगन्यज्ञ इति जनं वा एतद्यज्ञस्यैति यत्स्कन्दति जनादेव
यज्ञस्याशिषमवरुन्द्धे पञ्चानां त्वा वातानां धर्त्राय गृह्णामीत्ययं वाव
5 यः पवते स यज्ञः पाङ्क्तो यज्ञो यज्ञमेवास्मै गृह्णाति पञ्चानां त्वा स-
लिलानां धर्त्राय गृह्णामीति पशवो वै सलिलं पशूनेवास्मै गृह्णाति
पञ्चानां त्वा पृष्ठानां धर्त्राय गृह्णामीति यज्ञो वै पृष्ठानि यज्ञमेवास्मै
गृह्णात्येतेन वै दर्शपूर्णमासौ पृष्ठवन्तौ पञ्चानां त्वा दिशां धर्त्राय
गृह्णामीति पञ्च वै दिशो[1] दिश एवास्मै गृह्णाति सर्वा दिशो ऽभि-
10 जयति सर्वा अस्य दिशो ऽभिजिता भवन्ति पञ्चानां त्वा पञ्चजनानां
धर्त्राय गृह्णामीति ॥ छन्दांसि वै पञ्च पञ्चजना यज्ञश्छन्दांस्युपैनं
यज्ञो नमति भूरस्माकं हव्यं देवानामाशिषो यजमानस्येति भूतिमे-
वात्मने गृह्णाति हव्यं देवेभ्य आशिषो यजमानस्य चरोस्त्वा पञ्चबि-
लस्य धर्त्राय गृह्णामीतीमे लोकाश्चरुः[2] पञ्चबिल इमानेवास्मै लो-
15 कान्गृह्णाति धामासि प्रियं देवानामनाधृष्टं देवयजनमिति प्रज्ञात
आज्यग्रहः पथागान्न यज्ञाद्धूर्छति नास्माद्यज्ञो हूर्छति य एवं वेद यज्ञो
वै देवेभ्यो ऽपाक्रामत्तं वेदेनान्वविन्दंस्तद्वेदस्य[3] वेदत्वं यद्वेदो[4] भवति
यज्ञस्यानुवित्त्यै स्त्री वै वेदिः पुमान्वेदो यद्वेदेन वेदिं संमार्ष्टि मिथु-
नमेव करोति प्रजापतेर्वा एतानि श्मश्रूणि यद्वेदो यां पत्नीं कामयेत
20 पुत्रं विन्देतेति तस्या उपस्थ आस्येन्मिथुनमेव करोति ॥ शिरो वा
एतद्यज्ञस्य यत्पुरोडाशः[5] केशा वेदो यद्वेदेन पुरोडाशं समुन्मार्ष्टि यज्ञ-
स्य सर्वत्वायौषधयो वै वेदः पशव ओषधय एष पशूनां गोष्ठो यद-
न्तराग्नी यद्वेदमन्तराग्नी स्तृणाति स्व[6] एव गोष्ठे भ्रातृव्यस्य पशून्वृङ्क्ते

---

[1] So corr. Ch दिश [2] So corr. Ch लोका चरुः [3] So corr. Ch पाक्रामतु वेदेनान्वविन्देस्त° [4] So corr. Ch यद्वेदा [5] Die erste Hand in Ch डाशः, dann corr. in डाशाः cf. Mâitr. S. 1, 4, 8 (p. 55, Z. 18). [6] So corr. Ch स्वा

दुरनुवेदो[1] वा अमुत्र यज्ञो यद्वेदो भवति यज्ञस्यानुवित्त्यै वि वा एत-
द्यज्ञश्छिद्यते यदर्धमासे ऽर्धमासे संस्थां गच्छति यत्संततमाहवनीया-
त्स्तृणाति यज्ञमेव संतनोति तं संततमुत्तरे ऽर्धमास आलभते ॥ यज्ञह-
नो वै देवा यज्ञमुषस्सन्ति त एषु लोकेष्वासत आददाना विमथ्नाना
यो ददाति यो यजते तस्य ये देवा यज्ञहनो यज्ञमुषः पृथिव्यामध्यासत 5
इति य एव पृथिव्यां यज्ञहनश्च यज्ञमुषश्च देवास्तानतीत्यान्तरिक्षं ग-
च्छति गच्छेम सुकृतो वयमित्याशिषमेवाशास्ते ये देवा यज्ञहनो य-
ज्ञमुषो ऽन्तरिक्षे ऽध्यासत इति[2] य एवान्तरिक्षे यज्ञहनश्च[3] यज्ञमुषश्च
देवास्तानतीत्य दिवं गच्छति गच्छेम सुकृतो वयमित्याशिषमेवाशास्ते
ये देवा यज्ञहनो यज्ञमुषो दिव्यध्यासत इति य एव दिवि यज्ञहनश्च 10
यज्ञमुषश्च देवास्तानतीत्य स्वर्गं लोकं गच्छति गच्छेम सुकृतो वय-
मित्याशिषमेवाशास्ते ॥ गोमाँ अग्ने ऽविमाँ अश्वी यज्ञ इति गोमन्त-
मेवाविमन्तमश्विनं यज्ञं कुरुते नृवत्सखा सदमिदप्रमृष्य इति नृवत्स-
खा ह्येष सदमिदप्रमृष्य इडावाँ एषो असुर प्रजावानित्याशिषमेवा-
शास्ते दीर्घो रयिः पृथुबुध्नस्सभावानिति प्रथयत्येवाग्ने व्रतमचारिष- 15
मित्यग्निर्वै देवानां व्रतपतिर्व्रतपतय एव व्रतं संप्रयच्छति ॥ ६ ॥

cf. oben 5, 6; Mâitr. S. 1, 4, 9 und 8.

देवतानां वा एतदायतनं यदाहवनीयो यदन्तराग्नी तत्पशूनां म-
नुष्याणां गार्हपत्यो ऽन्वाहार्यपचनः पितॄणां पूर्वं चाग्निमपरं च परि-
स्तरितवा आह मनुष्याणामिन्न्वै नवावसानं प्रियं नवावसानमेवा-
क्रन्मेध्यत्वाय सर्वा ह वा अस्य यक्ष्यमाणस्य देवता यज्ञमागच्छन्ति 20
य एवं वेदाग्नेस्तनूरसि वाचो विसर्जनमिति पुरोडाशीयानावपति
देवतानां वा एष ग्रहो देवता एवैतदग्रहीदथ ह स्माहारुण औपवे-
शिरहुतासु वा अहमाहुतिषु देवता हव्यं गमयामि संस्थितेन यज्ञेन

[1] So corr. Ch दुरन्नवेदो [2] So corr. mit Caland; Ch अध्यासते ohne (इति).
[3] Dies यज्ञहनश्च fehlt in Ch und ist von mir ergänzt.

सँस्थां गच्छानीति य एवं वेदाहुतास्वेवास्याहुतिषु देवता हव्यं गच्छन्ति सँस्थितेन यज्ञेन सँस्थां गच्छत्यपः प्रणेष्यन्वाचं यच्छेदौलूखलेन वै दृषदा देवा यज्ञमुखाद्रक्षाँस्यपाघ्नन्मनसा वै प्रजापतिर्यज्ञमतनुतौलूखलस्योद्वदितोरध्वर्युश्च[1] यजमानश्च वाचं यच्छेतां प्रजापतिरेव भूत्वा
5 मनसा यज्ञं तत्वा तेन सर्वाणि सह यज्ञायुधानि प्रहृत्यानि मानुषं तत्क्रियते नैकमेकं[2] पितृदेवत्यं तद्द्वे द्वे प्रहृत्ये याज्यानुवाक्ययो रूपमुपवसत्युभयाँस्तत्पशूनवरुन्द्धे ग्राम्याँश्चारण्याँश्च यद्ग्राम्यस्य नाश्नाति तेन ग्राम्यान्पशूनवरुन्द्धे यदारण्यस्याश्नाति तेनारण्यानथो[3] इन्द्रियं वा एतद्यदारण्यमिन्द्रियमेवावरुन्द्धे ॥ न माषाणामश्नीयादमेध्या वै
10 माषा न तस्य सायमश्नीयाद्येन प्रातर्यक्ष्यमाणस्स्यादप्रतिजग्धेन वै हव्येन देवा वसीयोभूयमगच्छन्प्रतिजग्धेनासुराः[4] पराभवन्नप्रतिजग्धेन वै तद्धव्येन यजमानो वसीयोभूयं गच्छति यो वै श्रद्धामनारभ्य यजते पापीयान्भवत्यापश्श्रद्धा न वाचा गृह्णाति[5] न यजुषाति वा एता वाचं[6] नेदन्त्यति वर्तं[7] मनस्तु नातिनेदन्ति तद्यर्ह्यपो ग्रहीष्यन्स्यादिमां
15 तर्हि मनसा ध्यायेदियं वा एतासां पात्रमनयैवैना गृह्णाति श्रद्धामेवारभ्य यजते वसीयान्भवति ॥ ७ ॥ cf. Mâitr. S. 1, 4, 10; TS 1, 6, 8.

इति श्रीयजुषि काठके चरकशाखायामोरिमिकायां यजमानब्राह्मणं नाम द्वात्रिंशं स्थानकं संपूर्णम् ॥[8]

---

[1] So corr. Ch खलस्योदितोर°; Mâitr. S. 1, 4, 10 (p. 58, Z. 13) = Corr.
[2] So corr. Ch नैकंकं; Mâitr. S. 1, 4, 10 (p. 58, Z. 15) = Corr.
[3] So corr. Ch रणयानावो; Mâitr. S. 1, 4, 10 (p. 58, Z. 18) = Corr.
[4] So corr. Ch वसीयोभयमाग°
[5] Ch eigentlich etwa गृह्णाति
[6] So corr. Ch वच
[7] So corr. Ch वर्तं; Mâitr. S. 1, 4, 10 (p. 59, Z. 4) = Corr.; ebenso TS 1, 6, 8, 1.
[8] So die Unterschrift des Capitels in Ch.

गावो वै सत्रमासत शृङ्गाणि सिषासन्तीस्तासां[1] दशमे मासि शृङ्गाण्यजायन्त ता अब्रुवन्नरात्स्मोत्तिष्ठामाव[2] तं काममरुत्स्महि[3] यस्मै कामाय न्यसदामेति तासामु त्वा अब्रुवन्नर्धा वा यावतीर्वा-[4] सामहा एव द्वादशौ मासौ संवत्सरं संपाद्योत्तिष्ठामेत्युत्तिष्ठन्तीरु त्वा अब्रुवन्नेवास्मासु श्रद्धाभूदिति तासां या द्वादशौ मासा[5] आसत ता- 5
सां शृङ्गाणि[6] प्रावर्तन्त श्रद्धया वाश्रद्धया वा ता इमा यास्तूपरास्त- स्माद्द्वादश मासास्तूपराः प्रेत्वरीश्चरन्ति दश शृङ्गिणीरुभयीर्वाव[7] ता आर्ध्नुवन्याश्शृङ्गाण्यसन्वन्याश्चोर्जमवारुन्धतर्ध्नुवन्ति[8] दशसु मास्सूत्तिष्ठ- न्त ऋध्नुवन्ति द्वादशसु य एवं विदुस्तदेतद्दद्धमयनं तस्मादेतेन यन्ति पदेन वा एतद्यन्ति विन्दति[9] ह खलु वै पदेन यैस्तस्मादेतन्नोस- 10
नि[10] ॥ १ ॥ cf. TS 7, 5, 2 und 1.

अतिरात्रः परमो यज्ञक्रतूनामित्याहुर्ब्रह्मवादिनः कस्मात्तं प्रथममु- पयन्तीति यद्वा अतिरात्रमुपयन्त्यग्निष्टोमं प्रथममुपयन्त्यथोक्थ्यमथ[11] षोडशिनमथातिरात्रं यथापूर्वमेव यज्ञक्रतूनुपेत्यैतानालभ्य परिगृह्य सोमं पिबन्त आसते ज्योतिष्टोमं प्रथममुपयन्ति ज्योतिष्टोमो वै 15
स्तोमानां मुखं मुखत एव तत्स्तोमान्प्रयुञ्जते विराजं ज्योतिष्टोमो ऽभिसंपन्न एकया गौरतिरिक्त एकयायुरूनस्ते[12] सैस्तुता विराजमभि- संपद्यन्ते द्वे चर्चा अतिरिच्येते स्वर्गो वै लोको विराड् द्विपादो यज- मानास्स्वर्ग एव तल्लोके विराजि द्विपादो यजमानाः प्रतितिष्ठन्ति ॥ रथन्तरं पृष्ठं भवतीयं वै पृथिवी रथन्तरमिमामेव तदालभ्यासते रथ- 20

---

[1] So corr. Ch शृङ्गानि सिषा°; cf. TS 7, 5, 2, 1 = Corr. [2] So corr. Ch ष्टमाव; TS 7, 5, 2, 1 = Corr. [3] So corr. Ch सरुत्महि oder मरुत्सहि; TS 7, 5, 2, 1 = Corr. [4] So corr. Ch यावतों वा; TS 7, 5, 2, 1 = Corr. [5] मासा fehlt in Ch und ist von mir ergänzt. [6] So corr. Ch शृङ्गानि [7] So corr. Ch शृङ्गिनीरुभयीर्वावा [8] So corr. Ch शृङ्गाण्यसन्नन्याश्चोर्जमवारुंधतब्रुवंति [9] So corr. Ch विन्दंति; TS 7, 5, 2, 2 = Corr. [10] Vgl. TS 7, 5, 2, 2 पदेन यन् [11] So corr. Ch थोत्थ्यमथ [12] So corr. mit Caland; Ch एकयायुक्तनस्ते; vgl. unten 33, 3 und TS 7, 4, 10, 2.

न्तरं दिवा भवति रथन्तरं नक्तमित्याहुर्ब्रह्मवादिनः केन तदजामीति सौभरं तृतीयसवने ब्रह्मसामं बृहद्भवति तन्मध्यतो दधाति रथन्तरस्य विधृत्यै तेनाजाम्यतिरात्राच्चतुर्विंशमहरुपयन्ति[1] चतुर्विंशतिस्संवत्सरस्यार्धमासा अर्धमासशस्संवत्सर आप्यते ऽर्धमासश एव तत्संवत्सरमाप्नुवन्ति तस्य षष्टिश्च त्रीणि च शतानि स्तोत्रीयाष्षष्टिश्च वै त्रीणि च शतानि संवत्सरस्याहान्यहश्शस्संवत्सर आप्यते ऽहश्श एव तत्संवत्सरमाप्नुवन्त्युक्थ्यो[1] भवति पशवो वा उक्थानि[2] पशूनेवावरुन्धते बृहत्पृष्ठं भवति स्वर्गो वै लोको बृहत्स्वर्गमेव तेन लोकमाप्नुवन्ति त्रयस्त्रिंशो नाम साम माध्यन्दिने पवमाने भवति त्रयस्त्रिंशद्देवास्तद्देवा नाप्नुवन्त्येतस्मै वै संवत्सरमुपयन्त्यापन्देवानापन्स्वर्गं[3] लोकमव पशूनरुत्सतापन्संवत्सरमर्धमासश[4] आपन्नहश्शस्तच्चतुर्विंशे ऽहन्सर्वा देवताः परिगृह्य सोमं पिबन्त आसते ये वा इतः पराञ्चं संवत्सरमुपयन्ति नैनं ते स्वस्ति समश्नुवते ऽथो ये ऽमुतो ऽर्वाञ्चमुपयन्ति ते हैनं स्वस्ति संतरन्त्येतद्वा अमुतो ऽर्वाञ्चमुपयन्ति यदेवम् ॥ २ ॥

cf. TS 7, 4, 10 und 7, 5, 1.

ज्योतिष्टोमं प्रथममुपयन्त्यस्मिंस्तेन लोके प्रतितिष्ठन्ति गोष्टोमं द्वितीयमुपयन्त्यन्तरिक्षे तेन प्रतितिष्ठन्त्यायुष्टोममुत्तममुपयन्त्यस्मिंस्तेन लोके प्रतितिष्ठन्त्ययं वै लोको ज्योतिरन्तरिक्षं गौरसा एवायुर्यदेतान्स्तोमानुपयन्त्येष्वेव तल्लोकेषु सत्त्रिणः प्रतितिष्ठन्तो यन्ति विराजं ज्योतिष्टोमो ऽभिसंपन्न एकया गौरतिरिक्त एकयायुरूनस्ते[5] संस्तुता विराजमभिसंपद्यन्त ऊर्ग्वै विराड् यदेतैस्स्तोमैर्यन्त्यूर्जमेवैतत्सत्त्रिणो ऽवरुन्धाना यन्ति ते न क्षुधार्तिमार्छन्त्यक्षोधुका भवन्ति क्षुत्संबाधमाना[6] इव हि सत्त्रिणो ऽग्निष्टोमा अभितः प्रधी ता उक्थ्या[7] मध्ये नभ्यं

---

[1] So corr. mit Caland; Ch तदटामीति (Z. 1) und तेनाटास्यतिरात्राम्चतु° [2] So corr. Ch न्युक्तो [3] So corr. Ch उत्तानि [3] Ch पत्स्वर्गं [4] So corr. Ch रुत्मता° [5] So corr. mit Caland; Ch गौरितिरिक्त एकयायुस्ते; cf. 33, 2. [6] So corr. Ch चुत्संबाधमाणा; TS 7, 4, 11, 2 चुत्संबाधा [7] So corr. Ch उत्तया; cf. TS 7, 4, 11, 2.

द्विपादो यजमानाः प्रतितिष्ठन्ति ॥ यत्परो रथन्तरं तत्प्रथमे ऽहन्कर्तव्यं
बृहद्द्वितीये वैरूपं तृतीये वैराजं चतुर्थे शाक्वरं पञ्चमे रैवतं षष्ठे तद्
पृष्ठेभ्यो[1] न यन्ति संततय एते ग्रहा गृह्यन्ते ऽतिग्राह्याः[2] परसामसु
यदेते गृह्यन्त इमानेवैतल्लोकान्संतत्य स्वर्गं लोकं यजमाना आरोहन्ति
5 मिथुना एते ग्रहा गृह्यन्ते ऽतिग्राह्याः परसामसु यदेते गृह्यन्ते मिथु-
नमेवैतैरवरुन्धते सौर्य एष ग्रहो गृह्यते ऽतिग्राह्य[3] एकविंशे ऽहंस्तस्य
प्रत्यक्षं नाम न ग्रहीतवै तेजस्वितर इव वाश्नतरः प्रदाहाद्वा भय्यं
किलासंभावाद्वाया[4] विष्ठा जनयन्कर्वराणीत्येष प्राजापत्यो ऽनिरुक्तो
ग्रहो गृह्यते ऽतिग्राह्य एकविंशे ऽहन्समन्त आयुष्यः पशव्यो यो ह
10 खलु वाव प्रजापतिस्स एवेन्द्रस्तदु देवेभ्यो न यन्ति ॥ ४ ॥

cf. TBr. 1, 2, 2.

प्रथमे मासि पृष्ठान्युपयन्ति मध्यम उपयन्त्युत्तम उपयन्ति यत्प्र-
थमे मासि पृष्ठान्युपयन्त्यस्मिंस्तेन लोके प्रतितिष्ठन्ति यन्मध्यम उप-
यन्त्यन्तरिक्षे तेन प्रतितिष्ठन्ति यदुत्तम उपयन्त्यमुष्मिंस्तेन[5] लोके प्र-
तितिष्ठन्ति मासि मासि पृष्ठान्युपेत्यानीत्याहुः पृष्ठानि वै यज्ञस्य दोह
15 इति तदाहुरेकं वा एतद्देवानामहर्यत्संवत्सरो यां वै त्रिरेकस्याह्न उप-
सीदन्ति[6] दह्रं सापराभ्यां दोहाभ्यां दुहे तत्कुतस्सा[7] धोक्ष्यति यां द्वादश
कृत्व उपसीदेयुरिति सकृत्पृष्ठान्युपेयुरुत्तमे मासि समुद्रं खलु वा एते
ऽनवारमपारं प्रस्नान्ति ये संवत्सरमुपयन्ति बृहद्रथन्तराभ्यामेतव्यं बृ-
हद्रथन्तरे वै देवानां प्लवस्तद्देवानां प्लवेन समुद्रमर्णवं तरन्ति यथा
20 मध्ये समुद्रस्य प्लवमन्वर्जेयुरेवं तद्यत्पुरा संवत्सराद्बृहद्रथन्तरे उत्सृजेयु-

---

[1] So corr. Ch पृष्टेत्यो; TBr. 1, 2, 2, 3 = Corr. [2] So corr. Ch गृह्यन्ते ग्राह्याः; cf. TBr. 1, 2, 2, 4. [3] So corr. Ch तिग्राह्या [4] So corr. mit Caland; Ch कि-लासंभवाद्वाया; vgl. Pâṇini 6, 1, 83; das Citat beim Scholiasten भय्यं किलासोत् geht vielleicht, wie andere Citate desselben, auf das Kâṭhakam und zwar auf diese Stelle zurück; doch ist das sehr fraglich, da in diesem Falle eine noch stärkere Modification des Citats vorläge, als dies auch in anderen Fällen sich beobachten läßt, infolge des Citirens aus dem Gedächtniß. [5] So corr. Ch यदुत्तममुपयन्त्यमुष्मिं तेन [6] So corr. Ch तप° [7] So corr. Ch तत्कुतस्सा; cf. TS 7, 5, 3, 1.

ऽनुत्सर्गे[1] बृहद्रथन्तराभ्यां गत्वा प्रतिष्ठां गत्वा सकृत्पृष्ठान्युपेयुरुत्तमे मासि सर्वेभ्यो वै कामेभ्यस्संधिर्दुहे[2] तत्सर्वान्कामान्यज्ञं पृष्ठानि संवत्सराद्दुह्रे[3] ॥ ५ ॥ cf. TS 7, 5, 3.

एकविंश एष एतेन वै देवा एकविंशेनादित्यमितस्स्वर्गं लोकमारोहयन्स एष इत एकविंशस्तस्य दशावस्तादहानि दश परस्तात्स एष उभयतो विराजि प्रतिष्ठित उभयतो हि वा एष विराजि प्रतिष्ठितस्तस्मादन्तरेमौ लोकौ यन्सर्वेषु स्वर्गेषु लोकेषु प्रतितिष्ठन्नेति देवा वा आदित्यस्य स्वर्गाल्लोकादवपादादबिभयुस्तं त्रिषु स्वर्गेषु लोकेष्वादधुस्तस्य पराचो[4] ऽतिपादादबिभयुस्तं परस्तात्त्रिभिस्स्वर्गैर्लोकैः प्रत्यस्तभ्नुवन्स एष उभयतष्षट्सु स्वर्गेषु लोकेषु प्रतिष्ठितो धृत्यै प्रतिष्ठाया अनवपादायानतिपादाय ॥ देवा वै सप्तदशानां प्रव्लयादबिभयुस्तान्सर्वैस्स्तोमैरवस्तात्पर्यार्षन्सर्वैस्स्तोमैः परस्तात्तस्मादभिजित्सर्वस्तोमो[5] ऽवस्तात्सप्तदशानां विश्वजित्सर्वस्तोमः परस्तात्सप्तदशानां धृत्या अप्रव्लयाय देवा वा आदित्यस्य स्वर्गाल्लोकादवपादादबिभयुस्तं ये वर्ष्म स्वर्गाणां लोकानामधिपतयस्तेष्वादधुश्चतुस्त्रिंशा वै स्तोमा वर्ष्म स्वर्गाणां लोकानामधिपतयस्तद्यदेकविंशस्याहुस्त्रयो ऽवस्तात्सप्तदशास्त्रयः परस्तात्ते त्रयश्चतुस्त्रिंशा द्वौ द्वौ तेषु वा एष आहितो धृत्यै प्रतिष्ठाया अनवपादायानतिपादाय ॥ वर्ष्मन्हि वा एष स्वर्गाणां लोकानामाहितस्तस्माद्भूतेभ्यो भूतेभ्य[6] उत्तरो वर्ष्म स्वानामाधिपत्यं पर्येति य एवं वेद देवा वा आदित्यस्य स्वर्गाल्लोकादवपादादबिभयुस्तं पञ्चभी रश्मिभिरुदवयन्रश्मयो दिवाकीर्त्यानि तस्मादेकविंशे ऽहन्पञ्च दिवाकीर्त्यानि क्रियन्ते ये गायत्रे ते गायत्रीषूत्तरयोः पवमानयोर्महादिवाकीर्त्यं होतुः[7] पृष्ठं विकर्णं ब्रह्मसामं

---

[1] So corr. Ch उत्सृजे° [2] So corr. Ch संधिर्मुहे; TS 7, 5, 3, 2 = Corr.
[3] So corr. Ch रान्मुह्रे [4] So corr. Ch दधस्तस्य पराचे; cf. TBr. 1, 2, 4, 2.
[5] So corr. Ch पुर° [6] So corr. Ch भूतेत्य [7] So corr. Ch होतु

भासमग्निष्टोमस्तद्यदेकविंशे ऽहन्पञ्च दिवाकीर्त्यानि क्रियन्त आदि-
त्यमेव तत्पञ्चभी रश्मिभिरुद्वयन्ति धृत्यै प्रतिष्ठाया अनवपादायान-
तिपाताय ॥ अथैतानि[1] स्पराणि स्परैर्वै देवा आदित्याय स्वर्गं लोक-
मस्पृण्वन्यदस्पृण्वंस्तत्स्पराणां स्परत्वं स्पृण्वन्त्यस्मै स्पराणि स्वर्गं लोकं
5 य एवं विद्वानेतैस्स्तुते ऽथैतानि पराणि परैर्वै देवा आदित्यं स्वर्गं
लोकमपारयन्यदपारयंस्तत्पराणां परत्वं पारयन्त्येनं[2] पराणि स्वर्गं लोकं
य एवं विद्वानेतैस्स्तुते ऽनुष्टुभो वै यदयातयामरूपं तानि पराणि
तस्मादनुष्टुप्सु पराणि क्रियन्ते यदनुष्टुप्सु पराणि क्रियन्ते ऽनुष्टुभमेव
तत्सवीर्यां कुर्वन्ति स्वर्गस्य लोकस्य समष्ट्यै ॥ ६ ॥ cf. TBr. 1, 2, 4.

10 उत्सृज्या३न्नोत्सृज्या३मिति मीमांसन्ते तदाहुरुत्सृज्यमेव प्राणा-
पाना वा एते संवत्सरस्य यत्पूर्णमासा यन्नोत्सृजेयुस्संवत्सरमपिन-
ह्येयुरमेहेन सत्त्रिणो म्रियेरन्पौर्णमास्यां चामावस्यायां चोत्सृज्यमि-
त्याहुरेते हि यज्ञं वहत इति तदाहुरेतयोस्त्वाव नोत्सृज्यं ये अवान्तरा
यज्ञं भेजाते इति या प्रथमा व्यष्टका तस्यामुत्सृज्यमित्याहुरेष[3] हि मा-
15 सो विशर इति नादिष्टमुत्सृजेयुर्यदादिष्टमुत्सृजेयुर्यादृशे पुनः पर्या-
प्लावे मध्ये षडहस्य संपद्यत इति षडहैर्मासं[4] संपाद्य यत्सप्तममहस्त-
दुत्सृजेयुस्सं षडहं[5] तन्वन्त्युत्संवत्सरं श्वासयन्ति यदहस्तूत्सृजेयुस्तदग्नये
वसुमते ऽष्टाकपालं पुरोडाशं प्रातर्निर्वपेयुरैन्द्रं दधीन्द्राय मरुत्वत एका-
दशकपालं मध्यन्दिने विश्वेभ्यो देवेभ्य[6] ऋतुमद्भ्यो द्वादशकपालमप-
20 राह्णे[7] प्राजापत्यः पशुस्स्यादग्नेर्वै वसुमतः प्रातस्सवनं यदग्नये वसुमते
ऽष्टाकपालं पुरोडाशं प्रातर्निर्वपन्ति देवतामेव तद्भागिनीं कुर्वन्त्यन-
नुसर्गाय सोमो वा एष ओषधीषु प्रविष्टो यदैन्द्रं दधि भवतीन्द्रमेव
तद्भागधेयान्न च्यावयन्ति सवनमष्टाभिरुपयन्ति ये खलु वाव प्रातः

---

[1] So corr. Ch ॥ थैतानि [2] So corr. Ch त्येनस्पराणि [3] So corr. Ch रेषा; TS 7, 5, 7, 1 = Corr. [4] So corr. Ch मांसे; TS 7, 5, 7, 2 मांसान् [5] So corr. Ch षडहं [6] So corr. Ch देवेभ्यो [7] So corr. Ch पराह्णे

पशव उपाक्रियन्ते ते वसव इन्द्रस्य वै मरुत्वतो माध्यन्दिनं सवनं यदिन्द्राय मरुत्वत एकादशकपालं पुरोडाशं मध्यन्दिने निर्वपन्ति देवतामेव तद्भागिनीं कुर्वन्त्यननुसर्गाय ॥ सवनमेकादशभिरुपयन्ति विश्वेषां वै देवानामृतुमत्तां तृतीयसवनं यद्विश्वेभ्यो देवेभ्य ऋतुमद्भ्यो द्वादशकपालं पुरोडाशमपराह्णे[1] निर्वपन्ति देवतामेव तद्भागिनीं कुर्वन्त्यननुसर्गाय सवनं द्वादशभिरुपयन्ति प्राजापत्यः पशुर्भवति यज्ञो वै प्रजापतिर्यज्ञस्याननुसर्गायाभीवर्त इतष्षण्मासो ब्रह्मसामं भवति ब्रह्म वा अभीवर्तो ब्रह्मणैव तत्स्वर्गं लोकमभिवर्तयन्तो यन्ति ॥ प्रतिकूलमिव हीतस्स्वर्गो[2] लोकस्समानाः[3] प्रगाथा भवन्त्यन्यान्यन्यानि सामानि लोका वै सामानि स्वर्गा ऋचो लोकैरेव तत्स्वर्गांल्लोकानभ्यारोहन्तो[4] यन्ति समानं साम भवत्यन्या अन्या ऋचस्स्वर्गा वै सामानि लोका ऋचो लोकैरेव तत्स्वर्गांल्लोकानभ्यारोहन्त आयन्ति ॥

इन्द्र क्रतुं न आभर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥

इत्यमुत आयतो[5] षण्मासो ब्रह्मसामं भवत्ययं वै लोको ज्योतिः प्रजा ज्योतिरिममेव तल्लोकं पश्यन्तो ऽभिवदन्त आयन्त्ययं हि लोको लोकानां प्रतिष्ठा ॥ ७ ॥ cf. TS 7, 5, 7.

अथैते परसामानस्तेषां परसाम्नां यत्प्रथमं तदुत्तमं यदुत्तमं तत्प्रथमं यन्मध्ये मध्य एव तत्तद्येनैवैते यन्ति तेनामुतः पुनरायन्त्येषां लोकानां संतत्यै प्रतिज्ञात्यै ते विश्वजित उपरिष्टात्प्रत्यवरोहिणस्स्तोमानुपयन्ति तदाहुर्जितं वा एते पराजयन्ते निर्वृत्तान्प्रत्यवरोहिणस्स्तोमानुपयन्ति निवर्तन्ते स्वर्गाल्लोकात्प्रत्यञ्चमु यज्ञं तन्वत इति ते तथा

---

[1] So corr. Ch पराह्णे [2] So corr. Ch मिव वहीतिस्स्व°; TS 7, 5, 7, 4 = Corr. [3] So corr. Ch समानः [4] So corr. Ch स्वर्गालोका° [5] So corr. Ch आयातो, erste Hand आयतो; TS 7, 5, 7, 4 = Corr.

पञ्च मासो यन्ति षष्ठस्य च मासस्त्रीनभिप्रवान्द्वे[1] चाहनी गोआयुषी
ते पृष्ठान्युपयन्ति पृष्ठानि वै यज्ञस्य दोहो यज्ञं दोहामहै पशूंश्चामृतं[2]
च प्राश्नमु यज्ञं तनवामहा इत्यृतवो[3] वै पृष्ठान्यृतुष्वेव तत्प्रतितिष्ठन्तो
यन्ति स्वर्गो वै लोकः पृष्ठानि स्वर्ग एव तल्लोके प्रतितिष्ठन्तो य-
5 न्ति ॥ देवक्षत्रं वा आयुषस्तोमा[4] देवक्षत्रमेव तदभ्यारोहन्तो यन्ति
ते छन्दोमानुपयन्ति पशवो[5] वै छन्दोमाः पशूनेवावरुन्धते ते दशम-
महरुपयन्ति प्रजननं प्राजापत्यं प्रतिष्ठां प्रजननमेव तत्प्रजां प्रतिष्ठा-
मवरुन्धते ते महाव्रतीयमहरुपयन्ति तदाहुर्विषुवान्वा एतदहर्यन्म-
हाव्रतीयं विषुवत्युपेत्यमित्यथाहुः प्राजापत्यं वा एतदहर्यन्महाव्रतीयं
10 तदुत्तमार्धे[6] संवत्सरस्योपेत्यमिति यो वै षण्मास्यो जायते यस्सप्तमा-
स्यः प्र वै स मीयते न तेन भोगमश्नुते॥ संवत्सरे खलु वाव रेतो हितं
प्रजायते तद्यदुत्तमार्धे संवत्सरस्य महाव्रतीयमहरुपयन्ति संवत्सर ए-
तद्रेतो हितं प्रजनयन्ति यथर्त्वेवर्तूंकल्पयन्ति यथापूर्वं प्रजां प्रजनय-
न्ति ते पञ्चविंशं स्तोममुपयन्ति पुरुषस्तोमं दश हस्त्या अङ्गुलयो
15 दश पद्या द्वौ बाहू द्वे सक्थ्या[7] आत्मा पञ्चविंशो यदेतं[8] स्तोममुप-
यन्ति स्वादेव तत्स्तोमात्सन्त्विण आत्मानं प्रजनयन्ति भूत्यै तदाहुः
प्राजापत्यं वा एतदहर्यन्महाव्रतीयं तस्मिन्सर्वे ग्रहा ग्रहीतव्यास्सर्वमिव
हि प्रजापतिर्विध्याचेत्येको ग्रहीतव्य[9] एको हि प्रजापतिस्त्रयो ग्रहीत-
व्यास्त्रय इमे लोका एष्वेव लोकेष्वृध्नुवन्ति ॥ पञ्च ग्रहीतव्याः पा-
20 ङ्क्तो[10] यज्ञो यज्ञमेवावरुन्धते सप्त ग्रहीतव्यास्सप्त ग्राम्याः पशवस्तानै-
वावरुन्धते नव ग्रहीतव्या नव[11] प्राणाः प्राणेष्वेव प्रतितिष्ठन्ति पञ्च-
दश ग्रहीतव्याः पञ्चदशार्धमासस्य रात्रयो ऽर्धमासशस्संवत्सर आप्यते

---

[1] Ch नभिप्रवां द्वे; cf. Böhtlingk, Sanskrit-Wörterbuch in kürzerer Fassung s. v. अभिप्रव [2] So corr. Ch पशूंचा° [3] So corr. Ch इत्यवो [4] So corr. Ch आयुज° [5] So corr. Ch पशवे [6] So corr. Ch तदुत्तेसार्धे [7] So corr. Ch सत्त्या [8] So corr. Ch यदेत [9] So corr. Ch व्या [10] So corr. Ch पांक्ते [11] So corr. Ch व्या धंप्राणाः

ऽर्धमासश एव तत्संवत्सरमाप्नुवन्ति सप्तदश ग्रहीतव्याः प्रजापतिस्स-प्तदशः प्रजापतिमेवाप्नुवन्त्येकविंशतिर्ग्रहीतव्या असा आदित्य एक-विंशो ऽमुमेवादित्यमाप्नुवन्ति सप्तविंशतिर्ग्रहीतव्यास्त्रिणवा[1] इमे लोका एष्वेव लोकेष्वृध्नुवन्ति त्रयस्त्रिंशद्ग्रहीतव्यास्त्रयस्त्रिंशद्देवता दे-वतास्वेव प्रतितिष्ठन्ति ॥ ८ ॥ 5

इति श्रीमद्यजुषि काठके चरकशाखायामोरिमिकायां सत्त्राणि नाम त्रयस्त्रिंशं स्थानकं संपूर्णम् ॥

---

एकादशिनीभिर्यन्ति प्राणा वा एकादशिनीः प्राणेष्वेव तत्प्रति-तिष्ठन्तो यन्ति तदाहुर्यदेकादशिनीभिरियुरहानि वातिरिच्येरन्पशवो वा नोत्तमेनाह्नोत्तमः पशुस्संपद्येतेति[2] तद्यदेकादशिनीकामास्स्युः प्र- 10 थमे मास्येकादशिनीमुपेयुरुत्तमे च प्राणा वा एकादशिनी प्राणानेव मुखतः प्रतिपद्यन्ते प्राणेष्वन्ततः प्रतितिष्ठन्त्यैन्द्राग्नः[3] खल्वेवाच्युतः पशुस्स्यात्प्राणापानौ वा इन्द्राग्नी प्राणापानयोरेव तत्प्रतितिष्ठन्तो यन्ति तेजो वा इन्द्राग्नी तेजस्येव तत्प्रतितिष्ठन्तो यन्त्योजो वै वीर्य-मिन्द्राग्नी तेजस्येव तद्वीर्ये प्रतितिष्ठन्तो यन्तीन्द्राग्नी सर्वा देवता 15 यदैन्द्राग्नः पशुर्भवति सर्वा एव तद्देवताः प्रीणन्तो यन्ति ॥ यदहो रथंतरं[4] साम स्यादाग्नेयं तदहः पशुमालभेरन्यदहर्बृहदैन्द्रं तदहस्त्वैन्द्राग्न

---

[1] So corr. Ch णव [2] So corr. mit Caland; Ch पशुस्संपद्यतेति [3] So corr. Ch प्रतिष्ठं॰ [4] Vgl. Böhtlingk, Sanskr. WB. in kürzerer Fassung s. v. अहोरथंतर, mit dem Sternchen als unbelegt bezeichnet, unter Hinweis auf Vârtt. zu Pâ. 8, 2, 68. Mit Recht druckt Kielhorn getrennt, Mahâbh. III, p. 411 (letzte Zeile) अहो । रथंतरं । साम ।

एव यदहो रथंतरं साम स्यादाग्नेन्द्रं तदहः पशुमालभेरन्यदहर्बृहदैन्द्राग्नं तदहस्तदनुपूर्वं देवते कल्पयन्ति यथापूर्वं पशूनालभन्त इन्द्राग्निभ्यामेव यन्ति बार्हस्पत्यं शितिपृष्ठं षष्ठे ऽहन्नालभेरन्ब्रह्म वै बृहस्पतिर्ब्रह्मण्येव तद्यज्ञस्यान्ततः प्रतितिष्ठन्ति बार्हस्पत्यः खलु वाव शितिपृष्ठो
5 देवतया द्यावापृथिव्यां धेनुं सप्तमे ऽहन्नालभेरन्प्रथमे छन्दोमे द्यावापृथिवी वै यज्ञस्य प्रतिष्ठा द्यावापृथिव्योरेव तद्यज्ञस्यान्ततः प्रतितिष्ठन्ति द्यावापृथिव्या खलु वाव धेनुर्देवतया वायव्यं वत्समष्टमे ऽहन्नालभेरन्मध्यमे छन्दोमे प्राणो वै वायुः प्राण एव तद्यज्ञस्यान्ततः प्रतितिष्ठन्ति ॥ वायव्यः खलु वाव वत्सो देवतया वाचे पृश्निं नवमे[1]
10 ऽहन्नालभेरन्नुत्तमे छन्दोमे वाग्वै पृश्निः प्रतिष्ठा वाच्येव तद्यज्ञस्यान्ततः प्रतितिष्ठन्ति वाग्देवत्या[2] खलु वाव पृश्निर्देवतयादित्यां वशां दशमे ऽहन्नालभेरन्नियं वा अदितिरियं प्रतिष्ठास्यामेव तद्यज्ञस्यान्ततः प्रतितिष्ठन्त्यादित्या खलु वाव वशा देवतया वैश्वकर्मणमृषभं महाव्रतीये ऽहन्नालभेरन्निन्द्रो वै वृत्रं हत्वा विश्वकर्माभवत्प्रजापतिः
15 प्रजासृष्ट्वा विश्वकर्माभवत्संवत्सरो विश्वकर्मेत्याहुर्येमिमाः प्रजा अनुप्रजायन्त इति त्रिरूपस्स्यादुभयतएतो यत्प्रथमं रूपं तेनैन्द्रो यद्द्वितीयं तेन प्राजापत्यो यत्तृतीयं तत्संवत्सरस्य रूपमिन्द्रो वृषा प्रजापतिर्वृषा संवत्सरो ऽस्य वृषेत्याहुर्येमिमाः प्रजा अनुप्रजायन्त इति तस्मादृषभस्स्यात् ॥ १ ॥

20 असुर्यं वा एतस्माद्वर्णं कृत्वा तेज इन्द्रियं वीर्यं प्रजा पशवो ऽपक्रामन्ति यस्य यूपो विरोहति स ईश्वर ईजानः पापीयान्भवति त्वाष्ट्रं[3] बहुरूपमालभेत त्वष्टा वै रूपाणां विकर्ता तमेव भागधेयेनोपधावति सो ऽस्मै तेज इन्द्रियं वीर्यं प्रजां पशून्पुनरुपावर्तयत्यार्तिं वा एते

[1] So corr. Ch पृश्निनर्नवमे [2] So corr. Ch वत्यः [3] So corr. Ch त्वाष्ट्रां; TBr. 1, 4, 7, 1 = Corr.

नियन्ति[1] येषां[2] दीक्षितानां प्रमीयते तं यदववृजेयुः क्रूरकृतामिवैषां लोकस्स्यादाहर दहेति ब्रूयुस्तं दक्षिणार्धे वेद्यां निधाय सर्पराज्ञ्या ऋग्भिस्स्तुयुरियं[3] वै सर्पराज्ञ्यस्या एवैनमधिसमीरयन्ति तदाहुर्व्यृद्धं वा एतद्यदस्तुतमननुशस्तमिति होता प्रथमो दीक्षितानां प्राचीनावीतं कृत्वा मार्जालीयं परीयाद्यामीरनुब्रुवन्सर्पराज्ञ्या ऋचां कीर्तयन्नियं वै सर्पतो राज्ञ्यस्या एवैनमधिसमीरयन्ति धुवन्त्येवैनमेतदथो न्वेवास्मै ह्नुवते तम इव[4] वा एते नियन्ति येषां दीक्षितानां प्रमीयते ॥[5] अग्न आयूंषि पवस इत्येतां[6] सोमस्य प्रतिपदं कुर्वीरन्पुनत एवात्मानमायुरेवात्मन्दधते ऽथो ज्योतिष्मन्त एव यन्त्यप्रतिष्ठिता वा[7] एते येषां दीक्षितानां प्रमीयते रथंतरसामैषां सोमस्स्यादियं वै पृथिवी रथंतरमस्यामेव प्रतितिष्ठन्ति ॥ २ ॥

cf. TBr 1, 4, 7, 1; 1, 4, 6, 5—7.

यद्यक्रीतमपहरेयुरन्यः क्रीतव्यो यदि क्रीतं यो नेदिष्ठं स्यात्स आहृत्याभिषुत्यो राजाहाराय तु[8] किंचिद्दीयते[9] नास्य स परिक्रीतो भवति यदि सोमं न विन्देयुः पूतीकानभिषुणुयुर्यदि न पूतीकानार्जुनानि गायत्री वै सोममपाहरच्छ्येनो[10] भूत्वा तस्य सोमरक्षिरनुविसृज्य नखमच्छिनत्ततो[11] यो ऽंशुरमुच्यत स पूतीको ऽभवत्पूतीका वै नामैते यत्पूतीकानभिषुण्वन्त्यूतिमेव यज्ञाय कुर्वन्तीन्द्रो वै वृत्रमहंस्तस्य यल्लोहितमासीत्तान्यार्जुनानि लोहिततूलान्यभवन्नथ यो ग्रीवाभ्यः प्रवृढाभ्यो रसस्समस्रवत्तान्यार्जुनानि बभ्रुतूलान्यभवन्सोमो[12] वा एषो ऽसुर्य[13] इव तु तस्मान्नाभिषुत्यः प्रतिधुक्प्रातः पूतीकाश्च दधि मध्यन्दिने पूतीकाश्च शृतं चापराह्णे[14] पूतीकाश्चेन्द्रियेण वा एष सोमपी-

---

[1] So corr. Ch नियंन्छंति; TBr. 1, 4, 6, 5 = Corr. [2] So corr. Ch वैषा; TBr. 1, 4, 6, 5 = Corr. [3] So corr. Ch रियो; cf. TBr. 1, 4, 6, 6. [4] Erste Hand in Ch तम एव, dann corrigirt. [5] Dies Zeichen von mir gesetzt, wegen des ते [6] So corr. Ch इत्येता [7] So corr. Ch वा वा [8] So corr. mit Caland; Ch राजहारायतु [9] Ch यंते [10] So corr. Ch मपरच्छ्येनो [11] So corr. Ch नतुतो [12] So corr. Ch बभ्रू वभुतूला॰ [13] So corr. Ch सुर्ये [14] So corr. Ch पराह्ने

येन व्यृध्यते यस्य सोममपाहरन्ति स ओषधीश्च पशूंश्च[1] प्रविशति
यदेतदुभयमभिषुण्वन्त्योषधिभ्यश्चैव पशुभ्यश्चाधि सोमपीथं पुनरव-
रुन्द्धे ॥ ३ ॥ TBr. 1, 4, 7, 5—7.

यदि सोमौ संसुतौ[2] स्यातां महति रात्र्याः प्रातरनुवाकमुपाकुर्या-
5 त्पूर्व एव यज्ञं पूर्वो देवताः[3] पूर्वश्छन्दांसि वृङ्क्ते वृषण्वतीं प्रतिपदं
कुर्यादिन्द्रो वै वृषा प्रातस्सवनादेवैषामिन्द्रं वृङ्क्ते तदाहुस्सवनमुखे
सवनमुखे कर्तव्येति सवनमुखात्सवनमुखादेवैषामिन्द्रं वृङ्क्ते संवेशा-
योपवेशाय गायत्र्यै छन्दसे ऽभिभुवे स्वाहा संवेशायोपवेशाय त्रिष्टुभे
जगत्या अनुष्टुभे छन्दसे ऽभिभुवे स्वाहेत्येतावन्ति वै छन्दांसि छन्दो-
10 भिर्देवा असुराणां छन्दांस्यवृञ्जत छन्दोभिरेवैषां छन्दांसि वृङ्क्ते ॥
सजन्यं शस्यं विहव्यं शस्यमगस्त्यस्य कयाशुभीयं शस्यमेतावद्वावास्ति
यावदेवास्त्यन्तरिक्षाद्दिवः पृथिव्या अहोरात्राभ्यां तेभ्य एनान्सर्वेभ्यो
निर्भजति यदि प्रातस्सवने कलशो दीर्येत वैष्णवीषु शिपिविष्टवतीषु
माध्यन्दिने पवमाने स्तुयुर्यद्वै यज्ञस्यातिरिच्यते विष्णुं तच्छिपिविष्ट-
15 मभ्यतिरिच्यते ऽतिरिक्तं वा एतदतिरिक्तं शिपिविष्टमतिरिक्तेनैवाति-
रिक्तमाप्नोति यदि मध्यन्दिन आर्भवस्य पवमानस्य पुरस्ताद्वषट्कारनि-
धनं साम कुर्युर्यदि तृतीयसवन एतदेव वषट्कारो वै यज्ञस्य प्रतिष्ठा
प्रतिष्ठामेवैनं गमयन्ति ॥ ४ ॥ cf. TS 7, 5, 5; Pañc. Br. 9, 4.

आसन्दीमारुह्योद्गाता महाव्रतेनोद्गायति प्रेङ्खमारुह्य होता महदु-
20 क्थमनुशंसत्यधिष्ठाने[4] ऽधिष्ठायाध्वर्यू प्रतिगृणीतः कूर्चेष्वितर आ-
सते[5] ऽन्तरिक्षं वा अन्नममुतो वै प्रदीयते ऽस्यां प्रजायते तदन्तरि-
क्षाय जायते यदन्तरिक्ष आसीना महाव्रतेन चरन्त्यन्नाद्यस्योपाप्त्या
अथो देवसाक्ष्य एवो परिषद्य याजयन्ति[6] स्वर्गमु लोकमाक्रममाणा

---

[1] So corr. Ch पशुंश्च [2] So corr. mit Caland; Ch संस्तुतौ vgl. unten 34, 18; aber TS 7, 5, 5, 1 संसुतौ [3] So corr. Ch देवता [4] So corr. Ch महदुक्थाम° [5] So corr. Ch आसंते [6] So corr. Ch यंजयंति; Caland vermuthet एवोपनिषद्य

यन्त्यभिगरापगरौ भवतः[1] प्र वा अन्यस्त्विषश्शंसति निन्दत्यन्यो यः प्रशंसति यदेवैषां सुष्टुतं सुशस्तं तत्स प्रशंसत्यथ यो निन्दति यदेवैषां सुष्टुतं सुशस्तं[2] तत्सो ऽपहन्ति शूद्रार्यौ चर्मन्व्यायच्छेते ॥ देवाश्च वा असुराश्चादित्ये व्यायच्छन्त तं देवा अभ्यजयन्नार्यं वर्णमुज्जापयत्यात्मानमेवोज्जापयत्यन्तर्वेद्यार्यस्स्याद्बहिर्वेदि[3] शूद्रश्श्वेतं चर्म परिमण्डलं 5 स्यादादित्यस्य रूपं सर्वासु स्रक्तिषु दुन्दुभयो वदन्ति या दिक्षु वाक्तां तेनावरुन्धते भूमिदुन्दुभिर्भवति यास्यां[4] वाक्तां तेनावरुन्धते वीणा वदन्ति या पशुषु वाक्तां तेनावरुन्धते काण्डवीणा वदन्ति यौषधिषु वाक्तां तेनावरुन्धते नाडीतूणवा वदन्ति या वनस्पतिषु वाक्तां तेनावरुन्धते वाणश्शततन्तुर्भवति शतायुर्वै पुरुषश्शतवीर्य 10 आयुरेव वीर्यमवरुन्द्धे ॥ ब्रह्मचारी च पुंश्चली चर्तीयेते सर्वा हि भूते वाचो वदन्ति मिथुनं चरन्ति संवत्सरं वा एते प्रजायमानास्सत्त्रमासते तेषां संवत्सरेणैव प्रजननमन्तर्धीयते यन्मिथुनं चरन्ति संवत्सरस्यैव प्रजननस्योपाप्त्यै कुम्भिनीरुपाचरन्ति समृद्ध्या इदंमधुरं गायन्तीस्संनद्धकवचाः परियन्ति महाव्रतमेव महयन्त्यथो सेन्द्रताया 15 एव ब्रह्मणो वा अन्या त्विषिः क्षत्त्रस्यान्या यद्दीक्षितो ऽधिकृष्णाजिनस्सा ब्रह्मणस्त्विषिर्यत्संनद्धकवचो ऽधिज्यधनुस्सा क्षत्त्रस्य त्विषिस्तदुभयं भवत्युभयोस्त्विष्योरवरुद्ध्यै ॥ ५ ॥ cf. TS 7, 5, 8—10; TBr. 1, 2, 6, 6—7.

प्रजापतिर्वा आत्मनो ऽधि द्वादशाहं निरमिमीत संवत्सरः प्रजापतिस्स चतुर्णां मासां तिस्रस्तिस्रो रात्रीरादत्त सा दीक्षाभवत्स उत्त- 20 रेषां चतुर्णां तिस्रस्तिस्रो रात्रीरादत्त[5] ता उपसदो ऽभवन्स उत्तरेषां चतुर्णां तिस्रस्तिस्रो रात्रीरादत्त सा सुत्याभवत्तस्मादाहुर्यावान्संवत्सरस्तावान्द्वादशाह इति सर्वस्माद्ध्येष संवत्सरादधि निर्मितस्स प्रथमं चाहरसृजतेहीडं[6] च सामेमं लोकमग्निं ज्योतिर्द्वितीयं[7] चाहरसृजतो-

[1] So corr. Ch भवत [2] Ch वैषान्तुष्टुतन्तुशस्तं [3] So corr. Ch वेदिः [4] So corr. Ch यस्यां [5] So corr. Ch रात्रेरा° [6] So corr. Ch दाहर° [7] So corr. Ch लोकमग्निर्ज्योतिर्द्वितीयमग्निं

र्ध्वेडं[1] च सामान्तरिक्षं लोकं वायुं ज्योतिस्तृतीयं चाहरसृजतेडाभिरेडं[2] च सामामुं लोकं सूर्यं ज्योतिश्चतुर्थं चाहरसृजत परिस्तुब्ध्येडं च साम यस्मिंश्च लोके तेजो ज्योतिः पञ्चमं चाहरसृजताध्यर्धेडं च साम यस्मिंल्लोके सत्यं ज्योतिष्षष्ठं चाहरसृजत होइडं च साम यस्मिंल्लोके
5 ब्रह्म ज्योतिस्सप्तमं चाहरसृजत पुनर्नितुन्नां चेडां यस्मिंश्च लोके तपो ज्योतिरष्टमं चाहरसृजत विष्वगेडं च साम यस्मिंश्च लोक ऋतं ज्योतिर्नवमं चाहरसृजत होइडं च साम यस्मिंश्च लोके ब्रह्म ज्योतिर्दशमं चाहरसृजत द्वीडं[3] च साम यस्मिंल्लोके ऽमृतं ज्योतिः प्राण एव प्रायणीयो ऽपान उदयनीयस्तस्माद्यावदेव प्रायणीये क्रियते तावदुदय-
10 नीये क्रियते यावान्हि प्राणस्तावानपान एतांल्लोकानेतानि सामान्येतानि ज्योतींष्येतानि तेजांस्यवरुन्द्धे य एवं विद्वान्द्वादशाहेन यजते ॥ ६ ॥

प्रजापतिरकामयत प्रजास्सृजेयेति स एतमात्मन्द्वादशाहमपश्यत्तमात्मनो[4] निरमिमीत तेन प्रजा असृजत तं गायत्री छन्दो ऽन्वसृ-
15 ज्यत साकामयताहमिमं सर्वतः परिभवेयमिति तं तेजसा मुखतः पर्यभवदोजसा मध्यतश्छन्दसोपरिष्टात्सर्वतो वै सा तं व्यत्यशयत्सर्वतो भ्रातृव्यं व्यतिशये य एवं वेद द्वे रूपे संवत्सरस्य मासा अन्यदृतवो ऽन्यद्यत्षड्डृतवस्तेनाप्नो यद्द्वादश मासास्तेनाप्न उभाभ्यामेव रूपाभ्यां संवत्सरमाप्नोति ब्रह्म वै गायत्री क्षत्रं द्वादशाहो ऽन्वेनं क्षत्रं[5] बुध्यते
20 प्र पुरोधामाप्नोति य एवं वेद ॥ यज्ञं वा अन्यानि छन्दांस्यभ्यसृज्यन्त स्वाराज्यमेव बृहत्यभ्यसृज्यत तस्माद्बृहत्या न वषट्कुर्वन्ति यद्वषट्कुर्युः पशूनग्नौ प्रदध्युर्वचसाश्वा पशूनवरुन्धते वाचि वा एते चत्वारः पशवो गौरश्वो ऽजाविस्तस्माद्वाचा हूताः पशव उदायन्ति वाचा सिद्धा आवर्तन्ते बृहतीं वा एत आप्नुवन्ति य एता रात्रीरासते षट्त्रिंशदेता

---

[1] So corr. Ch चाहार॰ [2] So corr. Ch चाहार॰ [3] So corr. Ch द्वीमुं
[4] So corr. Ch त्मयो [5] So corr. Ch न्वेन क्षत्रि

रात्रयष्षट्त्रिंशदक्षरा बृहती बृहती स्वर्गं लोकं प्रवेद स्वर्गं लोकमा-
प्नुवन्ति य एता रात्रीरासते देवलोकान्वा एत आप्नुवन्ति य एता
रात्रीरासते षट्त्रिंशदेता रात्रयष्षट्त्रिंशद्देवलोका अष्टौ वसव एकादश
रुद्रा द्वादशादित्या वषट्कारश्च प्रजापतिश्च त्रय इमे लोकास्तान्सर्वान्दे-
वलोकानाप्नुवन्ति य एता रात्रीरासत उभये वै देवाश्च मनुष्याश्चाव्या-
वृत्ता आसंस्ते देवा एतं द्वादशाहमुपायंस्ते दीक्षयैवात्मानमपुनतोप-
सद्भिर्यज्ञं[1] समभरन्त हित्वा शरीरं सुत्यया स्वर्गं लोकमायन्य एवं
विद्वान्द्वादशाहमुपैति दीक्षयैवात्मानं[2] पुनीत उपसद्भिर्यज्ञं संभरते
हित्वा शरीरं सुत्यया स्वर्गं लोकमेति प्रजापतिर्वा एतं स्वर्गकाम
आहरत्स न प्राभवदेकादशाहो[3] वा एष स एतमतिरात्रमुपरिष्टादुभ-
यतः पर्यहरत्समानो वा एष उभयतः परिह्रियते स्वर्गस्य लोकस्य
समष्ट्यै ॥ ७ ॥

प्रजापतिरकामयत प्रजायेयेति[4] स द्वादशाहेनायजत तेन प्राजा-
यत[5] प्रैव[6] जायते य एवं वेदापो वै यज्ञिया मेध्या असृज्यन्त तदे-
का अपि नासृज्यन्तासृग्वाव तन्नासृज्यत तदस्नो ऽसृक्त्वं[7] तस्माद्यदेवा-
सृक्छिद्यते[8] ऽथ यज्ञियो मेध्यो भवति पुरुषसंमितो वा एष यस्स-
त्रियं[9] प्रतिगृह्णाति पुरुषं वै सो ऽत्ति[10] यं खलु वै पुरुषमत्ति न त-
स्यास्मिंल्लोके नामुष्मिन्नपिभवति प्राणो वै पूर्वो ऽतिरात्रो ऽपान
उत्तर इयं वै पूर्वो ऽतिरात्रो ऽसा उत्तरो ऽग्निर्वै[11] पूर्वो ऽग्निष्टोमस्सूर्य
उत्तरो ऽन्तरौ[12] वा एता अनयोस्तस्मादन्तरौ प्रयुज्येते तदाहुर्यदग्निष्टो-
मप्रायणो यज्ञः कस्मादतिरात्रौ पूर्वौ प्रयुज्येते इत्यथाहुश्चक्षुषी वा
एते यज्ञस्य यदतिरात्रौ कनीनिके अग्निष्टोमा इति यदग्निष्टोमौ पूर्वौ

---

[1] So corr. Ch दीक्षायै° यंज्ञो [2] So corr. Ch दीक्षायै° [3] So corr. Ch सा न प्रभवदे° [4] So corr. Ch ययेति [5] So corr. Ch प्रजायता [6] So corr. Ch प्रेव [7] So corr. Ch तदस्थो सृज्यत यदस्थो सृज्यत तदस्थ्नो सत्त्वं; cf. Mâitr. S. 4, 2, 9 (p. 32, Z. 7). [8] So corr. Ch वासृक्छिद्यते [9] So corr. Ch य सत्रियं [10] Ch etwa सो त्रि [11] So corr. Ch ग्निश्चै [12] So corr. Ch उत्तरं तरौ तरौ

प्रयुञ्जीरन्बहिष्कनीनिके निरादध्युरन्धाः प्रजायेरन्यदतिरात्रौ पूर्वौ प्रयु-
ज्येते चक्षुषी एव यज्ञस्य प्रतिधाय मध्यतः कनीनिके प्रतिदधाति
भूतं वै पूर्वो ऽतिरात्रो भव्यमुत्तरस्तदिमानि दशाहानि मध्ये सन्नवति
य एवं वेद यो ह वै गायत्रीं ज्योतिष्पक्षां वेद ज्योतिष्मता भासा
5 स्वर्गं लोकमेति या अतिरात्रौ तौ पक्षौ या अग्निष्टोमौ ते ज्योतिषी
ये ऽष्टा अन्तर[1] उक्थ्यास्स[2] आत्मैषा वै गायत्री ज्योतिष्पक्षा य एवं
गायत्रीं ज्योतिष्पक्षां वेद ज्योतिष्मता भासा स्वर्गं लोकमेति ॥ प-
क्षिणो वा एते भवन्ति पक्षिणा भूत्वा यत्र कामयन्ति तत्परापातमा-
सत एष वै प्रजापतिर्द्वादशधा विनिहितो यद्द्वादशाहो या अतिरात्रौ
10 तौ पक्षौ या अग्निष्टोमौ ते चक्षुषी ये ऽष्टा अन्तर उक्थ्यास्स[3] आ-
त्मा स एष प्रजापतिरेव सद्वै सत्त्रिणस्स्पृणवन्ति तत्सत्त्रस्य सत्त्रत्वं
प्राणा वै सत्प्राणानेव तत्स्पृणवन्ति सर्वासां वा एते प्रजानां प्राणैरा-
सते ये सत्त्रमासते तस्मात्पृच्छन्ति किमेते सत्त्रिण इति प्रियः प्रजा-
नामुत्थितो भवति य एवं वेद ॥ ८ ॥ cf. TS 7, 2, 9.

15 प्रजापतिरकामयत स्यामिति[4] स द्वादशाहेनायजत तेनाभवत्तस्मा-
दाहुर्बुभूषतो यज्ञ इति तं मासा दीक्षितमदीक्षिता अयाजयंस्तस्मा-
द्दीक्षितमदीक्षिता[5] याजयन्ति तेभ्य इषमूर्जमददात्सेयं[6] मासेष्वार्ध्नो-
त्प्रजापतिदत्तार्ध्नुवन्मासाः[7] प्रतिगृह्यर्ध्नोति[8] य एवं विद्वान्ददात्यृध्नोति
यः प्रतिगृह्णाति पीवा दीक्षेत यदस्याङ्गानामीयते जुहोत्येव तत्स
20 यथा वसन्तो नवदाव्यश्शोभमान उत्तिष्ठत्येवमेव नवदाव्यश्शोभमान[9]
उत्तिष्ठति तपो वै यज्ञस्य श्लेष्म यथा वै रथस्य श्लेष्मैवं यज्ञस्य तपो
यो ऽतपस्वी भवत्यसंश्लिष्टो ऽस्य यज्ञस्तपस्वी स्याद्यज्ञमेव[10] संश्लेषयते

---

[1] So corr. Ch अन्तरा; aber cf. unten und TS 7, 2, 9, 2. [2] So corr. Ch उक्थ्यः; cf. unten und TS 7, 2, 9, 2. [3] So corr. Ch उक्थ्यास्स; cf. oben und TS 7, 2, 9, 3. [4] So corr. Ch कामयत तस्यामिति [5] So corr. Ch अयाजयस्त° [6] So corr. Ch एषमूर्ज° [7] So corr. Ch मासेष्वाब्नोत्प्रजापतिर्दत्ताब्नुव° [8] So corr. Ch ह्यब्नोति [9] So corr. Ch नवदावश्शो°; aber vgl. das Folgende. [10] So corr. Ch स्यां यज्ञमेव

ऽर्धमासा[1] वावासंस्ते ऽकामयन्त मासास्स्यामेति ते द्वादशाहमुपायंस्त्रयोदशं ब्रह्माणं कृत्वा तस्मिन्दृष्टोदतिष्ठंस्तस्मात्सो ऽनायतन[2] इतरानुपजीवति तस्माद्द्वादशाहस्य त्रयोदशेन न ब्रह्मणा भवितव्यं द्वादश दीक्षेरन्संवत्सरायतना द्वादश मासास्संवत्सरस्संवत्सरायतना एवर्ध्नुवन्ति[3] त्रयोदश दीक्षेरन्संवत्सरायतनास्त्रयोदश मासास्संवत्सरस्संवत्सरायतना एवर्ध्नुवन्ति[3] पञ्चदश दीक्षेरन्नर्धमासायतनाः पञ्चदशार्धमासस्य रात्रयो ऽर्धमासायतना एवर्ध्नुवन्ति[4] सप्तदश दीक्षेरन्प्राजापत्यायतनाः प्रजापतिस्सप्तदशः प्राजापत्यायतना एवर्ध्नुवन्त्येकविंशतिर्दीक्षेरन्रुक्कामा असा आदित्य एकविंश एष रुचः प्रदाता स एभ्यो रुचं प्रयच्छति चतुर्विंशतिर्दीक्षेरन्ब्रह्मवर्चसकामाश्चतुर्विंशत्यक्षरा[5] गायत्री तेजो गायत्री ब्रह्मवर्चसं तेज एव ब्रह्मवर्चसमवरुन्धते[6] सप्तविंशतिर्दीक्षेरंस्त्रिणवायतनास्त्रिणवा इमे लोकास्त्रिणवायतना एवर्ध्नुवन्ति[7] त्रिंशद्दीक्षेरन्मासायतनास्त्रिंशन्मासो रात्रयो मासायतना एवर्ध्नुवन्ति[8] त्रयस्त्रिंशद्दीक्षेरन्देवतायतनास्त्रयस्त्रिंशद्देवता देवतायतना[9] एवर्ध्नुवन्ति[10] चतुश्चत्वारिंशद्दीक्षेरन्नोजस्कामा वीर्यकामाश्चतुश्चत्वारिंशदक्षरा त्रिष्टुबोजो वीर्यं त्रिष्टुबोज एव वीर्यमवरुन्धते ऽष्टाचत्वारिंशद्दीक्षेरन्पशुकामा अष्टाचत्वारिंशदक्षरा जगती जागताः पशवः पशूनेवावरुन्धते ऽपरिमिता दीक्षेरन्नपरिमितस्यावरुद्ध्या अपरिमितः प्रजापतिः प्रजापतिमेवाप्नुवन्त्यृतवो वावासन्ननुयावरा[11] मासास्ते मासा अकामयन्तर्तूनाप्नुयामेति ते द्वादशाहमुपायंस्त्रयोदशं ब्रह्माणं[12] कृत्वा त ऋतूञ्छिशिरेण[13] निभाय्य वसन्तमूर्जमेषामभ्युदतिष्ठन्य[14] एवं विद्वाञ्छिशिरे[15] दीक्षते तपसैव भ्रातृव्यं निभाय्यैषमूर्जमस्याभ्युत्तिष्ठति

---

[1] So corr. Ch धंमासा सा [2] So corr. Ch सानायतन [3] So corr. Ch ब्नुवंति [4] So corr. Ch ब्नुवंति [5] Ch चातु° [6] So corr. Ch रुंधेते [7] So corr. Ch ब्नुवंति [8] So corr. Ch ब्नुवति [9] So corr. Ch देवतायत्रायतना [10] So corr. Ch ब्नुवंति [11] So corr. Ch वावसन्नुनु° [12] So corr. Ch ब्रह्मणं [13] Ch ऋतूंछि° [14] Erste Hand in Ch मूलमे° [15] Ch विद्वां छि°

शिशिरं वा एतस्य प्रयाणं वसन्तो ऽवसानमृध्नोति[1] य एवं विद्वा-
ञ्छिशिरे[2] दीक्षते ॥ ९ ॥

ब्रह्मवादिनो वदन्ति किं प्रथमेनाह्ना द्वादशाहस्यावरुन्द्ध इति
तेजो ब्रह्मवर्चसं किं द्वितीयेनेति वाचमन्नाद्यं किं तृतीयेनेति त्रीनि-
5 मांल्लोकान्किं चतुर्थेनेति चतुष्पदः पशून्किं पञ्चमेनेति चतस्रो दिश
ऊर्ध्वां पञ्चमीं किं षष्ठेनेति षडृतून्किं सप्तमेनेति सप्तपदीं शक्वरीं कि-
मष्टमेनेत्यष्टाक्षरां गायत्रीं[3] किं नवमेनेति नव प्राणान्किं दशमेनेति
दशाक्षरां विराजं किमेकादशेनेत्येकादशाक्षरां त्रिष्टुभं किं द्वादशेनेति
द्वादशाक्षरां जगतीमेतावद्वावास्ति यावदेवास्ति तत्सर्वमाप्त्वावरुन्द्ध
10 ऋध्नोति वसीयान्भवति य एवं विद्वान्द्वादशाहेन यजते ॥ १० ॥
cf. TS 7, 3, 2.

चतुर्वै तास्तिस्रस्तिस्रस्तासां याः प्रथमा आत्मानं ताभिः पुनीते
या द्वितीया मेध्यस्ताभिर्यज्ञियो[4] भवति यास्तृतीया गात्राणि ताभि-
र्निर्णेनिक्ते ऽथ याश्चतुर्थीर्यदेवास्यान्तरतो यद्बहिष्टाच्छमलं[5] तत्ताभि-
र्धूनुते पुरुषं[6] खलु वा एते ऽदन्ति यद्द्वादशाहेन[7] याजयन्ति यः पाश-
15 वमत्ति मांसं सो ऽत्ति यो वाजिनं लोहितं स यो धाना अस्थि स य
आज्यं मज्जानं स यः परिवापं केशान्स यः पुरोडाशं मस्तिष्कं स यो
राजानं भक्षयति स्वेदं स यः करम्भं निष्पदं स एष ह खलु वै सत्त्रि-
यमत्ति यो ऽनृतं वदति स्वदितमस्य सत्त्रियं भवति नास्य सत्त्रियं
जग्धं भवति य एवं वेद ॥ ११ ॥ cf. TS 7, 2, 10, 3 und 4.

20 द्वादश दीक्षितो भवति जायत एव तत्तद्धि जातं यत्तपसो ऽधि
जायते न यत्स्त्रिया द्वादश दीक्षितो भवति द्वादश वै पुरुषे ऽमेध्यानि
लोम च तनूश्चासृक्च मांसं चास्थि च मज्जा च स्नेहश्च प्लीहा[8] चाश्रु[9]

---

[1] So corr. Ch ब्नोति [2] Ch विद्वां छि° [3] So corr. Ch ष्टाचरागां गायत्रीं; TS 7, 3, 2, 1 = Corr. [4] So corr. Ch मेध्यांस्ता° [5] So corr. Ch ष्टाछमलं [6] So corr. Ch धुंनते परुषं [7] So corr. Ch यद्वोद° [8] So corr. Ch स्रोहा [9] So corr. Ch चास्र

च दूषीका च स्वेदश्च यच्च[1] प्रस्रावयत एतानि वै पुरुषे द्वादशामेध्यानि यद्द्वादश दीक्षितो भवति तान्येवापहते द्वादश दीक्षितो भवति द्वादशोपसदो द्वादश प्रसूतस्ताःषट्त्रिंशत्संपद्यन्ते षट्त्रिंशदक्षरा बृहती बार्हताः पशवो बृहत्यामेवैतत्पशूनाप्नोति बृहत्यामेवैतत्पशूनाप्त्वावरुन्द्धे ततो यानि चत्वार्यक्षराण्युत्क्रामन्ति सा चतुष्पदानुष्टुब्वागनुष्टुब्वाच्येवैतत्पशूनाप्नोति वाच्येवैतत्पशूनाप्त्वावरुन्द्धे तस्माद्वाचा[2] पशवो नाम जानते वाचा सिद्धानि वर्तन्ते ॥ १२ ॥ cf. TS 7, 2, 10, 3.

प्रजापतिरकामयत भूयान्स्यां श्रेयान्स्यामृध्नुयामिति स द्वादशाहेनादीक्षत[3] तेनायजत स आर्ध्नोत्तस्मादेको[4] द्वादशाहेन यजतैको हि स आर्ध्नोत्प्रजापतिरेव[5] प्रजापतेरेवर्द्धमन्वृध्नोति[6] य एवं विद्वानेको द्वादशाहेन यजते तेन तिस्रो देवता रोचना अदीक्षन्त तेनायजन्त ता आर्ध्नुवंस्तस्मात्त्रयो[7] द्वादशाहेन यजेरंस्त्रयो[8] हि त आर्ध्नुवन्निम[9] एव लोका एषामेव लोकानामृद्धमन्वृध्नुवन्ति य एवं विद्वांसस्त्रयो द्वादशाहेन यजन्ते तेन षड् देवता अदीक्षन्त तेनायजन्त ता आर्ध्नुवंस्तस्मात्षड् द्वादशाहेन यजेरन्षड्ढि त आर्ध्नुवन्नृतव[10] एवर्तूनामेवर्द्धमन्वृध्नुवन्ति[11] य एवं विद्वांसष्षड् द्वादशाहेन यजन्ते तेन द्वादश देवता अदीक्षन्त तेनायजन्त ता आर्ध्नुवंस्ते[12] पूर्वपक्षेष्वार्ध्नुवन्नपरपक्षाननूपाह्वयन्त[13] तस्माद्द्वादश द्वादशाहेन यजेरन्द्वादश हि त आर्ध्नुवन्मासा[14] एव मासानामेवर्द्धमन्वृध्नुवन्ति[15] य एवं विद्वांसो द्वादश द्वादशाहेन यजन्त उपसत्सु त्रयोदशो दीक्षेतोत हि तं विदुरुत न विदुरुत वै[16] त्रयोदशं मासं विदुरुत न विदुः ॥ १३ ॥

[1] So corr. Ch यञ्च° [2] So corr. Ch तस्माद्द्वावाचा [3] So corr. Ch नादीक्षित [4] So corr. Ch आब्नो° [5] So corr. Ch आब्नो° [6] So corr. Ch वर्धम°; vgl. das Folgende. [7] So corr. Ch आब्नुवं° [8] So corr. Ch स्त्रियो [9] So corr. Ch आब्नुवं° [10] So corr. mit Caland; Ch आब्नुवन् ॥ ऋतव [11] So corr. Ch मेववमन्वृ° [12] So corr. Ch आब्नुवं° [13] So corr. Ch ब्नुवन्न° [14] So corr. mit Caland; Ch द्वादशा हि त आब्नुवं मासा [15] So corr. Ch मासामेवर्धम° [16] So corr. Ch वे

प्रजापतिर्मनसि सारस्वतो वाचि विसृष्टायां धाता दीक्षायां ब्रह्म
व्रते सविता भृत्यामन्धो[1] ऽच्छेतो[2] दिव्यस्सुपर्णः प्रतिख्यातो ऽदितिः
प्रायणीये पशुष्ठा[3] न्युप्तो रुद्रो विचीयमानश्छन्दांसि मीयमानो व-
रुण उपनद्धः पूषा सोमक्रयण्यां भगः पण्यमानो ऽसुरः क्रीतश्शि-
5 पिविष्ट ऊरा[4] आसाद्यमानो बृहस्पतिरुत्थितो वायुरधिह्रियमाणो
ऽधिपतिः प्रोह्यमाणो[5] ऽग्नीषोमीयः पशा[6] अतिथिर्दुरोणसदातिथ्ये
वरुणस्सम्राडासन्द्यामासाद्यमान[7] ऐन्द्राग्नो अग्नौ मथ्यमान ऐन्द्राग्नो[8]
ऽग्नौ प्रह्रियमाणे[9] साम तानूनप्त्रे तपो ऽवान्तरदीक्षायां पृथिव्युपस-
द्यन्तरिक्षमुपसदि द्यौरुपसदि[10] यज्ञस्य प्रमाभिमोन्मा प्रतिमा वेद्यां
10 क्रियमाणायां पशव उत्तरवेद्यां द्यौर्हविर्धाने ऽन्तरिक्षमाग्नीध्रे पृथिवी
सदसि ॥ १४ ॥ cf. Ath. Prây. Sûtra 3, 1; TS 4, 4, 9.

प्राण उपरवेषु भ्रातृव्या धिष्ण्येषु पशवा बर्हिषि वेद्यां स्तीर्यमा-
णायामप्सु वैसर्जने प्रजापतिः प्रणीयमानो ऽग्निराग्नीध्रे वैष्णव आसन्न-
कर्मणि हस्तो विसृष्टो[11] वैष्णवो यूप ओषधयो रशनायां मेध आप्रीषु
15 हविः पर्यग्निकृतः पितृदेवत्यस्संज्ञप्यमाने यज्ञस्य मिथुनं पन्नेजनीषु
रक्षसां भागधेयं वपायामुद्बृह्यमानायां[12] यज्ञस्य संततिर्वसतीवरीषु
परिह्रियमाणास्विन्द्राग्न्योर्धेनुर्दक्षिणायामुत्तरवेद्याश्श्रोण्यामासन्ना[13]
मित्रावरुणयोर्धेनुरुत्तरस्यामुत्तरवेद्याश्श्रोण्यामासन्ना[14] विश्वेषां देवा-
नामाग्नीध्रे छन्दांस्युपवसथे हविरुपावहृतस्सारस्वतः प्रातरनुवाके ऽथ

---

[1] So corr. mit Caland; Ch ब्रह्मवते स॰ मन्यामंधो; cf. TS 4, 4, 9 a. A. [2] So corr. Ch अश्छेतो; cf. TS 4, 4, 9 a. A. [3] So corr. mit Caland; Ch प्रायणीयो पशुष्टा (ष्ट sehr oft für ष्ठ geschrieben). [4] So corr. Ch तूरा [5] So corr. Ch प्रह्यमाणो; TS 4, 4, 9 = Corr. [6] So corr. Ch पाशा [7] So corr. Ch डासंध्यामा॰ [8] So corr. Ch ऐन्द्राग्नो [9] So corr. Ch अग्नौ प्रिह्रिय॰ [10] So corr. Ch पृथिव्यपस॰; द्यौरुपसदि mit Caland vom Ende des Cap. hierher gesetzt. [11] So corr. mit Caland, nach Ath. P. S.; Ch ग्निराग्नोविष्णाव आसन्नः कर्मणो हस्तो विसृष्टो [12] So corr. Ch वपामु॰ [13] So corr. Ch श्रेण्या॰ [14] So corr. Ch श्रेण्या॰

वा न्युप्तः प्रजापतिर्विभज्यमाना देवता विभक्त इन्द्रो वृत्रहेन्द्रो ऽभिमातिहेन्द्रो वृत्रतूरुन्नीयमान[1] आयुरुपांश्वन्तर्यामयोर्यमो ऽभिषुतः ॥ १५ ॥ cf. Ath. Prây. Sûtra 3, 2; TS 4, 4, 9.

निभूयपूराधवनीये सुपूतपूः[2] पूतभृति शुक्रश्रीः क्षीरश्रीः ककुहस्सक्तुश्रीः पात्रेषु वायुर्बहिष्पवमाने होत्राः प्रवरे वसवः प्रयाजेषु यद्देवत्यस्सोमस्तद्देवत्यः पशुर्वैश्वदेव[3] उन्नीयमान ऐन्द्राग्न उन्नीतो रुद्रो हूयमानो वाग्घुतो मारुतो गणो ऽभ्यावृत्तो मित्रः प्रतिख्यात इन्द्र आसन्नो भक्षो भक्ष्यमाणस्सखा भक्षितः[4] पितरो नाराशंस आग्नेयं प्रातस्सवनमैन्द्रं माध्यन्दिनं सवनं यज्ञो दक्षिणायामैन्द्राणि पृष्ठानि वैश्वदेवं तृतीयसवनं वैश्वानरो ऽग्निष्टोम ऐन्द्रावारुणं मैत्रावरुणस्य स्तोत्रमैन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसिन ऐन्द्रावैष्णवमच्छावाकस्यैन्द्रष्षोडशी रात्री पत्न्याग्नेयो रथंतरस्संधिस्सौर्यमाश्विनमहर्यज्ञ आदित्या अनुयाजेषु यदन्तरा क्रियते समुद्रो वरुणो ऽवभृथे समुद्र ऋजीषे यदवारे तीर्थं तत्प्रायणीयं यत्पारे तीर्थं तदुदयनीयं वैष्णवो वशायां ब्रह्मा समिष्ट्याम् ॥ १६ ॥ cf. Ath. Prây. Sûtra 3, 3; TS 4, 4, 9.

यथा वै रथ एकैकमरमभिप्रतितिष्ठन्वर्तत[5] एवं यज्ञ एकैकां तन्वमभिप्रतितिष्ठन्नेति पुरा प्रचरितोराग्नीध्रे होतव्या एतद्ध वा उवाच वासिष्ठस्सात्यहव्या ऽस्कान्सोम इत्युक्ते मा सूर्क्षत प्रचरत प्रातर्वावाद्याहं सोमं समस्थापयमिति नास्य सोमस्स्कन्दति य एवं वेद स ह स्म[6] वै स आसन्द्यामासीनस्सक्तुभिरुपमथ्य सोमं पिबत्यहं[7] वाव सर्वतो यज्ञं वेद य एता वेद न मामेष हिंसिष्यतीति नैनं सोमः पीतो न पेयो हिनस्ति य एवं विद्वान्सोमं पिबति तं ह स्म यदाहुः कस्मात्त्व-

---

[1] So corr. mit Caland; Ch रुन्मोव्यमाना  [2] So corr. Ch सुपूतः पूः  [3] So corr. mit Caland; Ch वत्यः पशो वैं°  [4] So corr. mit Caland; Ch भक्षमानस्सखाभक्षितः  [5] So corr. mit Caland nach Gop. Br.; Ch एकैकमभिप्रति°  [6] So corr. Ch एवं वे सहस्स  [7] So corr. mit Caland; Ch संपिबत्यह

मिदमासीनस्सक्तुभिरुपमथ्य सोमं पिबसीति देवतास्वेव यज्ञं प्रति-
ष्ठापयामीत्यब्रवीद्यस्यैवं विदुषो यस्यैवं विद्वान्यज्ञार्त्यां यज्ञप्रायश्चित्तिं
जुहोति देवतास्वेव यज्ञं प्रतिष्ठापयति ॥ यज्ञार्तिं प्रतिजुहुयात्सयो-
नित्वाय त्रयस्त्रिंशद्वै यज्ञस्य तन्व एकान्नत्रिंशत्स्तोमभागास्त्रीणि स-
5 वनानि यज्ञश्चतुर्थस्स्तोमभागैरेवैतत्स्तोमभागान्प्रतियुङ्क्ते सवनैस्सव-
नानि यज्ञेन यज्ञं[1] सर्वा ह वा अस्य यज्ञस्य तन्वः प्रयुक्ता भवन्ति
सर्वा आप्तास्सर्वा अवरुद्धा देवस्य सवितुः प्रसवे बृहस्पतये स्तुतेति
यद्यद्वै सविता देवेभ्यः प्रासुवत्तेनार्ध्नुवन्सवितृप्रसूता[2] एव स्तुवन्त्यृध्नु-
वन्त्यृध्यन्ते ह वा अस्य स्तोमा[3] ऋध्यते[4] यज्ञ ऋध्यते यजमानायर्ध्य-
10 ते[5] प्रजाया ऋध्यते पशुभ्य ऋध्यते ब्रह्मणे यस्यैवं विदुषो यस्यैवं
विद्वान्ब्रह्मा भवति ॥ १७ ॥ cf. Gop. Br. 2, 2, 10.

यो वै स्तोमभागानामायतांश्च[6] प्रतिहितांश्च विद्यात्स समृतसोम-
स्य ब्रह्मा स्याद्बहिष्पवमाने प्रस्तुते ब्रूयात्स्तुतेषे स्तुतोर्जे स्तुत[7] देवस्य
सवितुः प्रसवे बृहस्पतिप्रसूता इत्येता वै स्तोमभागानामायतप्रति-
15 हिता य एवं विद्यात्स समृतसोमस्य[8] ब्रह्मा स्याद्यां दिशं सोमौ
संस्तुतौ स्यातां तां दिशं परीक्षेतेदमहममुमामुष्यायणममुष्याः पुत्रं
शुचा विध्यामीत्यृत्विजामेकं ब्रूयाच्छुचैवैनान्विध्यति यो वै स्तोम-
भागानामायतांश्च[9] प्रतिहितांश्चाविद्वान्ब्रह्मा भवति स विष्वग्वीर्येण[10]
व्यृध्यते बहिष्पवमाने प्रस्तुते स्तुतेषे स्तुतोर्जे स्तुत देवस्य सवितुः
20 प्रसवे बृहस्पतिप्रसूता इत्युपर्युपरि ब्रह्माणमतीक्षेताधरमेव[11] द्विषन्तं
कुरुते ब्रह्मन्सोमो ऽस्कानिति यज्ञो ऽस्कानित्येवैतदाह यत्र स्कन्देत्तदपो
निनीय ॥

---

[1] So corr. Ch यज्ञे यज्ञो [2] So corr. Ch नाब्नुवंत्स॰ [3] So corr. Ch स्तोमो [4] Ch ऋद्यते; und so auch weiterhin. [5] So corr. Ch मानायव्यते [6] So corr. Ch भागना॰ [7] So corr. Ch स्तुतो; vgl. aber weiter unten. [8] So corr. Ch स ममृत॰ [9] So corr. Ch श्चा [10] So corr. Ch विष्वद्वो॰ [11] So corr. mit Caland; Ch मतोत्तेत्या॰

अभूद्देवस्सविता वन्द्यो[1] नु न इदानीमह्न[2] उपवाच्यो नृभिः ।
वि यो रत्ना भजति मानवेभ्यश्श्रेष्ठं नो अत्र द्रविणं यथा दधत् ॥
इत्यभिमन्त्रयेतापो वै सर्वा देवता देवतास्वेव यज्ञं प्रतिष्ठापयति
यत्र वै ब्रह्मान्यस्मै भूयो दीयमानं पश्यति सो ऽधराचीनप्रवणस्सोमो
भवति यदि ब्रह्मान्यस्मै भूयो दीयमानं पश्येदिदमहममुष्यामुष्यायण- 5
स्येन्द्रियं[3] वीर्यं वृञ्ज इति यजमानं ब्रूयादिन्द्रियमेवास्य वीर्यं वृ-
ङ्क्ते ॥ १८ ॥
अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् ।
दूरेदृशं गृहपतिमथर्युम् ॥
अग्निनाग्निस्समिध्यते कविर्गृहपतिर्युवा । 10
हव्यवाड् जुह्वास्यः ॥
सप्त ते अग्ने समिधस्सप्त जिह्वास्सप्तर्षयस्सप्त धाम प्रियाणि ।
सप्त होत्रा अनु विद्वान्सप्त योनीँरापृणस्वा घृतेन ॥
मनो ज्योतिर्जुषतामाज्यस्यारिष्टं यज्ञं समिमं तनोतु ।
इमं यज्ञं सप्ततन्तुं ततं न[4] आ देवा[5] यन्तु सुमनस्यमानाः[6] ॥ 15
त्रयस्त्रिंशत्तन्तवो यान्वितन्वत इमं यज्ञं स्वधया ये ददन्ते ।
तेषां छिद्रं प्रतिदध्मो यदत्र स्वाहायं यज्ञो अप्येतु देवान् ॥
यन्मे मनसश्छिद्रं यद्वाचो यच्च[7] मे हृदः ।
अयं देवो बृहस्पतिस्सं तत्सिञ्चतु राधसा ॥
विश्वकर्मा हविरिदं जुषाणस्संतानैर्यज्ञं समिमं तनोतु । 20
या व्युष्टा उषसो याश्च निम्रुचस्तास्संदधातु हविषा घृतेन ॥
अयाश्चाग्ने ऽस्यनभिशस्तिश्च सत्यमित्त्वमया असि ।
अयास्सन्मनसा[8] कृतो ऽयास्सन्हव्यमूहिषे[9] ऽया नो धेहि भेषजम् ॥

---

[1] So corr. Ch वन्द्यो [2] So corr. Ch इददानो॰ [3] So corr. Ch हममुमा-मुष्यामुष्यायण॰ [4] So corr. Ch ततुं तन्न [5] So corr. Ch देव [6] So corr. Ch मानः [7] So corr. Ch यश्च [8] So corr. Ch अयासा म॰ [9] So corr. Ch मूहि

त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडो ऽवयासिसीष्ठाः ।
यजिष्ठो वह्नितमश्शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत्[1] ॥
स त्वं नो अग्ने ऽवमो भवोती[2] नेदिष्ठो अस्या उषसो[3] व्युष्टौ ।
अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं[4] सुहवो न एधि ॥ ॥ १९ ॥
cf. Kap. S. 48, 1 (enthält meist nur die Versanfänge).

इति श्रीमद्यजुषि काठके चरकशाखायामोरिमिकायामेकादशिनी नाम चतुस्त्रिंशं स्थानकं संपूर्णम् ॥[5]

---

भद्रं[6] कर्णेभिश्शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः[7] ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥
स्वस्ति न इन्द्रो वृद्धश्रवास्स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिस्स्वस्ति नो बृहस्पतिर्दधातु ॥
पृषदश्वा मरुतः पृश्निमातरश्शुभंयावानो विदथेषु जग्मयः ।
अग्निजिह्वा मनवस्सूरचक्षसो विश्वे मा[8] देवा अवसागमन्निह[9] ॥
शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा[10] जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥

---

[1] So T 7 fol. 14b; Ch स्मात　[2] So corr. Ch भवती; auch T 7 fol. 14b भवतीं; cf. RV 4, 1, 5.　[3] So corr. Ch उषस　[4] Ch मृडीको　[5] So die Unterschrift des Capitels in Ch.　[6] Der Anfang des Capitels auch in T 7 fol. 32 und 33, T 1 und Brl fol. 91 vorhanden; nach diesen Mss. accentuirt.　[7] RV 1, 89, 8 माक्षभि°　[8] RV 1, 89, 7 नो　[9] Ch न्निहि　[10] So T 1, T 7 und Brl, in Uebereinstimmung mit RV 1, 89, 9; Ch liest नश्चक्र

प्रेद्धो अग्ने[1] दीदिहि पुरो नो ऽजस्रया सूर्म्या यविष्ठ ।
त्वां शश्वन्त उपयन्ति वाजाः ॥
श्रुत्कर्णाय कवये वेद्याय वचोभिर्नाकमुपयामि[2] शंसन् ।
यतो भयमभयत्वं नो अस्त्वग्ने देवानामव हेड इक्ष्व[3] ॥
अग्निं वो देवमग्निभिस्सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम् । 5
यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः ॥
घृतप्रतीको घृतपृष्ठो अग्निर्घृताहवनो घृतमस्य धाम ।
घृतप्रुषो हरितस्त्वावहन्तु घृतं पिबन्यजताद्देव देवान् ॥ ॥ १ ॥
cf. Kap. S. 48, 2 (meist nur die Versanfänge).
इमो अग्ने वीततमानि हव्याजस्रा वक्षि देवतातिमच्छ ।
प्रति न ईं सुरभीणि[4] व्यन्तु ॥ 10

सप्त ते अग्ने त्रयस्त्रिंशद्धाम्ने मनसो विश्वकर्माग्निं युनज्मीन्धाना-स्त्वाग्निर्न ईडित ईडितव्यैर्देवैः पार्थिवैः पातु वायुर्न ईडित ईडितव्यै-र्देवैरन्तरिक्ष्यैः पातु सूर्यो न ईडित ईडितव्यैर्देवैर्दिव्यैः पातु विष्णुर्न ईडित ईडितव्यैर्देवैर्दिश्यैः पात्वग्निर्यजुर्भिः पूषा स्वगाकारैस्त इमं य-ज्ञमवन्तु ते मामवन्त्वनु व आरभे ऽनु मारभध्वस् ॥ २ ॥ 15
cf. Kap. S. 48, 3.

पृथिवि[5] विभूवरि[6] सिनीवाल्युरंध[7] आचित्ते मनस्ते भुवो वि-वस्ते[8] य ऊर्मिर्हविष्य[9] इन्द्रियावांस्तं व[10] ऋध्यासं[11] सोमस्याज्यमसि हविषो हविर्ज्योतिषो ज्योतिर्विश्वेषां देवानां भागधेयीस्स्थ देववी-तये वो गृह्णामि ॥

---

[1] Ch अग्न; aber cf. RV 7, 1, 3. [2] Kap. S. 48, 2 वचोभिर्लोकमुपयामि [3] So Ch! AV 19, 3, 4 अंव देवानां यज हेडो अग्ने ॥; Kap. S. 48, 2 यतो भयमभयं ते नो स्त्वग्ने देवानामहे ईष्ठा ॥ [4] So corr. Ch सुरभीनि; desgl. W 1; cf. RV 7, 1, 18. [5] Dies Capitel auch in W und W 1, der größte Theil auch in T 4 vorhanden. [6] So W; W 1 und Kap. S. 48, 4; Ch विभुवरि [7] So Ch; W 1 रन्ध; W 2 रन्धा; Kap. S. 48, 4 शनीवाल्युरंध्र [8] Offenbar verdorben; Böhtlingk vermuthet विभवस्ते (Brief vom 10. Sept. 1895); Kap. S. 48, 4 आचित्यै भूयो नमस्ते । य ऊर्मि° [9] So W; Ch हविष्ये; Kap. S. 48, 4 हविश [10] Ch त व [11] W 1 ऋध्या आसं; Kap. S. 48, 4 तं वायुरिध्यासं सोमस्याज्ञामसि

सं वस्सिञ्चन्तु मरुतस्सं पूषा सं धाता समिन्द्रस्सं बृहस्पतिः ।
सं वो ऽयमग्निस्सिञ्चतु प्रजया च धनेन च ।
आयुष्मन्तं कृणोत मा[1] ॥
मान्दा वशाः ॥
5 आपो देवीर्घृतमिदाप आसन्नग्नीषोमौ बिभ्रत्याप[2] इत्ताः ।
तीव्रो रसो मधुपृचामरंगम[3] आ मा[4] प्राणेन सह वर्चसागन् ॥
आदित्पश्याम्युत[5] वा शृणोम्या मा[6] घोषो गच्छति वाङ्न आसाम् ।
मेने[7] भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः ॥
समन्या[8] यन्त्युप[9] यन्त्यन्यास्समानमूर्वं नद्यः पृणन्ति ।
10 तमू शुचिं शुचयो दीदिवांसमपां नपातं परितस्थुरापः ॥
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ॥[10]
यो वश्शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥[11]
15 तस्मा अरंगमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥
स ईं वृषा जनयंस्तासु[12] गर्भं स ईं शिशुर्धयति तं रिहन्ति ।
सो अपां नपादूर्जयन्नप्स्वन्तर्वसुधेयाय[13] विधते विभाति[14] ॥

---

[1] Kap. S. 48, 4 युष्मं कृणोतु मा; weiter in Kap. S. größtentheils nur die Anfänge der Verse. [2] Hier beginnt das Fragment in T 4 (h); darnach habe ich accentuirt. [3] Accent corrigirt; T 4 मधुंपृचा°; Mâitr. S. 2, 13, 1 = Corr. [4] So T 4; Ch माः [5] Accent corrigirt; T 4 पश्याम्यत; cf. Mâitr. S. 2, 13, 1. [6] Dies मा fehlt in Ch. [7] Mâitr. S. 2, 13, 1 मन्ये [8] So T 4; Ch समन्ना [9] Accent corr.; T 4 यन्त्युप; cf. RV 2, 35, 3. [10] Dieser Vers in W 1 β nur abgekürzt gegeben; cf. RV 10, 9, 1. [11] Dieser und der folgende Vers fehlen in W 1 β ganz; cf. RV 10, 9, 2 und 3. [12] Kap. S. 48, 4 स ईं त्विषाजनयत्सु गर्भं [13] So T 4; Ch सुधेयाय [14] Kap. S. 48, 4 सोऽपा नपादनभिम्लातवर्णो न्यस्येवेह तंचा विवेश; stimmt also, von den Fehlern abgesehen, zu RV 2, 35, 13; am Schluß des Capitels findet sich dafür dieser Halbvers des Kâṭhaka; cf. RV 2, 35, 7; vgl. Schluß des Capitels.

इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः ।[1]
इहो सहस्रदक्षिणो रायस्पोषः प्रजायताम् ॥
अयं यज्ञो वर्धतां गोभिरश्वैरियं वेदिस्स्वपत्या सुवीरा[2] ।
इदं बर्हिरति बर्हींष्यन्येमं यज्ञं विश्वे अवन्तु देवाः ॥
स[3] आ दमे सुदुघा यस्य[4] धेनुस्स्वधां पीपाय सुभ्वन्नमत्ति[5] । 5
सो अपां नपादनभिम्लातवर्णो[6] ऽन्यस्येवेह तन्वा विवेष[7] ॥ ॥ ३ ॥
cf. Kap. S. 48, 4.

स्कन्ना द्यौस्स्कन्ना पृथिवी स्कन्नं विश्वमिदं हविः ।
स्कन्नादो[8] विश्वा भूतानि प्र स्कन्नं[9] जायतां हविः ॥
इह गावो ऽयं यज्ञः[10] ॥
पयस्वतीरोषधयः पयस्वन्मामकं[11] वचः । 10
अपां पयस्वद्यत्पयस्तेन नस्सह वर्धताम्[12] ॥
यद्वामृक्षच्छकुनिर्मुखेन निर्ऋते तव ।
अग्निष्टत्सर्वं शुन्धतु हव्यवाड् घृतसूदनः ॥
यद्वामृक्षच्छ्वपान्मुखेन[13] निर्ऋते तव ।
अग्निष्टत्सर्वं[14] शुन्धतु हव्यवाड् घृतसूदनः ॥ 15
भूतिरग्ना घृतेन वर्धतां यज्ञं यज्ञाय मुञ्चतु स्वाहा घृतेन वर्धतां
भूतिर्मुञ्चेमं यज्ञं मुञ्च यज्ञपतिमंहसस्स्वाहा ॥

---

[1] So corr. Ch und T 4 पूरुषाः; T 7 fol. 13 पुरुषाः; Kap. S. 48, 4 पूरुषाः [2] Ch सुवीरां; T 4 सुवीरः; Kap. S. 48, 4 सुवीरा [3] So die Mss.; besser Kap. S. 48, 4 स्व आ दमे wie RV 2, 35, 7. [4] So W 1; Ch यास्य; T 4 यास्य; cf. RV 2, 35, 7. [5] W 1 स्वभ्व°; Kap. S. 48, 4 सुभ्वंनमत्ति [6] Accent corrigirt; T 4 दनभिम्लातवर्णो; cf. RV 2, 35, 13. [7] Kap. S. 48, 4 सो पां नदूर्जयंनप्स्वांतर्वसुधेयाय विधते विभाति । W 1 विवेश [8] Kap. S. 48, 5 स्कंनादो [9] T 4 प्र स्कन्नाञ्जा°, vielleicht aber auch प्र स्कन्नञ्जा° [10] Diese Worte in T 4 abgebrochen; der Accent ergänzt. [11] So W 1, ohne Acc.; T 4 पयस्वान्मामकं; Ch पयस्वान्मामकं [12] RV 10, 17, 14 Schluß anders; Kap. S. 48, 5 अपां पयसो यत्पयस्तेन ते सह वर्वतां [13] So T 4 und W 1; Ch मृक्षच्छ्वपान्मु°; Kap. S. 48, 5 यदपाक्रक्षपां मुखेन [14] Kap. S. 48, 5 वायुष्टत्सर्वं

याँस्ते अग्ने समिधो अप्स्वन्तर्वेष्मन्पृथिव्या[1] उप सूर्ये याः ।
तास्ते गच्छन्त्वाहुतीर्घृतस्य[2] देवाव्ये यजमानाय शर्म ॥ ॥ ४ ॥
cf. Kap. S. 48, 5.
यज्ञस्य हि स्थ ऋत्विजा[3] इन्द्राग्नी कल्पना युवम् ।
हुताहुतस्य[4] तृम्पतमहुतस्य[5] हुतस्य च ॥[6]
5 हुतस्य चाहुतस्य चाहुतस्य हुतस्य च ।
पीतापीतस्य सोमस्यास्य हव्यस्येन्द्राग्नी वीतं पिबतमागतम् ॥
मेमं[7] यज्ञं तमो विदन्मर्त्विजो मो इमाः प्रजाः ।
मा[8] यस्सोमं पिबादिमं संसृष्टमुभयं कृतम् ॥
मा नो ध्वारिषुः[9] पितरो मोत देवा मा नस्सबन्धुरुत वान्यबन्धुः ।
10 मा[10] नो दुश्शंसो अघशंस ईशताहुतो ऽयं यज्ञो अप्येतु देवान् ॥
सप्तर्त्विजस्सप्त सदांस्येषां दश क्षिपो अश्विना पञ्चवाजा[11] ।
प्राणो व्यानो ऽपानो मन आकूतमग्निस्स्वाहा देवा हविरिदं जुषन्ताम्[12] ॥ ॥ ५ ॥ cf. Kap. S. 48, 6.
आत्मा यज्ञस्य रंह्या सुष्वाणः पवते सुतः ।
15 प्रत्नानि पाति काव्यः[13] ॥
गोषा इन्दो नृषा अस्यश्वसा वाजसा उत ।
आत्मा यज्ञस्य पूर्व्यः[14] ॥

---

[1] Kap. S. 48, 5 अप्स्वांतवरिमें पृथिव्या [2] Kap. S. 48, 5 तास्ते वर्धंत्याहुतो घृतस्य देवाव्य यजमानाय शर्म । [3] So corr. Mss. ऋत्विज, resp. ohne Acc.; Kap. S. 48, 6 यज्ञस्य हि स्थ ऋत्विजा यिंद्राग्नी कल्पना युवं ।; cf. RV 8, 38, 1; in TBr. 3, 7, 8, 3 ऋत्विंयौ । [4] So der Accent in T 4; ebenso TBr. 3, 7, 8, 3. [5] W 1 माहुतस्य [6] Kap. S. 48, 6 हुताहुतस्य तृंपतमहुतस्य हुतस्य वाहुतस्य वाहुतस्य च पीतापीतस्य etc. [7] So Ch, ohne Acc.; T 4 इमं; W इमं; aber Kap. S. 48, 6 मेमं [8] Kap. S. 48, 6 मो यं सोमं पिबादिमं संश्रिष्टमुभयं कृतं । [9] So corr. Ch द्वारिषुः; T 4 ध्वार्षो; W 1 etwa ध्वरिषुः; Kap. S. 48, 6 मो ना द्वारिषु [10] Kap. S. 48, 6 मो नो दुःशंसो etc. [11] So T 4; vielleicht वाज; W 1 वाजा oder वज्रा; Ch वाजः; Kap. S. 48, 6 सप्तर्त्विजः सप्त सदांस्येषां दश क्षिपो ऽश्विना पंच वाजाः । [12] Kap. S. 48, 6 प्राणो व्यानापानो मन आकूतमग्निः स्वाहा देवा हविर्हविरिदं जुषंता ॥ [13] Besser Kap. S. 48, 7 प्रत्नं निपाति काव्यं, also wie RV 9, 6, 8. [14] T 4 पूर्व्याः; cf. RV 9, 2, 10.

आत्मन्वन्नभो दुह्यते घृतं पय ऋतस्य योनिरमृतं विजायते ।
समीचीनास्सुदानवः प्रीणन्ति तन्नरो[1] हितमवमेहन्ति पेरवः ॥

देवा देवेषु श्रयन्तां प्रथमा द्वितीयेषु श्रयन्तां द्वितीयास्तृतीयेषु श्रयन्तां ये स्थ[2] त्रय एकादशास्त्रयश्च त्रिंशच्च त्रयश्च त्री च शता च त्रयश्च त्री च[3] सहस्रा त इमं यज्ञमवन्तु ते मामवन्त्वनु व आरभे ऽनु मारभध्वम् ॥ ६ ॥ cf. Kap. S. 48, 7.

वसवस्त्वोदीरयन्तु[4] रुद्रास्त्वोदीपयन्त्वादित्यास्त्वोच्छ्रयन्तु[5] विश्वे त्वा देवा दृंहन्तु ॥
ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् ।
देवा ह धर्मणा ध्रुवा यजमानः पशुभिर्ध्रुवः ॥

दिवि दिव्यान्दृंहान्तरिक्षे ऽन्तरिक्ष्यान्दृंह[6] पृथिव्यां पार्थिवान्दृंह ॥
आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलत्[7] ।
विशस्त्वा सर्वा वाञ्छन्तु[8] मा त्वद्यज्ञो अधिभ्रशत् ॥[9]
ध्रुवं ध्रुवेण हविषा हविरव[10] सोमं नयामसि ।
यथा न इन्द्रः केवलीर्विशो[11] बलिहृतस्करत्[12] ॥

स्वाहा दिवं आप्यायस्व स्वाहान्तरिक्षादाप्यायस्व स्वाहा पृथिव्या आप्यायस्वायुर्धा असि ध्रुवायुर्मे धेहि वयोधा असि ध्रुव वयो[13]

---

[1] So T4; desgl. W1, ohne Accent; Ch तच्चोरो; aber RV 9, 74, 4 तं नरो [2] T4 wohl यस्त [3] Die Worte शता च त्रयश्च त्री च [4] Dies Capitel nicht nur in T4, sondern auch T1 und T3 vorhanden; nicht nur in W1, sondern auch in W1ζ; der Schluß auch in G und Brl. [5] Zu त्वोदीपयन्त्वा° habe ich keine Variante notirt; Kap. S. 48, 9 रुद्रास्त्वोदीरयंतु [6] T3 न्तरिक्ष्यान्दृंह [7] So T4 हाषम°; aber T1, T3, Ch, W1ζ हर्षम°; W1 undeutlich; Kap. S. 48, 9 आ त्वाहारिषमंतरभूर्ध्रुवस्तिष्टाविचाचलत [8] Kap. S. 48, 9 सर्वास्संतु [9] Der ganze Vers in Brl fol. 69 genau übereinstimmend mit RV 10, 173, 1 gegeben, also von dieser Version wesentlich abweichend. [10] Kap. S. 48, 9 हविरप [11] So betont T1; T3 hat केवलीर्विशो; T4 केवलो°; W1ζ केवलीविश्वो [12] So betont T1; in T3 und T4 करत ohne Accent; vgl. RV 10, 173, 6. [13] Ch वयै

मे धेहि तनूपा असि ध्रुव तन्वं मे पाहि चक्षुष्पा असि ध्रुव चक्षुर्मे
पाहि वर्चोधा असि ध्रुव वर्चो मे धेहि ॥
अध्वर्यो[1] ऽयं यज्ञो अस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय ।
विश्वस्मै भूताय ध्रुवो अस्तु देवास्स पिन्वस्व घृतवद्देव[2] यज्ञ ॥
5 इहैवैधि माप च्योष्ठाः[3] पर्वत इवाविचाचलत्[4] ।
इन्द्र इवेह ध्रुवस्तिष्ठेह यज्ञमु धारय[5] ॥
इममिन्द्रो अदीधरद् ध्रुवं ध्रुवेण हविषा हविः ।
तस्मै सोमो अधिब्रुवत्तस्मा[6] उ ब्रह्मणस्पतिः ॥
ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे ।
10 ध्रुवं विश्वमिदं जगद् ध्रुवो राजा विशामसि[7] ॥ ॥ ७ ॥
cf. Kap. S. 48, 9.

असवे[8] स्वाहा वसवे स्वाहा वसुधेयाय स्वाहा भूपतये[9] स्वाहा
भुवनपतये स्वाहा भूतानां पतये स्वाहा भूताय[10] स्वाहा ॥
द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।
समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त[11] होत्राः ॥

---

[1] Von hier ab bis zum Schluß des Capitels der Text auch in T 6 fol. 12, G, Brl fol. 10; die Form अध्वर्यो, welche alle Mss. bieten, offenbar von einem noch nicht in den Wörterb. verzeichneten Adjectiv अध्वर्य von अध्वर; auch Kap. S. 48, 9 liest अध्वर्यो यं यज्ञो अस्तु; vgl. TS 3, 1, 9, 3 अध्वरो यज्ञो ऽयमस्तु [2] Kap. S. 48, 9 घृतवदेव; aber vgl. TS 3, 1, 9, 3 घृतवद्देव सोम [3] T 6 मापच्युष्ठाः; cf. RV 10, 173, 2. [4] Brl fol. 69 इवाविचाचलिः; ebenso Kap. S. 48, 9, ohne Accent; cf. RV 10, 173, 2. [5] Brl fol. 69 राष्ट्रमु धारय, wie RV 10, 173, 2. [6] So T 4 und Brl fol. 10, desgl. W 1, ohne Accent; Ch अधिध्रुव°; Kap. S. 48, 9 अधिब्रुवत्त°; dagegen T 1, T 3 und Brl fol. 69 अधिब्रवत्तस्मा; desgl. W 1 ζ, ohne Acc.; also wie RV 10, 173, 3. [7] So der Halbvers in T 6, W 1, G, Brl an beiden Stellen, und Kap. S. 48, 9; dagegen fehlt der erste Pâda ध्रुवं विश्वमिदं जगद् auffallenderweise in T 1, T 3, T 4 und Ch; in W 1 ζ ist derselbe nachträglich eingeschoben. [8] Von hier wieder allein nach T 4 accentuirt. [9] भूपति hier ganz richtig, gemäß Pâ. 6, 2, 19 oxytonirt, was noch nicht belegt zu sein scheint; dem gegenüber भुवनपति gemäß Pâ. 6, 2, 20. [10] Kap. S. 48, 9 भूतये; von dem folgenden Verse in Kap. S. nur die Anfänge gegeben. [11] So corr. T 4 सप्त; cf. RV 10, 17, 11; Mâitr. S. 2, 5, 10.

यस्ते द्रप्सस्स्कन्दति[1] यस्ते अंशुर्बाहुच्युतो धिषणाया उपस्थे ।
अध्वर्योर्वा परि वा यः पवित्रात्तन्ते जुहोमि मनसा वषट्कृतम् ॥
यो द्रप्सो अंशुः[2] पतितः पृथिव्यां परिवापात्पुरोडाशात्करम्भात् ।
धानासोमान्मन्थिन[3] इन्द्र शुक्रात्स्वाहाकृतमिन्द्राय तं जुहोमि ॥
यस्ते द्रप्सो मधुमाँ[4] इन्द्रियावान्स्वाहाकृतः पुनरप्येति देवान् । 5
अध्वर्योर्वा परि वा यः पवित्रात्तन्ते जुहोमि मनसा वषट्कृतम् ॥
यस्ते द्रप्सस्स्कन्दति[5] यस्ते अंशुरवश्च यः परो दिवः ।
अयं देवो बृहस्पतिस्सं तत्सिञ्चतु राधसा ॥ ॥ ८ ॥
cf. Kap. S. 48, 9 a. A.
विसृष्टधेनास्सलिला[6] घृतश्च्युतो[7] वसन्तो ग्रीष्मो मधुमन्ति वर्षाः[8] ।
शरद्धेमन्त ऋतवो मयाभुव उदप्रुतो नभसी[9] संवसन्ताम्[10] ॥ 10
आ नः प्रजामा देवानां त्वमग्ने व्रतपा असि ॥
यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः ।
अग्निष्टद्विश्वमापृणाति विद्वान्येभिर्देवाँ ऋतुभिः कल्पयाति ॥
मधुश्च माधवश्च वासन्तिका[11] ऋतू शुक्रश्च शुचिश्च ग्रैष्मा ऋतू
नभश्च नभस्यश्च वार्षिका ऋतू इषश्चोर्जश्च शारदा ऋतू सहश्च सह- 15
स्यश्च हैमन्तिका ऋतू तपश्च तपस्यश्च शैशिरा ऋतू त इमं यज्ञमव-
न्तु ते मामवन्त्वनु व आरभे ऽनु मारभध्वम् ॥ ९ ॥ cf. Kap. S. 48, 10.
असवे स्वाहा वसवे स्वाहा विभवे[12] स्वाहा विवस्वते स्वाहा
शूषाय स्वाहा संसर्पाय स्वाहा मलिम्लुचाय स्वाहा गणश्रिये[13] स्वाहा

---

[1] Kap. S. 48, 9 पतति für स्कन्दति; cf. RV 10, 17, 12. [2] Kap. S. 48, 9 यो अंशुद्रप्सः पतितः पृथिव्यामिति; aber cf. TS 3, 1, 10, 1. [3] So W 1, ohne Accent; T 4 धानासोमंन्मन्थिनं; Ch धानासोमा मंथित; cf. TS 3, 1, 10, 1. [4] Kap. S. 48, 9 मधुमं; cf. TS 3, 1, 10, 2. [5] Kap. S. 48, 9 यस्ते द्रप्सः स्कंन इति; also wie RV 10, 17, 13. [6] Kap. S. 48, 10 सरिरा [7] T 4 wohl घृतश्चुतो; Kap. S. 48, 10 घृतश्रुतो [8] Dies Wort in T 4 abgebrochen; Accent ergänzt. [9] Accent corr.; T 4 नंभंसो [10] Accent ergänzt; in T 4 dies Wort ohne Accent. [11] So T 4; Ch वस°; Kap. S. 48, 10 वासंतिकावृत [12] Auch Kap. S. 48, 8 विभवे; aber Mâitr. S. 3, 12, 11 विभ्वे; TBr. 3, 10, 7 विभुवे [13] T 4 गणश्रिये; Kap. 48, 8 गणास्त्रये

चन्द्राय स्वाहा ज्योतिषे स्वाहाभिभवे[1] स्वाहाधिपतये स्वाहा दिवा-
पतये[2] स्वाहेन्द्रस्य गृहो ऽस्यगृहीतो[3] ग्राह्यो[4] देवानां पूरसि तां त्वा
प्रविशामि तां त्वा प्रपद्ये सह गृहैस्सह[5] प्रजया सह पशुभिस्सहर्त्वि-
ग्भिस्सह सदस्यैस्सह सोम्यैस्सह दक्षिणीयैस्सह यज्ञेन सह यज्ञपति-
ना ॥ इन्द्राग्नी परिधी मम वाता देव पुरा कृता[6] तस्त्वेन्द्रग्रह[7] प्रपद्ये
संगुस्साश्वस्संपूरुषस्सह यन्मे ऽस्ति तेन ॥ अरिष्ट्या[8] अव्यथ्यै संवेशा-
योपवेशाय[9] गायत्र्यै छन्दसे ऽभिभुवे[10] स्वाहारिष्ट्या अव्यथ्यै संवेशा-
योपवेशाय[11] त्रिष्टुभे जगत्या अनुष्टुभे छन्दसे ऽभिभुवे[12] स्वाहा ॥ १० ॥
cf. Kap. S. 48, 8 (nur der Anfang) und 48, 12; Mâitr. S. 3, 12, 11; TBr. 3, 10, 7.

द्यौश्च त्वा पृथिवी च श्रीणीतामहश्च त्वा रात्री च श्रीणीतां वा-
क्[13] च त्वा मनश्च श्रीणीतामापश्च त्वौषधयश्च श्रीणन्त्वृक् च त्वा साम
च श्रीणीतां स्तोमश्च त्वा यजुश्च श्रीणीतां बृहच्च[14] त्वा रथंतरं[15] च
श्रीणीतां यज्ञश्च त्वा दक्षिणा च श्रीणीतां सूर्यश्च त्वा चन्द्रमाश्च
श्रीणीतां दर्शश्च त्वा पूर्णमासश्च[16] श्रीणीतां ब्रह्म च त्वा क्षत्रं च श्री-
णीतामर्कश्च त्वाश्वमेधश्च श्रीणीतां श्रीतस्त्वं श्रीतो ऽहमिन्दुरिन्दुम-
वाग्नस्तस्य[17] त इन्द इन्द्रियावत इन्द्रपीतस्य सर्वगणस्सर्वगणस्योपहूत
उपहूतस्य भक्षयामि ॥ ११ ॥ cf. Kap. S. 48, 11.

---

[1] Diese beiden Worte fehlen in T4, daher der Accent von mir ergänzt; cf. oben विभवे; Kap. S. 48, 8 स्वाहा अभिभवे; Mâitr. 3, 12, 11 स्वाहाभिभ्वे; TBr. 3, 10, 7 अभिभुवे [2] So der Accent in T4; Kap. S. 48, 8 दिवापतये; TBr. 3, 10, 7 दिवा पतये [3] Accent corrigirt; T4 स्यग्रहीतो; ebenso Ch, ohne Acc.; W1 स्यग्रहीतो; Kap. S. 48, 12 स्यगहीते [4] So corr. Ch ग्रह्यो; Accent ergänzt, da das Wort in T4 fehlt; Kap. S. 48, 12 ग्राह्यो [5] Kap. S. 48, 12 ग्रहैः [6] Auch Kap. S. 48, 12 इंद्राग्नी परिधी मम वातो देव पुरा कृता [7] Kap. S. 48, 12 तयेंद्रग्रहः [8] अरिष्ट्या in T4 ohne Accent. [9] Accent ergänzt, da संवेशायोपवेशाय in T4 fehlt. [10] Auch Kap. S. 48, 12 भिभुवे [11] Von संवे॰ an bis zum Ende des Capitels in T4 weggebrochen, daher der Accent ergänzt. [12] Auch Kap. S. 48, 12 भिभुवे [13] Kap. S. 48, 11 liest वाक च त्वा सहश्च श्रीणीतां चक्षुश्च त्वा श्रोत्रं च श्रीणीतां ब्रह्म च त्वा क्षत्रं च श्रीणीतां दक्षश्च त्वा बलं च श्रीणीतामोजश्च त्वा सहश्च श्रीणीतामर्क च त्वा सामश्च श्रीणीतां स्तोमश्च त्वा यजुश्च श्री॰ etc. [14] Ch बृहश्च [15] Accent corrigirt; T4 रथंतरं [16] W1 मासाश्च; Kap. S. 48, 11 पौर्णमासश्च [17] Kap.

विश्वा अग्ने त्वया वयं धारा उदन्या[1] इव ।
अतिगाहेमहि द्विषः ॥[2]
या देव्यष्टकास्यपसामपस्तमा[3] स्वपा असि ।
तस्यै त एना हविषा विधेम त्वं यज्ञे वरुणस्यावया असि ॥[4]
श्रुत्कर्णाय[5] ॥ 5
अनुमते ऽनुमन्यस्व[6] न इदं[7] यद्भेषजं कृणुमहे तनूषु[8] ।
यन्नो तोकेषु तनुषु प्रजासु यन्नोष्ध्वोषधीष्वप्सु[9] ॥ ॥ १२ ॥
cf. Kap. S. 48, 12 (am Ende).

हिरण्यगर्भः ॥
तदित्पदं न विचिकेत विद्वान्यन्मृतः[10] पुनरप्येति जीवान् ।
त्रिवृद्भुवनं यद्रथवृञ्जीवो गर्भो न मृतस्स्वाहा[11] ॥ 10
आप्यायस्व सं ते पयांसि[12] ॥
आप्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः ।
भवा नस्सुश्रवस्तमस्सखा वृधे ॥[13] ॥ १३ ॥
cf. Kap. S. 48, 13.

---

S. 48, 11 liest मृतस्त्वं मृतो हंमिंदुरिदुमवागादुभे सोमाः समस्त्विवचत तस्य त इंद्रविंद्रपीतस्य चेंद्रियावतः सर्वगणस्य सर्वगण उपहूतस्य तच्चयामि ॥

[1] So T 4; desgl. W und Kap. S. 48, 12, ohne Accent; Ch उदन्यो [2] Der ganze Vers so in Kap. S. 48, 12, ohne Accent. Vgl. RV 2, 7, 3. [3] W 1 दिव्यष्टकामस्य° [4] Der Vers lautet Kap. S. 48, 12 या देव्यष्टका स्वपसामपस्तमा सर्वंऽग्रसि । तस्यै तेन हविषा विधेम त्वं यज्ञे वरुणस्यावयासि ॥ [5] Kap. S. 48, 12 श्रुत्कर्णाय कवयिष्वाय । [6] Kap.S. 48, 12 अनुमते अनुमन्यस्व [7] Accent corrigirt; T 4 न इदं; W 1 न इदं; Ch त इदं [8] Kap. S. 48, 12 कृणुम ये तरूषु [9] Kap. S. 48, 12 यद्गोष्ठ्म्वेष्टोषधीष्वप्सु । daraus ergiebt sich die metrisch bessere Lesung यद्गोष्वश्वेष्वोषधीष्वप्सु । [10] So corr. T 4 यन्दृतः; ebenso Ch, ohne Accent; W 1 यन्दृतः, über dem न्दृ ist aber न्दृ darüber geschrieben, offenbar als Correctur; W यद्दृतः; aber Kap. S. 48, 13 यं मतः; vgl. TBr. 3, 7, 10, 6 यन्मृतः [11] So T 4; desgl. W 1, ohne Accent; Ch यद्रथवृंज्जीवो गभो न मतस्स्वाहा; Kap. S. 48, 13 sehr verdorben तृवृद्भुवनं यद्रथकजीवो गर्भा न मृतस्वाहा [12] Accent ergänzt, da die letzten 3 Worte in T 4 abgebrochen sind. [13] Kap. S. 48, 13 आप्यायस्व सं ते पयांस्याप्यायस्व मदिंतम । स्वर्गं सधिष्ठव । तपो ष्वग्ने u. s. w. Damit sind wir schon in dem Text des folgenden Kâṭhaka-Capitels, das ebenfalls noch in Kap. S. 48, 13 enthalten ist.

अप्स्वग्ने ॥
तपो ऽष्वग्ने अन्तराँ[1] अमित्रान्तपा शंसमररुषः[2] परस्य ।
तपो वसो चिकितानो अचित्तान्वि ते तिष्ठन्तामजरा अयासः[3] ॥
यो नस्सनुत्यो अभिदासदग्ने यो अन्तरो मित्रमहो अनुष्यात्[4] ।
5 तमजरेभिर्वृषभिस्तव स्वैस्तपा[5] तपिष्ठ तपसा[6] तपस्वान् ॥
स स्मा[7] कृणोतु केतुमा नक्तं[8] चिद्दूर आ सते[9] ।
पावको यद्वनस्पतीन्प्र स्मा मिनात्यजरः[10] ॥
नहि ते अग्ने तन्वः क्रूरमानंश मर्तः[11] ।
कपिर्बभस्ति[12] तेजनं स्वं जरायु गौरिव ॥
10 मेष इव यदुप च वि च चर्वति[13] यदप्सरद्रूरुपरस्य[14] खादति ।
शीर्ष्णा शिरो वक्षसा वक्ष एजयन्नंशुं बभस्ति[15] हरितेभिरासभिः[16] ॥
सुपर्णा वाचमक्रतोप द्यव्याखरे कृष्णा इषिरा अनर्तिषुः[17] ।
न्यूङ् नियन्त्युपरस्य निष्कृतं पुरू रेतो दधिरे सूर्यश्वितः[18] ॥ ॥ १४ ॥
cf. Kap. S. 48, 13.

---

[1] Accent corrigirt nach RV 3, 18, 2; T 4 ष्वंग्ने अन्तरीं [2] Accent zum Theil ergänzt nach RV 3, 18, 2; in T 4 तपा शंस abgebrochen; Ch शंसाम° [3] अयासः in T 4 abgebrochen; Accent ergänzt nach RV 3, 18, 2. [4] So T 4; desgl. Ch, ohne Accent; W 1 आनु°; Kap. S. 48, 13 वनुस्या । scheint mehr zu RV 6, 5, 4 वनुष्यात् zu stimmen. [5] W भिस्तपस्वैस्तप; Kap. S. 48, 13 भिस्तपिस्वैस्तपा [6] तपसा fehlt in Ch. [7] Ch सस्मा; aber T 4 संम्मा; desgl. W 1, ohne Accent. [8] So T 4; desgl. W 1; Ch नक्कुं; Kap. S. 48, 13 नक्तं [9] So der Vers auch in Kap. S. 48, 13, nur ohne Accent. [10] So corr.; Mss. सिना° Kap. S. 48, 13 प्र स्मा मिनात्यजरः ।; cf. RV 5, 7, 4; Âp. 14, 29, 3. [11] Kap. S. 48, 13 तन्वैः क्रूरमानस मर्त्यः ।; TÂr 6, 10, 1 तनुवै क्रूरं चकार मर्त्यः । [12] So T 4; desgl. W 1, ohne Accent; Ch कपि ऊभस्ति; Kap. S. 48, 13 कविर्बिभस्ति तेजनं पुनर्जरायु गौरिव [13] Accent corrigirt; T 4 चर्वंतिं [14] So T 4, desgl. Ch und W 1, ohne Accent; Böhtlingk (Brief vom 10. Sept. 1895) vermuthet रद्रोरुप° und möchte in अप्सरद्रु den Namen einer sonst unbekannten Pflanze sehen. Wegen der Unsicherheit der Sache habe ich den Text trotz des ansprechenden Gedankens nicht geändert. Kap. S. 48, 13 मेख इव वेशं च यदुप व वि चर्यशि यदप्सरुद्रैः रुपरस्य षदसि cf. AV 6, 49, 2; Âp. 14, 29, 3. [15] So T 4 und W 1; Ch बबस्ति; Kap. S. 48, 13 बिभस्ति; cf. folgende Anm. [16] Ch हरितिभि°; Kap. S. 48, 13 शोर्ष्णां शिरो वत्तसा वत्त खेजयन ँशु बिभस्ति हरितेभिरासभिः । [17] Ch द्यवाखरे कृष्णा इषोरा अनर्तिषु; cf. übrigens RV 10, 94, 5 [18] W 1 सूर्यश्चितः; Kap. S. 48, 13 सूर्यंभृतः

अग्निना तपो ऽन्वाभवत्सूर्येण[1] तेजो वायुना प्राणा इन्द्रेण देवा यमेन पितरस्सरस्वत्या मनुष्यास्सप्रदर्शेन स्तोमा वामदेव्येन सामानि गायत्र्या छन्दांसि मरायां[2] रूपाणि हिरण्येन वर्चांसि तिरश्चिराजिना सर्पा अजगरेणास्सव्याश्श्येनेन पतत्रिणो व्याघ्रेणारण्याः पशवस्सुपर्णेन वयांस्यश्वत्थेन वनस्पतय ओदनेनान्नानि यवेनौषधयो ऽश्ववृषेणैक- 5
शफाः पशवो वृषभेण गावो वृष्णिनावयो[3] बस्तेनाजाश्चन्द्रमसा नक्ष- त्राणि ब्राह्मणेन वाचो[4] वाचा देवतास्त्रिया विराड् ग्राव्णा पर्वता- स्समुद्रेणापो ऽद्भिस्सत्यं सत्येनर्तमृतेन तपस्तपसा परमेष्ठी परमेष्ठिना मृत्युर्मृत्युना प्रजाः प्रजाभिस्संगरस्तनूभिः प्रजापतिस्तैर्देवैरन्वाभूतिरनु च भूयासमति च भूयासं ब्राह्मणानां श्रैष्ठ्यश्च भूयासम् ॥ १५ ॥ 10
cf. TS 7, 3, 14.

यस्य द्रोणकलश उपदस्यति कलशमेव तस्योपवायन्तं प्राणो ऽनूपदस्यति[5] प्राणो हि सोमस्तदाहुः पयो ऽवनयेदित्यथो खल्वाहुर- न्तर्हितमिव[6] वा एतद्यत्पयो[7] हिरण्यमेवापो ऽभ्यवनयेद्धिरण्यमभ्यु- न्नयेदमृतं वा आप आयुर्हिरण्यममृतादेवाध्यायुरात्मन्धत्ते[8] चत्वारो वरा देया ब्रह्मण उद्गात्रे होत्रे ऽध्वर्यव एते वै यज्ञस्येन्द्रास्तानेव[9] प्री- 15
णाति सैव तत्र प्रायश्चित्तिर्यस्य चमस उपदस्यति चमसमेव तस्यो- पवायन्तं प्राणो ऽनूपदस्यति[10] प्राणो हि सोमो यमध्वर्युरन्तमं ग्रहं गृह्णीयात्तस्य संपातमवनयेत्प्रायश्चित्त्यै[11] वै सोमो गृह्यते प्रायश्चि-

---

[1] पो न्वाभवत् in T4 weggebrochen, daher der Accent ergänzt; TS 7, 3, 14 तपो ऽन्वभवत्; Kap. S. 48, 13 a. E. अग्निः स्तपसा न्वाभव सूर्येण तेजो वायुनाः प्राणाः ॥ Mit diesen Worten schließt 48, 13 und weiter findet sich dort nichts, was Kâṭh. 35, 15 entspräche. [2] W1 मरणया [3] Von वृष्णिना bis नक्षत्राणि in T4 weggebrochen, daher Accent ergänzt. [4] Accent corrigirt; T4 वाचो [5] Kap. S. 48, 14 प्राणेनोपदस्यति; vgl. weiter unten. [6] T4 तमेव, doch ohne Accent, was einen Fehler noch wahrscheinlicher macht; Kap. S. 48, 14 तमिव [7] पयो in T4 ohne Accent; dieser daher ergänzt. [8] So corr. in Anlehnung an Kap. S. 48, 14; Mss. ध्यायुनात्म°; in T4 fehlt auch das ध्या; Kap. S. 48, 14 ममृतादेवाध्यायुरात्मं धत्ते [9] Ch द्रस्ता° [10] Kap. S. 48, 14 प्राणेनोपदस्यति; vgl. oben. [11] T4 सम्पतांम°; Kap. S. 48, 14 संपातम°

स्यैवास्मै प्रायश्चित्तिं करोति सर्वमायुरेति[1] सैव तत्र प्रायश्चित्तिर्यस्य[2]
ग्रावापिशीर्यते[3] पशुभिर्व्यृध्यते पशवो हि ग्रावाणो द्युतानस्य[4] मा-
रुतस्य ब्रह्मसाम्नेन स्तुवीरन्पशवो वै द्युतानो मारुतस्स्वेनैवैनं साम्ना
संदधाति पशुमान्भवति सैव तत्र प्रायश्चित्तिः प्रजापतये स्वाहेत्यभ-
5 क्षणीयानुपरवेष्ववनयेत्प्राजापत्यो[5] वै सोमः प्रतिष्ठामेवैनं[6] गमयति
सैव तत्र प्रायश्चित्तिर्यस्य सोममभिदहेद्ग्रहानध्वर्युस्स्याशयेत[7] स्तोत्रा-
ण्युन्नाता शस्त्राणि होताथ यथापूर्वं यज्ञेन चरेयुः पञ्च वरा देयाः
पाङ्क्तो यज्ञो यज्ञमेवावरुन्द्धे ऽवभृथं[8] गत्वा पुनरुदेत्य पुरा[9] द्वादश्याः
पुनर्दीक्षेत यद्द्वादशीमतिनयेदन्तर्धीयेत[10] तत्र ता दक्षिणा दद्याद्याः[11]
10 पूर्वस्मिन्दास्यन्भवति सैव तत्र प्रायश्चित्तिः ॥ १६ ॥ cf. Kap. S. 48, 14.

सर्वान्वा एषो ऽग्नौ कामान्प्रवेशयते यो ऽग्निमन्वाधाय व्रतमुपै-
ति[12] स यदनिष्ट्वा प्रयायादकामप्रीता एनं कामा नानु प्रयायुरतेजा[13]
अवीर्यस्स्यात्स प्रयास्यञ्जुहुयात् ॥

तुभ्यं ता अङ्गिरस्तम[14] विश्वास्सुक्षितयः पृथक् ।
15 अग्ने कामाय येमिरे ॥

इति कामानेवास्मिन्दधाति कामप्रीता एनं कामा अनु प्रयान्ति
तेजस्वी वीर्यावान्भवति संततिर्वा एषा यज्ञस्य यो ऽग्निमन्वाधाय
व्रतमुपैति स यदनिष्ट उद्वायाद्विच्छित्तिरेवास्य[15] सा[16] प्राञ्चमुद्धृत्य[17] म-

---

[1] Kap. S. 48, 14 fügt hier ein पशुमान्भवति [2] W 1 त्तिः ॥ यस्य; ebenso auch Kap. S. 48, 14. [3] Kap. S. 48, 14 ग्रावावशीर्यते [4] W 1 द्युतान मा°; Kap. S. 48, 14 द्युतानस्य मा° [5] त्यभक्षणीयानुपरवे fehlt in T 4; der Accent daher ergänzt. [6] Ch प्रतिष्ठा प्रतिष्ठामे° [7] T 4 ग्रांहान°; Kap. S. 48, 14 द्वाहानध्वर्युः पाशयेत [8] Accent in वभथं ergänzt; Kap. S. 48, 14 अवभथं [9] W 1 पुरो [10] दन्तर्धीयेत fehlt in T 4; Accent daher ergänzt. [11] So T 4, desgl. W 1, ohne Accent; Ch ता दक्षिणा दक्षिणाद्याः; Kap. S. 48, 14 ता दक्षिणा दद्याः द्योः पू° [12] न्वाधाय व्रतमुपैति in T 4 abgebrochen, daher Accent ergänzt. [13] W 1 कामाननुप्र°; Kap. S. 48, 15 कामाननुप्रयानुर°; aber cf. TBr. 3, 7, 1, 1. [14] Ch अंगिरसस्तम; cf. RV 8, 43, 18. [15] Ch पैति त्य यदनिष्ट उद्वायाद्विश्छित्तिरेवास्य; Kap. S. 48, 15 स यद द्रो धायाद्विछित्तिरेवास्य; cf. TBr. 3, 7, 1, 2 स यदुद्वायति [16] Ch स; Kap. S. 48, 15 सा [17] मुद्धृत्य in T 4 abgebrochen; Accent ergänzt.

नसोपतिष्ठेत मन इव वै प्रजापतिः प्राजापत्यो यज्ञो यज्ञमेव संत-
नोति[1] भूरिति व्याहरेद्भूतो वै प्रजापतिर्भूतिमेवोपैत्यायुषा[2] वा एष
वीर्येण व्यृध्यते यस्याहिताग्नेरग्निरपक्षायति[3] स[4] यावच्छम्यया[5] परा-
विध्येद्यदि[6] तावदपक्षायेत्तं[7] संभरेत् ॥
इदं त एकं पर ऊ त एकं तृतीयेन[8] ज्योतिषा संविशस्व । 5
संवेशनस्तन्वे[9] चारुरेधि प्रियो देवानां परमे जनित्रे ॥

इति ब्रह्मणैवैनं संभरति[10] सैव तत्र प्रायश्चित्तिर्यदि परस्तरामप-
क्षायेदनुप्रयाय[11] वसेत्सैव तत्र प्रायश्चित्तिरोषधीर्वा एतस्य पयः पशू-
न्प्रविशति यस्य हविषे ऽपाकृता वत्सा धयन्ति[12] वायव्यां यवागूं[13]
निर्वपेद्वायुर्वै पयसः प्रदाता तमेव भागधेयेनोपधावति सो ऽस्मै 10
पयः प्रयच्छत्यथोत्तरस्मै हविषे वत्सानपावर्तयेत्सैव[14] तत्र प्रायश्चि-
त्तिः ॥ १७ ॥ cf. Kap. S. 48, 15; TBr. 3, 7, 1, 1—6.

अर्धं[15] वा एतस्य यज्ञस्य मीयते यस्य सायं दुग्धं हविरार्तिमार्छे-
त्तीन्द्राय व्रीहीन्निरुप्योपवसेत्पयो[16] वा ओषधयः पय एवारभ्योपव-

---

[1] यज्ञमेव संतनोति in T 4 abgebrochen; Accent ergänzt. [2] Von मेवोपैत्या° bis स याव (incl.) in T 4 weggebrochen; daher Accent ergänzt. [3] Kap. S. 48, 15 यद्यग्निहि° [4] स fehlt in Ch, dafür scheint nachträglich प्र eingeschaltet. [5] Ch यावद्यच्छम्यया [6] Ch विध्यद्यदि; T 4 विध्येद्यदेताव°; Kap. S. 48, 15 विधेद्यदि [7] Ch पक्षायेति; W 1 पक्षायत्तं [8] Der Vers bis hierher in T 4 abgebrochen; Accent ergänzt nach RV 10, 56, 1. [9] Am nächsten stimmt TBr. 3, 7, 1, 4 संवेशनस्तनुवै; Kap. S. 48, 15 संवेशन्वने त चारुरेधि stimmt eher zu RV 10, 56, 1 संवेशने तन्व-श्चारु° [10] Kap. 48, 15 प्रहरति statt संभरति [11] W 1 क्षावेदनप्रायाय [12] Kap. S. 48, 15 वयंति; TBr. 3, 7, 1, 4 धयन्ति [13] Von यवागू bis वै in T 4 abgebrochen, daher Accent ergänzt. [14] So corr. mit Caland; T 4 वत्सानुपावर्तयेत् desgl. Ch, ohne Accent; ebenso Kap. S. 48, 15; W 1 नपावर्तये°; TBr. 3, 7, 1, 6 वत्सानपाकुर्यात्; vgl. das folgende Capitel an mehreren Stellen; obwohl die Lesart नुपावर्तयेत् in der Kap. S. consequent durchgeführt ist, in Kâṭh. stets zum mindesten auch vorliegt, und obwohl man eher von ihr zu नपावर्तयेत् gelangt, als umgekehrt, habe ich doch aus sachlichen Gründen Calands Besserung durchgeführt. [15] Der Anfang des Capitels bis यस्य fehlt in T 4, daher Accent ergänzt; übrigens cf. das Ende des Capitels. [16] निरुप्योपवसेत् fehlt in T 4; Accent ergänzt.

सति यत्प्रातस्स्यात्तच्छृतं कुर्युरैन्द्र इतरः पुरोडाशस्स्यात्पयो वा ओष-
धयः पयसैवास्मै[1] पयः[2] प्रदापयत्यथोत्तरस्मै हविषे वत्सानपावर्तये-
त्सैव[3] तत्र प्रायश्चित्तिरुभयान्वा एष देवान्भागधेयेन व्यर्धयति ये
यजमानस्य सायं च प्रातश्च गृहमागच्छन्ति यस्य सायं प्रातर्दुग्धं[4] ह-
5 विरार्तिमार्छत्योदनं पञ्चशरावं निर्वपेदग्निं देवतानां[5] प्रथमं[6] यजेद-
ग्निमुखा एव देवताः प्रीणात्यग्निं वा अन्वन्या देवता इन्द्रमन्यास्ता[7]
एवोभयीः प्रीणात्यथोत्तरस्मै हविषे वत्सानपावर्तयेत्सैव[8] तत्र प्राय-
श्चित्तिर्यत्कीटावपन्नेन[9] जुहुयादप्रजा[10] अपशुर्यजमानस्याद्यदनायत-
ने[11] निनयेदनायतनस्स्यान्मध्यमेन पर्णेन द्यावापृथिव्ययचान्तःपरिधि
10 निनयेद् द्यावापृथिवी वै यज्ञस्य प्रतिष्ठा प्रतिष्ठामेवैनं गमयति सैव
तत्र प्रायश्चित्तिर्यत्प्रयाजेष्वनिष्टेषु प्राङङ्गारस्स्कन्देदध्वर्यवे च यजमा-
नाय चार्कं स्याद्यद्दक्षिणा ब्रह्मणे च यजमानाय चार्कं स्याद्यत्प्रत्यङ्
होत्रे च पत्न्यै चार्कं स्याद्यदुदङ्ङग्नीधे च यजमानस्य च पशुभ्यो ऽर्कं
स्यात्तं प्रहरेत् ॥

15 सहस्रशृङ्गो वृषभो जातवेदास्स्तोमपृष्ठो घृतवान्सुप्रतीकः ।
मा मा हासीन्नाथितो नेत्त्वा[12] जहानि सहस्रपोषस्स्व गोपोषं च यच्छ ॥
इति ब्रह्मणैवैनं प्रहरति सैव तत्र प्रायश्चित्तिरर्धं वा एतस्य यज्ञस्य

---

[1] Ch पयः पयसैवास्मै (Dittographie). [2] Dies पयः fehlt in W 1. [3] So T 4 वत्सानपावर्तयेत्; desgl. W 1, ohne Accent; TBr. 3, 7, 1, 7 वत्सानपाकुर्यात्; Ch वत्सानुपा°; desgl. Kap. S. 48, 16; vgl. weiter unten, sowie das Ende des vorigen Capitels. [4] Ch प्रातर्मुग्धं; in T 4 प्रातर्दु abgebrochen; W 1 प्रातर्दुग्धं; desgl. Kap. S. 48, 16. [5] So corr. Mss. ग्निर्देवतानां; Kap. S. 48, 16 निर्वपेदग्निं देवानां प्रथमं निर्वपेद°; TBr. 3, 7, 1, 8 अग्निं देवतानां प्रथमं यजेत् [6] Von प्रथमं bis एव in T 4 abgebrochen; Accent ergänzt. [7] Von द्रमन्या bis त्तरस्मै in T 4 abgebrochen; Accent ergänzt. [8] So corr. mit Caland; Ch und Kap. S. 48, 16 वत्सानुपावर्तयेत्; T 4 वत्सान्नपावर्त° oder नपावर्त°; W 1 न्नयावर्त° [9] W 1 त्तिः ॥ यत्कीटापवन्नेप [10] So T 4 und W 1, ohne Accent; Ch जुहुयाचप्रजा; दप्रजा in T 4 ohne Accent; der Accent nach dem folgendem Capitel ergänzt. [11] T 4 दानायतने [12] So Ch, ohne Acc.; T 4 नेत्त्व; W 1 नेत्वा; Kap. S. 48, 16 मेत्वा जहामि; vgl. AV 13, 1, 12; TBr. 3, 7, 2, 7.

मीयते[1] यस्य व्रत्ये ऽहन्पत्न्यनालम्भुका[2] भवति तामपरुध्य यजेत स-
र्वेणैव यज्ञेन यजते[3] तामिष्ट्वोपह्वयेत[4] ॥
सा त्वमस्यमो ऽहममो ऽहमस्मि सा त्वम्[5] ।
ता एहि संरभावहै पुंसे पुत्राय कर्तवे[6] ।
रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥
इत्यर्ध एवैनामाभजति[7] सैव तत्र प्रायश्चित्तिः ॥ १८ ॥
cf. Kap. S. 48, 16; TBr. 3, 7, 1, 6—9; 3, 7, 2, 6 und 7.

यदववृष्टेन[8] जुहुयादपरूपमस्यात्मञ्जायेत[9] यत्प्रत्येयात्पापीयान्स्या-
द्यन्न[10] जुहुयादार्तिमार्छेत् ॥
मित्रो जनान्यातयति प्रजानन्मित्रो दाधार[11] पृथिवीमुत द्याम् ।
मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय[12] हव्यं घृतवद्विधेम[13] ॥ 10

इति मैत्र्यर्चा समिधमाधाय होतव्यं मित्रो वै यज्ञस्य शान्तिर्मि-
त्रेणैवैनच्छमयति[14] तद्धुत्वाथान्यां[15] दुग्ध्वा पुनर्होतव्यं सैव तत्र प्राय-
श्चित्तिर्यत्कीटावपन्नेन जुहुयादप्रजा[16] अपशुर्यजमानस्याद्यन्न जुहुया-

---

[1] Accent corrigirt; T 4 मीयते [2] Kap. S. 48, 16 यस्य व्रत्ये हं पत्न्यनालंभुका भवति; TBr. 3, 7, 1, 9 यस्य व्रत्ये हन् पत्न्यनालम्भुका भवति [3] So T 4 und W 1; Ch यजते; Kap. S. 48, 16 यजते; cf. TBr. 3, 7, 1, 9. [4] So corr. mit Caland; Ch पह्वयेत Kap. S. 48, 16 ष्ट्वोपह्वयते; TBr. 3, 7, 1, 9 ष्ट्वोपह्वयेत [5] Kap. S. 48, 16 द्यौरहं पृथिवी त्वं मश्रुसामाहममो हमस्मि सा त्वं सा त्वमस्मि मोहं; TBr. 3, 7, 1, 9 अमूहमस्मि सा त्वम्; cf. AV 14, 2, 71. [6] Kap. S. 48, 16 तावेहि संरभावहौ पुंसे पुत्राय कर्त्तवे इत्यर्ध etc. (der dritte Halbvers, resp. die Worte रायस्पोषाय u. s. w. fehlen in Kap. S.). [7] So corr. Mss. एवैनम°; aber Kap. S. 48, 16 इत्यर्ध एवैनां तदाभवति; TBr. 3, 7, 1, 9 अर्द्ध एवैनामुपह्वयते [8] So T 4, desgl. Ch, ohne Accent; ebenso TBr. 3, 7, 2, 3; Kap. S. 48, 17 यदयवृष्टेन; W 1 यदेवसृष्टेन [9] Ch स्यात्संजायेत [10] Ch यत्प्रत्य-यात्पापीयस्स्या°; T 4 यत्प्रत्ययात्पापीया°; W 1 प्रत्येयात्पापीयात्स्या° Kap. S. 48, 17 नत्प्रत्येया-त्पापीयांस्या°' [11] Ch प्रजानमित्रो दधार; Kap. S. 48, 17 = RV 3, 59, 1. [12] Von मित्राय bis माधाय हो in T 4 abgebrochen; daher Accent ergänzt. [13] Kap. S. 48, 17 घृतवज्जुहोत = RV 3, 59, 1. [14] Ch मित्रेनैवनश्छमयति; W 1 मित्रेणैवैनच्छमा-यति; besser Kap. S. 48, 17 मित्रेणैवैनं शमयति; aber TBr. 3, 7, 2, 4 मित्रेणैवनत्कल्पयति [15] So corr. Mss. तंद्धुत्वाथान्यान्मुग्ध्वा, resp. ohne Accent; aber Kap. 48, 17 तद्गत्वा-थान्यं दुग्धा; TBr. 3, 7, 2, 4 तत्कृत्वा । अन्यां दुग्ध्वा पुनर्होतव्यम् । [16] Von प्रजा bis zum folgenden स्या in T 4 abgebrochen; Accent ergänzt.

दार्तिमार्छेत्प्राजापत्ययर्चा वल्मीकवपायामवनयेत्प्राजापत्यो[1] वै व-
ल्मीको यज्ञः प्रजापतिर्यज्ञ एव यज्ञं प्रतिष्ठापयति[2] तद्भुत्वाथान्यां
दुग्ध्वा[3] पुनर्होतव्यं सैव तत्र प्रायश्चित्तिः ॥ यदि पूर्वस्यामाहुत्यां हुता-
यामुत्तराहुतिस्स्कन्देद् द्विपाद्भिः पशुभिर्यजमानो व्यृध्येत[4] यदभिजुहुया-
5 च्चतुष्पाद्भिः पशुभिर्यजमानो व्यृध्यते[5] ॥
यत्र वेत्थ वनस्पते देवानां गुह्या नामानि ।
तत्र हव्यानि गामय[6] ॥
इति वानस्पत्ययर्चा समिधमाधाय होतव्यं वनस्पतिनैवास्यार्तां
चानार्तां चाहुती[7] विदाधार तद्भुत्वाथान्यां दुग्ध्वा[8] पुनर्होतव्यं सैव
10 तत्र प्रायश्चित्तिः ॥ १९ ॥ cf. Kap. S. 48, 17; TBr. 3, 7, 2.

देवाश्च वा असुराश्चास्मिंल्लोक आसन्स[9] प्रजापतिरकामयत परा-
सुरान्नुदेय प्रजास्सृजेयेति स एतानि चातुर्मास्यान्यपश्यत्स[10] चातुर्मा-
स्यैरेवासुरान्प्राणुदत[11] चातुर्मास्यैः[12] प्रजा असृजत य एवं विद्वांश्चातु-
र्मास्यैर्यजते[13] परा भ्रातृव्यं नुदते प्र प्रजया प्र पशुभिर्जायते ऽग्निष्टो-
15 माद्वैश्वदेवं[14] यज्ञक्रतुं निर्माय प्रजापतिः प्रजा असृजतोक्थ्याद्वरुणप्र-

---

[1] Von वपायाम bis zum folgenden प्रजापति in T4 abgebrochen; Accent ergänzt. [2] Von पयति bis प्राय in T4 abgebrochen; Accent ergänzt. [3] So corr. Mss. तद्धुत्वाथान्यान्मुग्ध्वा, resp. ohne Accent; vgl. oben und unten das Gleiche; Kap. S. 48, 17 तद्धुत्वा इयान्यां दुग्धा; TBr. 3, 7, 2, 2 und 3 तत्कृत्वा । अन्यां दुग्ध्वा पुन° [4] T4 व्यृध्यते; desgl. Ch, ohne Acc.; W1 व्यृद्ध्येत; Kap. S. 48, 17 विजह्येन; TBr. 3, 7, 2, 4 व्यृध्येत [5] W1 व्यृद्ध्येत; Kap. S. 48, 17 विजृध्येत; TBr 3, 7, 2, 5 व्यृध्येत [6] So Ch; T4 und W1 गमय; cf. RV 5, 5, 10; ebenso Kap. S. 48, 17 गामय [7] So T4; Ch चानार्ताश्चाहुतौ वि°; W1 चानार्ताञ्चहुतौर्वि°; Kap. S. 48, 17 स्यात्ता चानार्ता याहुतौ विदधार; TBr. 3, 7, 2, 5 यज्ञस्यार्त्ता चानार्त्ता चाहुतो विदाधार [8] So corrigirt; Mss. तद्धुत्वाथान्यां न्मुग्ध्वा; resp. ohne Accent; in Ch fehlt noch die Sylbe था; aber Kap. S. 48, 17 तद्धुत्वाथान्यां दुग्धा; TBr. 3, 7, 2, 5 = Corr. [9] Von स bis नुदेय in T4 abgebrochen; Accent ergänzt. [10] W1 चातुर्मासान्यपश्य°; Ch चतुर्मास्यान्यन्येपश्य°; Kap. S. 48, 17 चातुर्मास्यान्यपश्यस्तैश्चा°; cf. Mâitr. S. 1, 10, 5 चातुर्मास्यान्यपश्यच्चा° [11] Ch चतु° प्रणुदत [12] Ch चतु° [13] Ch चतु° [14] ग्निष्टोमा bis क्रतुं in T4 abgebrochen; Accent ergänzt.

वा अनीकेनेन्द्रो वृत्रमहन्त्सोमेन[1] राज्ञा सवित्रा प्रसूतस्सरस्वत्या[2] चै-
त्र्यां[3] पूषा वीर्यैरन्वतिष्ठत विजितिरेवैतानि हवींषि ॥ २० ॥
cf. Kap. S. 48,18; Mâitr. S. 1, 10, 5.

इति श्रीमद्यजुषि[4] काठके चरकशाखायामोरिमिकायां प्रायश्चि-
त्तिर्नाम पञ्चत्रिंशं[5] स्थानकं संपूर्णम्[6] ॥

---

5 इन्द्रस्य[7] वै वृत्रं जघ्नुष इन्द्रियं वीर्यमपाक्रामत्तदिदं सर्वमनुप्रावि-
शदप ओषधीर्वनस्पतींस्तेन देवा अश्राम्यंस्त इदं समनयन्यत्सान्नाय्यं
मिथुनं वै दधि च पयश्च यत्संसृष्टं मण्डमिव[8] मस्त्विव परीव ददृशे
गर्भ एव स तपसो वै प्रजाः प्रजायन्ते तपस्त्वमेतद्गच्छति यच्छृतत्वं[9]
गच्छति तत एव प्रजायते यद्वैश्वदेव्यामिक्षया[10] प्रजा असृजत तस्मा-
10 दिमा वैश्वदेवीः प्रजास्तोका वै विश्वे देवास्तानेवैतद्यजत्यमुतःप्रदा-
नाद्धि प्रजा उपजीवन्ति ॥ योनिर्वा एष प्रजानां तं मरुतो ऽभ्य-
कामयन्त ते ऽंहोगृहीता[11] असृज्यन्त यत्स्वतवद्भ्यस्स्वतवायैव निष्कृत्यै

---

1 W 1 महान्त्सो° 2 Von सरस्वत्या bis वीर्यै in T 4 abgebrochen; daher Accent ergänzt. 3 Vgl. Mâitr. S. 1, 10, 5 चैत्रा (var. चैत्रा); Kap. S. 48, 18 सरस्वत्या वाचा पूषा वी° 4 So corr. gemäß den andern Unterschriften; Ch श्रीयजुषि
5 So corr.; Ch पञ्चविंशति 6 So die Unterschrift des Capitels in Ch.
7 Dieses und die folgenden Capitel wieder nur in Ch vorhanden. 8 So corr. Ch सृष्टमण्डं; cf. Mâitr. 1, 10, 6 a. A., wo zu corrigiren ist. 9 So corr. Ch यछतत्त्वं; Mâitr. S. 1, 10, 6 यंञ्शृतत्वं 10 So corr. Ch देव्यामेक्षया 11 Ch setzt eigentlich das ̐ über den e-Strich des ते; das ist correct, wenn kein Zeichen für die Elision des a gesetzt wird, wie das in Ch vorliegt; setzt man dieses aber, so scheint es mir unmöglich, das ̐ dem vorausgehen zu lassen.

पशवो वै मरुतः प्रजननायैष पशूनां सप्तकपालो भवति सप्त हि मरुतो निरवत्त्या एव मारुतो ऽथो ग्राम्यमेवैतेनान्नाद्यमवरुन्द्धे ता वैश्वदेवेन सृष्टा विषूचीर्व्युदायंस्ता[1] द्यावापृथिव्येन पर्यगृह्णात्प्रजानामेवैष सृष्टानां परिगृहीत्यै यदेककपालस्तेन प्राजापत्यः प्रजापतिमेवैतद्देवता अभि प्रतितिष्ठति यजमानो वा एककपाल आहवनीयस्स्वर्गो लोकस्सर्वहुतं जुहोति हविर्भूतमेवैनं स्वर्गं लोकं गमयत्यात्मा वा एककपालः पशवो घृतं यद्घृतेनाभिपूरयति पशुभिरेवैनं समर्धयति यदाभिपूरयेद्भुञ्जन्त एनं पशव उपतिष्ठेरन्नधरं ह्येनं पशुभ्यः करोत्याविःपृष्ठः[2] कार्य उत्तरमेवैनं पशुभ्यः करोति भुञ्जन्त एनं पशव उपतिष्ठन्ते तत्तन्न सूक्ष्यमभ्येव पूरयेन्न हि पशवो न भुञ्जन्ति बर्हिषदं करोति प्रतिष्ठित्यै यजमानं वै हूर्छन्तं प्रजा अनुहूर्छन्ति यजमानं प्रतितिष्ठन्तमनु प्रतितिष्ठन्त्यृजुः प्रतिष्ठितो होतव्यो यजमानस्य प्रतिष्ठित्यै ॥ १ ॥ cf. Mâitr. S. 1, 10, 5 am Ende bis 1, 10, 7 in der Mitte.

त्रेधासंनद्धस्तर्हिं भवति त्रेधासंनद्ध[3] इध्मस्त्रेधाविहितानि हि संवत्सरेण चातुर्मास्यानि वसन्ता यजेत प्रजननाय प्रवणे यजेत प्रजननाय प्रस्वो भवन्ति प्र मा जनयानीति[4] नोत्तरवेदिमुपवपन्ति प्रजननायाग्निं मन्थत्यग्निं वै पशवो ऽनुप्रजायन्ते प्रजननायाथो वृषाणमेवैतं यजमानाय जनयति पशवो वै पृषदाज्यं नानारूपाः[5] पशवस्तस्मान्नानारूपमाग्नेयं घृतमैन्द्रं दध्यैन्द्राग्नं[6] पृषदाज्यं देवतया प्राणापानौ वा इन्द्राग्नी मिथुनं प्राणापानौ मिथुनयोनयः प्रजास्तस्मादेव मिथुनात्प्रजायते ॥ यदि वसन्ता यजेत द्विरुपस्तृणीयात्सकृदभिघारयेदोषधीरेव प्रतिष्ठापयति यदि प्रावृषि यजेत सकृदुपस्तृणी-

---

1 So corr. Ch व्यदा°; cf. Mâitr. S. 1, 10, 7 a. A. 2 So corr. im Anschluß an Mâitr. S. 1, 10, 7 (p. 147, Z. 4); Ch विःसृष्टः 3 So corr. Ch स्त्रेधासचद्ध 4 So corr. Ch जननायानिति; Mâitr. S. 1, 10, 7 (p. 147, Z. 15) = Corr. 5 So corr. Ch ज्यन्नानारूपः 6 So corr. Ch दध्यैंद्राङ्म्पृ°; Mâitr. S. 1, 10, 7 (p. 147, Z. 16) = Corr.

याद्भिरभिघारयेद्वृष्ट्यैव[1] पशूनभिजिघर्ति[2] प्राणेभ्यो वै प्रजाः प्रजायन्ते
प्राणा एतानि नव हवींषि नव प्राणा आत्मा देवता तत एव प्र-
जायते नव प्रयाजा नवानुयाजा द्वा आज्यभागा अष्टौ हवींष्यग्नये
समवद्यति वाजिनो यजति तत्त्रिंशत्त्रिंशदक्षरा विराडन्नं विराड् वि-
5 राज्येवान्नाद्ये प्रतितिष्ठति त्रिंशदक्षरा वै विराड् विराजो[3] योनेः प्र-
जाः प्रजायन्ते विराज एवैना योनेः[4] प्रजनयति ॥ त्रिंशत्त्रिंशद्वै रात्र-
यो मासो यो वै मासस्स संवत्सरस्संवत्सरः प्रजापतिस्तदेतत्प्रजापते-
श्चैव विराजश्चाधि मिथुनात्प्रजायत एकैकया वा आहुत्या द्वादश
द्वादश रात्रीरयुवन्त ता यावतीस्संवत्सरस्य रात्रयस्तावतीस्संख्याने
10 संवत्सरमेव भ्रातृव्याद्युवते वैश्वदेवेन वै ते चतुरो मासो ऽयुवन्त वरु-
णप्रघासैः परांश्चतुरस्साकमेधैः[5] परांश्चतुरस्तानेव[6] भ्रातृव्याद्युवते यच्च-
तुरश्चतुरो[7] मासो ऽयुवन्त तच्चातुर्मास्यानां चातुर्मास्यत्वम् ॥ २ ॥
cf. Mâitr. S. 1, 10, 7 in der Mitte bis 1, 10, 8 in der Mitte.

वैश्वदेवेन यजते प्रजाकामो वा पशुकामो वा न वरुणप्रघासैर्न
साकमेधैस्सर्वो वै पुरुषस्साहस्रो[8] जायते यावत्तरसं[9] त्वै गच्छति प्रज-
15 ननमेतद्धविर्यद्वैश्वदेवं प्रजननमेव यजते स्वां मात्रां गच्छानीति यदा
सहस्रं पशून्गच्छेदथ वरुणप्रघासैर्यजेत यदेव तत्सहस्रमगँस्तस्यांहो
ऽवयजत[10] ऋतुयाजी वा अन्यश्चातुर्मास्ययाज्यन्यो यो वसन्तो ऽभूत्प्रा-
वृडभूच्छरदभूदिति यजते स ऋतुयाजी यस्त्रयोदशं मासं संपादयति
स त्रयोदशं मासमभियजते स चातुर्मास्ययाजी त्रीनृजूनिष्ट्वा चतुर्थ-
20 मुत्सृजेद्द्वौ परा ऋजू इष्ट्वा तृतीयमुत्सृजेद्द्वे[11] वै त्रयस्संवत्सरास्तेषां ष-

---

[1] So corr. Ch घारये वृष्ट्यैव [2] So corr. Ch जिघंति [3] Co corr. Ch विराजा [4] So corr. Ch योनिः; cf. Mâitr. S. 1, 10, 8 (p. 148, Z. 7). [5] So corr. Ch परां च°; cf. Mâitr. S. 1, 10, 8 (p. 148, Z. 12 und 13). [6] So corr. Ch परां च [7] So corr. Ch यश्च [8] So corr. Ch सहस्रो; Mâitr. S. 1, 10, 8 (p. 148, Z. 21) = Corr. [9] So corr. Ch यावत्तुरसं; vgl. Mâitr. S. 1, 10, 8 (p. 148, Z. 21). [10] So corr. Ch यजेत [11] So corr. Ch द्यो; Mâitr. S. 1, 10, 8 (p. 148, Z. 17) = Corr.

ड्विंशत्पूर्णमासा यौ द्वौ तयोश्चतुर्विंशतिर्ये षड्विंशत्यधि ते चतुर्विं-
शतिमुपयन्त्येष वाव स त्रयोदशो मासस्तमेवैतत्संपादयन्ति तमभिय-
जते ॥ यद्बर्हिः प्रयाजेषु यजत्योषधीस्तद्यजति[1] यद्बर्हिरनुयाजेषु फलं
तद्यजति यद्बर्हिर्वारितीनां यदेव फलादधि प्रजायते तत्तद्यजति यद्दुरो
यजत्युपस्थं तद्यजति यदुषासानक्ता व्युष्टिं चैव[2] निर्मुक्तिं च तद्यजति 5
यज्जोष्ट्री यदेव जातं यज्जनिष्यमानं तद्यजति यदूर्जाहुती यदेवात्ति[3]
च पिबति च तत्तद्यजति[4] यद्दैव्या होतारेमे वै दैव्या होतारेमे एव
तद्यजति यत्तिस्रो देवीर्वाग्वै तिस्रो देवीर्वाचमेव तद्यजति छन्दांसि
वै वाक्छन्दांस्येव तद्यजति नराशंसं यजति तनूनपाद्वै यज्ञः प्रसृतो
नराशंसो ऽप्रसृतः प्रसृतो वा एतर्हि यज्ञस्तस्मान्नराशंसमनुयाजेषु य- 10
जति त्वष्टारं यजति स हि रूपाणि विकरोति वनस्पतिं यजत्यूर्ग्वै
सोमो वनस्पतिस्सौमीरिमाः प्रजाः प्रजास्वेवोर्जं दधाति ॥ ३ ॥

cf. Mâitr. S. 1, 10, 8 in der Mitte bis 1, 10, 9 in der Mitte.

वाजिनो यजति पशवो वै वाजिनस्तानेव तद्यजति न वा एष[5]
सुयज्ञ इव संस्थिते हि यज्ञे[6] प्रहृतेषु परिधिषु जुहोति यदनवानं[7] हो-
ता यजति तेन यज्ञः क्रियते ऽनुयजत्यग्निस्समिष्टिरग्निः प्रतिष्ठितिस्स- 15
मिष्ट्या एव प्रतिष्ठित्यै पशवो वै वाजिनो यत्संस्थापयेत्तान्संस्थापये-
दसंस्थिता ह्येते सदादि प्रजायन्ते बर्हिरनुनिषिञ्चन्गृह्णात्यृषभेष्वेव रेतो
दधाति प्रजा वै बर्ही रेतो वाजिनं प्रजास्वेव रेतो दधात्यूर्ध्वज्ञुरासी-
नो यजत्यूर्ध्वज्ञुर्हि पशुः पशौ रेतो दधाति समुपहूय भक्षयन्ति सोम-
पीथ इव ह्येष सर्व ऋत्विजः प्राश्नन्ति वाजिनो मे यज्ञं वहानित्या- 20
त्मना प्राश्नीयादात्मन्नेव वाजं धत्ते ॥ ४ ॥

cf. Mâitr. S. 1, 10, 9 (zweite Hälfte).

---

[1] So corr. Ch यत्योष° [2] So corr. Ch व्युष्टिं श्चेवव oder श्च्येवव (undeutlich). [3] So corr. Ch वार्तिं [4] Erste Hand nur तद्यजति [5] So corr. Ch इष; cf. Mâitr. S. 1, 10, 9 (p. 149, Z. 16). [6] So corr. Ch यज्ञो; cf. Mâitr. S. 1, 10, 9 (p. 149, Z. 16). [7] So corr. Ch यदनवं

ता वैश्वदेवेन सृष्टास्तस्मिँस्तरुणिमन्वरुणो ऽगृह्णादथो आहुरति
वै तास्तमचरँस्ता अतिचरन्तीर्वरुणेनाग्राहयदिति तस्मात्पिता ना-
तिचरितवै वैश्वदेवेन वै प्रजापतिः प्रजा असृजत तस्य मरुतो हव्यं
व्यमश्नत ततो ऽँहोगृहीता[1] असृज्यन्त[2] ताभ्यो भेषजमैच्छत्तदात्मन्नेवै-
5 च्छत्स एतदात्मनो ऽधि पयो[3] निरमिमीत तेनाभ्यो ऽँहो ऽवायजदँ-
हसो[4] वा एषावेष्टिर्यद्वरुणप्रघासा जग्धाद्वै वरुणो गृह्णाति तस्माद्व-
रुणप्रघासा यावद्वै कुमारे ऽन्नो[5] जात एनस्तावदेतस्मिन्नेनो भवति
यो वरुणप्रघासैर्यजते ऽथैतानि पञ्च हवीँषि संतत्यै ॥ सावित्रो ऽष्टा-
कपालो गायत्रो हि देवानाँ सवितैन्द्राग्नो द्वादशकपालो वैश्वदेव-
10 त्वाय यद्वै तत्प्रजा वरुणगृहीता अवेव्लीयन्तेव[6] तदास्विन्द्राग्नी बल-
मधत्तां न वै ताः प्राणँस्ता अप्राणन्तीर्वरुणो ऽगृह्णात्प्राणापानौ वा
इन्द्राग्नी प्राणापाना एवैतन्मध्यतो धीयेते शिथिला वै ताः प्रजा
वरुणो ऽगृह्णादोजो वीर्यमिन्द्राग्नी ओज एवैतद्वीर्यँ मध्यतो धीयते
निरवत्त्या एव मारुती निर्वरुणत्वाय वारुणी कन्त्वाय कायो यद्वा
15 आभ्यस्तद्वरुणगृहीताभ्यः कमभवत्तस्मात्कायः प्रजापतिर्वै ताः प्रजा
वरुणेनाग्राहयत्प्रजापतिः क आत्मनैवैना वरुणान्मुञ्चत्यृतं[7] वै सत्यं
यज्ञो ऽनृतँ स्त्र्यनृतमेषा करोति या पत्युः क्रीता सत्यथान्यैश्चरत्यनृत-
मेव[8] निरवदायर्तँ सत्यमुपैति यद्वाचयति मेध्यामेवैनां यज्ञियां करो-
ति न[9] मिथु ब्रूयाद्यन्मिथु ब्रूयात्प्रियतमेन यातयेत्[10] ॥ ५ ॥
cf. Mâitr. S. 1, 10, 10 und 1, 10, 11 a. A.

---

[1] Im Ms. (Ch) das ˆ über dem तो gesetzt, da kein Avagraha geschrieben ist. [2] So corr. Ch असृजंत; cf. Mâitr. S. 1, 10, 10 = Corr. [3] So corr. Ch पयो; cf. Mâitr. S. 1, 10, 10 (p. 150, Z. 9). [4] So corr. Ch वाजयद्दँ°; Mâitr. S. 1, 10, 10 (p. 150, Z. 10) = Corr. [5] So corr. Ch कुमारो ग्नो; cf. Mâitr. S. 1, 10, 10 (p. 150, Z. 12). [6] Ch अवेब्लो° [7] So corr. Ch चत्दृतं [8] So corr. Ch सत्यधा°; अध für अथ doch nur dem metrischen Veda eigenthümlich; vgl. Mâitr. S. 1, 10, 11 a. A. = Corr. [9] Das न mit Caland eingefügt, fehlt in Ch, cf. TBr. 1, 6, 5, 2. [10] So corr. In Ch von der ersten Hand nur येत् geschrieben; dann oben यत eingefügt; Mâitr. S. 1, 10, 11 a. A. (p. 151, Z. 5) hat याजयेत् (vielleicht यातयेत् zu lesen).

आमपेषा[1] भवन्ति सर्वस्यैहसो ऽवेष्ट्यै यन्नृज्ज्येयुर्विस्वकर्मैहो[2]
ऽवेष्टिं स्यात्पात्रेभ्यो वै ताः प्रजा वरुणो ऽगृह्णाद्यत्पात्राणि पात्रेभ्य
एवैना वरुणान्मुञ्चति[3] प्रतिपुरुषं भवन्ति प्रतिपुरुषमेवैहो ऽवयजत
एकमधि भवति[4] गर्भेभ्य एव तेनैहो ऽवयजते ऽन्नाद्वै ताः प्रजा वरु-
णो ऽगृह्णाच्छूर्पेणान्नं बिभ्रति तस्माच्छूर्पेण हूयते स्त्रीपुंसौ जुहुतो
मिथुना एव प्रजा वरुणान्मुञ्चतः पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ जुहुतः पु-
रस्तादेवाग्रे[5] ऽहो ऽवयजतो यत्पात्राणि य एव द्विपादः पशवो मि-
थुनास्तेषां तेन पुरस्तादेहो ऽवयजतो यन्मेषश्च मेषी च य एव चतु-
ष्पादः पशवो मिथुनास्तेषां तेनोपरिष्टादेहो ऽवयजत उभयत एवै-
हो ऽवयजतः[6] पुरस्ताच्चोपरिष्टाच्च ॥ पात्राणि[7] हुत्वाग्निं[8] संमार्ष्टि यन्नै-
हो[9] ऽवायाक्षुस्तस्मिन्नुत्पूते[10] देवता यजानिति यद्वै प्रजा वरुणो[11] गृ-
ह्णाति शमी च यवं च न गृह्णाति हेमन्तो हि वरुणस्तस्मादेतौ
हेमन्न शुष्यतो या एवावरुणगृहीतौ ताभ्यामेना वरुणान्मुञ्चति वरु-
ण्यो[12] वै यवो वरुणदेवत्यस्स्वेनैव[13] भागधेयेन वरुणं निरवदयते ऽथै-
ता अनृतपश्वू अनृताद्वै ताः प्रजा वरुणो ऽगृह्णाद्यदेता अनृतपश्वू
अनृतादेवैना वरुणान्मुञ्चति स्त्रीपुंसौ भवतो मिथुना एव प्रजा व-
रुणान्मुञ्चति लोमशौ भवतो मेध्यत्वाय यावन्तो हि पशवो लोम
जगृहुस्ते मेधं प्रापुश्शमीपर्णानि[14] भवन्ति शन्त्वाय भूर्जा[15] वै नामैष
वृक्षः कार्या[16] वा एतस्य स्रुचः प्रजापतिर्वा अन्नाद्यं नावारुन्द्ध तच्छ-

---

[1] Dieses Capitel findet sich auch in T 1 und Brl fol. 142. 143 und ist nach diesen Handschriften accentuirt; Ch आमपेथा [2] So T 1 und Brl fol. 142; ebenso Ch, ohne Accent. [3] वरुणान्मु° in T 1 und Brl fol. 143 ohne Accent. [4] So Ch, ohne Accent, in Uebereinstimmung mit Mâitr. S. 1, 10, 11 (Z. 8. 9); T 1 und Brl fol. 143 wohl एकमपिभवति [5] Brl fol. 143 वाग्रे हो वय° [6] Ch वायजतः [7] Brl fol. 143 पात्राग्निं [8] Accent corrigirt; T 1 हुत्वाग्निं; Brl fol. 143 हत्वाग्निं [9] Ch यन्नौहो [10] Brl वायच्चु [11] Accent ergänzt; वरुणो in T 1 und Brl fol. 143 ohne Accent. [12] Brl fol. 143 वारुण्यो; Mâitr. S. 1, 10, 12 (p. 151, Z. 18) वरुणो, was offenbar zu corrigiren ist. [13] Brl fol. 143 वारुणदेवेभ्यस्स्वे° [14] Brl fol. 143 मेधम्पायुश्शमी [15] Brl भूर्जे [16] Brl कार्यो वा

तैध्मेनावारुन्द्ध[1] परश्शतानि कार्याण्यन्नाद्यस्यावरुद्ध्यै सहस्रेध्मो[2] ह
त्वा अंहसो[3] ऽवेष्टिं विव्याच परस्सहस्राणि[4] कार्याण्यंहसो ऽवेष्ट्यै ॥ ६ ॥
cf. Mâitr. S. 1, 10, 11 und 12.

यतीन्वै[5] सालावृकेया आदंस्तेषामेतानि शीर्षाणि यत्खर्जूरास्सो-
मपीथ एष उदीषति यत्करीराणि यत्करीराणि भवन्ति सोमपीथमे-
5 वावरुन्द्धे प्रजापतेर्वा एतज्ज्येष्ठं तोकं यत्पर्वतास्ते पक्षिण आसंस्ते
यत्र यत्राकामयन्त तत्परापातमासताथ वा इयं तर्हि शिथिलासी-
त्तेषामिन्द्रः पक्षानच्छिनत्तैरिमामदृंहद्ये पक्षा आसंस्ते जीमूता अभ-
वंस्तस्मात्ते गिरिमुपप्लवन्ते योनिर्ह्येषामेष तस्माद्गिरौ भूयिष्ठं वर्षति
यत्प्राक्षरत्तानि करीराणि तदेतत्प्रावृष्युज्जीमूताः प्लवन्ते यजन्ते वरुण-
10 प्रघासैर्वृष्टिमेव संतनोति तस्मात्तर्हि भूयिष्ठं वर्षति वृष्टिं हि संतनो-
ति न वैश्वदेव उत्तरवेदिमुपवपन्त्युपात्र वपन्ति प्रजाता एव प्रजाः
परिगृह्णाति योत्तरा वेदिर्या अत्त्रीः प्रजास्तासां सा योनिस्तास्ताम-
नुप्रजायन्ते या दक्षिणा वेदिर्या आद्याः प्रजास्तासां सा योनिस्तास्ता-
मनुप्रजायन्त[6] उभयीरेवैतदत्त्रीश्चाद्याश्च प्रजाः प्रजनयत्ययं वाव हस्त
15 आसीन्नायं यैषा द्वितीया वेदिस्तयेमं द्वितीयं हस्तमविन्दंस्तस्मादेष[7]
एतस्य परिवेष्टापरजो हि तस्मात्कनीयाञ्ज्यायांसं परिवेवेष्टि समे
कार्ये समौ हीमौ हस्ता असंभिन्ने भवतो ऽंहसो ऽवेष्ट्यै यत्संभिन्द्युर-
नवेष्टमंहस्स्यादेकस्फ्यामनु[8] संभिन्दन्त्यनुसंतत्या उपोत्तरां[9] वपन्ति न
दक्षिणामनभ्यारोहाय ॥ क्षत्त्रं वै वरुणो विण्मरुतो नाना यजन्ति

---

[1] Ch तच्छतध्मेनावरुंध; Brl तांच्छतैध्मेनांवारुन्ध  [2] So corr. Ch सहस्रेध्मे; T 1 und Brl fol. 143 सहस्रेध्दं; cf. Mâitr. S. 1, 10, 12 (p. 152, Z. 4) = Corr.  [3] So T 1 und Brl fol. 143; in Ch ह त्वा स्वंहसो; vgl. Mâitr. S. 1, 10, 12 (p. 152, Z. 4). [4] So Brl fol. 143, in Uebereinstimmung mit Mâitr. S. 1, 10, 12 (p. 152, Z. 5); in T 1 und Ch fehlt परस्स; T 1 सहस्राणि, desgl. Ch, ohne Accent.  [5] Dieses und die folgenden Capitel beruhen wieder nur auf Ch.  [6] So corr. Ch यन्ते  [7] So corr. Ch विंदोस्त°; cf. Mâitr. S. 1, 10, 13 (p. 153, Z. 3) = Corr.  [8] So Ch; Mâitr. S. 1, 10, 13 (p. 153, Z. 6) irrig; cf. Âp. 13, 5, 20 एकस्फ्यया वेदौ अनुसंभि-नत्ति ॥ Caland.  [9] So corr. Ch त्तरा

पापवसीयसस्य व्यावृत्त्यै यदध्वर्युः करोति तत्प्रतिप्रस्थाता करोति
तस्माद्यद्राजा करोति तद्विट्करोति न वैश्वदेवे त्रिंशदाहुतयस्सन्ति न
साकमेधेषु वरुणप्रघासेषु वाव त्रिंशदाहुतयो वैराजः पुरुषो दश ह-
स्त्या अङ्गुलयो दश पद्या दश प्राणास्तत्त्रिंशत्त्रिंशदक्षरा विराड्वैराजः[1]
पुरुषो यदेतर्ह्यवभृथमवैत्यात्मानमेवांहो ऽवयजते यद्वै यज्ञस्य स्वगा- 5
कृतिं न प्राप्नोति वरुणस्तद्गृह्णाति यन्निष्काषेणावभृथमवैति यदेव
वरुणगृहीतं तेन वरुणं निरवदयते ऽथो यदेवात्र वरुणस्य न्यक्तं तस्य
निरवत्त्या अनपेक्षमाणा आयान्ति वरुणस्यानन्ववायायैधो ऽस्येधि-
षीमहीति[2] वरुणमेव निरवदायैधतुमुपयन्ति[3] समिदसि समेधिषी-
महीत्याशिषमेवाशास्ते तेजो ऽसि तेजो मयि धेहीति तेज एवात्म- 10
न्धत्ते ॥ ७ ॥ cf. Mâitr. S. 1, 10, 12 a. E. und 1, 10, 13.

प्रजास्सृष्ट्वांहो ऽवेज्य सो ऽकामयत वृत्रं हन्यामिति स एताभिर्दे-
वताभिस्सयुग्भूत्वोपप्लायत[4] मरुद्भिर्विशाग्निनानीकेन[5] स वृत्रमभीत्य[6]
वृत्रं दृष्ट्वोरुस्तम्भगृहीतो ऽतिष्ठदनभिधृष्णुवंस्तं[7] मरुत ऐषीकैर्वातरथै-
रध्यैयन्त[8] ते ऽत्यैषंस्ते ऽस्य[9] यत्र मर्मागच्छंस्तदचेष्टत्सं वा एनं तदत- 15
पंस्तस्मात्सांतपना वार्त्रघ्ना[10] वै साकमेधा अग्निना वा अनीकेनेन्द्रो[11]
वृत्रमहन्ननीकत्वायैवैषो ऽग्निर्देवानां सेनानीस्सेनोत्थापनीयमेवैत-
दिन्द्रो वै वृत्राय वज्रमुद्यमं नाशक्नोत्स एतं मरुद्भ्यो भागं निरव-
पत्तं मरुतो वीर्याय समतपन्स[12] तेन वीर्येण वज्रमुदयच्छत्सं[13] वा
एनं तदतपंस्तस्मात्सांतपना मध्यंदिने निरुप्यस्तर्हि ह्युभा अन्तौ 20
तपति चरुर्भवति तं हि सर्वतस्तपति देवा वै वृत्रस्य मर्म[14]

---

[1] So corr. Ch विराड्विराजः [2] So corr. Ch धीमहीति [3] So corr. Ch यैधत्तमुप°; cf. unten 36, 14 a. E., auch Mâitr. S. 1, 10, 13 a. E. [4] So corr. Ch भूतोपप्लावयत; cf. Mâitr. S. 1, 10, 14 a. A. (p. 153, Z. 19) und Pâ. 8, 2, 19. [5] Ch नेकेन [6] So corr. Ch वृत्रमारोत्य [7] So corr. Ch धृष्णावि° [8] So corr. Ch ध्ययंत; cf. Mâitr. S. 1, 10, 14 (p. 153, Z. 20). [9] So corr. Ch °स्ये स्य [10] So corr. Ch वार्त्रांघ्रा [11] So corr. Ch अनेकेने° [12] So corr. Ch सा [13] So corr. mit Caland; Ch यच्छत सं [14] So corr. Ch मन्म

नाविन्दंस्तं मरुतः क्षुरपविना व्ययुस्तं वा एनं तदतपंस्तस्मात्सांतपनाः ॥ ८ ॥ cf Mâitr. S. 1, 10, 14.

ते श्वो वृत्रं हनिष्यन्त उपावसंस्ते ऽब्रुवन्कस्य वाहेदं श्वो भविता कस्य वा पचतेति त एतमोदनमपचन्त ते पशूनचिकयुर्यतरान्वा
5 इमे श्वः कमितारस्ते जेतार इति तेभ्य एतेन प्रातिष्ठंस्तानेतेनायच्छन्पशूनामेवैषा यतिस्ते[1] श्वोविजयिनो ऽवसंस्ते ऽब्रुवन्कस्य वाहेदं श्वो भविता कस्य वा पचतेति त एतमोदनमपचन्त ते ऽब्रुवन्माहुतमशिष्मेति[2] ते मरुद्भ्यो गृहमेधेभ्यो ऽजुहवुः पशवो वै मरुतो गृहमेधास्तेभ्य एव तदजुहवुस्ते संयत्ता आसंस्ते ऽसुरा देवेभ्यः क्षुधं प्राहिण्वं-
10 स्तां देवाः प्रतिश्रुत्यैतमोदनमपचन्त सा देवेषु लोकमविस्त्वा[3] पुनरसुरान्प्राविशत्सैनान्निरदहदपि प्रतिवेश ओदनं पचेत भ्रातृव्यायैव क्षुधं प्रहिणोति सैनं निर्दहति ॥ यद्वै चातुर्मास्यानां पाकयज्ञस्यैव तदेषां पशव्यं गृहमेध्यो वै पाकयज्ञो न[4] प्रयाजा इज्यन्ते नानुयाजा न सामिधेनीरन्वाहाज्यभागौ यजति तेन यज्ञः क्रियते ऽग्नये समवद्यत्य-
15 ग्निस्समिष्टिरग्निः[5] प्रतिष्ठितिस्समिष्ट्या एव प्रतिष्ठित्यै पशवो वै गृहमेधाः पशव इडा तस्मादिडामुपह्वयन्ते निष्काषो निधीयते संतत्यै तेषां वा उभयेषामिन्द्रः प्रावसत्ते देवा एतमिन्द्राय भागं न्यदधुरस्मान्ह्वो[6] निहितभागो वृणाता इति ऋवथो वषट्कारो ऽथो असुराणामेव तद्वृषभमत्याह्वयन्नस्मान्प्रजनयादित्यृषभमाह्वयतीन्द्रमेव तन्निह्वयते
20 ऽथो पुष्टिमेव भ्रातृव्यस्य वृङ्क्ते ॥ ९ ॥
cf. Mâitr. S. 1, 10, 15 und 1, 10, 16 a. A.

सवत्सा गावो वसन्ति साकमेधत्वाय यत्पत्नी नाश्नीयादसाकमेधास्स्युर्यत्पत्न्यश्नाति[7] साकमेधत्वाय निर्ऋतिर्वा एतद्यज्ञस्य गृह्णाति

---

[1] So corr. Ch यति ते; cf. Mâitr. S. 1, 10, 15 (p. 154, Z. 12) = Corr. [2] cf. TBr. 1, 6, 6, 4. [3] So corr. Ch विद्वा; cf. TBr. 1, 6, 7, 2 = Corr. [4] So corr. Ch म; cf. Mâitr. S. 1, 10, 15 (p. 155, Z. 3). [5] So corr. Ch समिष्टर° [6] Ch स्मां ह्वो oder doppeltes ह (undeutlich); cf. Mâitr. S. 1, 10, 16 a. A. [7] So corr. Ch पत्न्याश्नाति

यत्स्त्र्यश्नाति निर्ऋतिर्वै स्त्री स्त्रिया एष हस्तो यद्दर्विर्यद्दर्व्या जुहोति
निर्ऋत्यैव निर्ऋतिं निरवदयते यद्वै यज्ञस्य स्वगाकृतिं न प्राप्नोति
निर्ऋतिस्तद्गृह्णाति निर्ऋतिगृहीता वै दर्विस्तर्हि ह्येषावचरति यद्दर्व्या
जुहोति निर्ऋतिगृहीतयैव निर्ऋतिं निरवदयते स श्वो वृत्रँ हन्तुमु-
पप्लायत[1] तं मरुतः परिक्रीडन्त आयँस्ते ऽस्याप्त्वा[2] व्यनयँस्त एनमभ्य-
धर्षयँस्तस्मात्क्रीडयस्ते संयत्ता आसँस्ते देवा असुराणां परमन्तं न प-
रापश्यँस्ते मरुतः क्रीडीन्क्रीडतो[3] ऽपश्यँस्ते ऽविदुर्जितमनसो वा इम
इति तेभ्य एतं भागं निरवपँस्ततो[4] ऽजयन्विजित्या एवैषो ऽसौ वा
आदित्य इन्द्रो रश्मयः क्रीडयस्साकं रश्मिभिः प्रचरन्ति विजित्यै ॥
देवा वै वृत्रँ हतं न व्यजानँस्तं मरुतो ऽध्यक्रीडँस्तस्मात्क्रीडयो[5] ऽथै-
तानि पञ्च हवीँषि संतत्या अथैन्द्राग्न[6] इन्द्राग्नी वै तं वज्रेणाभ्यौह-
तामथो[7] आहुरिन्द्राग्नी अस्मै वज्रमनुबिभृतामित्यथैन्द्र[8] एतेन वा इन्द्रो
वृत्रमहन्स एतमुद्धारमुदहरतोद्धार एवास्यैष भाग एवाथ वैश्वकर्म-
णो विश्वा मे कर्म कृतानीति विश्वकर्मा[9] ह्यभवद्वृत्रँ हत्वाग्ने वेर्होत्रं
वेर्दूत्यमित्याघारमाघारयत्याहुतीनाँ[10] संपत्त्यै[11] त्रिँशत्त्वाय ॥ १० ॥
cf. Mâitr. S. 1, 10, 16.

प्रजास्सृष्ट्वाँहो ऽवेज्य वृत्रँ हत्वा ते ऽमृतत्वमकामयन्त स्वर्गो वै
लोको ऽमृतत्वं द्वादश मासास्संवत्सरस्स्वर्गो लोको यद्द्वादशाहुतयो
ऽमृतत्वमेव तेन स्पृणोति सं वा एतत्संवत्सरमकृक्षदापद्वा एतत्संव-
त्सरं यत्षट् षट् संपादयति षड्वा ऋतव ऋतूनेवैतत्पुनरपिपादयति

---

[1] So corr. im Anschluß an Mâitr. S. 1, 10, 16 (p. 155, Z. 15); Ch मुपप्लावयत; vgl. oben 36, 8 a. A. [2] So zweifelnd corrigirt im Anschluß an Mâitr. S. 1, 10, 6 (p. 155, Z. 16); Ch liest स्याध्वां, womit ich nichts anzufangen weiß. [3] So corr. Ch क्रोडोः क्रोडितो; Mâitr. S. 1, 10, 16 (p. 155, Z. 18) = Corr. [4] So corr. Ch वर्पास्त [5] So corr. Ch ध्यक्रोडिस्त°; cf. Mâitr. S. 1, 10, 16 (p. 156, Z. 1) = Corr. [6] So corr. Ch द्राग्ना; cf. Mâitr. S. 1, 10, 16 (p. 156, Z. 2). [7] So corr. Ch भ्योहता° [8] So corr. Ch बिभ्रता° [9] So corr. Ch कर्म [10] So corr. Ch वैर्दूतमि; cf. aber oben Kâṭh. 9, 5 a. E. = Corr.; desgl. cf. Mâitr. S. 1, 10, 1 a. A. [11] Mâitr. S. 1, 10, 16 a. E. संतत्यै

तानपिपद्यमानानन्वपिपद्यते ततः प्रजायते ऽति वा एतत्संवत्सरम-
गाद्यद्द्वादशाहुतयस्संवत्सरमेवाभिपर्यावर्तन्त आपद्वा एतत्संवत्सरं पि-
तर ऋतवस्तमेव प्रजनयति तं प्रजायमानमनुप्रजायत[1] एतद्वा अस्य
संवत्सरो ऽभीष्टो ऽभूदभीष्टा ऋतवो ऽथास्य पितरो ऽनभीष्टा यदेष
5 पितृयज्ञस्तेनास्य पितरो ऽभीष्टाः प्रीता भवन्ति ॥ दक्षिणतो निरुप्यं
दक्षिणा हि पितॄणामुभयतो निरुप्यमुभये हीज्यन्ते तत्तन्न सूक्ष्यं दक्षि-
णत एव निरुप्यं दक्षिणा हि पितॄणां षट्कपालः पुरोडाशो भवति
षड्वा ऋतव ऋतव एवास्य तेनाभीष्टाः प्रीता भवन्ति न वै धाना-
भिर्न मन्थेन यज्ञो यदेष पुरोडाशस्तेन यज्ञः क्रियते ऽथैता धानास्सुधा
10 वा एता अमुष्मिंल्लोके ऽपरिमितास्संवत्सरस्य रात्रयस्ता एवास्यैता-
भिरभीष्टाः प्रीता भवन्ति न वै धानाभिर्न पुरोडाशेन पितृयज्ञो यदेष
मन्थस्तेन पितृयज्ञो ऽभिवान्यवत्साया[2] दुग्धे भवति सा हि पितॄणां
नेदिष्ठमेकयोपमन्थत्येकलोका हि पितरो दक्षिणोपमन्थति दक्षिणा
हि पितॄणामनारभ्योपमन्थति तद्धि पितॄन्गच्छति ॥ ११ ॥
cf. Mâitr. S. 1, 10, 17.

15 न प्राच्युद्वत्या पितृयज्ञो हि न दक्षिणा यज्ञो ह्युभे दिशा अन्तरो-
द्वन्त्युभये[3] हीज्यन्त उभयानेव व्यश्नोति देवांश्च पितॄंश्च चतुस्स्रक्तिर्वे-
दिर्भवति सर्वासु हि दिक्षु पितरः परिश्रिते याजयन्त्यन्तर्हिता ह्यमु-
ष्मादादित्यात्पितरो ऽथो अन्तर्हिता हि देवेभ्यश्च मनुष्येभ्यश्च पितर
उपमूलं बर्हिर्दाति तेन पितॄणां यद्दतेमूलं तेन देवानामुभये हीज्यन्ते
20 समन्तं बर्हिस्स्तृणन्पर्येति समन्तं हीम ऋतवः परिविष्टा एति वा
एषो ऽस्माल्लोकाद्यः पितृयज्ञं पर्येति यदस्तृणन्पुनः पर्येतीममेव लो-
कमुपावर्तते ऽमुष्मिन्वै पूर्वस्मिन्देवता यजन्ति यत्तच यजेदाहुतीस्सं-
सृजेत्समदं कुर्याद्गार्हपत्ये शृतं कुर्वन्ति तेन यज्ञः क्रियत ओदनपच-

[1] So corr. Ch मानुप्र° [2] So corr. Ch भिधान्य° [3] So corr. Ch द्वत्यु; cf. Mâitr. S. 1, 10, 17 (p. 157, Z 9).

नादग्निमाहरन्ति तदु स्विन्नान्यत आह्रियत उशन्तस्त्वा हवामह इत्य-
न्वाहोशन्तो हि पितरो ऽनुष्टुभमन्वाहान्तो[1] वा अनुष्टुबन्तः पितरो
ऽथो अनुष्टुब्भि सर्वाणि छन्दांस्येकामन्वाहैकलोका हि पितरस्त्रिर-
न्वाह तृतीये हि लोके पितरो यदेकामन्वाह तेन पितॄणां यत्त्रिर-
न्वाह तेन देवानामुभये हीज्यन्ते नार्षेयं वृणीते न होतारं मृत्योरेवैना 5
उत्सृजत्यपबर्हिषः प्रयाजान्यजति प्रजा वै बर्हिः प्रजा एव मृत्योरु-
त्सृजति संव्ययते वै मनुष्येभ्यः करिष्यन्दक्षिणतो देवेभ्य उपव्ययते
ऽथात्र प्राचीनावीतेन भव्यं व्यावृत्त्यै दक्षिणतो ऽवदायोदङ्ङतिक्रम्य
दक्षिणावृत्य जुहोति दक्षिणा हि पितॄणाम् ॥ १२ ॥

cf. Mâitr. S. 1, 10, 17 a. E. und 1, 10, 18 bis in die Mitte.

सोममग्ने यजति सोमो वै पितॄणां देवता पितृदेवत्यो हि सोमो 10
यत्सोमं पितृमन्तं यजति सोमपांस्तत्पितॄन्यजति यद्बर्हिषदो यज्वन-
स्तद्यदग्निष्वात्तान्गृहमेधिनस्तद्यदग्निं[2] कव्यवाहनं द्वे वा अग्नेस्तन्वौ ह-
व्यवाहन्या देवेभ्यो हव्यं वहति कव्यवाहन्या पितृभ्यो ऽग्निस्समिष्टिर-
ग्निः प्रतिष्ठितिस्समिष्ट्या एव प्रतिष्ठित्यै पञ्च पञ्च कृत्वो ऽवद्यति
पञ्च ह्यृतवस्स्वधा नम इति वषट्करोति स्वधा हि पितॄणां नमस्कारो 15
देवानां द्वे वै देवानां याज्यानुवाक्ये प्रान्यया यच्छति गमयत्यन्यया-
थात्र तिस्रः कार्या व्यावृत्त्यै द्वे अनुवाक्ये एका याज्या परे वै देवेभ्यः
पितरो यैषा तृतीयाभ्येवैतया प्रयच्छति ॥ देवान्वै पितॄन्मनुष्याः पि-
तरो ऽनुप्रपिबन्ते[3] देवानेवैतत्पितॄनयाड्प्रान्स्रक्तिषु निदधाति तेन मनु-
ष्यान्पितॄन्यजति त्रिर्निदधाति त्रीन्हीदं पुरुषानभिस्मस्त्रीन्परानन्वाचष्टे 20
त्रयो वै पिता पुत्रः पौत्रो[4] ऽनुसंतत्यै सर्वासु स्रक्तिषु निदधाति सर्वा
एव दिशो गमयति सर्वासु हि दिक्षु पितरो नास्यां निदध्याद्यदस्यां

---

[1] So corr. Ch ह्वार्तो; cf. Mâitr. S. 1, 10, 18 a. A. [2] So corr. Ch दग्नि; cf. Mâitr. S. 1, 10, 18 (p. 158, Z. 10) = Corr. [3] So corr. Ch पिबन्ते; cf. Mâitr. S. 1, 10, 18 (p. 158, Z. 16. 17). [4] So corr. Ch पौत्रा; cf. Mâitr. S. 1, 10, 18 (p. 158, Z. 18).

निदध्यान्मृत्युर्नैनान्परिगृह्णीयात्तामेवानूद्यन्ति यत्तस्यां निमार्ष्टि ते-
नैव तान्प्रीणात्यत्र पितरो मादयध्वमिति निष्क्रामन्ति त आहवनी-
यमुपायन्ति सुसंदृशं त्वा वयमिति त आ तमितोऽस्तिष्ठन्त्यन्तं वा एते
प्राणस्य गच्छन्ति ये पितृयज्ञमुपयन्त्यग्निमेवोपद्रष्टारं कृत्वान्तं प्रा-
णस्य गच्छन्ति परेत[1] पितरस्सोम्यास इति पुनरायन्त्यनुषक्ता वा ए-
तान्पितरो व्यावृत्त्या अमीमदन्त पितर इति प्रपद्यन्ते त ऊर्णां वा
दशां वा न्यस्यन्ति यदेव तत्र निगच्छन्ति तस्य निरवत्त्या अपः परि-
षिञ्चति मार्जयत्येव पुनरपरिषिञ्चन्पर्येत्यमुं वा एते लोकं निगच्छ-
न्ति ये पितृयज्ञमुपयन्ति प्रजापतिस्त्वा एनानत उन्नेतुमर्हति[2] यदे-
तामनिरुक्तां प्राजापत्यामन्वाहाया विष्ठा जनयन्कर्वराणीति प्रजाप-
तिरेवैनांस्तत उन्नयति पितॄन्वा एतद्यज्ञो ऽगन्पङ्क्त्या पुनरायन्ति
पाङ्क्तो यज्ञस्सहैव यज्ञेनायान्ति[3] पितॄन्वा एतस्य मनो गच्छति मनो
न्वहुवामह[4] इति तदेव पुनरुपह्वयते ॥ १३ ॥

cf. Mâitr. S. 1, 10, 18 (zweite Hälfte) und 1, 10, 19.

एतद्वा अस्य संवत्सरो ऽभीष्टो ऽभूदभीष्टाः पितरो ऽथास्य[5] रुद्रा
अनभीष्टा रुद्रास्त्र्यम्बका यदेते त्र्यम्बकास्तेनास्य रुद्रा अभीष्टाः प्रीता
भवन्ति प्रतिपुरुषं भवन्ति प्रतिपुरुषमेव रुद्रं निरवदयत एको ऽधि
भवति गर्भेभ्य एव तेन रुद्रं निरवदयत एककपाला भवन्ति न वै
पुरुषं कपालैराप्नुमर्हत्येकधैवैनमाप्नोत्यभिघार्या३ नाभिघार्या३ इति
मीमांसन्ते अभिघार्या एव न हि हविरनभिघृतं यदभिघारयेद्रुद्रं पशू-
न्न्ववनयेत्तस्मान्नाभिघार्या एकोल्मुकं हरन्त्येकोल्मुकं हि रुद्राणां
धूपायद्धरन्ति धूपायद्धि रुद्राणां पराचीनं हरन्ति पराञ्चमेव रुद्रं हर-
न्तीमां दिशं हरन्त्येतस्यां वै दिशि रुद्राणां गृहा गृहेष्वेव रुद्रं निरव-

---

1 Vgl. oben Kâṭh. 9, 6 a. A. 2 So corr. mit Caland; Ch एतानत तन्नेतुम°; cf. Mâitr. S.1, 10, 19 (p. 159, Z. 10) = Corr. 3 Ch यांति 4 So corr. Ch हवामह; cf. aber oben Kâṭh. 9, 6. 5 So corr. Ch षास्य; cf. Mâitr. S. 1, 10, 20 a. A.

यजते ॥ रुद्राखुं ते पशुं करोमीत्याखुकिरा एकमुपवपति पशुभ्य एव
रुद्रं निरवदयते तस्मात्तान्पशुपतिर्घातुकश्चतुष्पथे याजयन्ति चतुष्पथे
वै रुद्राणां गृहा गृहेष्वेव रुद्रं निरवयजत एष ते रुद्र भागस्सह स्व-
स्राम्बिकया तं जुषस्व स्वाहेति शरद्वै रुद्रस्य स्वसाम्बिका तामेषो
ऽन्ववचरति तस्मादेष शरदि भूयिष्ठं हन्ति तयैवैनं सह निरवदयते म- 5
ध्यमेन पर्णेन जुहोति तद्ध्यरक्षोहतं यद्ग्राम्येण[1] जुहुयाद्रुद्रः पशूनन्व-
वनयेत्तस्मादारण्येन हूयते ऽवाम्ब रुद्रमदिमहीत्यनृणा एवाभूवन्भेषजं
गवे ऽश्वाय पुरुषाय चेत्यनृणा एव[2] भूत्वा भेषजमक्रत ॥ त्र्यम्बकं यजा-
मह इति परियन्ति या पतिकामा स्यात्सापि परीयात्पतिवेदनमेवा-
स्यै कुर्वन्ति तानुदस्य प्रतिलभन्ते ऽनृणा एव भूत्वा भगं[3] प्रतिलभन्ते 10
तान्यजमानाय समावपन्ति भगमेवास्मै[4] समावपन्ति या पतिकामा
स्यात्तस्यै समावपेयुर्भगमेवास्यै[5] समावपन्ति तान्मूते[6] कृत्वा वृक्ष आ-
सचन्त्येष ते रुद्र भागस्तेनावसेन परो मूजवतो ऽतीहीति गिरिर्वै रु-
द्रस्य योनिस्तत एषो ऽभ्यवचरति स्वेनैवैनं भागधेयेन स्वं योनिं ग-
मयत्यनपेक्षमाणा आयान्ति रुद्रस्यानन्ववायायैधो ऽस्येधिषीमहीति 15
रुद्रमेव निरवदायैधतुमुपयन्ति[7] समिदसि समेधिषीमहीत्याशिषमे-
वाशास्ते तेजो ऽसि तेजो मयि धेहीति तेज एवात्मन्धत्ते ऽम्बी वै स्त्री
भगानाम्नी[8] तस्मात् त्र्यम्बका अप्रतिष्ठितो वा एष यस्याप्रतिष्ठितं ह-
विरप्रतिष्ठितास्त्र्यम्बका न प्रयाजा इज्यन्ते नानुयाजा न सामिधेनी-
रन्वाहादित्यै चरुं[9] निर्वपतीयं वा अदितिरियं प्रतिष्ठास्यामेव प्रति- 20
तिष्ठति ॥ १४ ॥ cf. Mâitr. S. 1, 10, 20.

---

[1] So corr. mit Caland; Ch °म्यान [2] So corr. Ch एवा [3] So corr. Ch भागं; aber vgl. weiter unten und Mâitr. S. 1, 10, 20 (p. 160, Z. 13). [4] So corr. Ch भागमे°; aber vgl. weiter unten und Mâitr. S. 1, 10, 20 (p. 160, Z. 13). [5] So Ch und auch Mâitr. S. 1, 10, 20 (p. 160, Z. 14). [6] So corr. Ch तान्पूते; aber cf. Mâitr. S. 1, 10, 20 (p. 160, Z. 15) = Corr.; cf. auch TBr. 1, 6, 10, 5. [7] So corr. Ch यैधत्तमु°; vgl. oben 36, 7 a. E. (ganz ebenso!). [8] So Ch; Mâitr. S. 1, 10, 20 (p. 161, Z. 3) भगनाम्नी; darnach zu corrigiren. [9] So corr. Ch चरुनिं°

अपां[1] यो द्रवणे रसस्तमहमस्मा अमुष्मा आमुष्यायणाय तेजसे वर्चसे गृह्णाम्यपां य ऊर्मौ रसस्तमहमस्मा अमुष्मा आमुष्यायणायौजसे क्षत्राय[2] गृह्णाम्यपां यो मध्ये[3] रसस्तमहमस्मा अमुष्मा आमुष्यायणाय प्रजायै पुष्ट्यै गृह्णाम्यपां या यज्ञिया तनूस्तामहमस्मा[4]
5 अमुष्मा आमुष्यायणायायुषे दीर्घायुत्वाय गृह्णामि ॥

रथे[5] अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे ।
इन्द्रं या देवी[6] सुभगा जजान सेयमागाद्वर्चसा संविदाना ॥
या हस्तिनि द्वीपिनि[7] या हिरण्ये गोष्वश्वेषु[8] पुरुषेष्वन्तः ।
इन्द्रं या देवी सुभगा जजान सेयमागाद्वर्चसा संविदाना ॥
10 सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ[9] ब्राह्मणे सूर्ये या ।
इन्द्रं या देवी सुभगा जजान सेयमागाद्वर्चसा संविदाना ॥
या राजन्ये दुन्दुभा आयतायामश्वस्य क्रन्दे[10] पुरुषस्य मायौ ।
इन्द्रं या देवी सुभगा जजान सेयमागाद्वर्चसा संविदाना ॥[11]

राडसि[12] विराडसि सम्राडसि[13] स्वराडसीन्द्राय त्वा मधुमते मधु-
15 मन्तीं श्रीणामीन्द्राय त्वौजस्वत ओजस्वन्तीं श्रीणामीन्द्राय त्वा पयस्वते पयस्वन्तीं श्रीणामीन्द्राय त्वायुष्मत[14] आयुष्मन्तीं श्रीणामि वर्चो ऽसि तन्मे नियच्छ तत्ते नियच्छाम्योजो ऽसि तन्मे नियच्छ तत्ते

---

[1] Dies Capitel findet sich außer in Ch auch in den accentuirten Handschriften T 1 und Brl fol. 119. 120; der größte Theil desselben auch in W 2; ferner ein Stück davon in Brl fol. 92 und T 7; zum Anfang vgl. TBr. 2, 7, 7, 7. [2] Ch योजसे क्षत्राया [3] W 2 मध्यें; cf. Schluß des Capitels. [4] W 2 तमहं°; desgl. Ch, ohne Acc.; W 2 vorher auch यों für यां [5] Von hier ab, bis zum Ende der Verse, auch in Brl fol. 92 vorhanden; desgl. in T 7. [6] W 2 दिवी; ebenso hat W 2 auch in den drei folgenden Versen दिवी für देवी; cf. TBr. 2, 7, 7, 2. [7] W 2 हस्तिने द्वीपिने; T 7 हस्तिने द्वीपिनि; cf. auch TBr. 2, 7, 7, 1. 2. [8] T 1 und Brl fol. 119 गोष्वश्वेषु; W 2 गोषश्वेषु; TBr. 2, 7, 7, 1 त्विषिरश्वेषु [9] Ch द्विषिर° [10] TBr. 2, 7, 7, 1 क्रन्द्ये [11] Hier bricht Brl fol. 92 ab; desgl. T 7. [12] Für das folgende vgl. TBr. 2, 7, 7, 2 und 3. [13] Ch सम्राडसी [14] Ch त्वा आयु°

नियच्छामि पयो ऽसि तन्मे नियच्छ तत्ते नियच्छाम्यायुरसि तन्मे
नियच्छ तत्ते नियच्छामि ॥
वर्चस्वदस्तु मे मुखं वर्चस्वच्छिरो[1] अस्तु मे ।
वर्चस्वान्विश्वतः प्रत्यङ् वर्चसा संपिपृग्धि मा ॥
ओजस्वदस्तु मे मुखमोजस्वच्छिरो[2] अस्तु मे ।
ओजस्वान्विश्वतः प्रत्यङ्ङोजसा संपिपृग्धि मा ॥
पयस्वदस्तु मे मुखं पयस्वच्छिरो[2] अस्तु मे ।
पयस्वान्विश्वतः प्रत्यङ् पयसा संपिपृग्धि मा ॥
आयुष्मदस्तु मे मुखमायुष्मच्छिरो[3] अस्तु मे ।
आयुष्मान्विश्वतः प्रत्यङ्ङायुषा संपिपृग्धि मा ॥

इदमहं गायत्रेण छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्नाग्निना देवतया तेजस्ते वर्च आददे ऽसा इदमहं त्रैष्टुभेन छन्दसा पञ्चदशेन[4] स्तोमेन बृहता साम्नेन्द्रेण देवतयौजस्ते क्षत्रमाददे ऽसा इदमहं जागतेन छन्दसा सप्तदशेन[5] स्तोमेन वैरूपेण साम्ना विश्वैर्देवैर्देवतया प्रजां ते पुष्टिमाददे ऽसा इदमहमानुष्टुभेन छन्दसैकविंशेन स्तोमेन वैराजेन साम्ना प्रजापतिना देवतयायुस्ते दीर्घायुत्वमाददे ऽसौ ॥

इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि ।
मातेवास्मा अदिते शर्म यच्छ विश्वे देवा[6] जरदष्टिर्यथासत् ॥
विश्वकर्मा विश्वदेवो विश्वजिद्विश्वदर्शतः[7] ।
ते त्वा घृतस्य धारया[8] श्रैष्ठ्याय समसूषत ॥
यतो वातो मनोजवा यतः क्षरन्ति सिन्धवः ।
तासां त्वा सर्वासां रुचाभिषिञ्चामि वर्चसा ॥

---

[1] Ch स्वश्शिरो; W 2 undeutlich; T 1 und Brl स्वच्छिंरो [2] Ch स्वश्छिरो; W 2 स्वञ्छिंरो [3] So T 1 und Brl; Ch ष्मश्छिरो; W 2 ञ्छिंरो [4] W 2 पञ्चंदशेन [5] W 2 सप्तंदशेन [6] So T 1 und Brl fol. 120; W 2 देंवा; cf. oben Kâṭh. 11, 7; Mâitr. S. 2, 3, 4; TBr. 2, 7, 7, 5. [7] Ch दर्शितः [8] Von hier ab der Text in W 2 nicht mehr vorhanden, weil abgebrochen.

अभि त्वा वर्चसासिचं यज्ञेन पयसा सह ।
यथासो[1] मित्रवर्धनस्तथा त्वा सविता करत् ॥
इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं[2] गिरः ।
रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥
अपां यो द्रवणे रसस्तेनाहमिमममुमामुष्यायणममुष्याः पुत्रं तेजसे ब्रह्मवर्चसायाभिषिञ्चाम्यपां य ऊर्मौ रसस्तेनाहमिमममुमामुष्यायणममुष्याः पुत्रमोजसे क्षत्रायाभिषिञ्चाम्यपां यो मध्ये रसस्तेनाहमिमममुमामुष्यायणममुष्याः पुत्रं प्रजायै पुष्ट्या अभिषिञ्चाम्यपां[3] या यज्ञिया तनूस्तयाहमिमममुमामुष्यायणममुष्याः पुत्रमायुषे दीर्घायुत्वायाभिषिञ्चामि ॥ १५ ॥ cf. TBr. 2, 7, 7.

इति श्रीमद्यजुषि काठके चरकशाखायामोरिमिकायां चातुर्मास्यानि नाम षट्त्रिंशं स्थानकं संपूर्णम्[4] ॥

---

प्रजापतिः प्रजा असृजत ता अस्मादपाक्रामंस्ता अकामयतोप मावर्तेरन्निति स एतमोदनमपचत्सो ऽन्नमेव भूत्वैकधातिष्ठत्ता अन्यत्रान्नमविस्वा ताः प्रजापतिमेवैकधान्नाद्यायाभिसमावर्तन्त यावतीर्ह वै कियतीश्च प्रजा वाचं वदन्ति ता एनमेकधान्नाद्यायाभिसमावर्तन्ते य एतेनाभिषिच्यते स एष ओदनसवो[5] राडसि विराडसीत्येता-

[1] So T1 und Brl fol. 120; in Ch यथासो; TBr. 2, 7, 15, 4 यथासा [2] T1 und Brl fol. 120 समुद्रव्यचसं; desgl. Ch, ohne Accent; aber vgl. RV 1, 11, 1. [3] So corr. T1 und Brl fol. 120 पुष्ट्यायाभिषि°; Ch पुष्ट्याभिषि° [4] So die Unterschrift des Capitels in Ch. [5] So zweifelnd corrigirt; Ch ओदनमवो; cf. die Unterschrift des Cap.

नीव सर्वाणि भवन्ति सर्वाण्यन्नानि भवन्ति सर्वे पुरुषास्सर्वाण्येवा-
न्नान्यवरुन्द्धे सर्वान्पुरुषान्हिरण्यं ब्रह्मणे[1] ददाति तेजस्तेन परिक्रीणा-
ति तिसृधन्वं[2] राजन्यायौजस्तेन परिक्रीणात्यष्ट्रां वैश्याय पुष्टिं तेन
परिक्रीणाति माषकमण्डलुं शूद्रायायुस्तेन परिक्रीणाति हिरण्यमाब-
ध्नाति तदेवास्मिन्प्रतिष्ठापयति ॥ यदोदनं प्राश्नात्येतदेव सर्वमवरुध्य
तदस्मिन्नेकधा दधाति रोहिण्यां क्रियते यद्ब्राह्मणा रोहिणी तस्माद्य-
दुद्यति सूर्ये क्रियत एतद्वै प्रजापते रूपं यद्ध्येष उदेति सर्वा वा एतं
प्रजाः प्रतिनन्दन्ति दिदृक्षेण्यो[3] ह दर्शनीयो भवत्यवेत्यो ऽवभृथा३
नावेत्या३[4] इति मीमांसन्ते यद्दर्भपिञ्जूलैः पावयति तदेवावैति तदु
नावैत्युभयमेव करोति द्वाभ्यां पावयति द्वे सत्यं चानृतं च सत्येनैवा-
स्यानृतं पावयति द्वौ प्राणश्चापानश्च त्रिभिः पावयति त्रिषत्या हि
देवा अथो त्रयो हि प्राणाः प्राणो व्यानो ऽपानः पञ्चभिः पावयत्यपां
वा एतदोषधीनां तेजो यद्दर्भा यद्दर्भपिञ्जूलैः पावयत्यपामेवैनमोष-
धीनां तेजसाभिषिञ्चति ॥ १ ॥ cf. TBr. 2, 7, 9.

आग्नेयो ऽष्टाकपालस्सौम्यश्चरुस्सावित्रो[5] ऽष्टाकपालो बार्हस्पत्य-
श्चरुरग्नीषोमीय एकादशकपालस्सारस्वतश्चरुर्वारुणो यवमयो दशक-
पालो द्यावापृथिव्य एककपालो यदाग्नेय आग्नेयो हि ब्राह्मणो य-
त्सौम्यस्सौम्यो[6] हि ब्राह्मणो यत्सावित्रः[7] प्रसवायैव सावित्रो यद्बा-
र्हस्पत्यो ब्रह्म वै बृहस्पतिरेतद्ब्राह्मणस्य वाक्पत्यं यदग्नीषोमीय आग्ने-
यो हि सौम्यो ब्राह्मणस्तौ[8] यदा संगच्छेते अथ वीर्यावान्भवति य-
त्सारस्वतो वाग्वै सरस्वत्येतद्ब्राह्मणस्य प्रत्यक्षं वाक्पत्यं[9] यद्वारुणो
निर्वरुणत्वायैव[10] वारुणो यो ह्येव कश्च सन्सूयते स वारुणो यद् द्या-

[1] So corr. Ch ब्रह्मणो [2] So corr. Ch त्तिसृजधन्वै; TBr. 2, 7, 9, 2 = Corr. [3] So corr. Ch दिदृक्षिण्यो [4] So corr. Ch भवत्येवत्यो वभृथा ३ नावित्या ३; cf. TBr. 2, 7, 9, 5 अवेत्यो वभृथां ३ नां ३ इति [5] So corr. Ch सोम्य° [6] So corr. Ch सौम्यास्सौ° [7] So corr. Ch सावित्राः [8] So corr. Ch णास्तो [9] So corr. Ch वाक्रत्यं [10] So corr. Ch त्वायेव; cf. TBr. 2, 7, 3, 2.

वापृथिव्य इन्द्रो वै वृत्राय वज्रमुदयच्छत तं द्यावापृथिवी नान्वम-
न्येतां तमेतेन भागधेयेनान्वमन्येतां वज्रस्य वा एषो ऽनुमानो ऽनुम-
तवज्रस्सूयाता इति यदष्टौ हवींष्यष्टाक्षरा गायत्री ब्रह्म गायत्री ब्रह्म-
णा सूयाता इति कृष्णाजिने ऽध्यभिषिच्यत[1] ऋक्सामयोर्वा एतद्रूपं
5 यत्कृष्णाजिनमृक्सामयोरेवाध्यभिषिच्यते हिरण्येन घृतमुत्पुनाति तेजस
एव रुचे यद्घृतेनाध्यभिषिच्यते तेन ह श्रैष्ठ्यं प्राप्नोति ॥ २ ॥ cf. TBr. 2, 7, 3.

आग्नेयो ऽष्टाकपालः पौष्णश्चरुस्सावित्रो ऽष्टाकपालो वैश्वदेवश्च-
रुस्त्वाष्ट्रो ऽष्टाकपालो वारुणो यवमयो दशकपालो मारुतस्सप्तकपा-
लो मारुती पृश्निर्वशा यदाग्नेय ऋद्व्या एवाग्नेयो ऽग्निमुखा ह्यृद्धि-
10 र्यत्पौष्णः पुष्टिर्वै पूषा पुष्टिर्वैश्यस्य यत्सावित्रः प्रसवायैव सावित्रो
यद्वैश्वदेवो वैश्वदेवो हि वैश्यो यत्त्वाष्ट्रस्त्वष्टा हि रूपाणि विकरोति
यद्वारुणो निर्वरुणत्वायैव वारुणो यो ह्येव कश्च सन्सूयते स वारुणो[2]
यन्मारुतो मारुतो हि वैश्यो यत्सप्त हवींषि सप्त हि मरुतो ऽथैषा
मारुती पृश्निर्वशा तस्या अग्नये समवत्तं भवत्यथाभिषिच्यते विड्वै
15 मरुतो विश एव मध्यतो ऽभिषिच्यते तस्मादेष विशः प्रियो विशो
हि मध्यतो ऽभिषिच्यत ऋषभचर्मे[3] ऽध्यभिषिच्यते स हि प्रजनयिता
प्रजननाय दध्नाभिषिच्यते मृदु दधि मृदुमेवैनं करोति ॥ ३ ॥
cf. TBr. 2, 7, 2.

नराशंसस्य महिमानमेषामुपस्तोषाम[4] यजतस्य यज्ञैः ।
ये सुक्रतवश्शुचयो धियंधास्स्वदन्ति देवा उभयानि हव्या ॥

20 यो वै सोमेन यजते स देवसवो यः पशुना यजते स देवसवो य
इष्ट्या यजते स मनुष्यसव एतं वै पृथ्यै देवा अन्वमन्यन्त तेनैनमभ्य-
षिञ्चन्सो ऽप्यारण्यानां पशूनामसूयत यावतीर्ह वै कियतीश्च प्रजा
वाचं वदन्ति तासां सर्वासां सूयते य एतेनाभिषिच्यते निहूत्यैवैतद-

---

[1] So corr. mit Caland; Ch व्यभि°; ebenso Zeile 5. [2] So corr. Ch वरुणो; cf. aber oben 37, 2 und TBr. 2, 7, 2, 2 a. A. [3] Dasselbe TBr. 2, 7, 2, 2. [4] So corr. Ch स्तोषाम; cf. RV 7, 2, 2; Mâitr. S. 4, 13, 3; TBr. 3, 6, 3, 1.

भिषिच्यते[1] नाराशंस्यर्चा मनुष्या हि नराशंसो यत्किंच राजसूये ऽनुत्त-
रवेदिकं[2] तदत्र सर्वं क्रियते ऽथैष मारुत एकविंशतिकपालस्तस्याग्नये
समवत्तं भवत्यथाभिषिच्यते त्रिवैं सप्त सप्त मरुतो विशमरुतो विश
एव मध्यतो ऽभिषिच्यते तस्मादेष विशः प्रियो विशो हि मध्यतो
ऽभिषिच्यते ॥ ४ ॥ cf. TBr. 2, 7, 5. 5

सं ते पयांसि समु यन्तु वाजास्सं वृष्ण्यान्यभिमातिषाहः[3] ।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥

न वै सोमेन सोमस्य सवो ऽस्त्यभिषिक्तो हि सोमो घ्नन्ति हि
सोमं न हि हतस्सूयते सौम्या[4] त्रिष्टुभाभिषिच्यते सा हि सोमसव-
स्सौम्यां सूतवशायामध्यभिषिच्यते सा हि रेतोधा रेतस्सोमो यत्किंच 10
राजसूये ऽन्यत्सोमेभ्यस्तदत्र सर्वं क्रियते ऽथैष मारुत एकविंशतिक-
पालस्तस्याग्नये समवत्तं भवत्यथाभिषिच्यते त्रिवैं सप्त सप्त मरुतो
विशमरुतो विश एव मध्यतो ऽभिषिच्यते तस्मादेष विशः प्रियो वि-
शो हि मध्यतो ऽभिषिच्यते ॥ ५ ॥ cf. TBr. 2, 7, 4.

यद्वै राजसूयं स वरुणसवो यद्वाजपेयं स सम्राट्सवः प्रजापतिस्सा- 15
म्राज्यं परमेष्ठी स्वाराज्यं गौरेव स एष गोसवो यथेव ह गौरेवमिव
भवति य एतेनाभिषिच्यते प्रतिदुहाभिषिच्यते तद्धि स्वाराज्यं बृह-
त्साम तद्धि स्वाराज्यमयुतं दक्षिणा तद्धि स्वाराज्यं पवमाने कण्वर-
थंतरं प्रोहन्ति[5] दक्षिणत आहवनीयस्यानुद्धते ऽभिषिच्यत इयं वै गौ-
रस्या एवानन्तर्हितो[6] ऽभिषिच्यते षट्त्रिंशस्स्तोमो[7] भवति पशुस्तोमो 20
वा एष तेन गोसवः ॥ ६ ॥ cf. TBr. 2, 7, 6.

त्रिवृत्स्तोमो ब्रह्मवर्चसं वै त्रिवृद्ब्रह्मवर्चसेनैवाभिषिच्यते[8] रथंतरं

---

[1] cf. TBr. 2, 7, 5, 2 निहृत्य वावैतत् [2] So corr. mit Caland; Ch नोत्तर° cf. TBr. 2, 7. 5, 2 यत्किञ्च राजसूयमनुत्तरवेदीकं [3] Die Sylbe न्य fehlt in Ch; cf. RV 1, 91, 18. [4] So corr. Ch सोम्या [5] So Ch, resp. प्रोहंति; TBr. 2, 7, 6, 1 hat कण्वरथंतरं भवति [6] So corr. mit Caland; Ch एनानन्त° [7] So corr. Ch स्तोभो [8] So corr. Ch सैरेवा°

साम ब्रह्मवर्चसं वै रथंतरं ब्रह्मवर्चसेनाभिषिच्यते ऽग्निष्टोमस्तोमो[1]
ब्रह्मवर्चसं वा अग्निष्टोमो ब्रह्मवर्चसेनैवाभिषिच्यते प्रवर्ग्यः प्रवृज्यते
ब्रह्मवर्चसं वै प्रवर्ग्यो ब्रह्मवर्चसेनैवाभिषिच्यते परिस्रजी होतारुणो
मिर्मिरस्त्रिशुक्रिय एतद्वै ब्रह्मवर्चसस्य रूपं रूपेणैव ब्रह्मवर्चसमवरुन्द्ध
5 एकं वा एतत्सवनं यदेकस्तोम एकं छन्द एकादशैकादशानुसवनं[2]
दद्यात्सवनानां व्यावृत्त्यै त्रयस्त्रिंशत्संपद्यन्ते त्रयस्त्रिंशद्देवता देवता ए-
वावरुन्द्धे ऽश्वं चतुस्त्रिंशं ददाति प्रजापतिश्चतुस्त्रिंशः प्रजापतिमेवा-
प्नोति बृहस्पतये वै देवा न श्रदद्धत तमेतेन प्रजापतिरयाजयत्ततो
ऽस्मै श्रदद्धत स एष बृहस्पतिसवो ब्रह्मवर्चसकाम एतेन यजेत
10 ब्रह्मवर्चसी भवति तस्यैषैव नियतिः[3] प्रजास्सर्वा ब्राह्मणीर्ब्रह्मवर्चसि-
नीर्भवन्ति[4] ॥ ७ ॥cf. TBr. 2, 7, 1.

पञ्चदशस्तोम ओजो वै वीर्यं पञ्चदश[5] ओजसैव वीर्येणाभिषि-
च्यते बृहत्सामौजो वै वीर्यं बृहदोजसैव वीर्येणाभिषिच्यत उक्थ्य-
स्तोम[6] ओजो वै वीर्यमुक्थान्योजसैव वीर्येणाभिषिच्यत[7] ऐन्द्रं
15 स्तोत्रं च शस्त्रं च त्रैष्टुभाः पवमाना ओजो वै वीर्यं त्रिष्टुबोजसैव
वीर्येणाभिषिच्यत इन्द्रं वै सर्वा मृधस्सर्वा नाष्ट्रास्सर्वाणि रक्षांस्यजि-
घांसंस्तमेतेन प्रजापतिरयाजयत्स सर्वा मृधस्सर्वा नाष्ट्रास्सर्वाणि[8] र-
क्षांस्यतरदिन्द्रो यजमानो यदेतेन यजते सर्वा एव मृधस्सर्वा नाष्ट्रा-
स्सर्वाणि रक्षांसि तरति स एष इन्द्रसवः ॥ ८[9] ॥
20 सावीर्हि[10] देव प्रथमाय[11] पित्रे वर्ष्माणमस्मै वरिमाणमस्मै ।

---

[1] So Ch स्तोमो; cf. TBr. 2, 7, 1, 1 अग्निष्टोमः सोमो भवति [2] So meine Correctur; Ch एकादशैकादशावसनन्दद्या°; cf. TBr. 2, 7, 1, 3. [3] So zweifelnd corr. Ch निय [4] So Ch ब्राह्मणीब्रह्म° [5] Von पञ्चदश bis zum folgenden वीर्यं am Rande eingeschaltet, offenbar zuerst versehentlich ausgelassen. [6] So corr. Ch zuerst उत्थस्स्तोम geschrieben, dann am Rande corrigirt in उक्थ्या° [7] So corr. Ch च्यते [8] Das ganze Stück von रक्षांस्यजिघांसं° bis सर्वाणि folgt in Ch hier nochmals; unzweifelhafte Dittographie. [9] So corr. Ch schreibt ४ [10] Dies Capitel auch in den accentuirten Handschriften T 1, Brl fol. 118. 119 und W 2 vorhanden. [11] TBr. 2, 7, 15, 1 प्रसवाय

अथास्मभ्यं सवितर्वार्याणि दिवे दिव[1] आसुवा भूरि पश्वः ॥
भूतो भूतेषु चरति प्रविष्टस्स भूतानामधिपतिर्बभूव ।
तस्य मृत्यौश्चरति[2] राजसूयं स राजा राज्यमनुमन्यतामिदम् ॥
येभिश्शिल्पैः[3] पप्रथानामदृंहद्येभिर्द्यामभ्यपिंशत्प्रजापतिः[4] ।
येभिर्वाचं विश्वरूपेभिर्व्ययंस्तेनेममग्न[5] इह वर्चसा समङ्ग्ध[6] ॥ 5
येभिरादित्यस्तपति प्र केतुभिर्येभिस्सूर्यो ददृशे चित्रभानुः ।
येभिर्वाचं पुष्कलेभिर्व्ययंस्तेनेममग्न[7] इह वर्चसा समङ्ग्ध[8] ॥
आयं भातु शवसा पञ्च कृष्टीरिन्द्र[9] इव ज्येष्ठो[10] भवतु प्रजानाम् ।
अस्मिन्नस्तु पुष्कलं चित्रभान्वायं पृणातु[11] रजसा विमानम् ॥
यत्ते शिल्पं कश्यप[12] रोचनावदिन्द्रियावत्पुष्कलं चित्रभानु[13] । 10
यस्मिन्सूर्या अर्पितास्सप्त साकं तस्मिन्राजानमधि विश्रयेमम् ॥
व्याघ्रो वैय्याघ्रे[14] अधि विक्रमस्व दिशो महीः ।
विशस्त्वा सर्वा[15] वाञ्छन्त्वापो दिव्याः पयस्वतीः ॥
या आपो दिव्याः पयसा संबभूवुर्या अन्तरिक्ष्या[16] उत पार्थिवासः ।
तासां त्वा सर्वासां रुचाभिषिञ्चामि वर्चसा ॥ 15
अभि त्वा वर्चसासिचं[17] यज्ञेन पयसा सह ।
यथासो[18] मित्रवर्धनस्तथा त्वा सविता करत् ॥

---

[1] Brl fol. 118 दिविं दिव [2] Brl 118 und W 2 मत्युंश्चरति; TBr. 2, 7, 15, 2 मत्यौ [3] Ch शल्यैः [4] So T 1; Brl 118 पप्रथनांम°; desgl. Ch, ohne Accent; W 2 पप्रथानंमं° [5] Brl 118 und W 2 व्ययंस्तें°; TBr. 2, 7, 15, 2 विश्वरूपैं समव्ययत und मग्न; Brl मग्र ohne Accent. [6] T 1, Brl 118 und W 2; in Ch समङ्धि [7] T 1 und Brl 118 यंस्तें°; W 2 यांस्ते; Ch यंस्ते; TBr. 2, 7, 15, 2 पुष्कलेभिरव्ययत und मग्न; Brl 118 मग्र ohne Accent. [8] T 1, Brl 118 und W 2 समङ्ग्ध; Ch समङ्ध [9] W 2 कृंष्टो°; TBr. 2, 7, 15, 3 कृष्णीः mit Var. कृष्टीः [10] So betont Brl 118; in T 1 und W 2 Lücke. [11] W 2 पृणातु oder पृणान्तु; cf. TBr. 2, 7, 15, 3 पृणात्त [12] Brl 118 कश्यपो [13] W 2 पुंष्कलं चित्रंभानुः [14] So T 1 und Brl 118; in W 2 व्याघ्रो वैय्याघ्रे; Ch व्याघ्र वैयाघ्रे; TBr. 2, 7, 15, 3 व्याघ्रो वैय्याघ्रो धि [15] So corr. Mss. सर्वा [16] W 2 रिक्षे; cf. TBr. 2, 7, 15, 4 अन्तरिक्ष [17] In Ch und W 2 fehlt सिचं; vgl. aber auch TBr. 2, 7, 15, 4. [18] Vgl. TBr. 2, 7, 15, 4 यथासा राष्ट्रवर्द्धनः

इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं[1] गिरः ।
रथीतमं रथीनां[2] वाजानां सत्पतिं पतिम् ॥
अभि प्रेहि[3] वीरयस्वोग्रश्चेत्ता[4] सपत्नहा ।
आतिष्ठ मित्रवर्धनस्तुभ्यं देवा अधिब्रुवन्[5] ॥
5 आतिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी ।
अर्वाचीनं[6] सु ते मनो ग्रावा कृणोतु वग्नुना ॥
आतिष्ठन्तं[7] परि विश्वे अभूषञ्छ्रियो वसानश्चरति स्वरोचिः ।
महत्तदस्यासुरस्य नामा विश्वरूपो[8] अमृतानि तस्थौ ॥
अनु त्वेन्द्रो[9] मदत्वनु बृहस्पतिरनु सोमो अन्वग्निरावीत् ।
10 अनु त्वा विश्वे अवन्तु देवास्सप्त राजानो य उदाभिषिक्ताः[10] ॥
अनु त्वा मित्रावरुणा इहावतामनु द्यावापृथिवी ओषधीभिः ।
सूर्यो ऽहोभिरनु त्वावतु चन्द्रमा नक्षत्रैरनु त्वावीत्[11] ॥
द्यौश्च त्वा पृथिवी च प्रचेतसा यज्ञो बृहद्दक्षिणा त्वा पिपर्तु ।
अनु स्वधा चिकिते[12] सोमो अग्निरनु त्वावतु सविता सवेन ॥
15 एना व्याघ्रं परिषस्वजानं[13] सिंहं हिन्वन्ति महते धनाय ।
मर्मृज्यन्ते द्वीपिनमप्स्वन्तररुषं[14] न सुभ्वृस्तस्थिवांसम्[15] ॥ ॥ ९ ॥

cf. TBr. 2, 7, 15 und 16; 2, 7, 8.

बोधश्च[16] मा प्रतीबोधश्च पुरस्ताद्गोपायतामस्वप्नश्च मानवद्राणश्च[17]

---

[1] T1 und Brl 119 समुद्रंव्यचसं; vgl. Kâṭh. 18, 3; 36, 15; RV 1, 11, 1; TBr. 2, 7, 15, 5. [2] W2 रथीनं; ebenso TBr. 2, 7, 15, 5. [3] Brl 119 अभिप्रेहि; TBr. 2, 7, 8, 1 अभि प्रेहि [4] So Ch, ohne Accent; T1, Brl 119 und W2 श्चिंत्ता; aber TBr. 2, 7, 16, 1 श्चेत्ता [5] Brl wohl अधिब्रवन्, wie TBr. 2, 7, 16, 1. [6] W2 अर्वाचीनं; cf. RV 1, 84, 3. [7] So T1 und Brl 119; in W2 आति°; aber vgl. RV 3, 38, 4. [8] W2 रूपे [9] Brl त्विन्द्रो; vgl. aber TBr. 2, 7, 8, 1 a. E. [10] So T1 und Brl 119; in Ch य उदाभिषक्ताः; W2 यंवोदाभिषित्ताः; vgl. TBr. 2, 7, 8, 2 यं उताभिषित्ताः [11] TBr. 2, 7, 8, 2 त्वावतु [12] W2 चिकेते; TBr. 2, 7, 8, 2 चिकितां [13] Vgl. TBr. 2, 7, 8, 2 परिषस्वजानां [14] Ch द्वीपेन [15] W2 रुषंच सुभ्वृस्त°; T1 रुषंच स्वभ्वृस्त; Brl 119 रुषंच स्वभ्वृस्त; Ch रुषं नः सत्वस्त°; TBr. 2, 7, 16, 4 समुद्रं न सुहवन्तस्थिवांसं [16] Dies Capitel beruht wieder bloß auf Ch; für den Anfang vgl. AV 8, 1, 13. [17] So corr. Ch माणवद्राणश्च

दक्षिणतो गोपायतां गोपायमानश्च मा रक्षमाणश्च पश्चाद्गोपायतां जागृविश्च मारुन्धती चोत्तराद्गोपायताम् ॥

अनमित्रं नो अधरागनमित्रमुदक्कृधि[1] ।
इन्द्रानमित्रं नः[2] पश्चादनमित्रं पुरस्कृधि ॥

अनमित्रैरहोभिस्सचीमहि विश्वे देवा अनमित्रा न उषसस्सन्तु निम्रुचः ॥ याष्षडुर्वीः पञ्च प्रदिशस्ता नः[3] पान्तु मित्रधा नो मित्रे दधाता अभयं नो अस्तु ॥

ये रात्रीमनुतिष्ठथ ये च भूतेषु जागृथ ।
पशून्ये सर्वान्रक्षथ[4] ते न आत्मसु[5] जागृत ॥

बोध प्रतीबोधास्वप्नानवद्राण गोपायमान रक्षमाण[6] जागृवे ऽरुन्धति ये देवास्तनूपास्स्थ ते म इह तन्वं पात बोध प्रतीबोधेत्यसौ वा आदित्यो बोधो ऽग्निः प्रतीबोधो[7] ऽस्वप्नानवद्राणेति चन्द्रमा वा अस्वप्नो यः[8] पवते सो ऽनवद्राणो गोपायमान रक्षमाणेत्यहर्वै गोपायमानो रात्री रक्षमाणो जागृवे ऽरुन्धतीति यज्ञो वै जागृविर्दक्षिणारुन्धत्येते[9] वै देवा राष्ट्रभृतस्तानेवेट्ट आत्मनो गोपीथाय ॥ १० ॥

ये[10] राष्ट्रभृतो ये राष्ट्रस्यानुभर्तारस्तेभ्यो राष्ट्रीयः[11] परिदेय इमे वाव ते प्राणास्तेभ्य एवैनं परिददाति तेषामेताः पत्न्यस्तानेता अनु ताभ्यो ऽत्रापि कार्यं ताभ्य एवैतत्क्रियते ता ह्येता[12] अनु पुरोधाकामः कुर्वीत ब्रह्म चैव क्षत्रं[13] च सयुजौ करोति यदि क्षत्रमभिचरेत्स न इदं ब्रह्म पात्विति ब्रूयान्न क्षत्रमपि ब्रह्मणि वै क्षत्रं प्रतिष्ठितं ब्रह्मण[14] एवं क्षत्रमन्तरेति ताजक्प्रधन्वत्यपरुरुत्स्यमानः कुर्वीत संग्रामे कु-

---

[1] So corr. Ch मुदंक्कधि  [2] So corr. Ch इन्द्रानमित्रान्नः; cf. AV 6, 40, 3.  [3] So corr. Ch न पांतु  [4] So corr. Ch न्नक्ष्यथ; cf. AV 19, 48, 5.  [5] So corr. Ch आत्मस्व; cf. AV 19, 48, 5.  [6] So corr. Ch रक्षमान  [7] So corr. Ch प्रतीबोधस्वप्ना°  [8] So corr. Ch यय्यः  [9] So corr. Ch जागृविं द°  [10] Dies Capitel auch in T1 vorhanden und darnach accentuirt.  [11] So T1; Ch राष्ट्रियः; aber vgl. weiter unten, desgl. Mâitr. S. 2, 1, 12.  [12] So T1; Ch ताह्येता  [13] So T1; Ch क्षत्रभं च  [14] So T1; Ch ब्रह्म एव

वीति ये राष्ट्रभृतो[1] ये राष्ट्रस्यानुभर्तारस्तानेवोपासरत्ते ऽस्मै राष्ट्रमनु-
बिभ्रति य एषां लोकानां इन्द्वं राष्ट्रभृतो[2] वेद नास्य राष्ट्रं व्यथते ॥
अग्निश्चास्या[3] मनश्च वायुश्चान्तरिक्षस्य यज्ञश्च सूर्यश्च दिवश्चन्द्रमाश्च
रथस्सप्तथस्स हि भयादपवहति त्रिषप्ताः कवचिनस्त्रिषप्ता निषङ्गिण-
स्त्रिषप्ता आयुधिनस्तेभ्यो राष्ट्रीयः परिदेय इमे वाव ते प्राणास्तेभ्य
एवैनं परिददात्यभितो वा अग्निष्टोमं देवासुरा यत्ता आसन्नग्निष्टोमे
देवा उक्थ्येष्वसुरास्ते[4] देवा यदोक्थान्यागच्छन्यदोक्थान्यभ्यजयन्न-
थेन्द्रो[5] ऽब्रवीत्कश्चाहं चेदमाहरिष्याव इत्यहं चेत्यब्रवीद्वरुणस्तं वरुणो
ऽन्वतिष्ठतेन्द्र आहरत्सो ऽब्रवीत्कश्चाहं चेदमाहरिष्याव इत्यहं चेत्यब्र-
वीद्बृहस्पतिस्तं[6] बृहस्पतिरन्वतिष्ठतेन्द्र आहरत्सो ऽब्रवीत्कश्चाहं चेदमा-
हरिष्याव इत्यहं चेत्यब्रवीद्विष्णुस्तं विष्णुरन्वतिष्ठतेन्द्र आहरदेताभिर्वै[7]
देवताभिस्सायुज्येन देवा[8] असुराणां राष्ट्रमाददतैताभिरेव देवताभि-
स्सायुज्येन भ्रातृव्याद्राष्ट्रमादाय तद्राष्ट्रं कृत्वा ये राष्ट्रभृतो ये राष्ट्रस्या-
नुभर्तारस्तेभ्य एनत्संप्रयच्छत्येतद्बिभृतैतन्मा[9] रिषदित्यसौ वा आदि-
त्यो राष्ट्रमृतवो राष्ट्रभृतस्तेभ्य एवैनत्संप्रयच्छत्येतद्बिभृतैतन्मा[10] रिषदि-
ति य एष सप्तथः प्रजापतिरेवैष यन्मध्ये जुहुयाद्व्यवधून्वीतैनं[11] परोग-
व्यूतिं होतव्यस्तथा हैनं न व्यवधूनुत ऊर्ध्वस्तिष्ठञ्जुहोत्यूर्ध्वो हि ति-
ष्ठन्वीर्यावत्तरः पूर्णया स्रुचा जुहोति पूर्णः प्रजापतिः प्रजापतिमेवा-
प्नोति ॥ ११ ॥

देवाश्च[12] वा असुराश्च समावदेव यज्ञे ऽकुर्वत यदेव देवा अकुर्वत
तदसुरा अकुर्वत ते देवा एतान्राष्ट्रभृतो ऽपश्यंस्तेषामग्निं चौषधीश्च

---

[1] राष्ट्रभतो in T 1 ohne Accent; der Accent ergänzt. [2] राष्ट्रभतो in T 1 ohne Accent; der Accent ergänzt. [3] So T 1; in Ch ग्निश्चास्या [4] So T 1; in Ch उक्तेष्य° [5] So T 1; in Ch यदोक्तान्यागच्छन्यदोक्तान्य° [6] T 1 चेंदब्र°; Ch पतिस्त्वं [7] T 1 हरत ॥ एतां° [8] Ch दिवा [9] So T 1; Ch विभ्रते° [10] Die ganze Stelle von रिषदित्यसौ bis hierher folgt in Ch nochmals (Dittographie); T 1 = Text. [11] So corr. Ch द्व्यवधूंधीतैनं; T 1 द्व्यवधून्वीतैनम्परो° [12] Dies Capitel wiederum nur nach Ch; ebenso die folgenden.

प्रथमेनावृञ्जत सूर्यं च मनांसि च द्वितीयेन चन्द्रमसं च नक्षत्राणि
च तृतीयेन यज्ञं च दक्षिणां च चतुर्थेन ते ऽसुरा अयज्ञा अदक्षिणा
अनक्षत्रा यत्किंचाकुर्वत तां कृत्यामेवाकुर्वत तस्मान्नादक्षिणं गृहे
हविष्कुर्वीत यत्कुरुते कृत्यां कुरुते प्रजापतिं चर्क्सामानि च पञ्चमेन
वायुमप ओषधीरूर्जं षष्ठेनैतावद्वावास्ति[1] यावदेवास्ति तदेषामेतैर-
वृञ्जत य एष सप्तथः प्रजापतिरेवैष तेनैनान्प्राणुदन्त ततो देवा अभ-
वन्परासुरा अभवन्नेतैर्यजेत भ्रातृव्यवानेतावद्वावास्ति यावदेवास्ति त-
देतैर्भ्रातृव्यस्य वृङ्क्ते य एष सप्तथः प्रजापतिरेवैष तेनैनं प्रणुदते भव-
त्यात्मना परास्य भ्रातृव्यो भवत्येतैर्याजयेद्राजानं[2] संग्रामे संयत्त एता-
वद्वावास्ति यावदेवास्ति तदेषामेतैर्वृङ्क्ते य एष सप्तथः प्रजापतिरेवैष
तेनैनान्प्रणुदते जित्यै जयत्येवैतैर्याजयेद्यद्राष्ट्रं[3] शिथिलमिवावहतं स्या-
त्तेषां यावन्तो रथास्स्युस्तान्सर्वान्योजयित्वा यश्श्रेष्ठस्स्यात्तस्य दक्षिणं
रथचक्रं प्रवृह्य नाड्यां[4] जुहुयाद्वीर्यं वै रथो वीर्येणैवैषां राष्ट्रं विसंश्य-
न्ति रथचक्रं विगृह्णन्ति वज्रो वै रथो वज्रेणैवैषां[5] पाप्मानं विगृह्ण-
न्ति यदि क्लृप्ताहुतिरत्येति कल्पत एभ्यो यस्य नाड्यां जुहोति स दक्षि-
णा समृद्ध्यै ॥ १२ ॥ cf. TS 3, 4, 8.

को ऽसि कतमो ऽसि को नामासि कस्मै त्वा कतमस्मै त्वा काय
त्वा कामस्य त्वासन्नसा अपिदधामि स त्वं नो देव गायत्रेण छन्द-
साह्ने परिपाहि मृडो ऽसि मृडसे द्विपदे चतुष्पद आदित्यो ऽसि वृष्णो
अश्वस्य रेतो देवानां यातुरसि यातुर्मे ऽस्यसुमद्धि तं जहि[6] स त्वं नो
देव त्रैष्टुभेन छन्दसा रात्र्यै परिपाहि मृणो ऽसि मृणामुष्य द्विपदश्च-
तुष्पदस्स्कम्भो ऽसि वरुणस्य राज्ञो वरुणस्य पाशस्सो ऽमुमह्ने[7] बधान
ब्रूष्को ऽसि निर्ऋत्याः पाशस्सो ऽमुं रात्र्यै बधानाग्नये वीतमन्यवे स्वाहा॥

---

[1] So corr. Ch वास्ति [2] So corr. Ch भवत्येतेतैर्या° [3] So corr. Ch जयत्यैवैतै° [4] Vgl. TS 3, 4, 8, 3. [5] So corr. Ch वज्रेनै° [6] Vgl. dazu unten Cap. 14 dasselbe. [7] So corr. Ch सोममह्ने; doch vgl. das Folgende.

येनेन्द्रो वृत्रं निरहंश्छन्दसस्त्वादनुष्टुभः ।
तेनाहमद्य शंसेनामुं निर्हन्म्योकसः[1] ॥ ॥ १३ ॥

देवाश्च वा असुराश्च संयत्ता आसन्नसुरेषु तर्ह्यमृतमासीच्छुष्णे[2] दा-
नवे तच्छुष्ण एवान्तरास्ये ऽबिभर्यान्देवानामघ्नंस्तदेव ते ऽभवन्यानसु-
5 राणां ताञ्छुष्णो ऽमृतेनाभिव्यानीत्ते समानन्स इन्द्रो ऽवेदसुरेषु वा
अमृतं शुष्णे दानव इति स मध्वष्ठीला भूत्वा प्रपथे ऽशयत्तां शुष्णो
ऽभि व्याददात्तस्येन्द्रश्श्येनो भूत्वास्यादमृतं निरमुष्णात्तस्मादेष[3] वयसां
वीर्यावत्तम इन्द्रस्य ह्येषैका तनूरमृतमेष बिभर्ति य एवं वेद यं का-
मयेतामयाविनं जीवेदिति तं व्यादायाभिव्यन्यादमृतेनैवैनमभिव्यनि-
10 त्ति[4] जीवति सर्वमायुरेति[5] न पुरायुषः प्रमीयते ॥ देवाश्च वा असु-
राश्च संयत्ता आसंस्ते देवा असुरानघ्नंस्तेषां य उदशिष्यन्त ते देवानन्व-
रोहंस्त एनान्वृञ्जानाः प्रत्यस्यमाना आयंस्ते देवास्समितिमकुर्वत त
एतौ ब्रह्मयातुं च देवयातुं चापश्यंस्ता एभ्यः प्रत्यवासृजंस्ता एनान्नि-
रदहतां ता एनान्वृञ्जानौ प्रत्यस्यमाना ऐतां[6] तेषां ये ऽत्यमुच्यन्त ते[7]
15 मनुष्यान्प्राविशंस्तज्जन्मानो यातुधानाः क्रव्याद इतरे न ह वा अस्य
यातुधाना न क्रव्यादो न पिशाचा न रक्षांसीशते नैनं शप्तं नाभिच-
रितमागच्छति य एवं वेद ॥ तद्यद्येनं यातुधान इति ब्रूयुर्नापह्नुवी-
तैतौ[8] ह्येव तस्य यातू[9] को ऽसि कतमो ऽसीत्येष वै ब्रह्मयातुस्तस्मा
एवैनमपिदधाति स त्वं नो देव गायत्रेण छन्दसाह्ने परिपाहीत्यह्न
20 एवात्मानं परिददाति मृडो ऽसि मृडसे द्विपदे चतुष्पद इति द्विपद-
श्चैवास्मै चतुष्पदश्च पशून्परिददात्यादित्यो ऽसि वृष्णो अश्वस्य रेतो
देवानां यातुरसि यातुर्मे ऽस्यसुमद्धि[10] तं जहीत्येष वै देवयातुस्तस्मा
एवैनमपिदधाति स त्वं नो देव त्रैष्टुभेन छन्दसा रात्र्यै परिपाहीति

---

[1] So corr. Ch नामुर्निंहम्योंकसः [2] So corr. Ch उर्ह्यं° [3] So corr. mit Caland; Ch निरमथ्नात्त° [4] So corr. Ch याभिवेश्याद° [5] So corr. Ch युरिति [6] So corr. Ch एतां [7] So corr. Ch मुच्यते मनु° [8] So corr. Ch ह्रुवोतेतौ [9] So corr. Ch याभू [10] So corr. Ch स्यसमद्धि; aber vgl. oben 37, 13.

रात्र्या एवात्मानं परिददाति मृणो ऽसि मृणामुष्य द्विपदश्चतुष्पद इति द्विपदश्चैवास्मै चतुष्पदश्च पशूनपिदधाति ॥ स्कम्भो ऽसि ब्रेष्को[1] ऽसीत्येतौ वै यमश्वा अहश्च रात्री च ता इदं मनुष्यान्वृञ्जानौ प्रत्यस्यमाना इतस्ताभ्यामेवैनमपिदधाति ता एनं वृञ्जानौ प्रत्यस्यमाना इतो यदा प्रव्लयव्यथित इव[2] मन्येताग्नये वीतमन्यवे[3] स्वाहेति जुहुयादीश्वरो वा अभिचरो ऽशान्तः प्रत्यङ्केता शान्त्यै ॥ १४ ॥

पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा कामाय स्वाहा स्वप्नाय स्वाहाह्ने स्वाहा रात्र्यै स्वाहा तृप्तस्त्वं तृप्तो ऽहं तृप्तो मे प्राणस्तृप्तो मे व्यानस्तृप्तो मे ऽपानस्तृप्तं मे चक्षुस्तृप्तं मे श्रोत्रं तृप्ता मे वाक् तृप्तो म आत्मा द्यौर्मे पिता पृथिवी मे माता सूर्यो मे चक्षुर्वातो मे प्राणो ऽस्तृतो नामाहमस्मि स इदं[4] द्यावापृथिव्योरात्मानं परिददे तयोश्वये तयोः पराक्रमे गोपीथाय पिपृतं मा मा मा[5] हिंसिष्टं पाहि द्विषः पाहि रिषः पाह्यदेव्या अभिशस्त्या अश्मासि तनूपानस्स म इह तन्वं पाहि ॥ त्वयि मे मर्म बृहस्पतौ प्राणस्स मा मृत्योः पाह्युद्वाचमुन्मनीषामुदिन्द्रियमुत्प्रजामुत्पशूनेतैं[6] स ऋच्छतु यो मैतस्या[7] दिशो ऽभिदासतीन्द्राग्नी मैतस्या दिशो गोपायतां पितरो मैतस्या दिशो गोपायन्तु सविता मैतस्या दिशो गोपायतु मित्रावरुणौ मैतस्या दिशो गोपायतां बृहस्पतिर्मैतस्या दिशो गोपायत्वायुष्टदायुपत्नि[8] स्वधावो गोपा नस्स्थ रक्षितारो मा नः कश्चित्प्रखान्मा प्रमेष्महि ॥ १५ ॥

यांन्वा[9] असुरा देवेभ्यो न्यदधत[10] तान्देवा अन्वपश्यन्यान्देवा असुरेभ्यस्तानसुरा नान्वपश्यैंस्ततो[11] देवा अभवन्परासुरा अभवन्यंचा-

---

[1] So corr. Ch व्लोष्को स्योत्येतौ; cf. oben 37, 13 a. E. [2] So corr. mit Caland; Ch प्रव्लव्यथितमिव [3] So corr. Ch वीमन्यवे; cf. oben 37, 13 a. E. [4] So corr. Ch सद्वदन्द्या°; cf. 37, 16 = Corr. [5] मा मा ergänzt; in Ch nur ein मा; cf. aber 37, 16. [6] So corr. Ch पाह्युद्वाघमु°, cf. 37, 16 = Corr. [7] So corr. Ch मेतस्या [8] So corr. Ch पत्निः [9] Dies Capitel auch in T 1 und Brl fol. 144. 145 vorhanden; darnach accentuirt. [10] Brl न्यंददाते [11] Ch नाध्वपश्यै°

न्यो[1] नानुपश्येत्तदेतान्निदधीत भ्रातृव्यस्याननुकशात्यै भवत्यात्मना प-
रास्य भ्रातृव्यो भवति पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहेति
त्रय इमे लोका एभ्य एवैनं लोकेभ्यः परिददाति कामाय स्वाहेत्या-
युर्वै परमः काम आयुरेव तेन स्पृणोति स्वप्नाय स्वाहेति या[2] एवैनं
5 स्वपन्तं नाष्ट्रा[3] दिप्सन्ति स्वप्न[4] एनं ताभ्यः पात्यह्ने स्वाहा रात्र्यै स्वा-
हेति द्वौ वा ऋतू अहश्च रात्री च ताभ्यामेवैनं परिददाति सप्तैता
आहुतीर्जुहोति सप्त प्राणास्तानेवास्मिन्दधाति तानस्मिन्नधि विया-
तयति तानस्मादनपगान्करोति ॥ घृतेनाश्मानमनक्त्येष ह्येतर्ह्येतस्या-
त्मा तेजो घृतं यावानेवास्यात्मा तं तेजसानक्ति सर्वतो ऽनक्ति सर्वत
10 एवैनं तेजसा समर्धयति तृप्तस्त्वं तृप्तो[5] ऽहमिति प्राणानेवास्यैतन्म-
हिम्नो व्याचष्टे प्राणा हि महिमानो द्यौर्मे पिता पृथिवी मे माता
सूर्यो मे चक्षुर्वातो मे प्राण इत्येताभ्य एव देवताभ्य आत्मानं परिद-
दात्यस्तृतो[6] नामाहमस्मि स इदं द्यावापृथिव्योरात्मानं[7] परिदद इति
द्यावापृथिव्योरेवात्मानं परिदत्ते[8] तयोश्श्रये[9] तयोः पराक्रम इति यो
15 वा अनयोः पराक्रमते न स[10] व्यथते ऽनयोरेव पराक्रींस्त[11] गोपीथाय
पिपृतं मा मा[12] हिंसिष्टमित्यात्मनो ऽहिंसायै पाहि द्विषः पाहि
रिषः[13] पाह्यदेव्या अभिशस्त्या इत्याशिषमेवाशास्ते ॥ सर्वतो ऽश्मानं
परिहरत्येष ह्यूतिं[14] सर्वतः पातीयान्तं[15] लोष्टमुद्रुजत्येतावान्ह्यात्मा बा-
हुमात्रमवटं खनत्येतावान्हि पुरुषस्तमवधायाथाश्मानमथ[16] हिरण्य-
20 मस्या एवैनमुत्तरार्धे निदधात्यनिखातो भवति नाभिं प्रति निखनति
नाभिर्वै प्राणान्दाधार ये चोर्ध्वा ये चावाञ्चः प्राणानां[17] धृत्यै हिर-

---

[1] Brl यत्रान्ये नान्वपश्ये° [2] So Ch, nur ohne Accent; T 1 und Brl यं [3] So corr. Ch स्वपन्तन्नाष्ट्रा; T 1 und Brl स्वपन्नाष्ट्रा [4] Ch स्वप्ना [5] Accent corrigirt; T 1 तृप्तो ह°; Brl तृप्तो ह [6] Brl दधात्य° [7] So T 1 und Brl; Ch व्योनात्मानं [8] Brl परिधत्ते [9] श्रये ohne Accent in T 1 und Brl [10] Brl सं व्यथते [11] Brl पराक्रमीस्त [12] Brl पिपृतंम्मांम्मा मा [13] Ch रिष्यः [14] So T 1 und Brl; Ch ह्येते [15] So T 1 und Brl; auch Ch, ohne Accent, पातीयांतं [16] So T 1 und Brl; Ch वदाया° [17] So T 1 und Brl; Ch प्राणान्धृत्यै

ण्येन संस्पर्शयत्यमृतं वै हिरण्यममृतेनैवैनं संदधात्युद्वाचमुन्मनीषाम्-
मित्येतानि वा अस्य निखनेत्तान्येवोद्धरत्यात्ममात्री[1] वेदिर्भवत्यात्म-
मात्री हि वर्म यन्नात्ममात्री स्यान्नात्मने क्रियेतैतावती[2] पृथिवी या-
वती वेदिरस्या एवैतदन्तेषु पुरो ऽधित देवपुरा एवाकृताथो एता
एव देवता एतासां दिशां परस्या अकृत गोपीथाय ॥ १६ ॥ 5

ऋषयो वा इन्द्रं प्रत्यक्षं नापश्यंस्तं वसिष्ठ एव प्रत्यक्षमपश्यत्सो
ऽबिभेदितरेभ्यो मर्षिभ्यः प्रवक्ष्यतीति सो ऽब्रवीद्ब्राह्मणं ते वक्ष्यामि
यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्ते ऽथ मेतरेभ्य ऋषिभ्यो मा प्र-
वोच इति तस्मा एतान्स्तोमभागानब्रवीत्ततो वसिष्ठपुरोहिताः प्रजाः
प्राजायन्त स्तोमो वा एतेषां भागस्तत्स्तोमभागानां स्तोमभागत्वं 10
रश्मिरसि क्षयाय त्वा क्षयं जिन्वेति क्षयो वै देवा देवेभ्य एव यज्ञं
प्राह प्रेतिरसि धर्मेण त्वा धर्मं जिन्वेति धर्मो मनुष्या मनुष्येभ्य एव
यज्ञं प्राहान्वितिरसि[3] दिवे त्वा दिवं जिन्व संधिरस्यन्तरिक्षाय त्वा-
न्तरिक्षं जिन्व प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्वेति त्रय इमे
लोका एभ्य एव लोकेभ्यो यज्ञं प्राह विष्टम्भो ऽसि वृष्ट्यै त्वा वृष्टिं 15
जिन्वेति वृष्टिमेवावरुन्द्धे प्रवास्यनुवासीति मिथुनमेव करोत्युशिग-
सि वसुभ्यस्त्वा वसूञ्जिन्व[4] प्रकेतो ऽसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्व[5] सुदि-
तिरस्यादित्येभ्यस्त्वादित्याञ्जिन्वेत्यष्टौ[6] वसव एकादश रुद्रा द्वादशा-
दित्या वाग्द्वात्रिंशी स्वरस्त्रयस्त्रिंशस्त्रयस्त्रिंशद्देवता देवताभ्य एव यज्ञं
प्राहौजो[7] ऽसि पितृभ्यस्त्वा पितॄञ्जिन्वेति देवानेव पितॄननुसंतनोति 20
तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्वेति प्रजा एव पशूननुसंतनोति पृ-
तनाषाडसि पशुभ्यस्त्वा पशूञ्जिन्वेति प्रजा एव पशूननुसंतनोति[8]

---

[1] Ch निखनेतन्ये° [2] So T 1 und Brl; Ch क्रियतैता° [3] So corr. Ch प्राहा-त्वितिरसि [4] Ch वसूं जिन्व [5] Ch रुद्रां जिन्व; erste Hand रुद्रं [6] So corr. Ch सुदितिरस्यदित्येभ्यस्त्वादित्यं जि° [7] So corr. Ch प्राह्नोजो [8] So corr. und umgestellt mit Caland; Ch उत्तु मतानाषडसि पशुभ्यस्त्वा पशूञ्जिन्वेति प्रजा एव पशूननुसंत-नोति प्रजाभ्यस्त्वा प्रजा जिन्वेति प्रजा एव पशूननुसंतोति ॥ cf. Kâṭh. 17, 7; Gop. Br. 2, 2, 13.

रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वेत्योषधीष्वेव पशून्प्रतिष्ठापयत्यभिजिद-
सि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्वेति वज्रो वै षोडशी व्यावृत्तो ऽन्यैर्वज्र-
स्तस्मादेषो ऽन्यैर्व्यावृत्तो ऽधिपतिरसि प्राणाय त्वा प्राणं जिन्वेति प्रा-
णमेवावरुन्द्धे धरुणो ऽस्यपानाय त्वापानं जिन्वेत्यपानमेवावरुन्द्धे
5 संसर्पो ऽसि चक्षुषे त्वा चक्षुर्जिन्वेति चक्षुरेवावरुन्द्धे वयोधा असि
श्रोत्राय त्वा श्रोत्रं जिन्वेति श्रोत्रमेवावरुन्द्धे ॥ एतद्वै पुरुषमकरथातः
प्राणानुपैति प्रजापतिमेव त्रिवृदसि त्रिवृते त्वा सवृदसि सवृते त्वा
प्रवृदसि प्रवृते त्वानूवृदस्यनूवृते त्वेति मिथुनमेव करोति संरोहो ऽसि
विरोहो ऽसि प्ररोहो ऽस्यनूरोहो[1] ऽसीति प्रजापतिरेव वसुको ऽसि
10 वस्वष्टिरसि वेषश्रीरसीति प्रतिष्ठितिरेव देवस्य सवितुः प्रसवे बृह-
स्पतये स्तुतेति यद्वद्वै सविता देवेभ्यः प्रासुवत्तेनार्ध्नुवन्सवितृप्रसूता[2]
एव स्तुवन्त्यृध्नुवन्ति[3] यस्यैवं विदुषो यस्यैवं विद्वान्स्तोमभागैर्ब्रह्मा
भवति वसीयान्भवति ॥ १७ ॥

cf. oben 17, 7; Gop. Br. 2, 2, 13 und 14; TS 3, 5, 2.

स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन[4] मधुमतीं मधु-
15 मता सृजामि सं सोमेन सोमो[5] ऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्य-
स्वेन्द्राय सुत्राम्णे[6] पच्यस्व ॥

परीतो षिञ्चता सुतं सोमो य उत्तमं हविः ।
दधन्वान्यो नर्यो अप्स्वन्तरा सुषाव सोममद्रिभिः ॥[7]
वायुः पूतः पुनातु ते ॥

20 ब्रह्म क्षत्रं पवते तेज इन्द्रियं सुरया सोमस्सुत[8] आसुतो मदाय ।
शुक्रेण देव देवताः पिपृग्धि रसेनान्नं यजमानाय धेहि ॥

---

[1] So corr. Ch स्यनूरुहो [2] So corr. Ch नाब्नुवत्स° [3] Ch वंत्यधु° [4] So corr. Ch तीवां तीवेणामतममृतेन; cf. oben 12, 9 a. A.; Mâitr. S. 2, 3, 8 a. A. [5] So corr. Ch सोम स्यश्वि°; cf. oben 12, 9 a. A.; Mâitr. S. 2, 3, 8; 3, 11, 7. [6] So corr. Ch त्राम्णो [7] Vgl. RV 9, 107, 1; Mâitr. S. 3, 11, 7. [8] So corr. Ch सुता; cf. Mâitr. S. 3, 11, 7.

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुत भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः ॥[1]

उपयामगृहीतो ऽस्यश्विभ्यां त्वा जुष्टं गृह्णामि सरस्वत्या इन्द्राय सुत्राम्ण एष ते योनिस्तेजसे त्वा वीर्याय त्वा बलाय त्वा ॥
नाना हि वां देवकृतं सदस्कृतं मा संसृक्षाथां परमे व्योमन् । 5
सुरा त्वमसि शुष्मिणी सोम एष मा मा हिंसीस्स्वं योनिमाविशन् ॥[2]

उपयामगृहीतो ऽस्याश्विनं तेजस्सारस्वतं वीर्यमैन्द्रं बलमेष ते योनिर्मोदाय त्वानन्दाय त्वा महसे त्वा ॥
या व्याघ्रं विषूचिकोभौ वृकं[3] च रक्षति ।
श्येनं पतत्रिणं सिंहं सोमं[4] पात्वंहसः ॥ 10

संपृचस्स्थ[5] सं मा भद्रेण पृङ्क्त विपृचस्स्थ वि मा पाप्मना पृङ्क्त ॥ १८ ॥ cf. oben 12, 9; Mâitr. S. 2, 3, 8; 3, 11, 7.

इति श्रीमद्यजुषि काठके चरकशाखायामोरिमकायां सवा नाम सप्तत्रिंशं[6] स्थानकं संपूर्णम् ॥[7]

---

[1] Vgl. RV 10, 131, 2; Mâitr. S. 1, 11, 4. [2] Vgl. Mâitr. S. 2, 3, 8. [3] So corr. Ch वृकां; cf. Mâitr. S. 3, 11, 7. [4] So Ch; cf. Mâitr. S. 3, 11, 7. [5] So corr. Ch संपृजास्स्थ [6] So corr. Ch सप्तात्रिंशी [7] So die Unterschrift des Capitels in Ch.

सोमो[1] राजामृतं सुत ऋजीषेणाजहान्मृत्युम् ।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयो ऽमृतं मधु ॥

सोममद्भ्यो व्यपिबच्छन्दसा[2] हंसः शुचिषत् ।
ऋतेन[3] सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयो ऽमृतं मधु ॥

अद्भ्यः क्षीरं व्यपिबत्क्रुङ्ङाङ्गिरसो[4] धिया ।
ऋतेन[5] सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयो ऽमृतं मधु ॥

अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रम्[6] ।
ऋतेन[7] सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयो ऽमृतं मधु ॥

रेतो मूत्रं विजहाति योनिं प्रविशदिन्द्रियम् ।
गर्भो जरायुणावृत उल्बं जहाति जन्मना ।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयो ऽमृतं मधु ॥

वेदेन रूपे व्यपिबत्सुतासुतौ[8] प्रजापतिः ।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयो ऽमृतं मधु ॥

दृष्ट्वा रूपे व्याकरोत्सत्यानृते[9] प्रजापतिः ।

---

[1] Dies Capitel und der Anfang des folgenden nach T 1 und Brl accentuirt; auch in W 1 vorhanden. [2] व्यपिब ohne Accent in T 1 und Brl; der Accent ergänzt; cf. den dritten Vers. [3] In T 1 und Brl hier nur ऋतेन; das Weitere des Verses ist offenbar zu ergänzen. [4] Der Accent ergänzt; T 1 व्यपिबत्क्रुङ्ङगिरसो; Brl व्यपिबत्क्रुङ्गिरसो; Ch क्रुङ्ङा° [5] In T 1 und Brl nur ऋतेन; das Weitere des Verses zu ergänzen. [6] In T 1 und Brl hier व्यपिबत् richtig accentuirt. [7] In T 1 und Brl nur ऋतेन; so auch in den folgenden Versen. [8] Accent ergänzt; in T 1 und Brl व्यपिबत् ohne Accent. [9] Accent ergänzt; in T 1 und Brl व्याकरोत् ohne Accent.

अश्रद्धामनृते ऽदधाच्छ्रद्धां सत्ये प्रजापतिः ।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयो ऽमृतं मधु ॥
दृष्ट्वा परिस्रुतो रसं शुक्रेण शुक्रं व्यपिबत्पयस्सोमं प्रजापतिः ।
ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयो ऽमृतं मधु[1] ॥ ॥ १ ॥

cf. Mâitr. S. 3, 11, 6; TBr. 2, 6, 2; VS 19, 72—79.

सुरावन्तं[2] बर्हिषदं सुवीरं यज्ञं हिन्वन्ति महिषा नमोभिः ।
दधानास्सोमं दिवि देवतासु मदेमेन्द्रं[3] यजमानास्स्वर्काः ॥
यस्ते रसस्संभृत ओषधीषु सोमस्य शुष्मस्सुरया सुतस्य ।
तेन जिन्व यजमानं मदेन[4] सरस्वतीमश्विना इन्द्रमग्निम् ॥
यमश्विना नमुचेरासुरादधि सरस्वत्यसनोदिन्द्रियाय ।
इमं तं शुक्रं[5] मधुमन्तमिन्दुं[6] सोमं राजानमिह भक्षयामि ॥
यदत्र रिप्तं रसिनस्सुतस्य यदिन्द्रो अपिबच्छचीभिः ।
अहं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामि ॥[7]

पितृभ्यस्स्वधायिभ्यस्स्वधा नमः पितामहेभ्यस्स्वधायिभ्यस्स्वधा नमः प्रपितामहेभ्यस्स्वधायिभ्यस्स्वधा नमो ऽक्षन्पितरो ऽमीमदन्त पितरो ऽतीतृपन्त पितरः पितरश्शुन्धध्वम् ॥
पुनन्तु[8] मा पितरस्सोम्यासः पुनन्तु मा पितामहाः ।
पुनन्तु प्रपितामहाः पवित्रेण शतायुषा ॥

---

[1] Dieser Halbvers nur in W 1 vollständig; T 1 und Brl haben nur ऋतेन; Ch liest ऋतेन सत्यमिन्द्रियमिदं पयो मृतं मधु [2] Der Anfang des Capitels in T 1 und Brl vorhanden; darnach accentuirt. [3] So corr., nach Anleitung von Mâitr. S. 3, 11, 7; cf. auch den folgenden Vers; Ms. मदेमेन्द्रं; Ch so ohne Acc. [4] Ch यजमानस्सदेन; W 1 यजमानं मदेच; T 1 und Brl यजमानं मदेम [5] Brl इमन्तं शुक्रं; T 1 तं शुक्रं; Accent corrigirt. [6] So corr.; Mss. मिन्द्री, resp. Ch ohne Acc. [7] Bis hierher nach T 1 und Brl accentuirt; T 1 geht dann weiter auf Kâth. 13, 16 über; auch Brl bricht hier ab. [8] Von hier ab die Accente nach T 7 fol. 33 gesetzt, collationirt mit Brl fol. 91.

पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ।
पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥
अग्न आयूंषि पवसे ॥[1]
पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ।
5 पुनन्तु विश्वा भूतानि जातवेदः पुनीहि[2] मा ॥
पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् ।
अग्ने क्रत्वा क्रतूँरनु ॥
यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ।
ब्रह्म तेन पुनातु मा ॥
10 पवमानस्स्वर्जनः पवित्रेण विचर्षणिः[3] ।
यः पोता स[4] पुनातु मा ॥
उभाभ्यां देव सवितः पवित्रेण सवेन च ।
मां पुनीहि विश्वतः ॥
वैश्वदेवी पुनती देव्यागाद्यस्या इमास्तन्वो वीतपृष्ठाः ।
15 तया मदन्तस्सधमाद्येषु[5] वयं स्याम पतयो रयीणाम् ॥[2]
ये समानास्समनसः[6] पितरो यमराज्ये ।
तेषां लोकस्स्वधा नमो यज्ञो देवेषु कल्पताम् ॥
ये समानास्समनसो[7] जीवा जीवेषु मामकाः ।
तेषां श्रीर्मयि कल्पतामस्मिंल्लोके शतं समाः ॥
20 द्वे सृती[8] अशृणवं पितृणामहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च ॥

---

[1] In T 7 und Brl fol. 91 ist dieser Vers vollständig gegeben. [2] So T 7; in Brl fol. 91 पुनीहि ohne Accent. [3] So T 7 und Brl; in Ch पवित्रे विचर्षणि [4] So Brl; in T 7 सः, ohne Accent. [5] So corr. Ch मदन्तस्सदमाद्येषु; T 7 मदन्ता सदमाद्येषु; Brl fol. 91 मदन्त सदमाद्येषु [6] Hier bricht T 7 ab, desgleichen Brl fol. 91; daher das Weitere ohne Accent, nur nach Ch. [7] So corr. Ch समानस्सम॰ [8] So corr. Ch सृती

इदं हविः प्रजननं मे अस्तु दशवीरं सर्वगणं स्वस्तये ।
आत्मसनि प्रजासनि पशुसन्यभयसनि लोकसनि ।
अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त ॥ ॥ २ ॥
cf. Mâitr. S. 3, 11, 7 und 10.

सीसेन तन्त्रं मनसा मनीषिण ऊर्णासूत्रेण कवयो वयन्ति ।
अश्विना यज्ञं सविता सरस्वतीन्द्रस्य रूपं वरुणो भिषज्यम्[1] ॥ 5
तदस्य रूपममृतं शचीभिस्तिस्रो दधुर्देवताः संरराणाः[2] ।
लोमानि शष्पैर्बहुधा[3] न तोक्मभिस्त्वगस्य मांसमभवन्न लाजाः ॥
तदश्विना भिषजा रुद्रवर्तनी सरस्वती वयति पेशो अन्तरम्[4] ।
अस्थि मज्जानं मासरैः करोतरेण[5] दधतो गवां त्वचि ॥
सरस्वती मनसा पेशलं वसु नासत्याभ्यां वयति दर्शतं वपुः । 10
रसं परिस्रुता न रोहितं नग्नहुर्वीरस्तसरं[6] न वेम ॥
पयसा शुक्रममृतं जनित्रं सुराया मूत्राज्जनयन्ति रेतः ।
अपामतिं दुर्मतिं बाधमाना ऊवध्यं वातं सब्वं[7] तदारात् ॥
इन्द्रस्सुत्रामा हृदयेन सत्यं पुरोडाशेन सविता जजान ।
यकृत्क्लोमानं वरुणो भिषज्यन्मतस्ने वायव्यैर्न मिनाति पित्तम् ॥ 15
अन्त्राणि स्थाली मधु पिन्वमाना गुदाः[8] पात्राणि सुदुघा न धेनुः ।
श्येनस्य पत्रं न प्लीहा शचीभिरासन्दी[9] नाभिरुदरं न माता ॥
कुम्भो वनिष्ठुर्जनिता शचीभिर्यस्मिन्नग्रे योन्यां गर्भो अन्तः ।
प्लाशिर्व्यक्तश्शतधार उत्सो दुहे न कुम्भी स्वधां पितृभ्यः ॥
मुखं सदस्य शिर इत्सतेन जिह्वा पवित्रमश्विनासन्सरस्वती । 20
चप्यं न[10] पायुर्भिषगस्य वारो वस्तिर्न[11] शेपो हरसा तरस्वी ॥

---

[1] So Ch; in Mâitr. S. 3, 11, 9 भिषज्यन् [2] Mâitr. S. 3, 11, 9 दधु° [3] So corr. Ch शष्मैर्बं° [4] So corr. Ch अन्तरः; cf. Mâitr. S. 3, 11, 9 = Corr. [5] So Ch; Mâitr. S. 3, 11, 9 कारो° [6] Ch नग्नहु वीर°; besser Mâitr. S. 3, 11, 9 नग्नहुर्धीर° [7] So corr. Ch सव्वं; cf. Mâitr. S. 3, 11, 9. [8] So corr. Ch गुदा [9] So corr. Ch सत्री; cf. Mâitr. S. 3, 11, 9. [10] So corr. Ch चप्यन्न [11] So corr. Ch वस्ति

अश्विभ्यां चक्षुरमृतं ग्रहाभ्यां छागेन तेजो हविषा शृतेन ।
पक्ष्माणि गोधूमैः कुवलैरुतानि पेशो न शुक्लमसितं वसाते ॥
अविर्न मेषो नसि[1] वीर्याय प्राणस्य पन्था अमृतो ग्रहाभ्याम् ।
सरस्वत्युपवाकैर्व्यानं नस्यानि बर्हिर्बदरैर्जजान ॥
इन्द्रस्य रूपमृषभो बलाय कर्णाभ्यां श्रोत्रममृतं ग्रहाभ्याम् ।
यवा न बर्हिर्भ्रुवि केसराणि कर्कन्धु जज्ञे[2] मधु सारघं मुखात् ॥
आत्मन्नुपस्थे न वृकस्य लोम मुखे श्मश्रूणि[3] न व्याघ्रलोम[4] ।
केशा न शीर्षन्यशसे श्रियै शिखा सिंहस्य लोम त्विषिरिन्द्रियाणि ॥
अङ्गान्यात्मन्भिषजा तदश्विनात्मानमङ्गैस्समधात्सरस्वती ।
इन्द्रस्य रूपं शतमानमायुश्चन्द्रेण ज्योतिरमृतं दधाना ॥
सरस्वती योन्यां गर्भमन्तरश्विभ्यां पत्नी सुकृतं बिभर्ति ।
अपां रसेन वरुणेन साम्नेन्द्रं श्रियै जनयन्नप्सु राजा ॥
तेजः[5] पशूनां हविरिन्द्रियावत्परिस्रुता पयसा सारघं मधु ।
अश्विभ्यां दुग्धं भिषजा[6] सरस्वत्या सुतासुताभ्याममृतस्सोम इन्दुः ॥
॥ ३ ॥ cf. Mâitr. S. 3, 11, 9; TBr. 2, 6, 4; VS 19, 80 flg.

क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि स्योनासि सुषदासि स्योनामासीद सुषदामासीद मा त्वा हिंसीन्मा[7] मा हिंसीः ॥

निषसाद[8] धृतव्रतो वरुणः पस्त्यास्वा ।
साम्राज्याय सुक्रतुः ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्या भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामि देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो

---

[1] So corr. Ch नमि; cf. Mâitr. S. 3, 11, 9. [2] So corr. Ch जज्ञो [3] So corr. Ch श्मश्रुणि [4] So corr. Ch लोमस, erste Hand लोमम [5] So corr. Ch तेजा° [6] So corr. Ch मुग्धभिषजा [7] So corr. Ch हिंसीर्मा [8] Von hier ab accentuirt nach T1 und Brl fol. 120. 121.

सत्यं यज्ञेन यज्ञो यजुर्भिर्यजूंषि सामभिस्सामान्यृग्भिर्ऋचो याज्या-
भिर्याज्या वषट्कारैर्वषट्कारा आहुतिभिराहुतयो मे कामान्समर्धयन्तु भू-
स्स्वाहा ॥
लोमानि प्रयतिर्मम त्वङ् म आनतिरागतिः ।
5 मांसं म उपनतिर्वस्वस्थि मज्जा म आनतिः ॥ ॥ ४ ॥

cf. Mâitr. S. 3, 11, 8; TBr. 2, 6, 5; VS 20, 1—13.

यद्देवा[1] देवहेडनं देवासश्चकृमा[2] वयम् ।
अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥
यदि दिवा यदि नक्तमेनांसि चकृमा वयम् ।
वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥
10 यदि जाग्रद्यदि स्वप्न एनांसि[3] चकृमा वयम् ।
सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥
यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ।
यच्छूद्रे यदर्य एनश्चकृमा वयम् ।
यदेकस्याधि धर्मणि तस्यावयजनमसि ॥

15 यदापो अघ्न्या वरुणेति शपामहे ततो वरुण नो मुञ्चावभृथ
निचुङ्कुण[4] निचेरुरसि निचुङ्कुणो ऽव देवैर्देवकृतमेनो ऽयाडव[5] मर्त्यै-
र्मर्त्यकृतमुरोरा नो देव रिषस्पाहि[6] ॥

समुद्रे ते हृदयमप्स्वन्तस्सं त्वा विशन्त्वोषधीरुतापः ॥

सुमित्रा ण आप ओषधयो भवन्तु दुर्मित्रास्तस्मै भूयासुर्यो ऽस्मा-
20 न्द्वेष्टि यं च वयं द्विष्मः ॥

द्रुपदादिवेन्मुमुचानस्स्विन्नस्स्नात्वी मलादिव ।

---

[1] Die ersten drei Verse accentuirt nach T1 und T7; Weiteres fehlt dort. Auch in W1 finden sich diese drei Verse, doch ohne Accente. [2] Ch देवासा च॰ [3] T7 स्वप्नमेनांसि; desgl. W1, ohne Accent; dagegen T1 स्वप्न एनांसि [4] So corr. Ch निचंकुण; vgl. das Folgende. [5] So corr. Ch याडाव [6] So corr. Ch रिषस्पाहि

पूतं पवित्रेणेवाज्यमापश्शुन्धन्तु मैनसः ॥
उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥

प्रत्यस्तो वरुणस्य पाशः प्रतियुतो वरुणस्य पाशः ॥ एधो ऽस्येधिषीमहि समिदसि[1] ॥ तेजो ऽसि तेजो मयि धेहि ॥ 5
अपो अद्यान्वचारिषं रसेन समगन्महि ।
पयस्वानग्न आगमं तं मा संसृज वर्चसा ॥
समाववर्ति पृथिवी समुषास्सम् सूर्यः ।
वैश्वानरज्योतिर्भूयासं विभुं कामं व्यश्नवै ॥
भूस्स्वाहा ॥ ५ ॥ cf. Mâitr. S. 3, 11, 10; 1, 3, 39; TS 1, 4, 45; VS 20, 14—23. 10
समिद्ध इन्द्र उषसामनीके पुरोरुचा[2] पूर्वकृद्वावृधानः ।
त्रिभिर्देवैस्त्रिंशता वज्रबाहुर्जघान वृत्रं वि दुरो ववार ॥
नराशंसः प्रति शूरो मिमानस्तनूनपात्प्रति यज्ञस्य धाम ।
गोभिर्वपावान्मधुना समञ्जन्हिरण्यैश्चन्द्री[3] यजतु[4] प्रचेताः ॥
इडितो देवैर्हरिवाँ अभिष्टिराजुह्वानो हविषा शर्धमानः । 15
पुरंदरो गोत्रभिद्वज्रबाहुरायातु यज्ञमुप नो जुषाणः ॥
जुषाणो बर्हिर्हरिवान्न इन्द्रः प्राचीनं सीदत्प्रदिशा पृथिव्याः ।
उरुप्रथाः प्रथमानं स्योनमादित्यैरक्तं वसुभिस्सजोषाः ॥
इन्द्रं[5] दुरः कवष्यो धावमाना वृषाणं यन्तु[6] जनयस्सुपत्नीः ।
द्वारो देवीरभितो विश्रयन्तां सुवीरा वीरं प्रथमाना महोभिः[7] ॥ 20
उषासानक्ता बृहती[8] बृहन्तं पयस्वती सुदुघे शूरमिन्द्रम् ।
पेशस्वती तन्तुना संव्ययन्ती देवानां देवं यजतस्सुरुक्मे ॥

---

[1] Vgl. TS 1, 4, 45, 3; VS 20, 23. [2] So corr. Ch परोरुचा [3] So corr. Ch समंजान्हि° [4] MS 3, 11, 1 यजति; desgl. VS 20, 37. [5] So corr. Ch इंद्र [6] MS 3, 11, 1 यन्ति; VS 20, 40 यन्तु [7] So corr. Ch मवोभिः [8] बृहती fehlt in Ch und ist von mir ergänzt; cf. MS 3, 11, 1; VS 20, 41.

दैव्या मिमाना मनसा पुरुत्रा होतारा[1] इन्द्रं प्रथमा सुवाचा ।
मूर्धन्यज्ञस्य मधुना दधाना प्राचीनं ज्योतिर्हविषा वृधातः ॥
तिस्रो देवीर्हविषा वर्धमाना इन्द्रं जुषाणा वृषणं न पत्नीः ।
अच्छिन्नं तन्तुं पयसा सरस्वतीडा देवी भारती विश्वतूर्तिः[2] ॥
5 त्वष्टा दधदिन्द्राय शुष्ममपाको ऽचिष्टुर्यशसे पुरूणि ।
वृषा यजन्वृषणं भूरिरेता मूर्धन्यज्ञस्य समनक्तु देवान् ॥
वनस्पतिरवसृष्टो न पाशैस्त्मन्या समञ्जञ्छमिता[3] न देवः ।
इन्द्रस्य हव्यैर्जठरं पृणानस्स्वदाति[4] यज्ञं मधुना घृतेन ॥
स्तोकानामिन्दुं प्रति शूर इन्द्रो वृषायमाणो[5] वृषभस्तुराषाट् ।
10 घृतप्रुषा मनसा हव्यमुन्दन्मूर्धन्यज्ञस्य[6] जुषतां स्वाहा ॥ ॥ ६ ॥

cf. Mâitr. S. 3, 11, 1; VS 20, 36—46; TBr. 2, 6, 8.

आ चर्षणिप्रा वृषभो जनानां राजा कृष्टीनां पुरुहूत इन्द्रः ।
स्तुतश्श्रवस्यन्नवसोप मद्रिग्युक्त्वा[7] हरी वृषणा याह्यर्वाङ्[8] ॥
विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः[9] ।
अंहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते ॥
15 तं सध्रीचीरूतयो[10] वृष्ण्यानि पौंस्यानि[11] नियुतस्सश्चुरिन्द्रम्[12] ।
समुद्रं न सिन्धव उक्थशुष्मा[13] उरुव्यचसं गिर आविशन्ति ॥
सत्यमित्तन्न त्वावाँ अन्यो अस्तीन्द्र देवो न मर्त्यो ज्यायान् ।
अहन्नहिं परिशयानमर्णो ऽवासृजो अपो अच्छा समुद्रम् ॥[14]

---

[1] So corr. Ch होतार [2] So corr. Ch विश्वभूर्तिः [3] So corr. Ch स्त्वन्या समंजश्छमिता; cf. VS 20, 45. [4] So auch VS 20, 45; dagegen MS 3, 11, 1 स्वदातु [5] So corr. Ch वृषायजमानो; MS 3, 11, 1 und VS 20, 46 = Corr. [6] So corr. Ch हव्यमुर्दन्मू°; cf. MS 3, 11, 1 a. E. [7] So corr. Ch वसोम मद्रिम्युक्त्वा; cf. MS 4, 14, 18; RV 1, 177, 1. [8] So corr. Ch र्वांद्; MS 4, 12, 3 = Corr.; RV 3, 32, 14 र्वाङ् [9] So corr. Ch पायदिं°; cf. MS 4, 12, 3; RV 3, 32, 14. [10] So corr. Ch रुतयो; cf. RV 6, 36, 3; MS 4, 14, 18 (die Saṃh. Mss. hier = Kâṭh.!). [11] So corr. Ch पौस्यानि [12] So corr. Ch सच्चु° [13] So corr. Ch उक्तशुष्मा [14] RV 6, 30, 4; MS 4, 14, 18.

प्र ससाहिषे पुरुहूत शत्रूञ्ज्येष्ठस्ते शुष्म इह रातिरस्तु ।
इन्द्राभर दक्षिणेना वसूनि पतिस्सिन्धूनामसि रेवतीनाम् ॥[1]
स शेवृधमधिधा द्युम्नमस्मे महि क्षत्रं जनाषाडिन्द्र तव्यम् ।
रक्षा च नो मघोनः पाहि सूरीन्राये च नस्स्वपत्या इषे धाः ॥[2]
॥ ७ ॥ cf. Mâitr. S. 4, 14, 18; 4, 12, 3; TBr. 2, 6, 9. 5

समिद्धो अग्निरश्विना तप्तो घर्मो विराट् सुतः ।
दुहे धेनुस्सरस्वती सोमँ शुक्रमिहेन्द्रियम् ॥
तनूपा भिषजा सुते ऽश्विनोभा सरस्वती[3] ।
मध्वा रजाँसीन्द्रियमिन्द्राय पथिभिर्वहान्[4] ॥
इन्द्रायेन्दुँ सरस्वती नराशँसेन नग्नहुम्[5] । 10
अधातामश्विना मधु भेषजं भिषजा सुते ॥
आजुह्वाना सरस्वतीन्द्रायेन्द्रियाणि वीर्यम् ।
इडाभिरश्विना इषँ समूर्जँ सं रयिं दधुः ॥
अश्विना नमुचेस्सुतँ सोमँ शुक्रं परिस्रुता ।
सरस्वती तमाभरद्बर्हिषेन्द्राय पातवे ॥ 15
कवष्यो न व्यचस्वतीरश्विभ्यां न दुरो दिशः ।
इन्द्रो न रोदसी दुघे[6] दुहे कामान्सरस्वती ॥
उषासा नक्तमश्विना दिवेन्द्रँ सायमिन्द्रियैः ।
संजानाने सुपेशसा समञ्जाते सरस्वत्या ॥
पातं नो अश्विना दिवा पाहि नक्तँ सरस्वति[7] । 20
दैव्या होतारा भिषजा पातमिन्द्रँ सचा सुते ॥

---

[1] RV 10, 180, 1; MS 4, 12, 3. [2] RV 1, 54, 11; MS 4, 14, 18. [3] So corr. Ch स्सर॰ [4] So auch VS 20, 56; dagegen MS 3, 11, 3 वह [5] So corr. Ch नग्नहुः; MS 3, 11, 3 und VS 20, 57 = Corr. [6] Für दुघे haben MS 3, 11, 3 und VS 20, 60 उभे; aber VS 21, 34 auch दुघे [7] So corr. Ch सरस्वती; cf. MS 3, 11, 3; VS 20, 62.

तिस्रस्त्रेधा सरस्वत्यश्विना भारतीडा[1] ।
तीव्रं परिस्रुता सोममिन्द्रायासुषवुर्मदम्[2] ॥
अश्विना भेषजं मधु भेषजं नस्सरस्वती ।[3]
गोभिर्न सोममश्विना मासरेण परिस्रुतम्[4] ।
5 समधातां सरस्वत्या स्वाहेन्द्रे सुतं मधु ॥ ॥ ८ ॥[5]
cf. Mâitr. S. 3, 11, 3; VS 20, 55—66; TBr. 2, 6, 12.
अश्विना हविरिन्द्रियं नमुचेर्धिया सरस्वती ।
आ शुक्रमासुराद्वसु[6] मघमिन्द्राय[7] जभ्रिरे ॥
यमश्विना सरस्वती हविषेन्द्रमवर्धयन् ।
स बिभेद बलं[8] मघं[9] नमुचा आसुरे सचा ॥
10 तमिन्द्रं पशवस्सचाश्विनोभा सरस्वती ।
दधाना अभ्यनूषत हविषा यज्ञ इन्द्रियम् ॥
य इन्द्र इन्द्रियं दधुस्सविता वरुणो भगः ।
स सुत्रामा हविष्पतिर्यजमानाय सश्चत ॥
सविता वरुणो दधद्यजमानाय दाशुषे ।
15 आदत्त नमुचेर्वसु सुत्रामा बलमिन्द्रियम् ॥
वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम् ।
सुत्रामा यशसा बलं दधाना यज्ञमाशत ॥
अश्विना गोभिरिन्द्रियमश्वेभिर्वीर्यं बलम् ।
हविषेन्द्रं सरस्वती यजमानमवर्धयन्[10] ॥

---

[1] So corr. Ch तोड  [2] So corr. Ch यासुषवर्म॰; VS 20, 63 य सुषुवुर्म॰; MS 3, 11, 3 यांसुषुवुर्म॰; aber Padap. richtiger इन्द्राय । सुषुवुः ।  [3] Die zweite Hälfte dieses Verses fehlt in Ch.  [4] So Ch; in MS 3, 11, 3 und VS 20, 66 परिस्रुता  [5] Die Bezeichnung für den Abschluß von Cap. 8 fehlt in Ch; ich habe denselben gesetzt nach Analogie der Theilung von MS 3, 11, 3 und 3, 11, 4, welch letzteres Capitel ebenfalls mit अश्विना हविरिन्द्रियं beginnt.  [6] So corr. Ch मास्वराद्वसु; cf. MS 3, 11, 4 und VS 26, 67 = Corr.  [7] Auch VS 20, 67 मघं॰; dagegen MS 3, 11, 4 मद्यं॰  [8] So Ch; auch MS 3, 11, 4 nach allen Mss. बलं; dagegen VS 20, 68 वलं  [9] Ch मघन॰; VS 20, 68 मघं; dagegen MS 3, 11, 4 मद्यं  [10] So corr. Ch वर्धयम; cf. aber MS 3, 11, 4 und VS 20, 73 = Corr.

ता नासत्या सुपेशसा हिरण्यवर्तनी नरा ।
सरस्वती हविष्मतीन्द्र[1] कर्मसु नो ऽवत ॥
ता भिषजा सुकर्मणा सा[2] सुदुघा सरस्वती ।
स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियम् ॥
युवं[3] सुराममश्विना नमुचा आसुरे सचा । 5
विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् ॥[4]
पुत्रमिव पितरा अश्विनोभेन्द्रावथुः काव्यैर्दंसनाभिः ।
यत्सुरामं व्यपिबश्शचीभिस्सरस्वती त्वा मघवन्नभिष्णक् ॥
यस्मिन्नश्वास ऋषभास उक्षणो[5] वशा मेषा अवसृष्टा[6] आहुताः ।
कीलालपे सोमपृष्ठाय वेधसे[7] हृदा मतिं जनय[8] चारुमग्नये ॥ 10
अहाव्यग्ने हविरास्ये ते स्रुचीव घृतं चम्वीव सोमः ।
वाजसनिं रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम् ॥ ॥ ९ ॥
cf. Mâitr. S. 3, 11, 4; VS 20, 67—79; TBr. 2, 6, 13.
समिद्धो अग्निस्समिधा सुषमिद्धो वरेण्यः ।
गायत्री छन्द इन्द्रियं त्र्यविर्गौर्वयो दधुः ॥
तनूनपाच्छुचिव्रतस्तनूपाश्च[9] सरस्वती[10] । 15
उष्णिहा छन्द इन्द्रियं दित्यवाड् गौर्वयो दधुः ॥
इडाभिरग्निरीड्यस्सोमो देवो अमर्त्यः ।
अनुष्टुप्छन्द इन्द्रियं पञ्चाविर्गौर्वयो दधुः ॥
सुबर्हिरग्निः पूषण्वाँ स्तीर्णबर्हिरमर्त्यः ।
बृहती छन्द इन्द्रियं त्रिवत्सो गौर्वयो[11] दधुः ॥ 20

---

[1] So VS 20, 74 तीन्द्र; dagegen MS 3, 11, 4 तीन्द्रं [2] So corr. Ch स [3] So corr. Ch युवाँ [4] Vgl. RV 10, 131, 4; auch MS 3, 11, 4 und VS 20, 76. [5] So corr. Ch भाश तचाणो [6] So Ch; cf. dagegen MS 3, 11, 4 a. E. und VS 20, 78. [7] So corr. Ch वेदसे; cf. MS 3, 11, 4; VS 20, 78. [8] So auch VS 20, 78; dagegen MS 3, 11, 4 a. E. जनये [9] So corr. Ch पाच्छुचि°, wie VS 21, 13 schreibt, während MS ड्मुचि° bietet. Im Kâṭh. aber pflegt aus त् + श ein च्छ zu werden. [10] So corr. Ch स्वती: [11] So corr. Ch गोर्व°

दुरो देवीर्दिशो महीर्ब्रह्मा[1] देवो बृहस्पतिः ।
पङ्क्तिश्छन्द[2] इहेन्द्रियं तुर्यवाड्गौर्वयो दधुः ॥
उषे[3] यह्वी सुपेशसा विश्वे देवा अमर्त्याः ।
त्रिष्टुप्छन्द इहेन्द्रियं पष्ठवाड्गौर्वयो दधुः ॥
5 दैव्या होतारा भिषजेन्द्रेण सयुजा युजा ।
जगती छन्द इन्द्रियमनड्वान्गौर्वयो दधुः ॥
तिस्र इडा सरस्वती भारती मरुतो विशः ।
विराट् छन्द इहेन्द्रियं धेनुर्गौर्न वयो दधुः ॥
त्वष्टा तुरीपो अद्भुत इन्द्राग्नी पुष्टिवर्धना[4] ।
10 द्विपदा छन्द इन्द्रियमुक्षा गौर्न वयो दधुः ॥
शमिता नो वनस्पतिस्सविता प्रसुवन्भगम् ।
ककुप्छन्द इहेन्द्रियं वशा वेहद्वयो दधुः ॥
स्वाहा यज्ञं वरुणस्सुक्षत्रो भेषजं करत् ।
अतिच्छन्द इन्द्रियं बृहदृषभो गौर्वयो दधुः ॥ ॥ १० ॥
cf. Mâitr. S. 3, 11, 11; VS 21, 12—22; TBr. 2, 6, 18.
15 वसन्तेनर्तुना देवा वसवस्त्रिवृता स्तुतम् ।
रथन्तरेण तेजसा हविरिन्द्रे वयो दधुः ॥
ग्रीष्मेण देवा ऋतुना रुद्राः[5] पञ्चदशे स्तुतम् ।
बृहता यशसा बलँ हविरिन्द्रे वयो दधुः ॥
वर्षाभिर्ऋतुनादित्यास्स्तोमे सप्तदशे स्तुतम् ।
20 वैरूपेण विशौजसा हविरिन्द्रे वयो दधुः ॥
शारदेनर्तुना देवा एकविंश ऋभवस्स्तुतम् ।
वैराजेन श्रिया श्रियँ हविरिन्द्रे वयो दधुः ॥
हेमन्तेनर्तुना देवास्त्रिणवे मरुतस्स्तुतम् ।
बलेन शक्वरीस्सहो हविरिन्द्रे वयो दधुः ॥

---

[1] So corr. Ch महा ब्रह्मा [2] So corr. Ch पांक्ति° [3] So corr. Ch उर्षा; cf. MS 3, 11, 11; VS 21, 17. [4] So corr. Ch पुष्टिर्वर्धना [5] So corr. Ch रुद्रः

शैशिरेणर्तुना देवास्त्रयस्त्रिंशे ऽमृतं स्तुतम् ।
सत्येन रेवतीः क्षत्रं हविरिन्द्रे वयो दधुः ॥ ॥ ११ ॥
cf. Mâitr. S. 3, 11, 12; VS 21, 23—28; TBr. 2, 6, 19.

बृहस्पतिपुरोहिता[1] देवा देवानां देवा देवाः[2] प्रथमजा देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशास्त्र-यस्त्रिंशा अनु व आरभ इदं शकेयं[3] यदिदं करोमि ते मावत ते मा जिन्वतास्मिन्ब्रह्मण्यस्मिन्क्षत्रे ऽस्यामाशिष्यस्यां पुरोधायामस्यां देव-हूत्याम् ॥ 5
यो ऽस्य कौष्ठ[4] जगतः पार्थिवस्यैक इद्वशी ।
यमं भङ्ग्यश्रवो गाय यो राजानपरोध्यः ॥
यमं गाय भङ्ग्यश्रवो यो राजानपरोध्यः । 10
येनापो[5] नद्यो धन्वानि येन द्यौः पृथिवी दृढा ॥
हिरण्यकेशान्सुधुरान्हिरण्याक्षानयश्शफान् ।
अश्वाननश्यतो दानं[6] यमो राजाधितिष्ठति ॥
अयं यो ऽसि यस्य त इदं शिर एतेन त्वमंच शीर्षण्वानेधि ।
इदमस्माकं भुजे भोगाय भूयात् ॥ 15
उदेह्यग्ने अधि मातुः पृथिव्या विश आविश महतस्सधस्थात्[7] ।
आशुं त्वाजौ दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपाम् ॥
धनंजयस्सहमानः पृतन्युरग्न इषमूर्जं यजमानाय धेहि ।
विश्वाः पृतनास्सहमानस्सहोभिरन्नं नो धेहि बहुधा विरूपं यत्प्रजा
अनु जीवन्ति[8] सर्वाः ॥ 20
देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये

---

[1] Dies Capitel accentuirt nach T 1 und Brl fol. 81; zum Theil auch T 7, W 1 und W 2. [2] Ch देवा देव [3] T 1 und Brl fol. 81 शकेयम [4] So die Mss., während TÂr. 6, 5, 2 कौष्ठ्य liest. [5] W 1 येनाप [6] Anders Tâitt. Âr. 6, 5, 2 अश्वाननश्वशतोदानं [7] Ch सधस्था [8] So die accent. Mss. अनुजीवन्ति (nur T 1 und Brl fol. 81 kommen hier in Betracht).

त्वा वैश्वानराय त्रैष्टुभेन च्छन्दसाहरुपदधे[1] देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये त्वा वैश्वानरायानुष्टुभेन च्छन्दसा रात्रीमुपदधे[2] ॥

पुनस्त्वादित्या रुद्रा वसवस्समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः ।
5 घृतेन ते तन्वं वर्धयामि सत्यास्सन्तु यजमानस्य कामाः ॥[3]
अग्निर्होता नो अध्वरे वाजी सन्परिणीयते ।
देवो देवेषु यज्ञियः ॥[4]
परि त्रिविष्ट्यध्वरं यात्यग्नी रथीरिव ।
आ देवेषु प्रयो दधत् ॥
10 परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ।
दधद्रत्नानि दाशुषे ॥
परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि ।
धृषद्वर्णं दिवे दिवे[5] हन्तारं भङ्गुरावताम्[6] ॥
परि प्रागाद्देवो[7] अग्नी रक्षोहामीवचातनः ।
15 सेधन्विश्वा अप द्विषो दहन्रक्षांसि विश्वहा ॥
चितस्स्थ परिचित ऊर्ध्वश्रितश्श्रयध्वम् ।
प्रजामस्मे रयिमस्मे नियच्छत ॥ ॥ १२ ॥
व्रजं कृणुध्वं स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि ।
पुरः कृणुध्वमायसीरधृष्टा मा वस्सुस्रोच्चमसो[8] दृंहता तम् ॥
20 अजीजनन्नमृतं[9] मर्त्यासो ऽस्रेमाणं तरणिं वीडुजम्भम् ।
दश स्वसारो अग्रुवस्समीचीः पुमांसं जातमभिसंरभन्ताम्[10] ॥

---

[1] Accent corr. T1 und Brl च्छन्दसाहरुपदधे; W1 च्छन्दसाहरपदधे [2] T1 रात्रिमुपदधे; Brl fol. 81 रात्रिमुपपदधे [3] Vgl. TS 4, 2, 3, 4; 5, 2, 2, 5. [4] Vgl. RV 4, 15, 1 flg.; MS 4, 13, 4; TBr. 3, 6, 4, 1. [5] Accent corr. T1 und Brl दिवे दिवे; cf. RV 10, 87, 22. [6] Ch रात्रताम; T1 und Brl रावतम; cf. RV 10, 87, 22. [7] Brl fol. 81 द्विवो; desgleichen W.1, ohne Accent. [8] So corr. Ch, hier wieder das einzige Ms., liest वासुश्रोच्चमसो; aber vgl. RV 10, 101, 8. [9] So corr. Ch अजोजनंधमतं; vgl. RV 3, 29, 13. [10] So Ch; RV 3, 29, 13 रभन्ते

साकं हि शुचिना शुचिः प्रशास्ता क्रतुनाजनि ।
विद्वाँ अस्य व्रता ध्रुवा वया इवानुरोहति[1] ॥
अपास्मदेतु[2] निर्ऋतिर्नेहास्या अपि किं चन ।
अगोतां नाष्ट्रां[3] पाप्मानं सर्वं तदपहन्महे ॥
अपास्य नैर्ऋतान्पाशान्मृत्योरेकशतं चये । 5
अपास्य ये[4] सिनाः पाशा मृत्योरेकशतं सुवे[5] ॥
ये ते पाशा एकशतं मृत्यो मर्त्याय हन्तवे ।
तांस्ते[6] यज्ञस्य मायया सर्वानवयजामहे ॥
देवीमहं निर्ऋतिं[7] बाधमानः पितेव पुत्रं दमये[8] वचोभिः ।
यां जायमानस्य जायमानस्य[9] शिरो देवी प्रति सूरिर्विचष्टे ॥[10] 10
शं नो देवीरभिष्टय आपो भवन्तु पीतये ।
शं योरभिस्रवन्तु नः ॥[11]
ऊर्जं बिभ्रद्वसुवनिस्सुमेधा गृहाणां[12] मोदमाना सुवर्चाः ।
अघोरेण चक्षुषाहं शिवेन गृहाणां[13] पश्यन्वय उत्तिरामि ॥
गृहाणामायुः[14] प्र वयं तिराम गृहा अस्माकं प्रतिरन्त्वायुः । 15
येन देवा ज्योतिषोर्ध्वा उदायन्येनादित्या वसवो येन रुद्राः ।
येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानस्स्वस्ति ॥
स्योना पृथिवि भवानृक्षरा निवेशनी ।
यच्छा नश्शर्म[15] सप्रथाः[16] ॥

---

[1] So Ch; RV 2, 5, 4 रोहते [2] Von hier ab wiederum ein Stück in T 1 vorhanden; darnach accentuirt. [3] So meine Correctur; Ch अगोत्वान्नाष्ट्रं; T 1 अगोतान्नाष्ट्रां [4] Accent von mir gesetzt; in T 1 ये ohne Accent. [5] So T 1 सिनाः etc.; in Ch सिनापापाशा मत्यनेकशतं सुवे [6] So T 1; in Ch तैस्ते [7] Ch त्रिर्नृतिं [8] So Ch, ohne Accent; T 1 पुत्रान्दम; aber TS 4, 2, 5, 4 पुत्रं दमये [9] Accent corrigirt. In T 1 auch das 2. जायमानस्य accentuirt; in Ch ist dasselbe durchstrichen, erscheint also del. [10] Hier bricht T 1 ab. [11] Vgl. AV 1, 6, 1. [12] So corr. Ch गृहानान् ॥ मो° [13] So corr. Ch गृहानां [14] So corr. Ch गृहानामायुः [15] So corr. Ch न शर्म; aber cf. RV 1, 22, 15; MS 4, 12, 2. [16] So Ch; RV 1, 22, 15 सप्रथः; desgl. MS 4, 12, 2.

वात्वा समुद्र[1] उपदधातु प्रजावनिं रायस्पोषवनिं मह्यं वाजिनाय
मह्यो ध्रुवा सलिलासि ज्योतिष्मती सा स्वर्गं लोकं प्रजानीहि प्रजा-
पतिः प्रजापतौ सादयतु तयाङ्गिरस्वद्ध्रुवा सीद ॥ १३ ॥
उदस्थाद्धनजिद्गोजिदश्वजिद्धिरण्यजित्सूनृतया[2] परीवृतः ।
5 एतचक्रेण[3] सविता रथेनोर्जो भागं पृथिवीमेत्यापृणन्[4] ॥
सं वरत्रान्दधातन[5] निराहावं[6] कृणोतन ।
सिञ्चामहा अवतं वयमुद्रिणं विश्वाहादस्तमक्षितम् ॥
ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतस्सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठास्सतश्च योनिमसतश्च[7] विवः ॥
10 अनाप्ता या वः प्रथमा यस्यां कर्माणि कुर्वते ।
वीरान्नो अत्र मा दभंस्तद्व[8] एतत्पुरो[9] दधे ॥
पर्यू षु प्रधन्व[10] वाजसातये परि वृत्राणि सक्षणिः ।
द्विषस्तरध्या[11] ऋणया न ईयसे ॥
सहस्रधारेऽव ते समस्वरन्दिवो नाके मधुजिह्वा असश्चतः ।
15 तस्य स्पशो न निमिषन्ति भूर्णयः पदे पदे[12] पाशिनस्सन्ति सेतवः ॥[13]
मलिम्लुचो नामासि त्रयोदशो मास[14] इन्द्रस्य शर्मासीन्द्रस्य व-
र्मासीन्द्रस्य वरूथमसि तं त्वा प्रपद्ये सगुस्साश्वस्सपुरुषः[15] ॥ सह यन्मे
ऽस्ति तेन स मे शर्म च वर्म च भव गायत्रीँल्लोमभिः प्रविशामि

---

[1] So corr. Ch समुद्रा [2] Dies Capitel accentuirt nach T 1, Brl fol. 117 und W 2. [3] W 2 एतचक्रेण; MS 2, 7, 12 एकचक्रेण [4] Brl त्यापृणांत; W 2 पृणाम; cf. MS 2, 7, 12 पृथिव्यां यात्यापृणान् [5] So T 1 und Brl fol. 117; desgl. Ch, ohne Accent; W 2 सं वरत्रं दधातन; TS 4, 2, 5, 5 सं वरत्रा द° [6] So T 1, Brl und W 2, resp. निराहावंकृ°; Ch निरहावं; TS 4, 2, 5, 5 निराहावान् [7] W 2 मांस°; desgl. Ch, ohne Acc.; vgl. Kâṭh. 16, 15; 20, 5; MS 2, 7, 15; TS 4, 2, 8, 2. [8] T 1 मा दभंस्तं°; Brl मां दभंस्तं°; W 2 मा दभींस्तं°; Ch मदभीस्तद्वा; cf. AV 4, 7, 7. [9] W 2 एतें पुरोदधें; cf. AV 4, 7, 7. [10] So T 1, Brl, W 2; in Ch प्रधनु; cf. RV 9, 110, 1. [11] T 1 तरध्या; cf. RV 9, 110, 1. [12] So T 1 und Brl; in W 2 पंदे पदे [13] Vgl. zu dem ganzen Verse RV 9, 74, 6. [14] So T 1 und Brl; in Ch त्रयादश मास; W 2 त्रयोदशं मांसा [15] So T 1 und Brl; desgl. Ch, ohne Accent; in W 2 सगोषांश्वस्संपुरुषः

त्रिष्टुभं[1] त्वचा प्रविशामि जगतीं मांसेन प्रविशाम्यनुष्टुभमस्थ्ना प्र-
विशामि पङ्क्तिं मज्ज्ञा[2] प्रविशामि ॥
ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नाति विध्यन्ति शूराः ।
तन्नस्त्रायतां तन्वस्सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः ॥ ॥१४॥

इति श्रीमद्यजुषि काठके चरकशाखायामोरिमिकायां सौत्राम-
णीनामाष्टात्रिंशं स्थानकं संपूर्णम् ॥[3]

---

यदक्रन्दः प्रथमं जायमान उद्यन्समुद्रादुत वा पुरीषात् ।
श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं[4] महि जातं ते अर्वन् ॥
अभ्यस्थाद्विश्वाः[5] पृतना अरातीस्तदग्निराह तदु सोम आह ।
बृहस्पतिस्सवितेन्द्रस्तदाह पूषा माधात्सुकृतस्य लोके ॥
आस्थादुदस्थादजनिष्ट विप्रो व्यास्थन्मृधो अशिशीत बाहू ।
समपृक्षि ज्योतिषा सूर्यस्य परा बाधस्व निर्ऋतिं पराचैः[6] ॥
प्रजापतिस्त्वा सादयतु ॥
दिवो मूर्धासि पृथिव्या नाभिरूर्गपामोषधीनाम्[7] ।
विश्वायुश्शर्म सप्रथा नमस्पथे वयस्त्वस्सदः[8] ॥

---

[1] So T1 und Brl; in W2 त्रैष्टुभं; desgl. Ch, ohne Accent. [2] T1 und Brl मज्ञा; W2 मज्ञः; Ch मज्जा [3] So die Unterschrift des Capitels in Ch. [4] So corr. Ch तपस्तुभ्यं; vgl. RV 1, 163, 1; in Kâṭh. selbst nur noch die Anfangsworte des Verses an zwei Stellen (40, 6; 5, 6, 3). [5] So corr. Ch अभ्यस्ता°; cf. TS 4, 2, 8, 1; MS 1, 5, 3; 1, 6, 2. [6] Ch निन्नतिम्य°; kein Parallelvers. [7] So corr. Ch नाभिऊर्ग° [8] Vgl. Kâṭh. 18, 15, wo der Vers anders abschließt; cf. auch MS 2, 12, 3; VS 18, 54.

प्राचीनमूर्ध्वमधरागपागुदग्देवाः[1] पान्तु[2] यजमानममृतमृतात्[3]।
तेन ब्रह्मणा तेन च्छन्दसा तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥
आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च।
रायश्च स्थ स्वपत्यस्य पत्नीस्सरस्वती तद्गृणते वयो धात् ॥

5 अर्थेतस्स्थान्वगतो[4] ऽग्नेर्वस्तेजसा देवताभिर्गृह्णामि शर्म च स्थ वर्म च स्थ देवस्य वस्सवितुः प्रसवे मधुमतीस्सादयामि ज्योतिषे वाँ शुक्रास्स्थ वीर्यावतीरिन्द्रस्य व इन्द्रियावतो देवताभिर्गृह्णाम्यमृतं च स्थ सत्यं च स्थ देवस्य वस्सवितुः प्रसवे मधुमतीस्सादयामि चक्षुषे वां मन्द्रास्स्थाभिभुवो[5] विश्वेषां वो[6] देवानां देवताभ्यो गृह्णामि 10 रक्षोघ्नीश्च स्थारातिघ्नीश्च[7] स्थ देवस्य वस्सवितुः प्रसवे मधुमतीस्साद-यामि रेतसे वामधिपतिरस्यूर्जस्वानादित्यानां वो देवानां देवता-भिर्गृह्णामि सपत्नघ्नीश्च स्थाभिमातिघ्नीश्च स्थ देवस्य वस्सवितुः प्र-सवे मधुमतीस्सादयामि प्रजाभ्यो वां व्रजक्षितस्स्थोर्ध्वश्रितो बृहस्प-तेर्वो ब्रह्मणा देवताभिर्गृह्णामि वसु च स्थ वामं च स्थ देवस्य वस्स-15 वितुः प्रसवे मधुमतीस्सादयामि तेजसे वां क्षत्रभृतस्स्थौजस्विनीर्मि-त्रावरुणयोर्वो देवयोर्देवताभिर्गृह्णामि भूतं च स्थ भव्यं च स्थ देवस्य वस्सवितुः प्रसवे मधुमतीस्सादयामि वर्चसे वां दिवि श्रयस्वान्त-रिक्षमापृण पृथिव्यां कल्पस्व ॥ १ ॥

यददस्संप्रयतीरहा अनदता[8] हते।
20 तस्मादा नद्यो[9] नाम स्थ ता वो नामानि सिन्धवः ॥
यत्प्रेषिता वरुणेनाच्छीभं[10] समवल्गत।
तदिन्द्र आप्नोद्यतीर्वस्तस्मादापो अनुष्ठन ॥

---

[1] So corr. Ch मूर्धाम॰ [2] So corr. Ch पातु [3] So Ch; kein Parallelvers. [4] Ch अर्थेतस्यान्वगतो; vgl. TS 1, 8, 11, 1. [5] So corr. Ch चक्षषे वास्म॰ भूवो [6] Dies वो fehlt in Ch und ist von mir ergänzt. [7] So corr. Ch स्थराति॰ [8] So corr. Ch अनदहता; aber cf. MS 2, 13, 1; TS 5, 6, 1, 2; AV 3, 13, 1. [9] Ch schreibt zwei Mal nach einander नद्यो नद्यो [10] Ch वरुणेनाच्छीभं; vgl. AV 3, 13, 2; anders MS 2, 13, 1; TS 5, 6, 1, 2.

अपकामं स्यन्दमाना अवीवरत[1] वो हिकम्[2] ।
इन्द्रो वश्शक्तिभिर्देवीस्तस्माद्वार्नाम[3] वः प्रियम् ॥
एको देवो अप्यतिष्ठत्स्यन्दमाना उपेत्य ।
उदानिषुर्महीरिति तस्मादुदकमुच्यते ॥[4]
आपो देवीर्घृतमिदाप आसन्नग्नीषोमौ बिभ्रत्याप इत्ताः ।
तीव्रो रसो मधुपृचामरंगम[5] आ मा प्राणेन सह वर्चसागन् ॥

तपो योनिरसि प्राजापत्यं विश्वाभिस्त्वा धीभिरुपदधामि ॥[7]

ये यज्ञं समगृभ्णान्देवा देवेभ्यस्परि ।
तान्गायत्री नयतु प्रजानती स्वर्गे लोके अमृतं दुहाना ॥
ये ज्योतींषि संदधति स्वरारोहन्तो अमृतस्य लोकम् ।
ते यन्तु प्रजानन्तो यज्ञं दधानास्सुकृतस्य लोकम् ॥
यः पन्था विततो देवयानश्छन्दोभिर्विगृहीत एति ।
तेनातिष्ठ दिवमन्तरिक्षं यज्ञं गृहीत्वा सुकृतस्य लोकम् ॥
ये पशवो मेध्यासो यज्ञस्य योनिमभिसंबभूवुः ।
तान्ददन्ते कवयो विपश्चितो यज्ञं दुहानास्सुकृतस्य लोके ॥
यो यज्ञस्सहस्रधारो द्यावापृथिव्योरधि निर्मितः ।
तेनैतु यजमानस्स्वस्त्या दिवो ऽधि पृष्ठमस्थात् ॥

आयवे स्वाहायुष्कृते[8] स्वाहायोः पत्मने स्वाहा विष्णवे स्वाहा बृहस्पतये स्वाहा ॥

अद्भ्यस्संभृतः पृथिव्या रसो विश्वकर्मणस्समवर्तताधि ।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवमाजानमग्रे ॥[9]

---

[1] So corr. Ch अवीरवत; vgl. AV 3, 13, 3; MS 2, 13, 1; TS 5, 6, 1, 3. [2] Vgl. TS 5, 6, 1, 3. [3] So corr. Ch देंवों तस्माद्वान्नाम [4] Vgl. AV 3, 13, 4; MS 2, 13, 1. [5] So corr. Ch मधुप्रेचा°; vgl. oben 35, 3; MS 2, 13, 1; AV 3, 13, 5; TS 5, 6, 1, 3. [6] So corr. Ch आप्तः; aber vgl. oben 35, 3; MS 2, 13, 1; AV 3, 13, 5; TS 5, 6, 1, 3. [7] Vgl. MS 2, 13, 2. [8] So corr. Ch स्वाहायुष्टते [9] Vgl. MS 2, 7, 15; VS 31, 17; TAr. 3, 13; 10, 1, 3.

त्रिवृत्ते अग्ने शिरस्तन्मे अग्ने शिरः पञ्चदशौ ते अग्ने[1] बाहू तौ मे अग्ने[2] बाहू सप्तदशस्ते अग्न आत्मा स मे अग्न आत्मैकविंशौ त अग्न ऊरू तौ मे अग्न ऊरू त्रिणवौ ते अग्ने अष्ठीवन्तौ तौ[3] मे अग्ने[4] अष्ठीवन्तौ त्रयस्त्रिंशं ते अग्ने प्रतिष्ठानं तन्मे अग्ने प्रतिष्ठानं त्रिवृत्ते
5 अग्ने शिरस्तेन माभिपाहि पञ्चदशौ ते अग्ने बाहू ताभ्यां माभिपाहि सप्तदशस्ते अग्न आत्मा तेन माभिपाह्येकविंशौ त अग्न ऊरू ताभ्यां माभिपाहि त्रिणवौ ते अग्ने अष्ठीवन्तौ ताभ्यां माभिपाहि त्रयस्त्रिंशं ते अग्ने प्रतिष्ठानं तेन माभिपाहि ॥ २ ॥

cf. AV 3, 13; MS 2, 13, 1 und 2; TS 5, 6, 1.

प्रजापतिस्त्वा[5] सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीं व्यचस्वतीं
10 प्रथस्वतीं प्रथो ऽसि पृथिव्यसि भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्रीं पृथिवीं यच्छ पृथिवीं दृंह पृथिवीं मा हिंसीर्विश्वस्मै प्राणाय व्यानायापानायोदानाय प्रतिष्ठायै चरित्रायाग्निष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥

15 चितिं जुहोमि मनसा यथा देवा इहागमन् ।
वीतिहोत्रा ऋतावृधः ॥[6]
समुद्रस्य वयुनस्य पत्मञ्जुहोमि[7] विश्वकर्मणे ।
विश्वाहादाभ्यं हविः ॥

स्वाहोदपुरा[8] नामास्यन्नेन विष्टा वसवो रक्षितारो ऽग्निरधि वि-
20 यन्तो अस्यां तां[9] त्वा प्रपद्ये सा मे शर्म च वर्म च भव तया देवत-

---

[1] So corr. Ch अग्नौ [2] So corr. Ch अग्नौ [3] Dies तौ fehlt in Ch und ist von mir eingeschaltet. [4] So corr. Ch अग्नौ [5] Vgl. MS 4, 9, 16; VS 13, 17; TS 4, 4, 6; 4, 4, 3, 3. [6] Vgl. MS 2, 10, 6; TS 5, 5, 4, 3; VS 17, 78. [7] Ch schreibt पत्मन् ॥ जुहोमि; im Folgenden dagegen fehlen die Versabtheilungen und sind daher von mir gesetzt; vgl. MS 2, 10, 6 a. E.; TS 5, 5, 4, 3; VS 17, 78. [8] Vgl. MS 2, 8, 14; TS 4, 4, 5. [9] So corr. Ch ता

याङ्गिरस्वद्ध्रुवा सीद ज्योतिरसि[1] ज्योतिर्मे यच्छ पृथिवीं दृंह पृथिव्या
मा पाहि तया देवतयाङ्गिरस्वद्ध्रुवा सीद भूरसि भुवनस्य रेत इष्टका
स्वर्गो लोको मनसा त्वान्वारोहामि सूरसि स्वरसीष्टका स्वर्गे लोके
वाचा त्वान्वारोहामि[2] यास्ते अग्न आर्द्रा[3] योनयो याः कुलायिनीर्ये
ते अग्न इन्दवो या उ नाभयो यास्ते अग्ने तन्व ऊर्जो नाम ताभि-
स्त्वमुभयीभिस्संविदानास्स्वयंचिन्वानास्तन्वो[4] निषीद ॥
मधु वाता[5] ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नस्सन्त्वोषधीः ॥
मधु नक्तमुतोषसा मधुमत्पार्थिवं रजः ।
मधु द्यौरस्तु नः पिता ॥[6]
मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः ॥
संसर्पन्तीन्समुद्रान्स्वर्गानपां[7] पतिर्वृषभ[8] इष्टकानाम् ।
तत्र गच्छ यत्र पूर्वे परेताः[9] पुरीषं वसानस्सुकृतस्य[10] लोकम् ॥
अपां गम्भीरं गच्छ मा त्वा सूर्यः परिताप्सीन्माग्निर्वैश्वानरः[11] ।
अनु त्वा दिव्या वृष्टिस्सचतामखिद्राः[12] प्रजा अभिविपश्य ॥
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ।
पिपृतां नो भरीमभिः ॥[13]
स्यूता देवेभिरमृतेनागादुखा स्वसारमधि वेदिमस्थात्[14] ।

---

[1] So corr. Ch ज्ज्यो° [2] So corr. Ch हासि [3] So corr. Ch आन्द्रा
[4] So corr. Ch स्वयम्श्चिन्वानास्त° [5] So corr. Ch वात; aber vgl. RV 1, 90, 6; MS 2, 7, 16; TS 4, 2, 9, 3; VS 13, 27. [6] Vgl. RV 1, 90, 7; zum folgenden Verse RV 1, 90, 8. [7] Ch संसर्पतोन्समु°; aber W 2 संसर्पन्त्रोन्समुद्रां°; vgl. MS 2, 7, 16; VS 13, 31. Dieser und die beiden folgenden Verse in W 2 vorhanden, doch mit so lückenhafter Accentuation, daß ich auf deren Wiedergabe verzichtet habe. [8] W 2 पतिं वृषभं [9] W 2 परेताः [10] W 2 नास्सु°; cf. aber MS 2, 7, 16. [11] So corr. Ch त्वा स्सूर्यः परेताप्सों°; W 2 त्वा सूर्यापोरिताप्सों°; vgl. VS 13, 30. [12] Ch स्सचतामखि° [13] Vgl. RV 1, 22, 13; MS 2, 7, 16. [14] So corr. Ch वेधि°; vgl. MS 2, 7, 16.

सत्यं पूर्वैर्ऋषिभिश्चाकृपानो ऽग्निः प्रविद्वाँ इह तद्दधातु ॥
पृथिवि पृथिव्याँ सीद माता मातरि माता स्योना स्योनायाम् ॥
क्रतुं देवानाममृतत्वमीमहे[1] ऽग्निं सधस्थे सदनेष्वच्युतम् ।
वैश्वानरं ब्रह्मणा विश्वव्यचसं स्तोमस्य धामन्निदधे पुरीष्यम् ॥
5 न्यधुर्माचया कवयो वयोधसमग्निं सधस्थे सदनेषु सुक्रतुम् ।
वैश्वानरं ब्रह्मणा विश्वव्यचसं स्तोमस्य धामन्न्यधां पुरीष्यम् ॥[2]
समिध्यमानं समिधा समिन्धते ऽग्निं सधस्थे सदनेष्वद्भुतम् ।
वैश्वानरं ब्रह्मणा विश्वव्यचसं स्तोमस्य धामन्पवमानमाभृतम् ॥
समास्त्वाग्ने ॥ ३ ॥ cf. MS 2, 7, 16; 2, 8, 14; 2, 10, 6; 4, 9, 16 etc.

10 विश्वकर्मा[3] दिशां पतिः प्रजापतिस्स नः पशून्पातु स मां पातु
तया देवतयाङ्गिरस्वद्ध्रुवा सीद प्रजापतिर्दिशां पतिः प्रजापतिस्स
नः पशून्पातु स मां पातु[4] तया देवतयाङ्गिरस्वद्ध्रुवा सीद रुद्रो दि-
शां पतिर्वरुणो दिशां पतिरग्निर्दिशां पतिः प्रजापतिस्स नः पशू-
न्पातु स मां पातु तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥ मा छन्दस्तत्पृ-
15 थिव्यग्निर्देवता[5] प्रमा छन्दस्तदन्तरिक्षं[6] वातो देवता प्रतिमा छन्द-
स्तद्[7] द्यौस्सूर्यो देवतास्रीवयश्छन्दस्तद्दिशस्सोमो[8] देवता विराट् छ-
न्दस्तद्वाग्वरुणो देवता गायत्री छन्दस्तदजा[9] बृहस्पतिर्देवता त्रिष्टु-
प्छन्दस्तद्धिरण्यमिन्द्रो देवता जगती छन्दस्तद्गौः[10] प्रजापतिर्देवतानु-
ष्टुप्छन्दस्तदायुर्मित्रो देवतोष्णिहा छन्दस्तच्चक्षुः[11] पूषा देवता बृहती[13]

---

1 So corr. Ch क्रतुर्देवानाममृतत्त्वमी°; vgl. MS 2, 7, 16. 2 Vgl. MS 2, 7, 16. 3 Dies Capitel accentuirt nach T 1, T 3 und Brl fol. 72. 73. 4 स मां पातु fehlt in Ch; die Worte finden sich aber in den accentuirten Mss., desgl. in W 1 β, wo dies Textstück ebenfalls vorliegt, doch ohne Accente. 5 T 1, T 3 und Brl schreiben मा च्छं° 6 T 1, T 3 und Brl प्रमा च्छं° 7 T 1, T 3 und Brl प्रतिमा च्छं° 8 W 1 β स्रीवयाश्छ° सोमदेवता 9 Ch गायत्रीश्छं°; T 1, T 3 und Brl गायत्री च्छं° 10 Ch जगतीश्छं°; T 1, T 3 und Brl जगती च्छं° 11 T 1, T 3 und Brl ष्णिहा च्छं° 12 T 1, T 3 und Brl बृहती च्छं°

छन्दस्तद्वृष्टिः पर्जन्यो देवता पङ्क्तिश्छन्दस्तदश्वः परमेष्ठी देवता तेन ब्रह्मणा तेन छन्दसा तया देवतयाङ्गिरस्वद्ध्रुवासीदत[1] ॥ ४ ॥
cf. TS 5, 5, 5; MS 2, 13, 14.

ऋतसदसि सत्यसदसि तेजस्सदसि वर्चस्सदसि यशस्सदसि गृणानासि धामासि धाम्ने त्वा धामभ्यस्त्वा धामसु[2] सीद सनिरसि सन्ये त्वा सनेयं वित्तिरसि वित्त्यै त्वा विदेयं कर्मासि कर्मणे त्वा क्रियासं शक्तिरसि शक्त्यै त्वा शकेयं भूतिरसि भूत्यै त्वा भूयासं गूर्दोऽसि गूर्दाय त्वा गूर्देभ्यस्त्वा गूर्दे सीद क्षत्रं पाहि क्षत्रं पिन्व क्षत्रं जिन्व क्षत्रं यच्छ क्षत्रमसि क्षत्राय त्वा क्षत्रेभ्यस्त्वा क्षत्रे सीद विश्वेषु त्वा पार्थिवेषु सादयामि विश्वेषु त्वान्तरिक्षेषु सादयामि विश्वेषु त्वा दिव्येषु सादयामि विश्वासु त्वाप्सु सादयामि विश्वासु त्वौषधिषु सादयामि विश्वेषु त्वा वनस्पतिषु सादयामि विश्वासु त्वा दिक्षु सादयामि विश्वासु त्वा प्रदिक्षु सादयामि ॥ दिवि सीद स्वर्जिदसि पृतनाजिदसि भूरिजिदस्यभिजिदसि विश्वजिदसि सर्वजिदसि सत्राजिदसि धनजिदसि भ्राडसि विभ्राडसि प्रभ्राडसि सपत्नहनं त्वा वज्रं सादयामि रक्षोहनं त्वा वज्रं सादयामि पिशाचहनं त्वा वज्रं सादयामि यातुधानहनं त्वा वज्रं सादयाम्यरातिहनं त्वा वज्रं सादयाम्यभिमातिहनं त्वा वज्रं सादयामि शत्रुहणमसि शत्रुहणं[3] भ्रातृव्यहणमसुरहणं त्वेन्द्रं वज्रं सादयामि ॥ ५ ॥

उद्वदस्युदितिरस्युद्यत्यस्याक्रममाणास्याक्रामन्त्यस्याक्रान्तिरसि संक्रममाणासि[4] संक्रामन्त्यसि संक्रान्तिरसि स्वर्गासि स्वरसीषि सीदोर्जि सीद भगे सीद द्रविणे सीद सुभूते सीद पृथिव्या यज्ञिये सीद विष्णोः पदे सीदेडायाः पदे सीद घृतवति सीद पिन्वमाने सीद संव-

---

[1] So T3 und Brl ganz deutlich; in T1 wohl ebenso, doch nicht ganz deutlich; in Ch ध्रुवा सीदत; vgl. unten 39, 13 a. E. [2] So corr. Ch धामासु [3] So corr. Ch शत्रहणमसि त्रहणं [4] So corr. Ch संक्रमाणा

त्सरे सीद परिवत्सरे सीदेदावत्सरे सीदानुवत्सरे सीदोद्वत्सरे सीदैकस्यां सीद दशसु सीद शते सीद सहस्रे सीदायुते सीद प्रयुते सीद नियुते सीदार्बुदे[1] सीद न्यर्बुदे[2] सीद बद्वे सीद समुद्रे सीद मध्ये सीदान्ते सीद परार्धे सीद ॥ पिन्वमानासि पिन्वमानाय त्वा पिन्वमानेभ्यस्त्वा
5 पिन्वमाने सीदर्तमस्यृताय[3] त्वर्तेभ्यस्त्वर्ते[4] सीद सत्यमसि सत्याय त्वा सत्येभ्यस्त्वा सत्ये सीद संधिरसि संधये त्वा संधिभ्यस्त्वा संधिषु सीद संश्लिडसि संश्लिषे त्वा संश्लिड्भ्यस्त्वा संश्लिट्सु सीद संपदसि संपदे त्वा संपद्भ्यस्त्वा संपत्सु सीद ॥ ६ ॥

प्राची दिग्गायत्री छन्दो रथन्तरं सामाग्निर्देवता वसन्त ऋतुस्त्रि-
10 वृत्स्तोमः पञ्चदशवर्तनिस्त्रियविर्वयः कृतमयानां पुरोवातो वातस्सानग ऋषिर्दक्षिणा दिक् त्रिष्टुप्छन्दो बृहत्सामेन्द्रो देवता ग्रीष्म ऋतुः पञ्चदशस्स्तोमस्सप्तदशवर्तनिर्दित्यवाड्वयस्त्रेतायानां[5] दक्षिणाद्वातो वातः प्रत्न ऋषिः प्रतीची दिग्जगती छन्दो वैरूपं साम मरुतो देवता वर्षा ऋतुस्सप्तदशस्स्तोम एकविंशवर्तनिस्त्रिवत्सो वयो द्वापरो ऽया-
15 नां[6] पश्चाद्वातो वातस्सनातन ऋषिरुदीची दिगनुष्टुप्छन्दो वैराजं साम विश्वे देवा देवता शरदृतुरेकविंशस्स्तोमस्त्रिणववर्तनिस्तुर्यवाड्वय आस्कन्दो ऽयानामुत्तराद्वातो वातः पुराण ऋषिरूर्ध्वा[7] दिक् पङ्क्तिश्छन्दश्शाक्वरं रैवतं साम मित्रावरुणौ देवता हेमन्तशिशिरा ऋतू त्रिणवस्स्तोमस्त्रयस्त्रिंशवर्तनिः[8] पष्ठवाड्वयो ऽभिभूरयानां विष्वग्वा-
20 तो[9] वातस्सुपर्ण ऋषिः पितरः पितामहाः परे ऽवरेभ्यस्ते नः पान्तु ते नो ऽवन्त्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रे ऽस्यामाशिष्यस्यां पुरोधायामस्यां[10] देवहूत्यां तेन ब्रह्मणा तेन च्छन्दसा तया देवतयाङ्गिरस्वद्ध्रुवास्सीदत[11] ॥ ७ ॥ cf. MS 2, 7, 20; TS 4, 3, 3.

---

[1] So corr. Ch बुंधे [2] So corr. Ch न्यर्बुधे [3] So corr. Ch सीदंतम॰ [4] So corr. Ch त्वंतेभ्य॰ [5] Ch यानान्दक्षि॰ [6] So corr. Ch वयद्वापरो यानं [7] So corr. Ch ऋषिऊध्वा [8] So corr. Ch स्त्रिणाव॰ [9] So corr. Ch विश्वग्वातो [10] So corr. Ch पुरोधया॰ [11] So corr. Ch वा ध्रुसीदत; vgl. 39, 4 a. E.; 39, 13 a. E.

आयुषः प्राणं संतनु प्राणाद्यानं संतनु व्यानादपानं संतन्वपाना-
च्चक्षुस्संतनु[1] चक्षुषश्श्रोत्रं संतनु श्रोत्राद्वाचं संतनु वाच आत्मानं
संतन्वात्मनः पृथिवीं[2] संतनु पृथिव्या अन्तरिक्षं संतन्वन्तरिक्षाद्दिवं
संतनु दिवस्स्वस्संतनु पृथिवी वशाग्निर्वत्सो ऽग्निहोत्रं पीयूषो ऽन्तरिक्षं वशा धाता गर्भो रुद्रा जरायु 5
वायुर्वत्सो घर्मः पीयूषो द्यौर्वशा स्तनयित्नुर्गर्भो नक्षत्राणि जरायु
सूर्यो वत्सो वृष्टिः पीयूष ऋग्वशा बृहद्रथन्तरे गर्भः प्रैषनिविदो ज-
रायु यज्ञो वत्सो दक्षिणा पीयूषो विड्वशा राजन्यो गर्भः पशवो जरायु
राजा वत्सो बलिः पीयूषः ॥ ८ ॥ cf. TBr. 1, 5, 7.

भूमस्कृदसि वरिवस्कृदसि प्राच्यस्यूर्ध्वास्यन्तरिक्षमसि तेजोदां त्वा[3] 10
तेजसि सादयामि वर्चोदां त्वा[4] वर्चसि सादयामि पयोदां त्वा पयसि
सादयामि यशोदां त्वा यशसि सादयामि द्रविणोदां त्वा द्रविणे सा-
दयामि पृथिव्यास्त्वा द्रविणे सादयाम्यन्तरिक्षस्य त्वा द्रविणे साद-
यामि दिवस्त्वा द्रविणे सादयामि दिशां त्वा द्रविणे सादयामि द्रवि-
णोदां त्वा द्रविणे सादयाम्यप्सुषदसि वयस्सदसि श्येनसदसि गृध्रस- 15
दसि[5] सुपर्णसदसि ॥

या देव्यसीष्टक आयुर्दा उपशीवरी[6] ।
सा मामुपशेष्व[7] जायेव पतिमित्सदा ॥

या देव्यसीष्टके प्राणदा व्यानदा अपानदाश्चक्षुर्दाश्श्रोत्रदा वाग्दा
आत्मदाः पृथिविदा अन्तरिक्षदा द्यौर्दास्स्वर्दाः[8] कुमारीदाः प्रफर्वीदाः 20
प्रथमौपशदा युवतिदा उपशीवरी ॥ सा[9] मामुपशेष्व जायेव पति-
मित्सदा ॥ ९ ॥ cf. MS 2, 13, 18 und 16; TS 4, 4, 7 und 6.

---

[1] So corr. Ch नाश्च॰ [2] So corr. Ch पृथिवी [3] So corr. Ch तेजोदस्त्वा
[4] So corr. Ch वर्चोदस्त्वा [5] So corr. Ch गृध्द्र॰ [6] So corr. Ch तपसीवरी
[7] So corr. Ch पशेषु [8] So corr. Ch सुर्दाः [9] So corr. Ch मा

इयमेव सा या प्रथमा व्यौच्छत्सावास्वन्तश्चरति[1] प्रविष्टा ।
वधूर्मिमाय नवगज्जनित्री[2] त्रय एनां महिमानस्सचन्ते ॥
छन्दस्वती उषसौ पेपिशाने समानं योनिमनुसंचरेते[3] ।
सूर्यपत्नी विचरतः प्रजानती केतुमती अजरे भूरिरेतसा ॥
5 ऋतस्य पन्थामनु तिस्र आगुस्त्रयो घर्मासो अनु रेतसागुः ।
प्रजामेका रक्षत्यूर्जमेका क्षत्रमेका रक्षति देवयूनाम् ॥[4]
चतुष्टोममदधाद्या तुरीया यज्ञस्य पक्षा ऋषयो भवन्ती ।
गायत्री त्रिष्टुब्जगती विराडर्कं युञ्जानास्स्वराभरन्निदम्[5] ॥
पञ्चभिर्धाता विदधा इदं यत्तासां स्वसॄरजनन्पञ्च[6] पञ्च ।
10 तासामु यन्ति प्रयवेण पञ्च नाना रूपाणि क्रतवो वसानाः[7] ॥
पञ्च[8] व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवो ऽनु पञ्च ।
पञ्च दिशः पञ्चदशेन कॢप्तास्समानमूर्ध्नीरभि लोकमेकम् ॥
ज्योतिष्मती प्रतिमुञ्चते नभ उषा देवी सूर्यस्य[9] व्रतेन ।
विपश्यन्ति पशवो[10] जायमाना नानारूपा मातुरस्या उपस्थे ॥
15 त्रिंशत्स्वसार उपयन्ति निष्कृतिं समानं केतुं प्रतिमुञ्चमानाः ।
ऋतूंस्तन्वते[11] कवयः प्रजानतीर्मध्येछन्दसः[12] परियन्ति भास्वतीः ॥

---

[1] So Ch; in MS 2, 13, 10 haben wir साप्स्वन्तश्चरति; AV 8, 9, 11 व्यौछदास्वित-रासु चरति; TS 4, 3, 11, 1 व्यौच्छदन्तरस्यां चरति; keine dieser Lesungen liegt die von Ch so nahe, daß die Correctur evident wäre; vielleicht ist सा तास्व° zu lesen? oder doch nach MS zu corrigiren? [2] So corr. Ch जनित्रे; aber vgl. MS 2, 13, 10; TS 4, 3, 11, 1; AV 8, 9, 11. [3] So corr. Ch संचरंते; MS 2, 13, 10 und AV 8, 9, 12 = Corr.; TS 4, 3, 11, 1 संचरन्ती; auch so ließe sich Ch leicht corrigiren. [4] Vgl. MS 2, 13, 10; TS 4, 3, 11, 1; AV 8, 9, 13. [5] So corr. Ch डकं य्यंजानास्स्व°; vgl. MS 2, 13, 10; TS 4, 3, 11, 2; AV 8, 9, 14. [6] So corr. Ch स्वसृर°; cf. TS 4, 3, 11, 2; anders MS 2, 13, 10. [7] So corr. Ch वसान; cf. MS 2, 13, 10; TS 4, 3, 11, 2. [8] Hier beginnt ein Fragment in W 2, einige Verse mit unvollkommener Accentuation, auf deren Wiedergabe ich verzichtet habe; cf. oben 26, 11; MS 2, 13, 10; TS 4, 3, 11, 4; AV 8, 4, 15. [9] So W 2; in Ch देवोस्सूर्यस्य; cf. MS 2, 13, 10; TS 4, 3, 11, 3. [10] W 2 प्रथमो [11] So W 2; in Ch तन्वती; vgl. MS 2, 13, 10; TS 4, 3, 11, 3. [12] So Ch; in W 2 मध्यच्छ°

शुक्रर्षभा नभसा ज्योतिषागाद्विश्वरूपा शवल्यग्निकेतुः[1] ।
समानमर्थं स्वपस्यमाना[2] बिभ्रती जरामजर[3] उष आगाः ॥
ऋतूनां पत्नी प्रथमेयमागादह्नां नेत्री जनित्री[4] प्रजानाम् ।
एका सती बहुधोषो[5] व्युच्छाजीर्णा त्वं जरय सर्वमन्यत् ॥
ऋतस्य धाम प्रथमा व्यूषुष्यपामेका[6] महिमानं बिभर्ति ।
सूर्यस्यैका चरति निष्कृतानि घर्मस्यैका सवितैकां नियच्छते[7] ॥
एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् ।
तेन दस्यून्व्यसहन्त देवा हन्तासुराणामभवच्छचीभिः ॥[8]
अनानुजामनुजां मामकर्त[9] सत्यं वदन्त्यनुयच्छ एतत् ।
भूयासमस्य सुमतौ यथा यूयमन्या वो[10] अन्यामति मा प्रयुक्त[11] ॥
अभून्नु नस्सुमतौ विश्ववेदा आष्ट[12] प्रतिष्ठामविदन्नु[13] गाधम् ।
भूयासमस्य सुमतौ यथा यूयमन्या वो[14] अन्यामति मा प्रयुक्त ॥
प्रथमा ह व्युवास[15] सा धेनुरभवद्यमे ।
सा नः पयस्वती दुहामुत्तरामुत्तरां[16] समाम् ॥ ॥ १० ॥[17]

cf. Mâitr. S. 2, 13, 10; TS 4, 3, 11; AV 8, 9, 11—15.

अग्निनंताषाट्[18] क्रत्वा शचीपतिस्सौहार्द्येन[19] स्वर्गो यज्ञेन मघवान्मन्युना वृत्रहा वृषभेन त्वष्टा वषट्कारेणार्धभाक् पृथिव्या स्तृणीको[20] ऽन्नेन गयस्साम्ना तनूमानृग्भिरन्नादस्तपसानाधृष्टस्सूर्येण विराडृतुभिः प्राभ-

---

[1] So Ch; in W 2 Lücke; vgl. TS 4, 3, 11, 5 शबलीर° [2] So corr. Ch स्वसस्यमाना; W 2 नमहस्तपस्यमाना; vgl. TS 4, 3, 11, 5. [3] So corr. Ch ज्जरामज्जर° W 2 जराम उष [4] So corr. Ch जनित्रे; vgl. MS 2, 13, 10; TS 4, 3, 11, 5. [5] So corr. Ch धोषु [6] So corr. Ch व्युषु°; vgl. MS 2, 13, 10; TS 4, 3, 11, 5. [7] Ch काश्चिय° [8] Vgl. TS 4, 3, 11, 3. [9] So corr. Ch जाममकंत; W 2 मामकन्त; vgl. TS 4, 3, 11, 3. [10] So W 2; in Ch नो [11] W 2 मां प्रयुक्तः [12] So corr. nach Anleitung von TS 4, 3, 11, 4. Ch schreibt आष्टाः [13] So corr. Ch मविदे नु; W 2 hier nicht mehr vorhanden; TS 4, 3, 11, 4 मविदद्धिं [14] So corr. Ch नो [15] So corr. Ch व्यवास; vgl. MS 2, 13, 10 a. E.; TS 4, 3, 11, 5. [16] Ch मुत्तरामुत्तरा [17] So corr. Ch ॥ ११ ॥ [18] So corr. Ch अग्निननंताषाट् [19] So corr. Ch सौहार्म्येन; aber cf. TS 4, 4, 8. [20] So Ch.

वत्संवत्सरेण पर्यभवदभीषाट्[1] चाभीषाह्यश्चाभिवयाश्चोर्ध्ववयाश्च स-
वयाश्च बृहद्वयाश्च सासह्वांश्च सहीयांश्च सहमानश्च सहस्वांश्चाभि त्वा
शूर नोनुमस्त्वामिद्धि हवामहे ॥ ११ ॥ cf. TS 4, 4, 8.
कया[2] नश्चित्र आभुवदूती[3] सदावृधस्सखा ।
5 कया शचिष्ठया वृता ॥
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।
दृढा चिदारुजे[4] वसु ॥
अभी षु णस्सखीनामविता जरितॄणाम् ।
शतं भवास्यूतिभिः[5] ॥
10 इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः[6] ।
जघान नवतीर्नव ॥
इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम् ।
अविन्दच्छर्यणावति[7] ॥
अत्राह गोरमन्वत[8] नाम त्वष्टुरपीच्यम्[9] ।
15 इत्था चन्द्रमसो गृहे ॥
तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे ।
स वृषा वृषभो भुवत् ॥
इन्द्रस्स दामने कृत ओजिष्ठस्स बले वृधी[10] ।
द्युम्नी शुक्री[11] स सोम्यः[12] ॥

---

[1] So corr. Ch दभीषाश्चाभीषाह्यश्चा° [2] Der Anfang des Cap. accentuirt nach Brl fol. 175. [3] Ch आभूव°; cf. RV 4, 31, 1. [4] So corr. Ch रुजो; cf. RV 4, 31, 2; MS 2, 13, 9. [5] Brl भवस्यू°: hier bricht Brl ab. [6] So corr. Ch प्रतिष्कतः; cf. RV 1, 84, 13; MS 2, 13, 6. [7] Vgl. MS 2, 13, 6; dagegen RV 1, 84, 14 तद्विद° [8] So corr. Ch गोर°; cf. RV 1, 84, 15; MS 2, 13, 6. [9] So corr. Ch पीश्यम; s. RV 1, 84, 15. [10] sic Ch, in Abweichung von allen andern Texten, RV 8, 82, 8; MS 2, 13, 6 u. s. w. Dort findet sich dafür हितः [11] So Ch, während die andern Texte श्लोकी lesen, RV 8, 82, 8 u. s. w. [12] So corr. Ch स मोस्यः

गिरा वज्रो न संभृतस्सबलो अनपच्युतः[1]।
ववक्ष उग्रो अस्तृतः॥
इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः।
इन्द्रं वाणीरनूषत॥
इन्द्र इद्धर्योस्सचा संमिश्ल आ वचोयुजा।
इन्द्रो वज्री हिरण्ययः॥
इन्द्र वाजेषु नो वह[2] सहस्रप्रधनेषु च।
उग्र[3] उग्राभिरूतिभिः॥
अभि त्वा शूर नोनुमो ऽदुग्धा इव धेनवः।
ईशानमस्य जगतस्स्वर्दृशमीशानमिन्द्र तस्थुषः।
ईशानमिन्द्र तस्थुषः॥[4]
न त्वावाँ अन्यो दिव्यो न पार्थिवो[5] न जातो न जनिष्यते।
अश्वायन्तो मघवन्निन्द्र वाजिनो[6] गव्यन्तस्त्वा हवामहे॥
त्वामिद्धि हवामहे साता[7] वाजस्य कारवः।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः।
त्वां काष्ठास्वर्वतः॥
स त्वं नश्चित्र वज्रहस्त धृष्णुया महस्स्तवानो अद्रिवः।
महस्स्तवानो अद्रिवो गामश्वं रथ्यमिन्द्र संकिर सत्रा वाजं न जिग्युषे॥[8]
यज्ञा यज्ञा वो अग्नये गिरा गिरा च चक्षसे[9]।
प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शँसिषम्।

---

[1] So corr. Ch °पश्यतः; vgl. RV 8, 82, 9; MS 2, 13, 6 u. s. w. [2] So Ch; in RV 1, 7, 4 ऽव; desgl. MS 2, 13, 6 u. s. w. [3] So corr. Ch उग्रा [4] So corr. Ch ईशानमिन्द्र तस्थुषो न त्वावाँ etc.; vgl. RV 7, 32, 22; MS 2, 13, 9 u. s. w. [5] So corr. Ch पार्थिवः न etc.; vgl. RV 7, 32, 23; MS 2, 13, 9. [6] So corr. Ch न जनिष्यते श्वायन्तो मघवन्निन्द्र वाजिनः गव्य° vgl. RV 7, 32, 23; MS 2, 13, 9. [7] So corr. Ch माता; vgl. RV 6, 46, 1; MS 2, 13, 9. [8] Vgl. RV 6, 46, 2; MS 2, 13, 9. [9] So Ch; dagegen दक्षसे in RV 6, 48, 1; MS 2, 13, 9 u. s. w.

प्रियं मित्रं न शंसिषम् ॥
ऊर्जो नपातं[1] स हिनायमस्मयुर्दाशेम[2] हव्यदातये दाशेम हव्यदातये ।
भुवद्वाजेष्वविता[3] भुवद्वृध[4] उत त्राता तनूनाम् ॥ ॥ १२ ॥
cf. Mâitr. S. 2, 13, 9 und 6 etc.

अग्ने[5] देवाँ इहावह जज्ञानो वृक्तबर्हिषे ।
5 असि होता न ईड्यः ॥
अगन्म महो[6] नमसा यविष्ठं[7] यो दीदाय समिद्धस्स्वे दुरोणे ।
चित्रभानुं[8] रोदसी अन्तरुर्वी[9] स्वाहुतं[10] विश्वतः प्रत्यञ्चम् ॥
मेधाकारं विदथस्य प्रसाधनमग्निं होतारं परिभूतमं मतिम्[11] ।
त्वामर्भस्य[12] हविषस्समानमित्त्वां महो वृणते नान्यं त्वत्[13] ॥
10 मनुष्वत्त्वा[14] निधीमहि मनुष्वत्समिधीमहि ।
अग्ने मनुष्वदङ्गिरो देवान्देवयते यज ॥
अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।
अग्नी[15] राये स्वाभुवं स प्रीतो याति वार्यमिषं स्तोतृभ्य[16] आभर ॥
अग्निर्देवता कृत्तिका नक्षत्रं प्रजापतिर्देवता रोहिणी नक्षत्रं मरु-
15 तो देवतेन्वका नक्षत्रं रुद्रो देवता बाहुर्नक्षत्रमदितिर्देवता पुनर्वसु-
नक्षत्रं बृहस्पतिर्देवता तिष्यो नक्षत्रं सर्पा देवताश्लेषा नक्षत्रं पितरो
देवता मघा नक्षत्रं भगो देवता फल्गुनीर्नक्षत्रमर्यमा[17] देवतोत्तराः

---

[1] So corr. Ch शंसिषमूर्जे नपात [2] So corr. Ch स्मयुः ॥ दाशेम; vgl. RV 6, 48, 2; MS 2, 13, 9. [3] So corr. Ch द्वजेष्व [4] So corr. Ch द्वृधः [5] Dies Capitel auch in T 1 und Brl fol. 126 vorhanden; darnach accentuirt. [6] So die Mss.; dagegen RV 7, 12, 1 महा; desgl. MS 2, 13, 5; TBr. 3, 11, 6, 3. [7] So T 1; in Ch यविष्ठ; Brl यविष्ठं [8] Ch चित्रं भानु [9] Brl fol. 126 अन्तरोर्वी [10] Accent in diesem Worte ergänzt; T 1 und Brl स्वाहुतं ohne Accent. [11] So T 1 und Brl; Ch ग्निर्होतारं परिभूतम्मतिम [12] So T 1 und Brl; in Ch त्वामर्भस्यं; cf. TBr. 3, 11, 6, 3; RV 10, 91, 8 anders. [13] So T 1 und Brl; in Ch त्वा महो वृणते नान्यस्त्वत [14] So T 1 und Brl; in Brl मनुष्यत्त्वा; cf. RV 5, 21, 1; TBr. 3, 11, 6, 3. [15] So T 1 und Brl; Ch अग्निराये; vgl. RV 5, 6, 3; TBr. 3, 11, 6, 4. [16] Ch स्तोत्रेभ्य [17] So Brl; in Ch फल्गुणीर्न°; T 1 wohl नी नं°

फल्गुनीनक्षत्रं[1] सविता देवता हस्तौ[2] नक्षत्रं त्वष्टा देवता चित्रा
नक्षत्रं वायुर्देवता निष्ट्या नक्षत्रमिन्द्राग्नी देवता विशाखं[3] नक्षत्रं
मित्रो देवतानूराधा नक्षत्रमिन्द्रो देवता ज्येष्ठा नक्षत्रं निर्ऋतिर्देवता
मूलं नक्षत्रमापो देवताषाढा नक्षत्रं विश्वे देवा देवतोत्तरा[4] अषाढा
नक्षत्रं विष्णुर्देवताश्वत्थो नक्षत्रं वसवो देवता श्रविष्ठा नक्षत्रं वरु- 5
णो देवता शतभिषङ् नक्षत्रमज एकपाद्देवता प्रोष्ठपदा नक्षत्रमहि-
र्बुध्न्यो देवतोत्तरे प्रोष्ठपदा नक्षत्रं पूषा देवता रेवती नक्षत्रमश्विनौ
देवताश्वयुजौ नक्षत्रं यमो देवतापभरणीर्नक्षत्रमग्ने रुचस्स्थ प्रजाप-
तेस्सोमस्य धातुर्भूयासं[5] प्रजनिषीय तेन ब्रह्मणा तेन छन्दसा तया
देवतयाङ्गिरस्वद्ध्रुवास्सीदत[6] ॥ १३ ॥ 10

cf. TBr. 3, 11, 6, 3 und 4; Mâitr. S. 2, 13, 20.

अग्निर्मूर्धायमग्निस्त्वामग्ने पुष्करादधि ॥
हुवे वसुद्योत्मानं सुवृक्तिं विशामग्निमतिथिं सुप्रयसम्[7] ।
मित्र इव यो दिधिषाय्यो भूद्देव आदेवे जने जातवेदाः ॥
पुरो वो मन्द्रं दिव्यं सुवृक्तिं प्रयति यज्ञे अग्निमध्वरे दधिध्वम् ।
पुर उक्थेभिस्स[8] हि नो विभावा स्वध्वरा करति जातवेदाः ॥ 15
का त आकूतिर्मनसो वराय भुवदग्ने शंतमा[9] का मनीषा ।
को वा यज्ञैः परि दक्षं त आप केन वा ते मनसा दाशेम[10] ॥
जनस्य गोपा अजनिष्ट जागृविरग्निस्सुदक्षस्सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्विभाति भरतेभ्यश्शुचिः[11] ॥

---

[1] So Brl; in T1 त्तरा फल्गूनी न°; in Ch त्तराः फल्गुणीर्न° [2] So die Mss., wenn nicht vielleicht T1 doch हस्तौ bietet; in MS 2, 13, 20 हस्तो; Caland corr. हस्तो [3] So T1 und Brl; in Ch विशाखा; aber auch MS 2, 13, 20 विशाखं [4] So T1 und Brl; in Ch विश्वे देवो उत्तरा [5] So T1 und Brl; in Ch धातु भू° [6] So T1; desgl. Ch, ohne Accent; in Brl ध्रुवा सीदत [7] So corr. Ch सुप्रयासम; aber vgl. RV 2, 4, 1. [8] So corr. Ch उक्तेभि°; vgl. RV 6, 10, 1. [9] So corr. Ch शंतसा; vgl. RV 1, 76, 1. [10] Erste Hand in Ch दशेम [11] So corr. Ch भरतेद्यश्शु°; vgl. RV 5, 11, 1; MS 2, 13, 7; TS 4, 4, 4, 2; VS 15, 27.

त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं[1] वने वने।
स जायसे मथ्यमानस्सहो महस्त्वामाहुस्सहसस्पुत्रमङ्गिरः[2] ॥
यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समीधिरे।
इन्द्रेण देवैस्सरथं स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः ॥[3]
5 त्वामग्ने हविष्मन्तो देवं मर्तास ईडते।
मन्ये त्वा जातवेदसं स हव्या वक्ष्यानुषक्[4] ॥
त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः।
शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवे ॥
यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो।
10 महिषीव त्वद्रयिस्त्वद्वाजा[5] उदीरते ॥
आ ते अग्न इधीमहि ॥
आ ते अग्न ऋचा हविश्शुक्रस्य शोचिषस्पते।
सुश्चन्द्र[6] दस्म विश्पते हव्यवाट् तुभ्यं हूयत इषं स्तोतृभ्य आभर ॥
अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः।
15 अस्तमर्वन्त आशवो ऽस्तं नित्यासो वाजिन इषं स्तोतृभ्य आभर ॥
॥ १४ ॥ cf. Mâitr. S. 2, 13, 7; TS 4, 4, 4; VS 15, 20 flg.
अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम्।
दूरेदृशं गृहपतिमथर्युम् ॥
तमग्निमस्ते वसवो[7] न्यृण्वन्सुप्रतिचक्षमवसे कुतश्चित्।
20 दक्षाय्यो यो दम आस नित्यः[8] ॥
प्रेद्धो अग्ने दीदिहि पुरो नो ऽजस्रया सूर्म्या यविष्ठ।

---

[1] So corr. Ch यानं; vgl. RV 5, 11, 6; MS. 2, 13, 7; TS 4, 4, 4, 3; VS 15, 28.
[2] So corr. Ch स जायते पंथ्यमानस्सहो महांस्त्वामाहुस्सहसं पु°; vgl. RV 5, 11, 6; MS 2, 13, 7 u. s. w. [3] Vgl. RV 5, 11, 2. [4] So corr. Ch म हव्या वद्यानुषक्; vgl. RV 5, 9, 1. [5] So corr. Ch त्वदद्रियस्त्वद्वाजा; vgl. RV 5, 6, 4. [6] So corr. Ch मश्चंद्र; vgl. RV 5, 6, 5. [7] So corr. Ch वमवो वसो; vgl. RV 7, 1, 2.
[8] So corr. Ch दम श्रास निश्यः; vgl. RV 7, 1, 2.

त्वां शश्वन्त उपयन्ति वाजाः ॥
एना वो अग्निं नमसोर्जो नपातमाहुवे ।
प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम् ॥[1]
अग्न आयाह्यग्निभिर्होतारं त्वा वृणीमहे ।
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥ 5
उदस्य शोचिरस्थादाजुह्वानस्य[2] मीढुषः ।
उद्धूमासो अरुषासो दिविस्पृशस्समग्निमिन्धते नरः ॥
अग्ने वाजस्य गोमत ईशानस्सहसो यहो ।
अस्मे धेहि जातवेदो महि श्रवः ॥[3]
स इधानो[4] वसुष्कविरग्निरीडेन्यो[5] गिरा । 10
रेवदस्मभ्यं पुर्वणीक दीदिहि ॥
क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः ।
स तिग्मजम्भ रक्षसो दह प्रति ॥[6]
भद्रो नो अग्निराहुतो भद्रा रातिस्सुभग भद्रो अध्वरः ।
भद्रा उत प्रशस्तयः ॥[7] 15
यस्समिधा य आहुत्या[8] यो वेदेन ददाश मर्तो अग्नये[9] ।
यो नमसा स्वध्वरः ॥
तदग्ने[10] द्युम्नमाभर यत्सासाहत्सदने कंचिदत्रिणम् ।
मन्युं जनस्य दूढ्यः ॥

---

[1] Vgl. RV 7, 16, 1; MS 2, 13, 8; TS 4, 4, 4, 4; VS 15, 32. [2] So corr. Ch शुचिर॰; vgl. RV 7, 16, 3; TS 4, 4, 4, 5. [3] Vgl. RV 1, 79, 4; MS 2, 13, 8; TS 4, 4, 4, 5; VS 15, 35. [4] So corr. Ch एधानो; vgl. RV 1, 79, 5; MS 2, 13, 8; TS 4, 4, 4, 5; VS 15, 36. [5] So corr. Ch रेडेन्यो; vgl. RV 1, 79, 5; MS 2, 13, 8 u. s. w. [6] Vgl. RV 1, 79, 6; MS 2, 13, 8; TS 4, 4, 4, 5; VS 15, 37. [7] Vgl. RV 8, 19, 19; MS 4, 12, 5; VS 15, 38. [8] So Ch; vgl. RV 8, 19, 5 आहुती [9] So corr. Ch अग्नयो; vgl. RV 8, 19, 5. [10] So corr. Ch उदग्ने; vgl. RV 8, 19, 15; in Ch öfters उ für त gesetzt.

अग्निं होतारं मन्ये दास्वन्तं वसुं[1] सूनुं सहसो जातवेदसं विप्रं न
जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या[2] कृपा ।
घृतस्य विभ्राष्टिमनुवष्टि शोचिषाजुह्वानस्य[3] सर्पिषः ॥
5 यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमङ्गिरसां विप्र मन्मभिर्विप्रेभिश्शुक्र
मन्मभिः[4] ।
परिज्मानमिव[5] द्यां होतारं चर्षणीनाम् ।
शोचिष्केशं वृषणं यमिमा विशः प्रावन्तु[6] जूतये विशः ॥
एवेन सद्यः[7] पर्येषि[8] पार्थिवं मुहुर्गीरितो[9] वृषभः कनिक्रदद्दधद्रेतः
10 कनिक्रदत् ।
शतं चक्षाणो[10] अक्षभिर्देवो वनेषु तुर्वणिः ।
सदो दधान उपरेषु सानुष्वग्निः[11] परेषु सानुषु ॥
अचेत्यग्निश्चिकितिर्हव्यवाट् स सुमद्रथः[12] ।
अग्निश्शुक्रेण शोचिषा बृहत्सूर्यो अरोचत ॥
15 घ्नन्मृध्राण्यप द्विषो[13] दहन्नक्षांसि विश्वहा ।
अग्निर्विश्वस्य राजति ।[14] अग्निर्विश्वं विराजति ।
अग्निस्सर्वं विराजति ॥ ॥ १५ ॥
cf. Mâitr. S. 2, 13, 8; TS 4, 4, 4; VS 15, 32 flg.

इति श्रीमद्यजुषि काठके चरकशाखायामोरिमिकायां यदक्रन्दो नामैकोनचत्वारिंशं स्थानकं संपूर्णम् ॥[15]

---

[1] So corr. Ch वसं [2] So corr. Ch देवाश्या [3] So corr. Ch जुह्वान स°; vgl. RV 1, 127, 1; MS 2, 13, 8; TS 4, 4, 4, 8; VS 15, 47. [4] So corr. Ch मर्मभिर्विप्रोभिश्शुक्रमर्मभिः; vgl. RV 1, 127, 2. [5] So corr. Ch परिङ्मान; vgl. RV 1, 127, 2. [6] So corr. Ch विशन्प्रावर्तु; vgl. RV 1, 127, 2. [7] So corr. Ch मद्यः; vgl. RV 1, 128, 3. [8] So Ch; RV 1, 128, 3 पर्यैति [9] So Ch; vgl. RV 1, 128, 3. [10] So corr. Ch चक्षणो; vgl. RV 1, 128, 3. [11] So corr. Ch मानु° [12] So corr. Ch किनिः हव्यवाट् समुद्रथः; vgl. RV Vâl. 8, 5. [13] So corr. Ch मधान्यप द्विषः; vgl. RV 8, 43, 26. [14] So corr. In Ch राजतिः अ° [15] So die Unterschrift des Capitels in Ch.

हिरण्यगर्भस्समवर्तताग्रे[1] भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥
यः प्राणतो निमिषतश्च[2] राजा पतिर्विश्वस्य जगतो बभूव ।
ईशे यो अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥
य ओजोदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । 5
यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥
येन द्यौरुग्रा पृथिवी च[3] दृढा येन स्वस्स्तभितं[4] येन नाकम् ।
यो अन्तरिक्षं विममे वरीयः कस्मै देवाय हविषा विधेम ॥
य इमे द्यावापृथिवी तस्तभाने अधारयद्रोदसी[5] रेजमाने ।
यस्मिन्नधि विततस्सूर[6] एति कस्मै देवाय हविषा विधेम ॥ 10
यस्येमे विश्वे गिरयो महित्वा समुद्रं यस्य रसया सहाहुः[7] ।
दिशो यस्य प्रदिशः पञ्च देवीः कस्मै देवाय हविषा विधेम ॥
आपो ह यन्महतीर्विश्वमायन्गर्भं[8] दधाना जनयन्तीरग्निम् ।
ततो देवानां निरवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥
आ नः प्रजां जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः । 15
संवत्सरं ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु[9] ॥ ॥ १ ॥

cf. Mâitr. S. 2, 13, 23; TS 4, 1, 8, 3 flg.; RV 10, 121 usw.

प्राणापानाभ्यां त्वा सयुजा युजा युनज्म्याघाराभ्यां त्वा सयुजा युजा युनज्मीन्द्राग्निभ्यां त्वा सयुजा युजा युनज्मि छन्दोभिस्त्वा स्तोमेभिस्त्वोक्थेभिस्त्वा[10] तेजसे त्वा वर्चसे त्वा रय्यै[11] त्वा पोषाय त्वा सजातानां मध्यमेष्ठेयाय मया त्वा सयुजा युजा युनज्मि ॥ 20

---

[1] Dies Capitel in Brl fol. 95 und 96 vollständig vorhanden; größtentheils auch in T 5; ein kleines Fragment in T 6. Nach diesen Mss. accentuirt. [2] Ch निमेष° [3] Das च fehlt in Ch und T 5. [4] Brl und T 5 स्वस्तभिते' [5] Ch द्रोदसे [6] Hier kleine Lücke in T 5; gerade dies Stück im Fragment von T 1 vorhanden. [7] So Accent corrigirt; Mss. सहाहुः [8] Ch मायगर्भं [9] So Accent corrigirt; Brl und T 5 पुष्टिपति° [10] So corr. Ch स्त्वोत्तेभि° [11] So corr. Ch राय्यै

त्वामग्ने वृषभश्चेकितानं[1] पुनर्युवानं जनयन्नुपागाम् ।
अस्थूरि[2] णौ गार्हपत्यानि सन्तु तिग्मेन नो ब्रह्मणा संशिशाधि ॥
संवत्सरस्य प्रतिमां ये त्वा रात्र्युपासते ।
तेषामायुष्मतीं प्रजां रायस्पोषेण संसृज ॥[3] ॥ २ ॥
5 यो अप्स्वन्तरग्निर्यो वृक्षे यः पुरुषे यो[4] अश्मनि ।
य आविवेश भुवनानि विश्वा तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥
पृष्टो दिवि पृष्टो अग्निः पृथिव्यां[5] पृष्टो विश्वा ओषधीराविवेश ।
वैश्वानरस्सहसा पृष्टो अग्निस्स नो दिवा स रिषः पातु नक्तम् ॥
यस्सोमे अन्तर्यो गोष्वन्तर्वयांसि[6] य आविवेश यो मृगेषु ।
10 य आविवेश द्विपदो यश्चतुष्पदस्तेभ्यो[7] अग्निभ्यो हुतमस्त्वेतत् ॥

विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीमन्तरिक्षं यच्छान्तरिक्षं दृंहान्तरिक्षं मा हिंसीर्विश्वस्मै प्राणाय व्यानायापानायोदानाय प्रतिष्ठायै चरित्राय वायुष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शंतमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीदान्तरिक्षमधिद्यौर्ब्रह्मणा विष्टं 15 रुद्रा रक्षितारो वायुरधिवियत्तो अस्यां तां त्वा[8] प्रपद्ये सा मे शर्म च वर्म च भव तया देवतयाङ्गिरस्वद्ध्रुवा सीद तेजो ऽसि तेजो मे यच्छान्तरिक्षं दृंहान्तरिक्षं मा पाहि तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥
हुतादमग्निं[9] यमु काममाहुर्यं दातारं प्रतिग्रहीतारमाहुः ।
यं जोहवीमि[10] पृतनासु सासहिं तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥

---

[1] So Ch; besser TS 5, 7, 2, 1 वृषभं चें°; so vielleicht zu corrigiren; vgl. zu dem Verse auch RV 6, 15, 19 (2. Hälfte). [2] So corr. Ch अस्तुरि; vgl. RV 6, 15, 19; TS 5, 7, 2, 1. [3] Vgl. TS 5, 7, 2, 1. [4] So corr. Ch ये; vgl. MS 2, 13, 13. [5] So corr. Ch पृथिव्यास्पृष्टो, vgl. oben 4, 16; MS 2, 13, 11; RV 1, 98, 2. [6] So corr. Ch गोष्वं°; vgl. MS 2, 13, 13; AV 3, 21, 2. [7] So corr. Ch याश्चतु°; vgl. MS 2, 13, 13; AV 3, 21, 2. [8] Erste Hand in Ch तत्त्वा; dann corr. in तात्त्वा; vgl. TS 4, 4, 5, 1 und 2. [9] Ch यो हुताद°; das यो ist von mir gestrichen; vgl. MS 2, 13, 13 विश्वादम° [10] So corr. Ch माहु यं ज्योहवीमि; vgl. MS 2, 13, 13 a. E.

येनेन्द्रस्य रथं संबभूवुर्वैश्वानर उत विश्वदाव्यः ।
धीरो यश्शक्रः परिभूरदाभ्यस्तेभ्यो[1] अग्निभ्यो हुतमस्त्वेतत् ॥
वेदिरसि सुधां मे धेहि वरुणस्य कुक्षी स्थो मा मा संताप्तं ता-
र्क्ष्यारिष्टनेमे ऽभि मा सच स्वस्त्या छर्दिषा शंतमेन नमो ऽग्नेर्वैश्वान-
रस्य हरसे नमश्शरवे त्रायमाण त्रायस्व नो हन्तरधि नो ब्रूहि ॥
वर्च आधायि मे तनूस्सह ओजो महद्बलम् ।
त्रयस्त्रिंशद्वीर्याणि तान्यग्निः प्रददातु मे ॥
आ मा वर्चो ऽग्निना दत्तमेतु महि राधस्सह ओजो महद्बलम् ।
दीर्घायुत्वाय शतशारदाय प्रतिगृह्णामि महत इन्द्रियाय ॥
अग्ने दुध्राग्ने कह्याग्ने[2] किंशिलाग्ने वन्याग्ने कक्ष्य या त इषुर्युवा 10
नाम तस्यै ते विधेम तया नः पाहि तस्यै ते स्वाहा ॥ ३ ॥
cf. Mâitr. S. 2, 13, 13; TS 4, 4, 5; 5, 5, 9, 1.

रोहितेषु त्वा जीमूतेषु सादयाम्यरुणेषु त्वा[3] जीमूतेषु सादयामि
कृष्णेषु त्वा नीलेषु त्वासितेषु त्वा जीमूतेषु सादयाम्यम्बा नामासि
दुला नामासि नितत्नी नामासि चुपुणीका नामास्यभ्रयन्ती नामा-
सि मेघयन्ती नामासि वर्षयन्ती नामासि ज्योतिष्मतीं त्वा सादया- 15
मि ज्योतिष्कृतं त्वा सादयामि ज्योतिर्विदं[4] त्वा सादयामि ज्वलन्तीं
त्वा सादयामि दीप्यमानां[5] त्वा सादयामि मल्मलाभवन्तीं[6] त्वा सा-
दयामि रोचमानां[7] त्वा सादयामि बृहज्ज्योतिषं[8] त्वा सादयामि भा-
स्वतीं त्वा सादयामि बोधयन्तीं त्वा सादयामि जाग्रतीं त्वा साद-
याम्यजस्रां त्वा सादयामि प्रसवाय त्वोपयामाय त्वा काटाक्षाय[9] त्वा- 20

---

[1] So corr. Ch यश्चक्रः परिभूरिदाभ्य°; vgl. MS 2, 13, 13. [2] So Ch; vgl. in TS 5, 5, 9, 1 गह्य [3] Dies त्वा fehlt in Ch und ist von mir ergänzt. [4] So corr. Ch विंदि [5] So corr. Ch दीप्यमानं [6] So corr. Ch erste Hand सन्मला°, dann मन्मला°; vgl. TS 1, 4, 34; Naigh. 1, 17. [7] So corr. Ch रोचमानं [8] So corr. Ch तिषां [9] In Ch erste Hand कटाच्चाय, dann corr. in काटाच्चाय

र्णवाय त्वा सिन्धवे त्वा समुद्राय त्वा सरसे त्वा विश्वव्यचसे त्वा धर्ण-
साय त्वा द्रविणाय त्वा सुभूताय त्वान्तरिक्षाय त्वा ॥ ४ ॥
cf. Mâitr. S. 2, 13, 19; TS 1, 4, 34; 4, 4, 5, 1; TÂr. 3, 19.

द्यौरपराजितामृतेन नष्टादित्या[1] रक्षितारस्सूर्यो ऽधिवियन्तो अस्यां
तां त्वा प्रपद्ये सा मे शर्म च वर्म च भव तया देवतयाङ्गिरस्वद्ध्रुवा[2]
5 सीद स्वरसि स्वर्मे यच्छ दिवं दृंह दिवो मा पाहि तया देवतयाङ्गि-
रस्वद्ध्रुवा सीद परमेष्ठी त्वा सादयतु दिवः पृष्ठे ज्योतिष्मतीं व्यचस्व-
तीं प्रथस्वतीं भास्वतीं[3] रश्मिवतीमा या द्यां भास्या पृथिवीमुर्व-
न्तरिक्षं दिवं यच्छ दिवं दृंह दिवं मा हिंसीर्विश्वस्मै प्राणाय व्याना-
यापानायोदानाय प्रतिष्ठायै चरित्राय सूर्यस्त्वाभिपातु मह्या स्वस्त्या
10 छर्दिषा शंतमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥
उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे ।
वैश्वानरज्येष्ठेभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥[4]
प्राणो ऽसि व्यानो ऽस्यपानो ऽसि श्रोत्रमसि चक्षुर्नाम तया देव-
तयाङ्गिरस्वद्ध्रुवा सीद ॥
15 यन्ते ऽचितं यदु चितं[5] ते अग्ने यदूनं यद्वात्रातिरिक्तम् ।
विश्वे देवा अङ्गिरसश्चिनवन्नादित्यास्ते चितिमापूरयन्तु ॥
यास्ते अग्ने समिधो यानि धाम या जिह्वा जातवेदो यो अर्चिः ।
ये[6] ते अग्ने मेडवो[7] य इन्दवस्तेभिरात्मानं चिनुहि प्रजानन् ॥
चित्तिमचित्तिं[8] चिनवो विविद्वान्पृष्ठेव वीता वृजिना च मर्तान् ।
20 राये च नस्स्वपत्याय[9] देव दितिं च रास्वादितिमुरुष्य ॥

---

[1] So Ch! Vgl. TS 4, 4, 5, 2 विष्टां; darnach wohl zu corrigiren. [2] So corr. Ch भव तयांगिर° [3] So corr. Ch तीं भास्वतीं [4] Vgl. oben 7, 16; RV 8, 43, 11; MS 2, 13, 13 a. E.; TS 1, 3, 14, 7; AV 3, 21, 6; 20, 1, 3. [5] Vgl. TBr. 3, 11, 6, 1. [6] So corr. Ch यो; vgl. TS 5, 5, 4, 4. [7] So Ch; vgl. मेडयो TS 5, 5, 4, 4. [8] So corr. Ch चितिमचिति°; vgl. RV 4, 2, 11; TS 5, 5, 4, 4. [9] So corr. Ch सुपत्याय; vgl. RV 4, 2, 11; TS 5, 5, 4, 4.

वयमग्ने[1] धनवन्तस्स्यामालं यज्ञायोत[2] दक्षिणायै ।
ग्रावा वदेदभि[3] सोमस्यांशुमेन्द्रि[4] शिक्षेमेन्दुना सुतेन ॥
रायस्पोषं नो धेहि जातवेद ऊर्जो भागं मधुमत्सूनृतावत् ।
दधाम यज्ञं सुनवाम सोमं यज्ञेन त्वामुपशिक्षेम शक्र ॥
ईशानं त्वा शुश्रुमा वयं धनानां धनपते । 5
गोमदग्ने अश्ववद्भूरि पुष्टिं हिरण्यवदन्नवद्धेहि मह्यम् ॥
दुहां ते द्यौः पृथिवी पयो जगरस्त्वा सोदको विसर्पतु ।
प्रजापतिनात्मानमाप्रीणे ऽरिक्तो म आत्मा ॥
यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु ।
यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमो अस्तु देवाः[5] ॥ 10

॥ ५ ॥ cf. TS 4, 4, 5 und 6, weiteres aus den Anmerkungen.

पिता मातरिश्वाच्छिद्रा पदा धादच्छिद्रोशिजः कवयः पदानुतक्षिषुस्सोमो[6] विश्वविन्नेता नेषद्बृहस्पतिरुक्थामदानि[7] शंसिषत् ॥
यत्क्रन्दः ॥
यमेन दत्तं त्रित एनमायुनगिन्द्र एनं प्रथमो अध्यतिष्ठत् । 15
गन्धर्वो अस्य रशनामगृभ्णात्सूरादश्वं वसवो निरतष्ट[8] ॥
असि[9] यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन ।
असि सोमेन समया विपृक्त[10] आहुस्ते त्रीणि दिवि बन्धनानि ॥
त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तस्समुद्रे ।

---

[1] Von hier an bis zum Schluß des Capitels in Brl fol. 105 und T 1 (Nr. 2a) vorhanden und darnach accentuirt. [2] Ch स्यामलं यज्ञायोत, [3] So Brl fol. 105 und T 1; in Ch ग्रावावादोद॰ [4] So Brl und T 1; in Ch सिन्द्रि [5] So corr. mit Caland; Brl, T 1 und auch T 6, wo der Vers 13b sich findet, देवां; desgl. Ch, ohne Accent. [6] So Calands Correctur; Ch नितच्चिष्वत्सोमो; TS 5, 6, 86 पदानुतक्षः सोमो [7] So corr. Ch रुक्तासदानि; vgl. TS 5, 6, 8, 6. [8] So corr. Ch निरतिष्ठ; vgl. RV 1, 163, 2; TS 4, 6, 7, 1. [9] So corr. Ch अस्य; vgl. RV 1, 163, 3; TS 4, 6, 7, 1. [10] So corr. Ch विपृक्ता; vgl. RV 1, 163, 3; TS 4, 6, 7, 1.

उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा[1] त आहुः परमं जनित्रम् ॥
इमा ते वाजिन्नवमार्जनानीमा शफानां[2] सवितुर्निधाना[3] ।
अत्रा ते भद्रा वृषणा[4] अगृभ्णामृतस्य या अभिरक्षन्ति गोपाः ॥

संवत्सरो ऽसि परिवत्सरो ऽसीदावत्सरो[5] ऽस्यनुवत्सरो ऽस्युद्वत्सरो ऽसि देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिन्द्रवन्तं त्वा सादयामि धामच्छदसि स्वे योनौ सीद स्वे पृथिव्या योनौ सीदर्तवस्ते[6] कल्पन्तां मासास्ते कल्पन्तामर्धमासास्ते कल्पन्तामहोरात्राणि ते कल्पन्तामङ्गानि ते कल्पन्तां परूंषि ते कल्पन्तां शरीराणि ते कल्पन्तामेत्या प्रेत्या सं चा च प्र च सारयाग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रस्सूर्यो ज्योतिर्ज्योतिस्सूर्यः ॥

इमं स्तनमूर्जस्वन्तं धयापां प्रपीनमग्ने[7] सरिरस्य मध्ये ।
उत्सं जुषस्व मधुमन्तमूर्मिं समुद्रियं सदनमाविशस्व ॥ ॥ ६ ॥

cf. TS 5, 6, 8, 6; 4, 6, 7; 5, 5, 10, 6; RV 1, 163, 2—5.

समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमानट्[8] ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥
वयं नाम प्रब्रवाम[9] घृतस्यास्मिन्यज्ञे धारयामा नमोभिः ।
उप ब्रह्मा शृणवच्छस्यमानं[10] चतुश्शृङ्गो ऽवमीद्गौर[11] एतत् ॥
चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति[12] महो देवो मर्त्याँ आविवेश ॥

---

[1] So corr. Ch वरुणश्छंद्य°; vgl. aber RV 1, 163, 4; TS 4, 6, 7, 2; VS 29, 15. [2] So corr. Ch शप्तानां; vgl. RV 1, 163, 5; TS 4, 6, 7, 2; VS 29, 16. [3] So Ch! vgl. RV 1, 163, 5 सनितुंनि°; desgl. TS 4, 6, 7, 2; VS 29, 16. [4] So Ch; vgl. RV 1, 163, 5 रशना; desgl. TS 4, 6, 7, 2; VS 29, 16. [5] So corr. Ch परिवत्सरं सोदव° [6] So corr. Ch सोदंतव° [7] So auch VS 17, 87; dagegen TS 5, 5, 10, 6 प्रप्यातमग्ने [8] So corr. Ch मानाद्; vgl. RV 4, 58, 1; MS 1, 6, 2. [9] So corr. Ch प्रववाम; vgl. RV 4, 58, 2 प्रब्रवामा; auch MS 1, 6, 2. [10] So corr. Ch शृणुवछस्य°; vgl. RV 4, 58, 2; MS 1, 6, 2. [11] So corr. Ch वमेद्गौर; vgl. RV 4, 58, 2. [12] So corr. Ch रोरवोति; vgl. RV 4, 58, 3; MS 1, 6, 2.

त्रिधा हितं पणिभिर्गुह्यमानं[1] गवि[2] देवासो घृतमन्वविन्दन् ।
इन्द्र एकं सूर एकं जजान वेनादेकं स्वधया निष्टतक्षुः ॥
एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे[3] ।
घृतस्य धारा अभिचाकशीमि हिरण्ययो वेतसो मध्य आसाम् ॥
सम्यक्स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः ।
एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः ॥
सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः ।
घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः ॥
अभि प्रवन्त समनेव योषाः कल्याण्यस्स्मयमानासो[4] अग्निम् ।
घृतस्य धारास्समिधो नसन्त ता जुषाणो हर्यति जातवेदाः ॥ 10
कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभिचाकशीमि ।
यत्र सोमस्सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते ॥
अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त ।
इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥
धामन्ते विश्वं भुवनमधिश्रितमन्तस्समुद्रे हृद्यन्तरायुषि । 15
अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम् ॥

॥ ७ ॥ cf. RV 4, 58.

पितुं[5] नु[6] स्तोषं महो धर्माणं तविषीम् ।
यस्य त्रितो व्योजसा वृत्रं[7] विपर्वमर्दयत् ॥
स्वादो पितो मधो[8] पितो वयं त्वा ववृमहे[9] । 20
अस्माकमविता भव ॥

---

[1] So corr. Ch पाणि°; vgl. RV 4, 58, 4. [2] So corr. Ch गवे; vgl. RV 4, 58, 4. [3] So corr. Ch नवचक्षि; vgl. RV 4, 58, 5. [4] So corr. Ch कल्याणस्मय°; vgl. RV 4, 58, 8. [5] Dies Capitel in T1 und Brl vorhanden; darnach accentuirt; vgl. RV 1, 187, 1. Die Mss. T1 und Brl haben hier fast durchweg die richtigen Lesarten, während Ch vielfach abweicht. [6] Ch पितुर्नु; T1 पितुन्नु [7] Ch व्रतं [8] So T1 und Brl; in Ch मधु; vgl. RV 1, 187, 2. [9] So T1 und Brl; in Ch ववृहेमहे; 8gl. RV 1, 187, 2.

उप नः पितवाचर[1] शिवश्शिवाभिरूतिभिः[2] ।
मयोभूरद्विषेण्यस्सखा[3] सुशेवो अद्वयाः[4] ॥
तव त्ये[5] पितो रसा रजांस्यनु विष्ठिताः ।
दिवि वाता इव श्रिताः[6] ॥
5 तव त्ये[7] पितो ददतस्तव स्वादिष्ठ ते पितो ।
प्र स्वाद्मानो रसानां तुविग्रीवा इवेरते ॥
त्वे पितो महानां देवानां मनो हितम् ।
अकारि चारु केतुना तवाहिमवसावधीत्[8] ॥
यददः पितो अजगन्विवस्व पर्वतानाम् ।
10 अत्रा चिन्नो मधो पितोऽरं भक्षाय गम्याः ।
यदपामोषधीनां परिंशमारिशामहे ।
वातापे पीव इद्भव ॥[9]
यत्ते सोम गवाशिरो[10] यवाशिरो भजामहे ।
वातापे पीव इद्भव ॥
15 करम्भ ओषधे भव पीवो वृक्क उदारथिः ।
वातापे पीव इद्भव ॥
तं त्वा[11] वयं पितो वचोभिर्गावो न[12] हव्या सुषूदिम ।
देवेभ्यस्त्वा सधमादमस्मभ्यं[13] त्वा सधमादम्[14] ॥ ॥ ८ ॥ cf. RV 1, 187.
मह्यमापो मधुमदैरयन्त[15] मह्यं ज्योतिरभरत्सूर्यस्तत् ।

---

[1] So T1 und Brl; in Ch पित आचर; vgl. RV 1, 187, 3. [2] Ch शिवां ऊतिभिः; vgl. RV 1, 187, 3. [3] Accent corr.; T1 und Brl मयोभू°; vgl. RV 1, 187, 3. [4] Ch अद्वयः; vgl. RV 1, 187, 3. [5] So T1 und Brl; in Ch ते; vgl. RV 1, 187, 4. [6] To T1 und Brl; in Ch वात इवाश्रिताः; vgl. RV 1, 187, 4. [7] So T1 und Brl; in Ch ते; vgl. RV 1, 187, 5. [8] So T1; in Brl तवाहमं°; Ch तवहि°; vgl. RV 1, 187, 6. [9] In Ch folgt auf diesen Vers der 10. Vers करम्भ ओषधो (sic); in T1 und Brl steht derselbe an der richtigen Stelle. [10] So T1 und Brl; in Ch गआशिरो; vgl. RV 1, 187, 9. [11] Ch तत्त्वा [12] So T1 und Brl; in Ch नो [13] Ch सदमा° [14] Ch सदमा° [15] Vgl. AV 6, 61, 1 दैरयन्ता

मयि देवा द्रविणमायजन्तां ममाशीरस्तु मम[1] देवहूतिः ।
दैव्या होतारो वनिषन्न[2] एतदरिष्टास्स्याम तन्वा सुवीराः ॥
मह्यं यजन्तां मम यानीष्टाकूतिस्सत्या[3] मनसो मे ऽस्तु ।
एनो मा निगां कतमच्चनाहं[4] विश्वे देवा अनुतिष्ठन्तु मेह ॥
5 अग्निर्मन्युं[5] प्रतिनुदन्पुरस्तादद्ब्धो गोपः परिपातु विश्वतः ।
अपाञ्चो यन्तु निर्ऋथं[6] पुनस्ते ऽमैषां[7] चित्तं प्रबुधा विनश्यतु ॥
धाता धातॄणां भुवनस्य यस्पतिर्देवं सवितारमभिमातिषाहम् ।
इमं यज्ञं बृहस्पते ऽश्विनोभेन्द्रावत[8] काव्यैर्दंसनाभिः ॥
त्रयीष्षडुर्वीरुरु णस्कृणोत विश्वे देवा इह वीरयध्वम् ।
10 मा हास्महि[9] प्रजया मा तनूभिर्मा रधाम[10] द्विषते सोम राजन् ॥
उरुव्यचा नो महिषश्शर्म यंसदस्मिन्हवे पुरुहूतः पुरुक्षुः ।
स नः प्रजायै हर्यश्व मृडेन्द्र मा नो रीरधो मा परा दाः ॥[11]
तिस्रो देवीर्महि[12] नश्शर्म यच्छत प्रजायै नस्तन्वे यच्च[13] पुष्टम् ।
मा नो वधीदभिभा मो[14] अशस्तिर्मा नो वृधद्वृजना[15] द्वेष्या या ॥
15 ये नस्सपत्ना अप ते[16] भवन्त्विन्द्राग्निभ्यामवबाधामहे तान् ।
आदित्या रुद्रा उपरिस्पृशं मोग्रं चेत्तारमधिराजमक्रन् ॥

---

[1] Vgl. RV 10, 128, 3 मय्या॰ मयि; desgl. AV 5, 3, 5; TS 4, 7, 14, 1. [2] Ch वन्निषन्न एत॰; vgl. AV 5, 3, 5 सनिषन्न एत॰; RV 10, 128, 3 वनुषन्त पूर्वे; TS 4, 7, 14, 1, 2 वनिषन्त पूर्वे [3] So corr. übereinstimmend mit AV 5, 3, 4; Ch समयानेष्टाकूति॰; vgl. RV 10, 128, 4 मम यानि हव्याकूति॰; desgl. TS 4, 7, 14, 2. [4] So corr. Ch कतमञ्च॰ [5] So auch TS 4, 7, 14, 2; dagegen RV 10, 128, 6 अग्ने मन्युं; desgl. AV 5, 3, 2. [6] So corr. Ch निनृथं; anders RV und TS निर्गुतः; AV निवंता; vgl. aber RV 7, 104, 14. [7] So corr. Ch सैषां; vgl. RV 10, 128, 6; AV 5, 3, 2; TS 4, 7, 14, 3. [8] So corr. Ch बृहस्पतौ श्विनोभेन्द्रावतं; vgl. RV 10, 128, 7; TS 4, 7, 14, 3. [9] So corr. Ch महान्महि; aber vgl. RV 10, 128, 5; AV 5, 3, 7; TS 4, 7, 14, 2. [10] So corr. Ch तनूभिर्मरिधाम; erste Hand मंरधाम; vgl. RV 10, 128, 5; AV 5, 3, 7; TS 4, 7, 12, 2. [11] Vgl. RV 10, 128, 8; AV 5, 3, 8; TS 4, 7, 14, 3. 4. [12] So corr. Ch देवीन्महि [13] So corr. Ch यञ्च; vgl. AV 5, 3, 7. [14] So corr. Ch वधीदभिभा सो; vgl. AV 5, 3, 6 विददभिभा मो [15] So Ch; in AV 5, 3, 6 विदद्वृजिना [16] So corr. Ch येन सपत्ना नपतेभं॰; vgl. RV 10, 128, 9; AV 5, 3, 10.

अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्वजिद्यः ।
इमं नो यज्ञं विहवे जुषस्वेह कृण्मो हरिवो मेदिनं त्वा ॥[1] ॥ १० ॥
cf. RV 10, 128; TS 4, 7, 14; AV 5, 3.

तव[2] श्रिये व्यृजिहीत[3] पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः[4] ।
इन्द्रेण युजा तमसा परीवृतं[5] बृहस्पते निरपामौब्जो[6] अर्णवम् ॥
बृहस्पते अति यदर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु । 5
यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि[7] चित्रम् ॥
बृहस्पतिस्समजयद्वसूनि महो व्रजान्गोमतो देव एषः ।
अपस्सिषासन्स्वरप्रतीतो[8] बृहस्पतिर्हन्त्यमित्रमर्कैः[9] ॥
यमो दाधार[10] पृथिवीं यमो द्यामुत सूर्यम् ।
यमाय सर्वमित्तस्थे[11] यत्प्राणद्वायुरक्षितम् ॥ 10
यथा पञ्च यथा षड्यथा पञ्चदशर्षयः ।
यमं यो विद्यात्स ब्रूयाद्यथैकर्षिर्विजानते ॥[12]
त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृहत् ।
गायत्री त्रिष्टुप्छन्दांसि सर्वा ता यम आहिता ॥[13]
मृडा[14] नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । 15
यच्छं च योश्च[15] मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥

---

[1] Vgl. TS 4, 7, 14, 4; AV 5, 3, 11; (RVKh 10, 128, 1). [2] Dies Cap. in Brl fol. 16. 17 vorhanden; darnach accentuirt; auch in W 1 und G vorhanden. [3] Accent ergänzt; Brl व्यजिहीत ohne Accent. [4] Brl यद° [5] So Ch, ohne Accent; Brl und G परिवृतं; desgl. W 1, ohne Accent, vgl. RV 2, 23, 18. [6] Ch पमोब्जे [7] Ch देहि; vgl. oben 4, 16; auch RV 2, 23, 15; MS 4, 14, 4; TS 1, 8, 22, 3; VS 26, 3. [8] So Brl und W 1; Ch सुरप्रतीतो; G स्वरप्रोतीतो; vgl. oben 4, 16; RV 6, 73, 3; TS 2, 8, 2, 8. [9] Accent corr.; Brl हन्त्यमि°; aber vgl. oben 4, 16; RV 6, 73, 3. [10] So Brl, G und W 1, auch T 6 (wo dieser Vers ebenfalls fol. 14[a] vorhanden); Ch दधार; vgl. aber auch TÂr. 6, 5, 2 दाधार [11] T 6 सर्वमेत्तस्थे [12] Accent des schließenden Verbums ergänzt; Brl विजानते ohne Accent; vgl. aber TÂr. 6, 5, 2. [13] Vgl. RV 10, 14, 16 u. s. w. [14] Dieser und die folgenden beiden Verse auch in Brl fol. 102. 103 enthalten. [15] Ch यम्छं च यम्च योम्च; vgl. RV 1, 114, 2; TS 4, 5, 10, 2.

अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः[1] ।
सुम्नायन्निद्विशो[2] अस्माकमाचरारिष्टवीरा जुहवाम[3] ते हविः ॥
त्वेषं वयं रुद्रं यज्ञसाधमङ्कुं[4] कविमवसे निह्वयामहे ।
आरे अस्मद्दैव्यं[5] हेडो अस्यतु सुमतिमिद्वयमस्या[6] वृणीमहे ॥
अव ते हेडो वरुण[7] नमोभिरव यज्ञेभिरीमहे हविर्भिः ।
क्षयन्नस्मभ्यमसुर प्रचेतो[8] राजन्नेनांसि शिश्रथः कृतानि ॥
उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥[9]
इमं मे वरुण श्रुधी हवमद्या च मृडय ।
त्वामवस्युराचके ॥[10]
तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशंस[11] मा न आयुः प्रमोषीः ॥ ॥ ११ ॥
cf. RV 2, 23, 18. 15; 6, 73, 3; TÂr. 6, 5, 2; RV 10, 14, 16; 1, 114, 2—4; 1, 24, 14. 15. 11; 1, 25, 19.

हव्यं प्रीणीहि हव्यं श्रीणीहि हव्यं श्रपय ॥ हव्यं पच हव्यमसि ह-
व्याय त्वा हव्यवाडसि हव्ये सीद ॥
स्वयं कृण्वानः सुगमप्रयावं तिग्मशृङ्गो वृषभश्शोशुचानः ।
प्रत्नं सधस्थमनुपश्यमान आ तन्तुमग्निर्दिव्यं[12] ततान[13] ॥

---

[1] Ch मीड्वः [2] So corr. Ch, W 1 und G °द्विषो; Brl यंन्नद्विषो und Brl fol. 102 यन्निद्विषो; vgl. RV 1, 114, 3. [3] Brl जुहुवाम [4] So Brl an beiden Stellen; desgl. Ch, ohne Accent; W 1 यज्ञसाधनमङ्कुङ्कविमवसे; desgl. G, mit Accenten; dagegen RV 1, 114, 4 वङ्कुं [5] So Brl an beiden Stellen, und G; desgl. W 1, nur ohne Accent; in Ch आरे अस्मदमतिं हेडो; vgl. RV 1, 114, 4. [6] Ch सुमतिमद्वय° [7] So Brl, W 1 und G; in Ch वरुणो; vgl. RV 1, 24, 14. [8] So die Mss.; ebenso TS 1, 5, 11, 2; desgl. der Padap. zu RV 1, 24, 14 und MS 4, 10, 4 प्रचेतः; dagegen Samh. Text RV 1, 24, 14 प्रचेता, desgl. MS 4, 14, 17; 4, 10, 4. [9] Dieser Vers findet sich so, d. h. vollständig gegeben, in Brl und G; desgl. W 1, ohne Accent. In Ch dagegen nur der Anfang उदुत्तमम ॥ vgl. RV 1, 24, 15. [10] Dieser Vers findet sich so an dieser Stelle in Brl und G; desgl. in W 1, ohne Accent. In Ch fehlt derselbe ganz. Vgl. RV 1, 25, 19. [11] Brl ध्युरुशंस [12] So corr. Ch गिनन्दिव्यं; vgl. MS 2, 13, 22 a. A.; TBr 2, 4, 2, 5. [13] So corr. Ch ततानि; vgl. MS 2, 13, 22 a. A.; TBr. 2, 4, 2, 5.

त्वं नस्तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः ।
त्वयाग्ने पृष्ठं वयमारुहेमाथा देवैस्सधमादं[1] मदेम ॥
अतिसर्गं ददतो मानवाय स्वर्गं पन्थामनुपश्यमानाः[2] ।
अजुषन्त मरुतो यज्ञमेतं वृष्टिद्यावानममृतं स्वर्विदम् ॥
आवर्तमानो भुवनस्य मध्ये प्रजा विकृण्वञ्जनयन्विरूपम्[3] । 5
संवत्सरः परमेष्ठी धृतव्रतो यज्ञं नः पातु रजसः परस्मात् ॥
प्रजां पिपर्तु परिवत्सरो नो धाता दधातु सुमनस्यमानः ।
बह्वीस्साकं बहुधा विश्वरूपा एकव्रता मामभिसंविशन्तु ॥ ॥ १२ ॥
cf. Mâitr. S. 2, 13, 22; TBr. 2, 4, 2, 5. 6.

यदाकूतात्समसुस्रोद्धृदो[4] वा मनसस्संभृतं चक्षुषो वा ।
तमनुप्रेहि सुकृतस्य लोकं यत्रर्षयो जग्मुः प्रथमाः पुराणाः ॥ 10
एतं[5] सधस्थाः परि वो ददामि यमावहाच्छेवधिं[6] जातवेदाः ।
अन्वागन्ता यजमानस्स्वस्ति तं स्म जानीत परमे व्योमन् ॥
एतं जानीत परमे व्योमन्नग्ने सधस्था[7] विद लोकमस्य ।
यदागच्छात्पथिभिर्देवयानैरिष्टापूर्ते कृणुतादाविरस्मै ॥
इमं स्तनमिष्टो यज्ञः ॥ 15
येन सहस्रं वहसि येनाग्ने सर्ववेदसम्[8] ।
तेनेमं यज्ञं नो वह स्वर्देवेषु गन्तवे ॥
येनाग्ने सुकृतः पथा मधोर्धारा व्यानशुः ।
तेनेमं यज्ञं नो[9] नय[10] स्वर्देवेषु गन्तवे ॥

---

[1] So corr. Ch सदमाद; vgl. MS 2, 13, 22; TBr. 2, 4, 2, 6. [2] So corr. Ch मानः; vgl. MS 2, 13, 22. [3] Etwas anders MS 2, 13, 22. [4] So corr. Ch समसुसुधदो; vgl. TS 5, 7, 7, 1. [5] So corr. Ch एतां; vgl. TS 5, 7, 7, 1. [6] So corr. Ch च्छेवधिं [7] So corr. Ch साधस्या; vgl. TS 5, 7, 7, 1; vgl. auch den vorausgehenden Vers. [8] So corr. Ch सर्वसम; vgl. oben 18, 18; TS 5, 7, 7, 3; MS 2, 12, 4; VS 15, 55; 18, 62. [9] So corr. Ch यज्ञक्र; vgl. TS 5, 7, 7, 3 = Corr. [10] So Ch; vgl. TS 5, 7, 7, 3 auch hier वह

येनाग्ने दक्षिणावन्तं यज्ञं वहन्त्यृत्विजः ।
तेनेमं यज्ञं नो वह स्वर्देवेषु गन्तवे ॥[1]
प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा ।
ऋचेमं यज्ञं नो नय स्वर्देवेषु गन्तवे ॥[2]
यत्र धारा मधुमतीस्सदा स्यन्दन्ते अक्षिताः ।
तदग्निर्वैश्वकर्मणस्स्वर्देवेषु नो दधत् ॥
अपूपकूला नद्यस्सदा स्यन्दन्ते[3] अक्षिताः ।
तदग्निर्वैश्वकर्मणस्स्वर्देवेषु नो दधत् ॥
उपक्षरन्ति मधुनो घृतस्य कुल्याः पूर्णास्सदमक्षीयमाणाः ।
तदग्निर्वैश्वकर्मणस्स्वर्देवेषु नो दधत् ॥
यास्ते अग्ने या वो देवाः ॥
रोचय मा ब्राह्मणेष्वथो राजसु रोचय ।
रोचय मा विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ॥
स्वर्णघर्मस्स्वाहा स्वर्णशुक्रस्स्वाहा स्वर्णसूर्यस्स्वाहा स्वर्णार्क-
स्स्वाहा स्वर्णाग्निस्स्वाहा ॥ ॥ १३ ॥ cf. TS 5, 7, 7.
ईडे[4] अग्निं विपश्चितं गिरा यज्ञस्य साधनम् ।
श्रुष्टीवानं धितावानम् ॥[5]
अग्ने शकेम[6] ते वयं यमं देवस्य वाजिनः ।
अति द्वेषांसि तरेम ॥
पृथुपाजा अमर्त्यो घृतनिर्णिक्स्वाहुतः ।
अग्निर्यज्ञस्य हव्यवाट् ॥[7]
तं सबाधो[8] यतस्रुच इत्था धिया यज्ञवन्तः ।

---

[1] Vgl. TS 5, 7, 7, 3. [2] Vgl. TS 5, 7, 7, 2. [3] So corr. Ch स्यन्दन्त; vgl. den folgenden Vers; cf. auch TS 5, 7, 7, 3. [4] Dies Capitel in T1 (Nr. 11) und Brl fol. 29. 30 vorhanden; darnach accentuirt. [5] Vgl. RV 3, 27, 2; MS 4, 11, 2. [6] शकेम in den Mss. ohne Accent; vgl. RV 3, 27, 3. [7] Vgl. RV 3, 27, 5. [8] Brl सुबाधो; vgl. RV 3, 27, 6.

आचक्रुरग्निमूतये ॥
नवं नु स्तोममग्नये दिवश्श्येनाय[1] जीजनम्[2] ।
वस्वः कुविद्वनाति नः ॥
स्पार्हा यस्य श्रियो दृशे रयिर्वीरवतो यथा ।
अग्ने यज्ञस्य चेततः[3] ॥
उप त्वा रण्वसंदृशं प्रयस्वन्तस्सहस्कृत ।
अग्ने ससृज्महे[4] गिरः ॥
उप छायामिव घृणेरगन्म[5] शर्म ते वयम् ।
अग्ने हिरण्यसंदृशः ॥
अग्ने मृड महाँ असि य ईमा देवयुं जनम् ।
इयेथ बर्हिरासदम् ॥[6]
स मानुषीषु दूडभो[7] विक्षु प्रावीरमर्त्यः ।
दूतो विश्वेषां भुवत् ॥
और्वभृगुवच्छुचिमप्नवानवदाहुवे[8] ।
अग्निं समुद्रवाससम् ॥
आ सवं सवितुर्यथा भगस्येव भुजिं हुवे ।
अग्निं समुद्रवाससम् ॥[9]
हुवे वातस्वनं कविं पर्जन्यक्रन्द्यं सहः ।
अग्निं समुद्रवाससम् ॥[10]
उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः ।
वायोरनीके अस्थिरन् ॥[11]
यस्य त्रिधात्ववृतं बर्हिस्तस्था[12] असंदिनम् ।

---

[1] In den Mss. श्येनाय ohne Accent; vgl. RV 7, 15, 4. [2] Brl जीजनः; vgl. RV 7, 15, 4. [3] Vgl. RV 7, 15, 5 शोचतः [4] Ch समृज्महे; vgl. RV 6, 16, 37. [5] Ch गृणेर°; vgl. RV 6, 16, 38. [6] Vgl. RV 4, 9, 1. [7] Ch दूरभो; vgl. RV 4, 9, 2. [8] Brl प्नवनवं; vgl. RV 8, 91, 4. [9] Vgl. RV 8, 91, 6. [10] Vgl. RV 8, 91, 5. [11] Vgl. RV 8, 91, 13. [12] Vgl. RV 8, 91, 14 तस्थावसंदिनम्; Ch तस्था असदिनम

आपश्चिन्निदधा पदम् ॥
अग्निर्मूर्धा ॥
उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते[1] ।
तव ज्योतींष्यर्चयः ॥
ईशिषे वार्यस्य हि दात्रस्याग्ने स्वर्पतिः ।
स्तोता स्यां तव शर्मणि[2] ॥
त्वामग्ने मनीषिणस्त्वां हिन्वन्ति चित्तिभिः ।
त्वां वर्धन्तु नो गिरः ॥[3]
अदब्धस्य स्वधावतो दूतस्य रेभतस्सदा ।
अग्नेस्सख्यं वृणीमहे ॥[4]
अग्निश्शुचिव्रततमश्शुचिर्विप्रश्शुचिष्कविः ।
शुची रोचत आहुतः ॥[5] ॥ १४ ॥

cf. RV 3, 27, 2—6; 7, 15, 4. 5; 6, 16, 37. 38; 4, 9, 1. 2; 8, 91, 4—6. 13. 14 8, 44, 17—21; MS 4, 11, 2.

इत्येकोत्तरशतशाखाध्वर्युप्रभेदभिन्ने श्रीमद्यजुर्वेदे काठके चरकशाखायामोरिमिकायां हिरण्यगर्भं नाम चत्वारिंशं स्थानकं संपूर्णम् ॥ भद्रमस्तु संपूर्णा चेयमोरिमिका ॥ श्रीग्रन्थत्रये मध्यपठिताश्च याज्यानुवाक्याः संपूर्णाः ॥ अस्मिन्ग्रन्थत्रयाभ्यन्तरे याज्यानुवाक्या नाम चतुर्थो ग्रन्थः ॥[6]

---

[1] Ch ईडते; vgl. RV 8, 44, 17. [2] W 1 शर्मणे; vgl. RV 8, 44, 18. [3] Vgl. RV 8, 44, 19. [4] RV 8, 44, 20. [5] RV 8, 44, 21. [6] So die Unterschrift dieses Capitels, resp. Buches in Ch.

## अथाश्वमेधो नाम पञ्चमो ग्रन्थः ॥[1]

ये[2] ते पन्थानस्सवितः[3] पूर्व्यासो ऽरेणवो वितता[4] अन्तरिक्षे ।
तेभिर्नो अद्य पथिभिस्सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥

नमो ऽग्नये पृथिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि
नमो वायवे ऽन्तरिक्षक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि
नम आदित्याय दिविक्षिते लोकस्पृते लोकमस्मै यजमानाय दे-
हि ॥ १ ॥ cf. TS 7, 5, 24.

देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥
इमामगृभ्णन्रशनामृतस्य पूर्व आयुषि विदथेषु कव्या ।
तया देवास्सुतमाबभूवुर्ऋतस्य सामन्सरमारपन्ती[5] ॥

अभिधा असि भुवनमसि ॥ यन्तासि धर्तासि सो ऽग्निं वैश्वानरं
सप्रथसं[6] गच्छ स्वाहाकृतः पृथिव्यां स्वगा त्वा देवेभ्यस्स्वाहा त्वा
प्रजापतये यन्ता राड्यन्तासि यमनो धर्तासि धरुणः कृष्यै त्वा क्षेमाय
त्वा रय्यै त्वा पोषाय त्वा पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा सते
त्वासते त्वाद्भ्यस्त्वौषधीभ्यस्त्वा[7] विश्वेभ्यस्त्वा भूतेभ्यः ॥ २ ॥
cf. MS 3, 12, 1; TS 7, 1, 11; VS 22, 2—5.

---

[1] Es folgen hier in Ch noch die Worte ओं स्वस्त्यस्तु प्रजाभ्यः ॥ ओं नमो ब्रह्मणे ॥ ओं द्रष्ट्रे नम इति घोराणामार्षम ॥ ओं ॥

[2] Dies Capitel auch in Brl fol. 229 vorhanden; darnach accentuirt.

[3] So auch TS 7, 5, 24; dagegen RV 1, 35, 11 पन्थाः; ebenso VS 34, 27.

[4] So auch TS 7, 5, 24; dagegen RV 1, 35, 11 सुकृता; ebenso VS 34, 27.

[5] So corr. Ch सामन्मर°

[6] So corr. Ch सप्रथमं; vgl. MS 3, 12, 1; TS 7, 1, 11, 2; VS 22, 3 = Corr.

[7] So corr. Ch स्त्वोष°

विभुर्मात्रा प्रभुः पित्राश्वो[1] ऽसि हयो ऽसि मयो ऽस्यत्यो ऽसि नरो ऽस्यर्वासि सप्तिरसि वाज्यसि वृषासि नृमणा[2] असि ययुर्नामास्यादित्यानां पत्वान्विह्यग्नये स्वाहा स्वाहेन्द्राग्निभ्यां स्वाहा विश्वेभ्यो देवेभ्यस्स्वाहा प्रजापतये स्वाहा सर्वाभ्यो देवताभ्य इह धृतिस्स्वाहेह 5 विधृतिस्स्वाहेह रन्तिस्स्वाहेह रमतिस्स्वाहा भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वा विश्वेभ्यस्त्वा भूतेभ्यो देवा आशापाला एतं देवेभ्यो ऽश्वं मेधाय प्रोक्षितं गोपायत ॥ ३ ॥
cf. MS 3, 12, 4; TS 7, 1, 12, 1; VS 22, 19.

आयनाय स्वाहा प्रायणाय स्वाहोद्द्रावाय स्वाहोद्द्रुताय[3] स्वाहा शूकाराय स्वाहा शूकृताय स्वाहा पलायिताय स्वाहापलायिताय 10 स्वाहा वल्गते स्वाहा परावल्गते स्वाहा यते स्वाहा प्रयते स्वाहा ॥ ४ ॥ cf. MS 3, 12, 3; TS 7, 1, 13; VS 22, 7. 8.

अग्नये स्वाहा सोमाय स्वाहा वायवे स्वाहापां मोदाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहा मित्राय स्वाहा वरुणाय स्वाहा ॥ ५ ॥
cf. MS 3, 12, 2; TS 7, 1, 14; VS 22, 6.

15 पृथिव्यै[4] स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहा नक्षत्रेभ्यस्स्वाहा प्राच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहा प्रतीच्यै दिशे स्वाहोदीच्यै दिशे स्वाहोर्ध्वायै[5] दिशे स्वाहा दिग्भ्यस्स्वाहावान्तरदिशाभ्यस्स्वाहा समाभ्यस्स्वाहा शरद्भ्यस्स्वाहाहोरात्रेभ्यस्स्वाहार्धमासेभ्यस्स्वाहा मासेभ्यस्स्वाहर्तुभ्यस्स्वाहा[6] संवत्सराय 20 स्वाहा सर्वस्मै स्वाहा ॥ ६ ॥
cf. MS 3, 12, 7. 8; TS 7, 1, 15; VS 22, 27. 28.

अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे

---

[1] So corr. Ch पित्रासो; vgl. MS 3, 12, 4; 7, 1, 12, 1; VS 22, 19 = Corr. [2] So corr. Ch नृपणा [3] So corr. Ch स्वाहोद्रावाय स्वाहोद्रुताय [4] Vor पृथिव्यै steht in Ch noch द्वितीय वायु ॥ १० ॥ [5] So corr. Ch ध्वीय [6] So corr. Ch स्वाहार्तुभ्य°

स्वाहा बृहस्पतये स्वाहापां मोदाय स्वाहा वायवे स्वाहा मित्राय स्वाहा वरुणाय स्वाहा ॥ ७ ॥
cf. MS 3, 12, 2. 5; TS 7, 1, 16; VS 22, 6. 27.

पृथिव्यै[1] स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहाग्नये स्वाहा सोमाय स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहाह्ने स्वाहा रात्र्यै स्वाहर्जवे[2] स्वाहा साधवे स्वाहा सुक्षित्यै स्वाहा क्षुधे स्वाहाशितिम्ने स्वाहा रोचाय[3] स्वाहा हिमाय स्वाहा शीताय स्वाहातपाय स्वाहारण्याय स्वाहा[4] स्वर्गाय स्वाहा लोकाय स्वाहा वृत्ताय स्वाहा सर्वस्मै स्वाहा ॥ ८ ॥ cf. TS 7, 1, 17.

भुवो देवानां कर्मणापसर्तस्य[5] पथ्यासि वसुभिर्देवेभिर्देवतया गायत्रेण त्वा छन्दसा युनज्मि वसन्तेन त्वर्तुना हविषा दीक्षयामि भुवो देवानां कर्मणापसर्तस्य[6] पथ्यासि रुद्रेभिर्देवेभिर्देवतया त्रैष्टुभेन त्वा छन्दसा युनज्मि ग्रीष्मेन त्वर्तुना हविषा दीक्षयामि भुवो देवानां कर्मणापसर्तस्य[7] पथ्यास्यादित्येभिर्देवेभिर्देवतया जागतेन त्वा छन्दसा युनज्मि वर्षाभिस्त्वर्तुना हविषा दीक्षयामि भुवो देवानां कर्मणापसर्तस्य पथ्यासि विश्वेभिर्देवेभिर्देवतयानुष्टुभेन त्वा छन्दसा युनज्मि शरदा त्वर्तुना हविषा दीक्षयामि भुवो देवानां कर्मणापसर्तस्य पथ्यास्यङ्गिरोभिर्देवेभिर्देवतया पाङ्क्तेन त्वा छन्दसा युनज्मि हेमन्तशिशिराभ्यां त्वर्तुना हविषा दीक्षयामि भुवो देवानां कर्मणापसर्तस्य पथ्यास्याहं दीक्षामरुहमृतस्य पत्नीं गायत्रेण च्छन्दसा ब्रह्मणा चर्तं सत्ये ऽधां सत्यमृते ऽधां सुत्रामाणं महीमू षु ॥ ९ ॥ cf. TS 7, 1, 18.

इंकाराय स्वाहेंकृताय स्वाहा क्रन्दते स्वाहावक्रन्दते स्वाहा प्रोथते

---

[1] Diesem Worte geht in Ch voraus सप्त वायु ॥ १० ॥; cf. oben und am Schluß des Capitels. [2] So corr. Ch स्वाहार्जवे; cf. TS 7, 1, 17, 1. [3] So Ch! Wahrscheinlich mit TS 7, 1, 17, 1 zu corr. in रोगाय [4] So corr. mit Caland; Ch स्वाहारण्याय; wohl Dittographie. [5] So corr. Ch पसर्तस्ये; das र्त am Rande eingeschaltet; vgl. TS 7, 1, 18, 1. [6] So corr. Ch पसर्तस्य [7] So corr. Ch पसर्तस्ये; das र्त am Rande eingeschaltet.

स्वाहा प्रप्रोथते[1] स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा प्राणाय स्वा-
हा व्यानाय स्वाहापानाय स्वाहा संदीयमानाय स्वाहा संदिताय
स्वाहा विचृत्यमानाय स्वाहा विचृत्ताय स्वाहा पलायिष्यते स्वाहा
पलायिताय स्वाहोपरंस्यते स्वाहोपरताय स्वाहा निवेक्ष्यते स्वाहा
निविशमानाय स्वाहा निविष्टाय स्वाहा निषत्स्यते स्वाहा निषीदते
स्वाहा निषण्णाय स्वाहासिष्यते स्वाहासीनाय स्वाहासिताय स्वा-
हा निपत्स्यते स्वाहा निपद्यमानाय स्वाहा निपन्नाय स्वाहा शयि-
ष्यते स्वाहा शयानाय स्वाहा शयिताय स्वाहा संमीलिष्यते स्वाहा
संमीलते[2] स्वाहा संमीलिताय स्वाहा स्वप्स्यते स्वाहा स्वपते स्वा-
हा सुप्ताय स्वाहा प्रभोत्स्यते स्वाहा प्रबुध्यमानाय स्वाहा प्रबुद्धाय
स्वाहा जागरिष्यते स्वाहा जाग्रते स्वाहा जागृताय स्वाहा शुश्रूषमा-
णाय[3] स्वाहा शृण्वते स्वाहा श्रुताय स्वाहा वीक्षिष्यते स्वाहा वी-
क्षमाणाय स्वाहा वीक्षिताय स्वाहा संहास्यते स्वाहा संजिहानाय
स्वाहोज्जिहानाय स्वाहा विवर्त्स्यते स्वाहा विवर्तमानाय स्वाहा वि-
वृत्ताय स्वाहोत्थास्यते स्वाहोत्तिष्ठते स्वाहोत्थिताय स्वाहा विधवि-
ष्यते[4] स्वाहा विधून्वानाय स्वाहा विधूताय स्वाहोत्क्रंस्यते[5] स्वाहो-
त्क्रामते स्वाहोत्क्रान्ताय स्वाहा चंक्रमिष्यते स्वाहा चंक्रम्यमाणाय[6]
स्वाहा चंक्रमिताय स्वाहा कण्डूयिष्यते स्वाहा कण्डूयमानाय स्वाहा
कण्डूयिताय स्वाहा निकषिष्यते स्वाहा निकषमाणाय[7] स्वाहा निक-
षिताय स्वाहा यदत्ति तस्मै स्वाहा यत्पिबति तस्मै स्वाहा यन्मेहति
तस्मै स्वाहा यच्छकृत्करोति तस्मै स्वाहा रेतसे स्वाहा प्रजाभ्यस्स्वाहा
प्रजननाय स्वाहा ॥ १० ॥ cf. TS 7, 1, 19; MS 3, 12, 3; VS 22, 7. 8.

---

1 So corr. Ch प्रोधते स्वाहा प्रपोघते; TS 7, 1, 19, 1 = Corr.; vgl. auch MS 3, 12, 3 a. A.; VS 22, 7.
2 So corr. Ch सम्मीलिते; vgl. TS 7, 1, 19, 2 = Corr.
3 So corr. Ch शुश्रूषमानाय
4 So corr. Ch विधवेष्यते; TS 7, 1, 19, 3 = Corr.
5 So corr. Ch स्वाहोत्क्राम्यते; TS 7, 1, 19, 3 = Corr.
6 So corr. Ch चंक्रम्यमानाय
7 So corr. Ch निकषमानाय

अग्नये स्वाहा वायवे स्वाहा सूर्याय स्वाहर्तमस्यृतस्यर्तमसि सत्यमसि सत्यस्य सत्यमस्यृतस्य पन्था असि देवानां छायामृतस्य नाम तत्सत्यं यत्त्वं प्रजापतिरसि ॥
अधि यदस्मिन्वाजिनीव शुभस्स्पर्धन्ते दिवस्सूर्येण विशः ।
अपो वृणानः पवते कवीयन्पशून्न गोपा इर्यः परिज्मा ॥ ॥ ११ ॥[1] 5
cf. TS 7, 1, 20.

इति श्रीमद्यजुषि काठके चरकशाखायामश्वमेधनामनि पञ्चमे ग्रन्थे पन्थानुवचनं प्रथमं संपूर्णम् ॥[2]

---

एकस्मै स्वाहा द्वाभ्यां स्वाहा त्रिभ्यस्स्वाहा चतुर्भ्यस्स्वाहा पञ्चभ्यस्स्वाहा षड्भ्यस्स्वाहा सप्तभ्यस्स्वाहाष्टाभ्यस्स्वाहा[3] नवभ्यस्स्वाहा दशभ्यस्स्वाहैकान्नविंशत्यै स्वाहा विंशत्यै स्वाहा नवविंशत्यै स्वाहा 10 त्रिंशते स्वाहैकान्नचत्वारिंशते स्वाहा चत्वारिंशते स्वाहा नवचत्वारिंशते स्वाहा पञ्चाशते स्वाहैकान्नषष्ट्यै स्वाहा नवषष्ट्यै स्वाहा सप्तत्यै स्वाहैकान्नाशीत्यै स्वाहाशीत्यै स्वाहा नवाशीत्यै स्वाहा नवत्यै स्वाहैकान्नशताय स्वाहा शताय स्वाहा द्वाभ्यां शताभ्यां स्वाहा सर्वस्मै स्वाहा ॥ १ ॥ cf. TS 7, 2, 11; (MS 3, 12, 15; VS 23, 39). 15

एकस्मै स्वाहा त्रिभ्यस्स्वाहा पञ्चभ्यस्स्वाहा सप्तभ्यस्स्वाहा नवभ्यस्स्वाहैकादशभ्यस्स्वाहैकान्नविंशत्यै स्वाहैकविंशत्यै स्वाहा नवविंशत्यै स्वाहैकत्रिंशते स्वाहैकान्नचत्वारिंशते स्वाहैकचत्वारिंशते

---

[1] Hier folgt in Ch noch एकवायु ॥ १६ ॥; vgl. oben. [2] So die Unterschrift des Capitels in Ch. [3] Erste Hand in Ch ष्टभ्य॰

स्वाहा नवचत्वारिंशते स्वाहैकपञ्चाशते स्वाहैकान्नषष्ट्यै स्वाहैकषष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकसप्तत्यै स्वाहैकान्नाशीत्यै स्वाहैकाशीत्यै स्वाहा नवाशीत्यै स्वाहैकनवत्यै स्वाहैकान्नशताय स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ २ ॥ cf. TS 7, 2, 12.

5 द्वाभ्यां स्वाहा चतुर्भ्यस्स्वाहा षड्भ्यस्स्वाहाष्टाभ्यस्स्वाहा दशभ्यस्स्वाहाष्टादशभ्यस्स्वाहा[1] विंशत्यै स्वाहा त्रिंशते स्वाहाष्टात्रिंशते स्वाहा चत्वारिंशते स्वाहाष्टाचत्वारिंशते स्वाहा पञ्चाशतेस्व हाष्टापञ्चाशते स्वाहा षष्ट्यै स्वाहाष्टाषष्ट्यै स्वाहा सप्तत्यै स्वाहाष्टासप्तत्यै स्वाहाशीत्यै स्वाहाष्टाशीत्यै स्वाहा नवत्यै स्वाहाष्टानवत्यै स्वाहा 10 शताय स्वाहा सर्वस्मै स्वाहा ॥ ३ ॥ cf. TS 7, 2, 13.

त्रिभ्यस्स्वाहा पञ्चभ्यस्स्वाहा यथा द्वितीय एवं चतुर्थो ऽन्यत्प्रभृतेः ॥ ४ ॥ cf. TS 7, 2, 14.

चतुर्भ्यस्स्वाहाष्टाभ्यस्स्वाहा द्वादशभ्यस्स्वाहा षोडशभ्यस्स्वाहा विंशत्यै स्वाहा चतुर्विंशत्यै स्वाहाष्टाविंशत्यै स्वाहा द्वात्रिंशते स्वाहा 15 षट्त्रिंशते स्वाहा चत्वारिंशते स्वाहाष्टाचत्वारिंशते स्वाहा द्वापञ्चाशते स्वाहा षट्पञ्चाशते स्वाहा षष्ट्यै स्वाहा चतुष्षष्ट्यै स्वाहाष्टाषष्ट्यै स्वाहा द्वासप्तत्यै स्वाहा षट्सप्तत्यै स्वाहाशीत्यै स्वाहा चतुरशीत्यै स्वाहाष्टाशीत्यै स्वाहा द्वानवत्यै स्वाहा षण्णवत्यै[1] स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ ५ ॥ cf. TS 7, 2, 15.

20 पञ्चभ्यस्स्वाहा दशभ्यस्स्वाहा पञ्चदशभ्यस्स्वाहा विंशत्यै स्वाहा पञ्चविंशत्यै स्वाहा त्रिंशते स्वाहा पञ्चत्रिंशते स्वाहा चत्वारिंशते स्वाहा पञ्चचत्वारिंशते स्वाहा पञ्चाशते स्वाहा पञ्चपञ्चाशते स्वाहा षष्ट्यै स्वाहा पञ्चषष्ट्यै स्वाहा सप्तत्यै स्वाहाशीत्यै स्वाहा पञ्चाशीत्यै स्वाहा नवत्यै स्वाहा पञ्चनवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वा- 25 हा ॥ ६ ॥ cf. TS 7, 2, 16.

---

[1] So corr. Ch स्वाहाष्टादष्टादशस्स्वाहा [2] So corr. Ch षणनवत्यै

दशभ्यस्स्वाहा विंशत्यै स्वाहा त्रिंशते स्वाहा चत्वारिंशते स्वाहा पञ्चाशते स्वाहा षष्ट्यै स्वाहा सप्तत्यै स्वाहाशीत्यै स्वाहा नवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ ७ ॥ cf. TS 7, 2, 17.

विंशत्यै स्वाहा चत्वारिंशते स्वाहा षष्ट्यै स्वाहाशीत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ ८ ॥ cf. TS 7, 2, 18. 5

पञ्चाशते स्वाहा शताय स्वाहा द्वाभ्यां शताभ्यां स्वाहा त्रिभ्यश्चतुर्भ्यः पञ्चभ्यष्षड्भ्यस्सप्तभ्यो ऽष्टाभ्यो[1] नवभ्यश्शतेभ्यस्स्वाहा सहस्राय स्वाहा सर्वस्मै स्वाहा ॥ ९ ॥ cf. TS 7, 2, 19.

शताय स्वाहा सहस्राय स्वाहायुताय स्वाहा प्रयुताय स्वाहा नियुताय स्वाहार्बुदाय[2] स्वाहा न्यर्बुदाय[3] स्वाहा बद्वाय स्वाहा समुद्राय 10 स्वाहा मध्याय स्वाहान्ताय स्वाहा परार्धाय स्वाहाषसे स्वाहा व्युष्ट्यै स्वाहोदेष्यते स्वाहोद्यते स्वाहोदिताय स्वाहा स्वर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा ॥ १० ॥ cf. TS 7, 2, 20.

इति गणानुवचनं द्वितीयम् ॥[4]

---

अर्वाङ् यज्ञस्संक्रामत्वमुष्मादधि[5] मामभि । 15
ऋषीणां यः पुरोहितः ॥
निर्देवं[6] निर्वीर्यं कृत्वा विष्कन्धं[7] तस्मिन्हीयतां यो ऽस्मान्द्वेष्टि ।
शरीरं यज्ञशमलं[8] कुसीदं तस्मिन्सीदतु[9] यो ऽस्मान्द्वेष्टि ॥

---

[1] Ch ष्टभ्यो; cf. oben. [2] So corr. Ch बुंधाय [3] So corr. Ch न्यबुंधाय
[4] So die Unterschrift des Capitels in Ch. [5] So corr. Ch संक्रामत्वममुष्मा°; vgl. TS 7, 3, 11, 1. [6] So corr. Ch निन्दिवत्रि°; vgl. TS 7, 3, 11, 1. [7] So corr. Ch विष्कर्धं; vgl. TS 7, 3, 11, 1. [8] So corr. Ch यज्ञममलं; vgl. TS 7, 3, 11, 1.
[9] So corr. Ch सोदत्त; vgl. TS 7, 3, 11, 1.

यज्ञ यज्ञस्य यत्तेजस्तेन संक्राम मामभि ।
ब्राह्मणानृत्विजो[1] देवान्यज्ञस्य तपसा ते ऽसा अहमाहुवे ॥
इष्टेन पक्कमुप ते हुवे ऽसा अहम् ।
सं ते वृञ्जे सुकृतं[2] सं प्रजां पशून् ॥[3]
5 प्रैषान्सामिधेनीराघारा[4] आज्यभागा आश्रुतं प्रत्याश्रुतमाशृणामि ते ।
प्रयाजानुयाजान्स्विष्टकृतमिडामाशिष[5] आवृञ्जे स्वः ॥
अग्निनेन्द्रेण[6] सोमेन सरस्वत्या विष्णुना देवताभिः ।
याज्यानुवाक्याभ्यामुप ते हुवे ऽसा अहं यज्ञमाददे[7] ते वषट्कृतम् ॥
स्तुतं शस्त्रं प्रतिगरं ग्रहमिडामाशिष आवृञ्जे स्वः ।[8]
10 पत्नीसंयाजानुप[9] ते हुवे ऽसा अहं समिष्टयजुराददे[10] तव ॥
पशून्सुतं[11] पुरोडाशान्सवनान्योत यज्ञम् ।
देवान्सेन्द्रानुप ते हुवे ऽसा अहमग्निमुखान्सोमवतो ये च विश्वे ॥
॥ १ ॥ cf. TS 7, 3, 11.

भूतं[12] भव्यं भविष्यद्वषट् स्वाहा नम ऋक्साम यजुर्वषट् स्वाहा
15 नमो गायत्री त्रिष्टुब्जगती वषट् स्वाहा नमः पृथिव्यन्तरिक्षं द्यौर्व-
षट् स्वाहा नमो ऽन्नं कृषिर्वृष्टिर्वषट्[13] स्वाहा नमः पिता पुत्रः पौ-
त्रो[14] वषट् स्वाहा नमः प्राणो[15] व्यानो ऽपानो वषट् स्वाहा नमो
भूर्भुवस्स्वर्वषट् स्वाहा नमः ॥ २ ॥ cf. TS 7, 3, 12.
आ मे गृहा भवन्त्वा प्रजा म आ मा यज्ञो विशतु वीर्यावान् ।
20 आपो देवीर्यज्ञिया माविशन्तु सहस्रस्य मा भूमा मा प्रहासीत् ॥

---

[1] So corr. Ch ब्राह्मणा ऋत्विजो; vgl. TS 7, 3, 11, 1. [2] So corr. Ch सुकृतो; vgl. TS 7, 3, 11, 2. [3] Das Zeichen ॥ fehlt in Ch; von mir gesetzt. Vgl. TS 7, 3, 11, 2. [4] So corr. Ch रागारा; vgl. TS 7, 3, 11, 2. [5] So corr. Ch याजान्त्विष्टकृत°; vgl. TS 7, 3, 11, 2. [6] So corr. Ch द्रेन [7] So corr. Ch मादद; vgl. TS 7, 3, 11, 2. [8] Das Zeichen । fehlt in Ch. [9] So corr. Ch संयाज्या°; vgl. TS 7, 3, 11, 3. [10] So corr. Ch राददते; vgl. TS 7, 3, 11, 3. [11] So corr. Ch पशून्सुतम्पु°; vgl. TS 7, 3, 11, 3. [12] Dies Capitel in T 6 fol. 7b vorhanden; darnach accentuirt. [13] Ch नं कृषिव्° [14] Accent corr.; T 6 पौत्रो; vgl. TS 7, 3, 12. [15] Ch प्राणो; in T 6 प्राणो ohne Accent; daher dieser ergänzt.

आ मे ग्रहा[1] भवन्त्वा पुरोरुक्स्तुतशस्त्रे[2] माविशतां समीची[3] ।
आदित्या रुद्रा वसवो मे सदस्यास्सहस्रस्य मा भूमा मा प्रहासीत् ॥
आ माग्निष्टोमो विशतूक्थ्यश्चातिरात्रो मा विशत्वापिशर्वरः ।
तिरोअह्न्या मा सुहुता[4] आविशन्तु सहस्रस्य[5] मा भूमा मा प्रहासीत् ॥
॥ ३ ॥ cf. TS 7, 3, 13. 5

अग्निना तपो ऽन्वाभवद्वाचा ब्रह्म मणिना रूपाणि हिरण्येन व-
र्चो ऽद्भिः पृथिवीं वायुनान्तरिक्षं सूर्येण दिवं चन्द्रमसा नक्षत्राणि
यमेन पितॄन्राज्ञा मनुष्यान्फलेन नाद्यानजगरेण[6] सर्पान्व्याघ्रेणारण्या-
न्पशूञ्छ्येनेन पतत्रिणो व्रीहिनान्नानि यवेनौषधीरुदुम्बरेणोर्जं न्यग्रो-
धेन वनस्पतीन्वृष्णाश्वान्वृषभेण[7] गा वृष्णिनावीर्बस्तेनाजा गायत्र्या 10
छन्दांसि त्रिवृता स्तोमान्रथन्तरेण सामानि ब्राह्मणेन वाचम् ॥ ४ ॥
cf. TS 7, 3, 14.

स्वाहाधिमाधीताय स्वाहा स्वाहाधीतं[8] मनसे स्वाहा स्वाहा मनः
प्रजापतये स्वाहा काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहादित्यै
स्वाहादित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहा सरस्वत्यै स्वाहा सर-
स्वत्यै पावकायै स्वाहा सरस्वत्यै बृहत्यै स्वाहा पूष्णे स्वाहा पूष्णे प्र- 15
पथ्याय स्वाहा पूष्णे नरंधिषाय स्वाहा त्वष्ट्रे[9] स्वाहा त्वष्ट्रे[10] तुरीपाय
स्वाहा त्वष्ट्रे[11] पुरुरूपाय स्वाहा विष्णवे स्वाहा विष्णवे निखुर्यपाय
स्वाहा विष्णवे निभूयपाय स्वाहा विश्वो देवस्य नेतुः ॥ ५ ॥
cf. TS 7, 3, 15.

दद्भ्यस्स्वाहा हनुभ्यां स्वाहोष्ठाभ्यां स्वाहा नासिकाभ्यां स्वाहा
मुखाय स्वाहा चक्षुर्भ्यां स्वाहा श्रोत्राभ्यां स्वाहा पार इक्षवो ऽवा- 20

---

[1] In Ch, wie es scheint ग्रहा (so erste Hand) in ग्राहा corr. [2] So corr. Ch पुरोरुक्तुत°; vgl. TS 7, 3, 13 = Corr. [3] So corr. Ch ममीची; vgl. TS 7, 3, 13. [4] So corr. Ch तिरोअह्न्या मा सुवता; vgl. TS 7, 3, 13. [5] So corr. Ch सहस्यस्य; vgl. TS 7, 3, 13. [6] So corr. Ch नाप्वा; in TS 7, 3, 14 नादेयान् [7] So corr. Ch श्वावृषभेन; übrigens läge es wohl ebenso nah, mit TS 7, 3, 15 श्वानृषभेण zu lesen. [8] So corr. Ch स्वाहाधितं; vgl. TS 7, 3, 15. [9] So corr. Ch त्वाष्ट्रे [10] So corr. Ch त्वाष्ट्रे [11] So corr. Ch त्वाष्ट्र

रीयेभ्यः[1] पक्ष्मभ्यस्स्वाहावार इक्षवः पारीयेभ्यः[2] पक्ष्मभ्यस्स्वाहा शीर्ष्णे स्वाहा भ्रूभ्यां स्वाहा ललाटाय स्वाहा मूर्ध्ने स्वाहा मस्तिष्काय स्वाहा केशेभ्यस्स्वाहा वहाय स्वाहा ग्रीवाभ्यस्स्वाहा स्कन्धेभ्यस्स्वाहा[3] कीकसाभ्यस्स्वाहा पृष्टिभ्यस्स्वाहा पाजस्याय[4] स्वाहा पार्श्वाभ्यां
5 स्वाहांसाभ्यां स्वाहा दोषभ्यां[5] स्वाहा बाहुभ्यां स्वाहा जङ्घाभ्यां स्वाहा श्रोणिभ्यां स्वाहोरुभ्यां स्वाहाष्ठीवद्भ्यां स्वाहा जङ्घाभ्यां स्वाहा भसदे स्वाहा शिखण्डेभ्यस्स्वाहा वालधानाय स्वाहाण्डाभ्यां स्वाहा शेपाय स्वाहा रेतसे स्वाहा प्रजाभ्यस्स्वाहा प्रजननाय स्वाहा पद्भ्यस्स्वाहा शफेभ्यस्स्वाहा लोमभ्यस्स्वाहा त्वचे स्वाहा लोहिताय स्वा-
10 हा मांसाय स्वाहा[6] स्नावभ्यस्स्वाहास्थिभ्यस्स्वाहा[7] मज्जभ्यस्स्वाहाङ्गेभ्यस्स्वाहात्मने स्वाहा सर्वस्मै स्वाहा ॥ ६ ॥ cf. TS 7, 3, 16.

अञ्ज्येताय स्वाहाञ्जिसक्थाय स्वाहा शितिपदे स्वाहा शितिककुदे स्वाहा शितिरन्ध्राय स्वाहा शितिपृष्ठाय स्वाहा शित्यंसाय स्वाहा पुष्पकर्णाय स्वाहा शित्योष्ठाय स्वाहा शितिभ्रवे स्वाहा शि-
15 तिभसदे स्वाहा श्वेतानूकाशाय स्वाहाञ्जये स्वाहा ललामाय स्वाहासितज्ञवे[8] स्वाहा कृष्णैताय स्वाहा रोहितैताय[9] स्वाहारुणैताय स्वाहेदृशाय स्वाहा कीदृशाय स्वाहा तादृशाय स्वाहा सदृशाय स्वाहा विसदृशाय स्वाहा सुसदृशाय स्वाहा रूपाय स्वाहा सर्वस्मै स्वाहा ॥ ७ ॥ cf. TS 7, 3, 17.

20 कृष्णाय स्वाहा श्वेताय स्वाहा पिशङ्गाय[10] स्वाहा सारङ्गाय स्वाहारुणाय स्वाहा गौराय स्वाहा बभ्रवे स्वाहा नकुलाय स्वाहा शो-

---

[1] So Ch; in TS 7, 16, 1 अवार्येभ्यः [2] So Ch; in TS 7, 16, 1 पार्येभ्यः [3] So corr. Ch स्कन्देभ्यः [4] So corr. Ch पाजस्यय (erste Hand vielleicht पाजस्याय); cf. TS 7, 3, 16, 1. [5] Erste Hand in Ch दोषाभ्यां [6] Dies स्वाहा fehlt in Ch und ist von mir ergänzt. [7] So corr. Ch स्नावत्यस्स्वाहा [8] So corr. Ch स्वाहासितिज्ञवे; vgl. TS 7, 3, 17. [9] So corr. Ch रोहिहैताय; vgl. TS 7, 3, 17. [10] So corr. Ch पिषंगाय

णाय स्वाहा रोहिताय स्वाहा श्यावाय स्वाहा श्यामाय स्वाहा पालवाय[1] स्वाहा सुरूपाय स्वाहा सरूपाय स्वाहा विरूपाय स्वाहानुरूपाय स्वाहा प्रतिरूपाय स्वाहा शबलाय स्वाहा कमलाय स्वाहा पृश्नये स्वाहा पृश्निसक्थाय[2] स्वाहा सर्वस्मै स्वाहा ॥ ८ ॥
cf. TS 7, 3, 18.

ओषधीभ्यस्स्वाहा मूलेभ्यस्स्वाहा तूलेभ्यस्स्वाहा पर्वभ्यस्स्वाहा वल्शेभ्यस्स्वाहा पुष्पेभ्यस्स्वाहा फलेभ्यस्स्वाहा गृहीतेभ्यस्स्वाहागृहीतेभ्यस्स्वाहावपन्नेभ्यस्स्वाहा शयानेभ्यस्स्वाहा सर्वस्मै स्वाहा ॥ ८ ॥
cf. TS 7, 3, 19.

वनस्पतिभ्यस्स्वाहा मूलेभ्यस्स्वाहा तूलेभ्यस्स्वाहा स्कन्धेभ्यस्स्वाहा[3] शाखाभ्यस्स्वाहा पर्णेभ्यस्स्वाहा पुष्पेभ्यस्स्वाहा फलेभ्यस्स्वाहा गृहीतेभ्यस्स्वाहागृहीतेभ्यस्स्वाहावपन्नेभ्यस्स्वाहा शयानेभ्यस्स्वाहा शिष्टाय स्वाहा परिशिष्टाय स्वाहातिशिष्टाय स्वाहा संशिष्टाय स्वाहोच्छिष्टाय[4] स्वाहा[5] रिक्ताय स्वाहारिक्ताय स्वाहा प्ररिक्ताय स्वाहा संरिक्ताय स्वाहोद्रिक्ताय स्वाहा सर्वस्मै स्वाहा ॥ १० ॥ cf. TS 7, 3, 20.

इत्यनुवचनं तृतीयम् ॥[6]

---

मेषस्त्वा पचतैरवतु लोहितग्रीवश्छागैश्शल्मलिर्वृद्ध्या पर्णो ब्रह्मणा प्लक्षो मेधेन न्यग्रोधश्चमसैरुदुम्बर ऊर्जा गायत्री छन्दोभिस्त्रिवृ-

---

[1] So Ch; in TS 7, 3, 18 पाकलाय [2] So corr. Ch सक्ताय [3] So corr. Ch स्कन्देभ्य°; vgl. oben 5, 3, 6; TS 7, 3, 20 schreibt hier स्कन्धोभ्यः [4] Ch होछि° [5] Dies स्वाहा fehlt in Ch und ist von mir ergänzt. [6] So die Unterschrift des Capitels in Ch.

स्तोमैरवन्तीस्थावन्तीस्त्वावन्तु प्रियं त्वा प्रियाणां वर्षिष्ठमाप्यानां[1]
गणानां त्वा गणपतिं हवामहे वसो मम प्रियाणां[2] त्वा प्रिय-
पतिं हवामहे वसो मम निधीनां त्वा निधिपतिं हवामहे वसो
मम ॥ १ ॥ cf. TS 7, 4, 12.

5 कूप्याभ्यस्स्वाहा कुल्याभ्यस्स्वाहा स्थाल्याभ्यस्स्वाहावट्याभ्यस्स्वा-
हा खल्याभ्यस्स्वाहा[3] ह्रद्याभ्यस्स्वाहा[4] सूद्याभ्यस्स्वाहा पल्वल्याभ्य-
स्स्वाहा[5] वैशन्तीभ्यस्स्वाहा सरस्याभ्यस्स्वाहा वर्ष्याभ्यस्स्वाहावर्ष्याभ्य-
स्स्वाहा प्रुष्टाभ्यस्स्वाहा[6] ह्रादुनिभ्यस्स्वाहा स्थावराभ्यस्स्वाहा स्यन्दमा-
नाभ्यस्स्वाहा नादेयीभ्यस्स्वाहा सैन्धवीभ्यस्स्वाहा समुद्रियाभ्यस्स्वाहा
10 सर्वाभ्यस्स्वाहा ॥ २ ॥ cf. TS 7, 4, 13.

अद्भ्यस्स्वाहा वहन्तीभ्यस्स्वाहा समुद्रं वहन्तीभ्यस्स्वाहा समन्तं
वहन्तीभ्यस्स्वाहोग्रं वहन्तीभ्यस्स्वाहा भीमं वहन्तीभ्यस्स्वाहा शीभं
वहन्तीभ्यस्स्वाहा शीघ्रं वहन्तीभ्यस्स्वाहाम्भोभ्यस्स्वाहा नभोभ्यस्स्वा-
हा महोभ्यस्स्वाहा ॥ ३ ॥ cf. TS 7, 4, 14.

15 यो अर्वन्तं जिघांसति तमभ्यमीति[7] वरुणः ।
परो मर्तः[8] परश्श्वा ॥
अहं च त्वं च वृत्रहन्संसनुयाव वरीष्वा[9] ।
अरातीवा चिदद्रिवो ऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातयः ॥

---

[1] So corr. Ch वर्षिष्टामा°; vgl. TS 7, 4, 12. [2] So corr. Ch प्रियानां [3] So Ch; besser wohl mit TS 7, 4, 13 खन्याभ्यः zu lesen. [4] So corr. mit Caland; Ch रुद्राभ्य° [5] So corr. Ch पल्वलाभ्य° [6] So corr. Ch प्रष्टाभ्यस्स्वाहा; vgl. Pâ. 3, 1, 17, Vârtt. 1 प्रुष्टा, प्रुष्टायते; TS 7, 4, 13 पृष्वाभ्यः [7] So corr. Ch तमभ्येमीति; vgl. MS 3, 12, 1 a. E.; TS 7, 4, 15. [8] So corr. Ch मंतः [9] So gewiß richtig Ch; वरीषु von वर्यः, das als Bezeichnung für Flüsse Naigh. 1, 13 angeführt wird, doch bisher noch nicht belegt war, auch in Böhtlingks zweitem WB. nicht; vgl. beide Petersburger Wörterbücher s. v. वरी, resp. वर्री fem. plur. „Flüsse". Vgl. den Vers RV 8, 51, 11 und TS 7, 4, 15 mit andrem Schluß des Avasâna.

अभि क्रत्वेन्द्र[1] भूरध ज्मन्न ते विव्यङ् महिमानं रजांसि।
स्वेना हि वृत्रं शवसा जगन्थ न शत्रुरन्तं विविदद्युधा[2] ते॥ ॥ ४ ॥
cf. TS 7, 4, 15.

नमो राज्ञे नमो वरुणाय नमो ऽश्वाय नमः प्रजापतये नमो ऽधिपतये ऽधिपतिरस्यधिपतिं मा कुर्वधिपतिरहं प्रजानां भूयासं मां[3] धेहि मयि धेह्युपाकृताय स्वाहालब्धाय स्वाहा हुताय स्वाहा ॥ ५ ॥ 5
cf. TS 7, 4, 16.

मयोभूर्वातो[4] अभिवात्वुस्रा[5] ऊर्जस्वतीरोषधीराविशन्ताम्।
पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र नो मृड॥
यास्सरूपा विरूपा एकरूपा[6] यासामग्निरिष्ट्या नामानि वेद।
या अङ्गिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म यच्छ॥
या देवेषु तन्वमैरयन्त यासां सोमो विश्वा रूपाणि वेद। 10
ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिन्द्र गोष्ठे रिरीहि[7]॥
प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैर्यज्ञियैस्संविदानः।
बह्वीर्भवन्तीरुप[8] नो गोष्ठमाग्नुस्तासां वयं प्रजया संसदेम॥

इह धृतिस्स्वाहेह विधृतिस्स्वाहेह रन्तिस्स्वाहेह रमतिस्स्वाहा महीमू[9] षु सुत्रामाणम्॥ ६॥ cf. TS 7, 4, 17; RV 10, 169. 15

कस्स्विदेकाकी[10] चरति क उ स्विज्जायते पुनः।
किं स्विद्धिमस्य भेषजं किं स्विदावपनं महत्॥
सूर्य एकाकी चरति चन्द्रमा जायते पुनः।
अग्निर्हिमस्य भेषजं भूमिरावपनं महत्॥

---

[1] So corr. Ch क्रंधेंद्र; vgl. RV 7, 21, 6; TS 7, 4, 15. [2] So corr. Ch शत्रुरंतविवद; vgl. RV 7, 21, 6; TS 7, 4, 15. [3] So corr. Ch भूयासमस्मां; vgl. TS 7, 4, 16. [4] Dies Capitel auch in W 1 ζ vorhanden. [5] Ch वात्यस्रा; vgl. RV 10, 169, 1; TS 7, 4, 17. [6] Ch एकारूपा; vgl. RV 10, 169, 2; TS 7, 4, 17. [7] So W 1 ζ; in Ch रिरीह; vgl. RV 10, 169, 3. [8] So W 1 ζ; in Ch भंवंतुरुप; vgl. RV 10, 169, 4. [9] Ch मयोमू [10] Auch dies Capitel in W 1 ζ vorhanden.

का स्विदासीत्पूर्वचित्तिः किं[1] स्विदासीद्बृहद्वयः[2] ।
का स्विदासीत्पिलिप्पिला[3] का स्विदासीत्पिशङ्गिला ॥
द्यौरासीत्पूर्वचित्तिरश्व आसीद्बृहद्वयः[4] ।
अविरासीत्पिलिप्पिला[5] रात्रिरासीत्पिशङ्गिला[6] ॥
5 पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि त्वा भुवनस्य नाभिम् ।
पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम ॥
वेदिमाहुः परमन्तं पृथिव्या यज्ञमाहुर्भुवनस्य नाभिम् ।
सोममाहुर्वृष्णो अश्वस्य रेतो ब्रह्मैव वाचः परमं व्योम ॥ ॥ ७ ॥[7]
cf. TS 7, 4, 18; MS 3, 12, 19; RV 1, 164, 34. 35; VS 23, 9—12. 61. 62.
अम्बे अम्बाल्यम्बिके न मा नयति कश्चन ।
10 ससस्त्यश्वकस्सुभगे काम्पीलवासिनि ॥
स्वर्गे लोके संप्रोर्णुवाथामाहमजामि[8] गर्भधमा त्वमजासि गर्भधं तौ सह चतुरः पदस्संप्रसारयावहै वृषा वां रेतोधा रेतो दधातूत्स-क्थ्योर्गृदं[10] धेह्यञ्जिमुदञ्जिमन्वज ॥
यस्त्रीणां जीवभोजनो य आसां बिलधावनः ।
15 प्रियस्त्रीणामपीच्यो[11] य आसां कृष्णे लक्ष्मणि सर्दिगृदिं[12] परावधीत् ॥[13]
अम्बे अम्बाल्यम्बिके न मा नयति कश्चन ।
ससस्त्यश्वकः[14] ॥
ऊर्ध्वामेनामुच्छ्रयताद्वेणुभारं गिरा इव[15] ।

---

[1] So W 1 ζ; in Ch कं [2] So W 1 ζ; in Ch द्वयाः [3] So W 1 ζ; in Ch त्पिलंपिला [4] Ch रश्वरासी° [5] So W 1 ζ; in Ch त्पिलंपिला [6] So W 1 ζ; in Ch रात्रीरा° [7] In Ch fehlt hier die Zahl, resp. die Bezeichnung des Capitelabschlusses, der jedoch durch W 1 ζ wie auch durch TS feststeht. [8] So Ch und W 1 ζ °मजामि [9] W 1 ζ महमजामि गर्भधमात्ममजामि गर्भधन्तौ [10] Ch सत्त्यो° [11] Ch मपेश्यो; W 1 ζ मपोश्यो oder मपोच्यो [12] Ch सन्दि° [13] Die Versabtheilungen fehlen hier in Ch und sind von mir gesetzt. [14] Ch समस्त्य° [15] W 1 ζ द्वैनुं भारं गिरो इव

अधास्या मध्यमेधतां शीते वाते पुनन्निव[1] ॥
अम्ब इत्युक्तम् ॥
यद्धरिणी यवमत्ति[2] न पुष्टं पशु मन्यते ।
शूद्रा यदर्यजारा[3] न पोषाय धनायति ॥[4]
अम्ब इत्युक्तम् ॥ 5
इयं यका शकुन्तिकाहलमिति[5] वञ्चति ।
आहतं गभे पसो निजल्गलीति[6] धानिका ॥
अम्ब इत्युक्तम् ॥
माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः ।
प्रसुलामीति ते पिता गभे मुष्टिमतंसयत्[7] ॥ 10
दधिक्राव्णो[8] अकारिषमापो हि ष्ठेति तिस्रः ॥ ८ ॥
cf. TS 7, 4, 19; MS 3, 12, 20; 3, 13, 1; VS 23, 19—32.

भूर्भुवस्स्वर्वसवस्त्वाञ्जन्तु गायत्रेण छन्दसा रुद्रास्त्वाञ्जन्तु त्रैष्टुभेन छन्दसादित्यास्त्वाञ्जन्तु जागतेन छन्दसा ॥
यद्वातो अपो अगमदिन्द्रस्य तन्वं प्रियाम्[9] ।
एतं स्तोतरेतेन पथा पुनरश्वमावर्तयासि[10] नः ॥ 15

लाजी३ञ्छाची३न्यशो[11] ममा३[12] यव्यायै गव्याया एतद्देवा अन्नमत्तैतदन्नमद्धि प्रजापते ॥
युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः ।
रोचन्ते रोचना दिवि ॥

---

[1] So W 1 ζ; in Ch मध्येमेधतां शिते वाते पुनर्निव [2] So W 1 ζ; in Ch यवर्ति [3] Ch यदर्यजाना [4] In W 1 ζ kommt dieser Vers erst nach dem folgenden. [5] So corr. Mss. शकुन्तीका° [6] So corr. Ch und W 1 ζ लूति [7] W 1 ζ पुष्टिम° [8] In W 1 ζ ist dieser Vers (RV 4, 39, 6) vollständig gegeben und dann erst folgt das Weitere wie in Ch. [9] So corr. Ch प्रियम् [10] So corr. Ch श्वसावर्तयामि; vgl. TS 7, 4, 20; MS 3, 12, 18; VS 23, 7. [11] So corr. Ch ञ्छातोन्यशो; vgl. TS 7, 4, 20; MS 3, 12, 19. [12] Die ३ von mir ergänzt; vgl. TS 7, 4, 20.

युञ्जन्त्यस्य काम्या[1] हरी विपक्षसा रथे ।
शोणा धृष्णू[2] नृवाहसा ॥
केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ।
समुषद्भिरजायथाः ॥ ॥ ९ ॥
cf. TS 7, 4, 20; MS 3, 12, 18. 19; VS 23, 5—8; RV 1, 6, 1—3.

5 प्राणाय स्वाहा व्यानाय स्वाहापानाय स्वाहा स्नावभ्यस्स्वाहा संतानेभ्यस्स्वाहा परिसंतानेभ्यस्स्वाहा पर्वभ्यस्स्वाहा संधानेभ्यस्स्वाहा शरीरेभ्यस्स्वाहा यज्ञाय स्वाहा दक्षिणायै स्वाहा स्वर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा ॥ १० ॥ cf. TS 7, 4, 21.

इति मेषानुवचनं चतुर्थम् ॥[3]

---

10 सिताय स्वाहासिताय स्वाहाभिहिताय स्वाहानभिहिताय स्वाहा युक्ताय स्वाहायुक्ताय स्वाहायुक्ताय स्वाहोद्युक्ताय स्वाहा विमुक्ताय स्वाहा प्रमुक्ताय स्वाहा वञ्चते स्वाहा परिवञ्चते स्वाहा संवञ्चते स्वाहानुवञ्चते स्वाहोद्वञ्चते स्वाहा यते स्वाहा धावते स्वाहा तिष्ठते स्वाहोपरताय स्वाहा सर्वस्मै स्वाहा ॥ १ ॥ cf. TS 7, 4, 22.

15 पृथिव्यै स्वाहान्तरिक्षाय स्वाहा दिवे स्वाहा संप्रोष्यते[4] स्वाहा संप्रवमानाय स्वाहा संप्लुताय स्वाहा मेघायिष्यते स्वाहा मेघायते स्वाहा मेघायिताय स्वाहा मेघिताय स्वाहा मेघाय स्वाहा नीहाराय स्वाहा निहाकायै स्वाहा प्रासचाय स्वाहा प्रचलाकायै[5] स्वाहा वि-

---

[1] So corr. Ch कामा [2] So corr. Ch धृष्णु [3] So die Unterschrift des Capitels in Ch. [4] So corr. Ch संप्लोषते; vgl. TS 7, 5, 11, 1 = Corr. [5] So corr. Ch प्रचलोकायै; vgl. TS 7, 5, 11, 1.

द्योतिष्यते स्वाहा विद्योतमानाय स्वाहा संविद्योतमानाय स्वाहा स्तनयिष्यते स्वाहा स्तनयते स्वाहोग्रं[1] स्तनयते स्वाहा वर्षिष्यते स्वाहा वर्षते स्वाहाभिवर्षते स्वाहा परिवर्षते स्वाहा संवर्षते स्वाहानुवर्षते स्वाहा प्रोषिष्यते स्वाहा प्रुष्णते स्वाहा परिप्रुष्णते स्वाहा शीकायिष्यते स्वाहा शीकायते स्वाहा शीतिकाय स्वाहोद्ग्रहीष्यते स्वाहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा विप्लोष्यते स्वाहा विप्लवमानाय स्वाहा विप्लुताय स्वाहातप्स्यते स्वाहातपते स्वाहोग्रमातपते[2] स्वाहर्ग्भ्यस्स्वाहा[3] यजुर्भ्यस्स्वाहा सामभ्यस्स्वाहाङ्गिरोभ्यस्स्वाहा वेदेभ्यस्स्वाहा गाथाभ्यस्स्वाहा नाराशंसीभ्यस्स्वाहा रैभीभ्यस्स्वाहा सर्वस्मै स्वाहा ॥ २ ॥ cf. TS 7, 5, 11.

दत्वते स्वाहादन्तकाय स्वाहा प्राणिने स्वाहाप्राणकाय स्वाहा[4] नासिकावते स्वाहानासिकाय स्वाहा मुखवते स्वाहामुखकाय स्वाहाक्षण्वते स्वाहानक्षकाय स्वाहा कर्णवते स्वाहाकर्णकाय स्वाहा शीर्षण्वते स्वाहाशीर्षकाय स्वाहा पादवते स्वाहापादकाय स्वाहा प्राणते स्वाहाप्राणते स्वाहा वदते स्वाहावदते स्वाहा पश्यते स्वाहापश्यते स्वाहा शृण्वते स्वाहाशृण्वते स्वाहा मनस्विने स्वाहामनस्काय स्वाहा रेतस्विने स्वाहारेतस्काय स्वाहा प्रजाभ्यस्स्वाहाप्रजननाय स्वाहा लोमवते स्वाहालोमकाय स्वाहा त्वचे स्वाहात्वक्काय स्वाहा चर्मवते स्वाहाचर्मकाय स्वाहा लोहितवते स्वाहालोहिताय स्वाहा मांसन्वते[5] स्वाहामांसकाय स्वाहा स्नावभ्यस्स्वाहास्नावकाय[6] स्वाहास्थन्वते स्वाहानस्थकाय स्वाहा मज्जन्वते स्वाहामज्जकाय स्वाहाङ्गवते स्वाहानङ्गकाय स्वाहात्मन्वते स्वाहानात्मकाय स्वाहा सर्वस्मै स्वाहा ॥ ३ ॥ cf. TS 7, 5, 12.

---

[1] So corr. Ch स्वाहोग्रं; vgl. TS 7, 5, 11, 1. [2] So corr. Ch स्वाहा उप्स्यते स्वाहा उपते स्वाहोग्रमा उपते; vgl. TS 7, 5, 11, 2 = Corr. [3] So corr. Ch स्वाहोग्भ्य°; vgl. TS 7, 5, 11, 2. [4] Dies स्वाहा fehlt in Ch und ist von mir ergänzt. [5] So Ch; ebenso auch TS 7, 5, 12, 2. [6] So corr. Ch स्नावत्यस्स्वा°

अग्निः पशुरासीत्तेनायजत स एतं लोकमजयद्यस्मिन्नग्निस्स ते लो-
कस्तं जेष्यस्यथावजिघ्र[1] वायुः पशुरासीत्तेनायजत स एतं लोकमज-
यद्यस्मिन्वायुस्स ते लोकस्तं जेष्यस्यथावजिघ्रादित्यः पशुरासीत्तेनाय-
जत स एतं लोकमजयद्यस्मिन्नादित्यस्स ते लोकस्तं जेष्यस्यथाव-
5 जिघ्र ॥ ४ ॥ cf. TS 5, 7, 26; VS 23, 17.

द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षं समुद्रो[2] योनिस्सूर्यस्ते च-
क्षुर्वातः प्राणश्चन्द्रमाश्श्रोत्रं दिशः[3] पादा अवान्तरदिशाः पशवो न-
क्षत्राणि रूपं मासाश्चार्धमासाश्च पर्वाण्यृतवो[4] ऽङ्गानि संवत्सरो महि-
मा ॥ ५ ॥[5] cf. TS 5, 7, 25.

10 आयासाय स्वाहावयासाय स्वाहा वियासाय स्वाहा प्रयासाय[6]
स्वाहा संयासाय स्वाहोद्यासाय[7] स्वाहा शोकाय स्वाहा शुचे स्वाहा
शुचये स्वाहा तपसे स्वाहा तपत्यै स्वाहा क्षुधे स्वाहा भ्रूणहत्यायै
स्वाहा सर्वस्मै स्वाहा ॥ ६ ॥[8] cf. TS 1, 4, 35; VS 39, 11. 12.

जुम्बकाय स्वाहावभृथाय स्वाहा सर्वस्मै स्वाहा ॥ ७ ॥[9]

15 मृत्यवे स्वाहावभृथाय स्वाहा सर्वस्मै स्वाहा ॥ ८ ॥[10]

कस्त्वा युनक्ति स त्वा युनक्तु विष्णुस्त्वा युनक्त्वस्य यज्ञस्यर्द्ध्यै मह्यं
संनत्या अमुष्मै कामायायुषे त्वा प्राणाय त्वा व्यानाय त्वापानाय त्वा
व्युष्ट्यै त्वा रय्यै त्वा राधसे त्वा पोषाय त्वा घोषाय त्वाराद्घोषाय त्वा
प्रच्युत्यै[11] त्वा कस्त्वा विमुञ्चति स त्वा विमुञ्चतु विष्णुस्त्वा विमुञ्च-
20 त्वस्य यज्ञस्यर्द्ध्यै[12] मह्यं संनत्या अमुष्मै कामायायुषे त्वा प्राणाय त्वा

---

[1] So corr. Ch स्यवावजिघ्र [2] So corr. Ch समुद्र; vgl. TS 5, 7, 25. [3] So corr. Ch दिशाः [4] Ch ष्यतवो [5] Die Zahl corrigirt; Ch setzt hier irrigerweise ७, woraus im Folgenden noch einige Fehler hervorgehen, die erst mit Cap. 9 ein Ende haben. [6] So corr. Ch स्वाहायप्रयासाय [7] So corr. Ch स्वाहोद्वासाय; vgl. TS 1, 4, 35. [8] Die Zahl corr. Ch hat hier ॥ ८ ॥ [9] Die Zahl corr. Ch hat hier ॥ ६ ॥ [10] Die Zahl corr. Ch hat hier ॥ १० ॥ [11] So corr. Ch प्रच्यत्यै, erste Hand प्रच्यै; vgl. TS 7, 5, 13. [12] So corr. यज्ञस्यर्त्यै

व्यानाय त्वापानाय त्वा व्युष्ट्यै त्वा रय्यै त्वा राधसे त्वा पोषाय त्वा घोषाय त्वाराद्घोषाय त्वा प्रतिष्ठित्यै त्वा ॥ ९ ॥
cf. TS 7, 5, 13; (VS 1, 6; 2, 23).

अग्नये गायत्राय त्रिवृते राथन्तराय[1] वासन्तायाष्टाकपाल इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्मायैकादशकपालो विश्वेभ्यो देवेभ्यो जागतेभ्यस्सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविंशाभ्यां[2] वैराजाभ्यां शारदाभ्यां पयस्या बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय हैमन्तिकाय चरुस्सवित्र[3] आतिच्छन्दसाय त्रयस्त्रिंशाय[4] रैवताय शैशिराय द्वादशकपालोऽदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोऽनुमत्यै चरुः काय एककपालः ॥ १० ॥ cf. TS 7, 5, 14.

हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य ते द्यौर्महिमा नक्षत्राणि रूपमादित्यस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा ॥ ११ ॥ cf. TS 7, 5, 16; MS 3, 12, 16.

अया विष्ठा जनयन्कर्वराणि स हि घृणिरुरुर्वराय गातुः ।
स प्रत्युदैद्धरुणं[5] मध्वो अग्रं स्वा यत्तनू[6] तन्वमैरयत ॥

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य तेऽन्तरिक्षं महिमापो वयांसि रूपं वायुष्टे तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा ॥ १२ ॥ cf. TS 1, 7, 12, 2.

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
ईशे यो अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥

---

[1] So cor. Ch रथ॰ [2] So corr. Ch मनुष्टु॰ [3] So corr. Ch सावित्र [4] Ch त्रियस्त्रि॰ [5] Ch प्रत्युद्धैद्धरुणं; vgl. den Vers oben 9, 6 und 14, 3; anders TS 1, 7, 12, 2 und MS 1, 10, 3. [6] So nach 9, 6 und 14, 3 offenbar die Kâṭhaka-Form dieses Verses; Ch liest hier स्वायंतनू तन्वमै॰

उपयामगृहीतो ऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य ते पृथिवी महिमौषधयो वनस्पतयो रूपमग्निस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा ॥ १३ ॥ cf. TS 7, 5, 16. 17; MS 3, 12, 17.

आ[1] ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामास्मिन्राष्ट्रे[2] राजन्य इषव्यः
5 शूरो महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिर्जिष्णू रथेष्ठाः पुरंधिर्योषा सभेयो युवास्य[3] यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवतीर्न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ १४ ॥ cf. TS 7, 5, 18; MS 3, 12, 6; VS 22, 22.

आक्रान्वाजी[4] पृथिवीमग्निं युजमकृत वाज्यर्वाक्रान्वाज्यन्तरिक्षं
10 वायुं युजमकृत वाज्यर्वा द्यां वाज्याक्रंस्त सूर्यं युजमकृत वाज्यर्वाग्निष्टे वाजिन्युङ्ङनु त्वारभे स्वस्ति मा संपारय वायुष्टे वाजिन्युङ्ङनु त्वारभे स्वस्ति मा संपारयादित्यस्ते वाजिन्युङ्ङनु त्वारभे स्वस्ति मा संपारय प्राणधृगसि प्राणं मे दृंह व्यानधृगसि व्यानं मे दृंहापानधृगस्यपानं मे दृंह चक्षुरसि चक्षुर्मे धेहि श्रोत्रमसि श्रोत्रं मयि[5] धेह्यायुरस्यायुर्मे
15 धेहि सर्वमायुर्गेषम् ॥ १५ ॥ cf. TS 7, 5, 19.

क्रमैरत्यक्रमीद्वाजी विश्वैर्देवैर्यज्ञियैः संविदानः स नो नय सुकृतस्य लोकं तस्य ते वयं स्वधया मदेम ॥ १६ ॥ cf. TS 5, 7, 24.

जज्ञि बीजं वर्ष्टा पर्जन्यः पन्था[6] सस्यं सुपिप्पला ओषधयस्स्वधिचरणेयं सूपसदनो ऽग्निस्स्वध्यक्षमन्तरिक्षं सूपवाः[7] पवमानस्सूप-

---

[1] Dies Capitel auch in T6 fol. 8ª und Brl fol. 7 vorhanden; darnach accentuirt. [2] So corr. die Mss. जायतामस्मिं°, resp. Ch so ohne Accent; vgl. TS 7, 5, 18. [3] So die Accentuation in Brl; in T6 युवास्य; vgl. TS 7, 5, 18. [4] Ch आक्रां व्वाजी [5] Man erwartet entweder hier मे oder vorher चक्षुर्मयि und nachher स्यायुर्मयि, wie in TS 7, 5, 19, 2; das Letztere dürfte das Richtige sein. [6] So Ch! vgl. TS 7, 5, 20 पक्वा [7] So Ch; in TS 7, 5, 20 सुपावः

स्थाना द्यौश्शिवमसौ तपन्यथापूर्वमहोरात्रे पञ्चदशिनो ऽर्धमासास्त्रिंशिनो[1] मासाः कॢप्ता ऋतवश्शान्तस्संवत्सरः ॥ १७ ॥
cf. TS 7, 5, 20.

आग्नेयो ऽष्टाकपालस्सौम्यश्चरुस्सावित्रो ऽष्टाकपालस्सारस्वतश्चरुः पौष्णश्चरू रौद्रो गावीधुकश्चरुरग्नये वैश्वानराय द्वादशकपालो मृगाखरे यदि नागच्छेदग्नये ऽँहोमुचे[2] ऽष्टाकपालस्सौर्यं पयो वायव्य आज्यभागः ॥ १८ ॥ cf. TS 7, 5, 21.

अग्नये ऽँहोमुचे ऽष्टाकपाल इन्द्रायांहोमुच एकादशकपालो वायोसावित्र आगोमुग्भ्यां चरुर्मित्रावरुणाभ्यामागोमुग्भ्यां पयस्याश्विभ्यामागोमुग्भ्यां धाना मरुद्भ्य एनोमुग्भ्यस्सप्तकपालो विश्वेभ्यो देवेभ्य एनोमुग्भ्यो द्वादशकपालो ऽनुमत्यै चरुरग्नये वैश्वानराय द्वादशकपालो द्यावापृथिवीभ्यामंहोमुग्भ्यां द्विकपालः ॥ १९ ॥
cf. TS 7, 5, 22; MS 3, 15, 11.

अग्नये[3] समनमत्पृथिव्यै समनमद्यथाग्निः[4] पृथिव्या समनमदेवं मह्यं भद्रास्संनतयस्संनमन्तु[5] वायवे[6] समनमदन्तरिक्षाय समनमद्यथा वायुरन्तरिक्षेण समनमदेवं मह्यं भद्रास्संनतयस्संनमन्तु सूर्याय समनमद्दिवे समनमद्यथा सूर्यो दिवा समनमदेवं मह्यं भद्रास्संनतयस्संनमन्तु[7] वरुणाय समनमदद्भ्यस्समनमद्यथा वरुणो ऽद्भिस्समनमदेवं[8] मह्यं भद्रास्संनतयस्संनमन्तु साम्ने समनमदृचे समनमद्यथा सामर्चा[9] समनमदेवं मह्यं भद्रास्संनतयस्संनमन्तु ब्रह्मणे समनमत्क्षत्राय समनमद्यथा ब्रह्म क्षत्रेण समनमदेवं मह्यं भद्रास्संनतयस्संनमन्तु राज्ञे समनमद्विशे समनमद्यथा राजा विशा समनमदेवं मह्यं भद्रास्संनत-

---

[1] Ch स्त्रिशिनो; vgl. TS 7, 5, 20. [2] Das ँ in Ch nicht vorhanden, von mir ergänzt. [3] Dies Cap. auch in Brl vorhanden und darnach accentuirt. [4] Ch समनद्य° [5] Brl संन°; Ch सन्न° [6] So Brl; in Ch वायु स° [7] Ch सन्नतया [8] Accent corrigirt; Brl संमनमदेवं [9] Accent corrigirt; Brl सांमर्चा; vgl. TS 7, 5, 23, 2.

यस्सँनमन्तु रथाय समनमदश्वेभ्यस्समनमद्यथा[1] रथो ऽश्वैस्समनमदेवं मह्यं भद्रास्संनतयस्सँनमन्तु[2] ॥ २० ॥ cf. TS 7, 5, 23.

समिद्दिशां कया नः ॥

को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
5 आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥ ॥ २१ ॥
cf. MS 3, 16, 4 a. E.; RV 1, 84, 16; TS 4, 2, 11, 3 u. s. w.

इति मितानुवचनं पञ्चमम् ॥[3]

---

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा[4] पिपर्तु ॥
धन्वना गा धन्वनाजिं जयेम धन्वना तीव्रास्समदो जयेम ।
10 धनुश्शत्रोरपकामं कृणोति धन्वना सर्वाः[5] प्रदिशो जयेम ॥
वक्ष्यन्तीवेदागनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना[6] ।
योषेव शिङ्क्ते वितताधि धन्वञ्ज्या इयं समने पारयन्ती ॥
ते आचरन्ती समनेव योषा[7] मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून्विध्यतां[8] संविदाने आर्त्नी इमे विस्फुरन्ती[9] अमित्रान् ॥
15 बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा[10] कृणोति समनावगत्य[11] ।
इषुधिस्सङ्काः पृतनाश्च सर्वाः पृष्ठे[12] निनद्धो जयति प्रसूतः ॥

---

[1] Accent corrigirt; Brl दश्वेभ्य° [2] Ch नतया° [3] So die Unterschrift des Capitels in Ch. [4] So corr. Ch वर्मनो महिना; vgl. RV 6, 75, 1. [5] So corr. Ch धन्वन सर्वः [6] So corr. Ch परिषष्वजाना; vgl. RV 6, 75, 3; MS 3, 16, 3; TS 4, 6, 6, 1; VS 29, 40. [7] So corr. Ch येषा [8] So corr. Ch शतॄ° [9] So auch MS 3, 16, 3. [10] So corr. Ch श्चिच्चा [11] So corr. Ch शमना° [12] So corr. Ch पृष्टि; vgl. RV 6, 75, 5 u. s. w.

रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः ।
अभीशूनां महिमानं पनायत[1] मनः पश्चादनुयच्छन्ति रश्मयः ॥
तीव्रान्घोषान्कृण्वते[2] वृषपाणयो ऽश्वा रथेभिस्सह वाजयन्तः ।
अवक्रामन्तः प्रपदैरमित्रान्क्षिणन्ति शत्रूँरनपव्ययन्तः[3] ॥
रथवाहनँ[4] हविरस्य नाम यत्रायुधं निहितमस्य वर्म ।
तत्रा रथमुप शग्मँ सदेम विश्वाहा वयँ सुमनस्यमानाः ॥
स्वादुषँसदः पितरो वयोधाः कृच्छ्रेश्रितश्शक्तीवन्तो गभीराः ।
चित्रसेना इषुबला अमृध्रास्सतोवीरा उरवो व्रातसाहाः ॥
ब्राह्मणासः पितरस्सोम्यासश्शिवे नो द्यावापृथिवी अनेहसा ।
पूषा नः पातु दुरिताहतावृधो रक्षा माकिर्नो[5] अघशँस ईशत[6] ॥
सपर्णं वस्ते मृगो अस्या दन्तो गोभिस्संनद्धा पतति प्रसूता ।
यत्रा नरस्सं च वि च द्रवन्ति तत्रास्मभ्यमिषवश्शर्म यँसन् ॥
वृजीते[7] परिवृङ्ग्धि[8] नो ऽश्मा भवतु नस्तनूः ।
सोमो अधिब्रवीतु[9] नो ऽदितिश्शर्म यच्छतु ॥
अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमाँसं[10] परिपातु विश्वतः ॥
आजङ्घन्ति सान्वेषां[11] जघनाँ उपजिघ्नते[12] ।
अश्वाजनि प्रचेतसो ऽश्वान्समत्सु चोदय ॥
वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणस्सुवीरः ।
गोभिस्संनद्धो असि वीडयस्वास्थाता[13] ते जयतु जेत्वानि ॥

---

[1] So corr. Ch अभीषूणाम्महिमानम्मनायत; vgl. RV 6, 75, 6. [2] So corr. Ch कृणुते; vgl. RV 6, 75, 7 u. s. w. [3] Ch शत्रूंर॰ [4] So corr. Ch रथवाहनैहँ॰; vgl. RV 6, 75, 8 u. s. w. [5] So corr. Ch माकिन्नो; vgl. RV 6, 75, 10. [6] So corr. Ch ईषत [7] So Ch! Wahrscheinlich doch wohl fehlerhaft für ऋजीते, wie nach RV 6, 75, 12; TS 4, 6, 6; VS 29, 49 zu erwarten. [8] Ch undeutlich, etwa परिवृट्टि; vgl. RV 6, 75, 12. [9] So corr. Ch ब्रवोत्त [10] So corr. Ch पुमँसिः; vgl. RV 6, 75, 14. [11] So corr. Ch सान्वेषां; vgl. RV 6, 75, 13. [12] So corr. Ch जिघ्रत [13] Ch स्यातां; vgl. RV 6, 47, 26.

दिवः पृथिव्याः पर्योज उद्भृतं वनस्पतिभ्यः पर्याभृतं सहः ।
अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रं[1] हविषा रथं यज ॥
इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः ।
सेमां नो हव्यदातिं जुषाणो देव रथ प्रति हव्या गृभाय ॥
5 उपश्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं[2] जगत् ।
स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अपसेध शत्रून् ॥
आक्रन्दय बलमोजो न आधा निष्टनिहि दुरिता बाधमानः ।
अपप्रोथ दुन्दुभे दुच्छुना इत इन्द्रस्य मुष्टिरसि वीडयस्व ॥
आमूरज प्रत्यावर्तयेमाः केतुमद्दुन्दुभिर्वावदीति ।
10 समश्वपर्णाश्चरन्ति नो नरो ऽस्माकमिन्द्र रथिनो जयन्तु ॥ ॥ १ ॥

cf. TS 4, 6, 6; MS 3, 16, 3; VS 29, 38—57; RV 6, 75, 1—14; 6, 47, 26—31.

समिद्धो अञ्जन्कृदरं[3] मतीनां घृतमग्ने मधुमत्पिन्वमानः ।
वाजी वहन्वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम् ॥
घृतेनाञ्जन्सं पथो देवयानान्प्रजानन्वाज्यप्येतु[4] देवान् ।
अनु त्वा सप्ते प्रदिशस्सचन्तां स्वधामस्मै यजमानाय धेहि ॥
15 ईड्यश्चासि[5] वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च सप्ते ।
अग्निष्ट्वा देवैर्वसुभिस्सजोषाः प्रीतं वह्निं वहतु जातवेदाः ॥
स्तीर्णं बर्हिस्सुष्टरीमा जुषाणोरु पृथु[6] प्रथमानं पृथिव्याम् ।
देवेभिरक्तमदितिस्सजोषास्स्योनं कृण्वाना[7] सुविते दधातु[8] ॥
एता उ[9] वस्सुभगा विश्ववारा वि पक्षोभिश्श्रयमाणा[10] उदातैः ।

---

[1] So corr. Ch वज्रो; vgl. RV 6, 47, 27; MS 3, 16, 3; TS 4, 6, 6, 6; VS 29, 53.
[2] So corr. Ch विष्ठितां; vgl. RV 6, 47, 29; MS 3, 16, 3 u. s. w.
[3] Ch कृदर
[4] So corr. Ch वाजप्येतु; vgl. MS 3, 16, 2; TS 5, 1, 11, 1; VS 29, 2.
[5] So corr. Ch श्चास्मि; vgl. MS 3, 16, 2; TS 5, 1, 11, 1; VS 29, 3.
[6] So corr. Ch पृथुम्प्र॰; vgl. MS 3, 16, 2; TS 5, 1, 11, 2; VS 29, 4.
[7] So corr. Ch कृण्वान
[8] So corr. Ch दधात
[9] So corr. Ch एवा तवस्सु॰; vgl. MS 3, 16, 2; TS 5, 1, 11, 2; VS 29, 5.
[10] So corr. Ch श्रियमाणा

